वृद्धगर्गः ।

नीले श्यामे च शशिनि रूक्षे धूमतमोवृते ।
अनावृष्टिभयं रोगानग्निवातं विनिर्दिशेत् ॥
पिण्डितस्तस्कराकर्षी *रसोऽन्नार्घकरो भवेत् ।

पिण्डितो घनः ।

अथोच्चनीचस्थानोदितचन्द्रफलम् । तत्र वृद्धगर्गः ।

उच्चैः सुभिक्षं नीचैस्तु सोमे दुर्भिक्षलक्षणम् ।

अथ प्रथमोदितचन्द्रस्य नीलमेघाद्यावरणफलम् । तत्र वृद्धगर्गः ।

यदा सोमः प्रतिपदि नीलैराच्छाद्यते घनैः ।
अन्यत्तुंकाले यात्रायां मरणं तत्र निर्दिशेत् ॥

अन्यत्तुंकाल इति प्रावृट्कालादन्यत्रेति ।

तथा ।

यदा सोमः प्रतिपदि रजसा तमसाऽथ वा ।
आवृतः प्रतिदृश्येत भयं तत्र समादिशेत् ॥

प्रतिपद्ग्रहणं प्रथमदर्शनोपलक्षणम् ।

इति चन्द्रकुष्ठादिशरीरलक्षणम् ।

अथ गणितागतप्रमाणादधिकन्यूनप्रमाणफलम् । वराहसंहितायाम् ।

ज्ञेयो विशालमूर्त्तिर्नरपतिलक्ष्मीविवृद्धये चन्द्रः ।

वृद्धगर्गः ।

विशालः श्रीकरो भूमेः राज्ञश्चैव जयावहः ।
सुवृष्टिः सुषमा चैव ब्रह्मवृद्धिस्तथोत्तरा ॥

विशालः प्रस्तारायामाभ्यां बृहत्प्रमाणः ।

वराहसंहितायाम् ।

स्थूलः सुभिक्षकारी प्रियधान्यकरस्तु तनुमूर्त्तिः ।
स्वल्पो दुर्भिक्षकरो महान् सुभिक्षावहः प्रोक्तः ॥

प्रियधान्यकर इति महार्घकर ।

* रसनाशकरः इति ख. ।

अथ संस्थानि तत्र नौसंस्थानमाह वृद्धगर्गः ।

ईषन्मात्रोच्चतं शृङ्गं विशालः कुक्षिमान् स च ।
शशी तत् खलु नौस्थानं क्षेमसौभिक्षकारकम् ॥

उभयमेव शृङ्गं यदा किञ्चिदुन्नतं भवति तदा नौस्थानं भवति ।

तथा च पराशरः ।

नाभ्युच्छ्रितोभयं शृङ्गं कुक्षिमान् विशालो नौस्थानम् ।

गार्गीये ।

नातिमात्रोन्नतः पीनो विशालः शुभमण्डलः ।
शुक्लः स्निग्धो यदा चन्द्रो नौस्थानं तदिहोच्यते ॥
तत्र सर्वस्य लोकस्य सुखं स्यादुत्तरोत्तरम् ।
नाविकानां भवेत् पीडा नौस्थाने शशिनि स्थिते ॥

शुभमण्डलः शोभनं छायामण्डलं यस्येति ।

भार्गवीये ।

स्निग्धः पीनः सुवर्णाभः पक्षादौ यदि चन्द्रमाः ।
नौस्थायी संप्रदृश्येत *वस्त्रवृद्धिं विनिर्दिशेत् ॥

अथ लाङ्गलम् । तत्र पराशरः ।

ईषदुन्नतोत्तरशृङ्गो लाङ्गलसंस्थानम् । तत् सुभिक्षक्षेमकारकम् ।

गार्गीये तु ।

†नीचं स्याद्दक्षिणं शृङ्गं चन्द्रस्योन्नतमुत्तरम् ।
तत् स्थानं लाङ्गलं नाम क्षेमारोग्यसुभिक्षकृत् ॥
राज्ञां प्रीतिर्निर्निमित्तं पीडा लाङ्गलजीविनाम् ।

उन्नतमित्यर्थोन्नतम् ।

तथा [illegible]याम् ।

अधोन्नते च लाङ्गलमिति पीडा तदुपजीविनां तस्मिन् ।

---

* वसुवृद्धिम् इति ख. । † नतम् इति ख. ।

प्रीतिश्च निर्निमित्तं मनुजपतीनां सुभिक्षं च ॥

वृद्धगर्गस्तु ।

उत्तरं शृङ्गमुद्यम्य नीचं यद्यस्य दक्षिणम् ।
कुरुते लाङ्गलस्थानं चन्द्रमाः शुभदर्शनम् ॥
तस्मिन् क्षेमं सुभिक्षं च स्थाने भवति लाङ्गले ।
अनामयं प्रजानां च राज्ञां च विजयो भवेत् ॥
पूर्वाणामुत्तराणां च विनिर्देश्यस्तदा जयः ।
*बहुक्षत्रविवृद्धिं च दिशं हन्याच्च दक्षिणाम् ॥

भार्गवीये ।

रूप्याभो लाङ्गलस्थायी श्रीमान् संलक्ष्य मण्डलः ।
पक्षादौ यदि दृश्येत ब्रह्मक्षत्रसुखावहः ॥

वृद्धगर्गस्तु ।

रूप्याभो लाङ्गलस्थायी ब्रह्मक्षत्रसुखावहः ।
कुङ्कुमाभो मरणदो हरिद्राभस्तथैव च ॥

यत् तु ।

लाङ्गली ग्रसते लोकान् युगान्तं प्रतिपादयेत् ।

इति भार्गवीयवाक्यं तद्दुष्टलाङ्गलपरम् ।

गर्गः ।

यदा सोमः प्रतिपदि नौस्थायी संप्रदृश्यते ।
उत्तरोज्ज्वलशृङ्गो वा लाङ्गली वा मनोहरः ॥
क्षेमं सुभिक्षमारोग्यं सर्वभूतेषु निर्दिशेत् ।
राज्ञां च विजयं ब्रूयाद्वर्धन्ते शृङ्गिणस्तथा ॥

अथ मृदङ्गः । वराहसंहितायाम् ।

चन्द्रो मृदङ्गरूपः क्षेमसुभिक्षावहो भवति ।

---

* ब्रह्मक्षत्र—इति सर्वसम्मतः पाठः ।

मृदङ्गरूपो मध्ये मृदङ्गवत् स्थूलः ।

यथा । चन्द्रशुभलक्षणे गर्गः ।

मृदङ्गमध्यः सोमो वा सौम्यायां चेन्नतो दिशि ।

अथाशुभसंस्थानानि तत्र दुष्टलाङ्गलमाह गार्ग्यः ।

दक्षिणं चोन्नतं शृङ्गं न्यूनं तस्य तथोत्तरम् ।
दुष्टलाङ्गलसंस्थानं प्रजाक्षयकरं स्मृतम् ॥

उन्नतमिति अर्धोन्नतमित्यर्थः ।

तथा च पराशरः ।

अर्धोन्नतदक्षिणोन्नतशृङ्गो दुष्टलाङ्गलः पुरसैन्योद्योगनाशकृत्-इति ।

पुरसैन्ययोरुद्योगनाशः ।

तथा च वराहसंहितायाम् ।

दक्षिणविषाणमर्धोन्नतं यदा दुष्टलाङ्गलाख्यं तत् ।
*पाण्ड्यनरेश्वरनिधनकृदुद्योगकरं बलानां च ॥

गार्गीये ।

नीचमुत्तरशृङ्गं स्याद्दक्षिणं चोन्नतं यदि ।
सैन्योद्वेगकरं स्थानं तदिन्दोर्दुष्टलाङ्गलम् ॥
पाण्ड्यस्य नृपतेर्मृत्युं कुर्याच्चन्द्रस्तथोदितः ।

वृद्धगर्गः ।

दक्षिणं शृङ्गमुद्यम्य नीचमस्य तथोत्तरम् ।
सेनोद्योगकरं स्थानं कुरुते दुष्टलाङ्गलम् ॥
दक्षिणाः पश्चिमाश्चैव विजयन्ते तथास्थिते ।
वैश्यशूद्राभिवृद्धिश्च शस्त्रमृत्युश्च जायते ॥
बाह्लीकयवनायोध्याँस्तुषाराँश्च समालवान् ।
शूरसेनाँश्च निर्हन्ति चन्द्रश्चैव तथोत्थितः ॥

---

* पाण्ड्यो देशविशेषः । तद्देशभवनरेश इति ।

अथ धनुर्गार्गीये ।

धनूरूपे चन्द्रमसि युद्धं सर्वत्र जायते ।
ज्यायतस्तु जयस्तेषां पृष्ठतस्तु पराजयः ॥

ज्यौतिषपराशरवराहसंहिताद्वयेऽपि चैवम् ।

गर्गवृद्धगर्गौ ।

उदये च यदा सोमो दृश्यो धनुरिवोदितः ।
धनुर्धराणामुद्योगो जगतश्च पराभवः ॥
क्षत्रिया क्षत्रियान् हन्ति वर्णाश्चैव तथाऽपरे ।
ज्यायतश्च जयस्तेषा पृष्ठतश्च पराजयः ॥

भार्गवीये तु ।

लाक्षारुधिरवर्णाभो धनुःस्थायी यदा भवेत् ।
संग्रामं योजयेत् सोमो लोके च तुमुलं भयम् ॥

वराहसंहितायाम् ।

धनुःस्थायी रूक्षो रुधिरसदृशः क्षुद्भयकरो
बलोद्योगं चन्द्रः कथयति जयं ज्याऽस्य च यतः ।

अथावाङ्मुखम् । तत्र गर्गः ।

अधोमुखं यदा शृङ्गं शशिनो दृश्यते तदा ।
संस्थानवर्जितकरे गोघ्नं दुर्भिक्षदायकम् ॥

शृङ्गमित्येकवचननिर्देशादेकं शृङ्गम् ।

तथा च वराहसंहितायाम् ।

अभ्युच्छ्रायादेकं शशिनो यद्यवाङ्मुखं भवेच्छृङ्गम् ।
आवर्जितमित्यसुभिक्षकारि तद्गोधनस्यापि ॥

पराशरस्तु ।

क्षुच्छस्त्रभयदोऽवाक्शिराः । एतत्संस्थानश्चन्द्र उत्तरशृङ्गोन्नतोऽप्येतत् फलं करोति ।

तथा च वराहसंहितायाम् ।

प्रोक्तस्थानाभावादुदगुच्चः *शस्यवृद्धिवृष्टिकरः-इति ।

अन्यथा प्रोक्तस्थानाभावादित्यनर्थकं स्यात् ।

गार्गीये त्ववाक्शिरोलक्षणमन्यथा तद्यथा ।

दक्षिणेन स्थूलकायो हीनकायस्तथोत्तरे ।

अवाक्शिरसि चन्द्रेऽस्मिन्नचिरान्नक्षतिः क्षितिः ॥

भीष्मपर्वणि कुरुपाण्डवसेनाक्षयनिमित्तम् ।

अवाक्शिराश्च भगवानुदतिष्ठत चन्द्रमाः ।

अथ संकटं गार्गीये ।

तीक्ष्णसंकटशृङ्गाग्रो रोगशस्त्रक्षुधावहः ।

वृद्धगर्गस्तु ।

संगताभ्यां समाभ्यां च तीक्ष्णाग्राभ्यां यदा शशी ।

दृश्यते संकटस्थानं रोगशस्त्रक्षुधाकरम् ॥

अथ कुण्डम् । तत्र गर्गः ।

अच्छिन्ना मण्डले रेखा शशिनो दृश्यते यदा ।

कुण्डाख्यं नाम तत् स्थानं नृपविग्रहदायकम् ॥

वराहसंहितायाम् ।

अव्युच्छिन्ना रेखा समं ततो मण्डले च कुण्डाख्यम् ।

तस्मिन् माण्डलिकानां स्थानत्यागो नरपतीनाम् ॥

अथ दण्डः । तत्र पराशरः ।

दण्डवद्दण्डस्थायी दण्डकृत् प्रजानाम् ।

गर्गवृद्धगर्गौ तु ।

चन्द्ररेखा यदा चोर्ध्वा भवेद्दण्डवदायता ।

उदक्छृङ्गाधिका चैव दण्डस्थानं तदुच्यते ॥

वृद्धगर्गः ।

उद्युक्तदण्डा राजानो विनिघ्नन्ति समन्ततः ।

---

* क्षेमवृद्धि-इति अ. ।

पौरं जनपदं चात्र ज्वरदाहश्च जायते ॥

गर्गस्तु ।

उग्रुक्तदण्डा राजानो विनिहन्युः समन्ततः ।

गवां पीडां विजानीयाद्दण्डस्थायी यदा शशी ॥

गार्गीये तु ।

उदितो दण्डवच्चन्द्रो गवां पीडाकरः स्मृतः ।

उग्रदण्डाश्च राजानो विनिघ्नन्ति परस्परम् ॥

अथ वज्रः । वराहसंहितायाम् ।

मध्यतनुर्वज्राख्यः क्षुद्भयकृत् संभ्रमाय राज्ञां च ।

वृद्धगर्गः ।

राज्ञां भयमसौ तीक्ष्णं विदध्याद्दुग्रविग्रहः ।

अथ युगम् । तत्र गर्गवृद्धगर्गौ ।

चन्द्ररेखा यदा व्यक्ता दक्षिणोत्तरमायता ।

शुक्लादौ प्रतिदृश्येत तद्युगस्थानलक्षणम् ॥

गर्गः ।

सेनोद्योगा भवन्त्यत्र भूमिकम्पश्च जायते ।

पराशरस्तु ।

युगसंस्थानजगद्विद्रवभूकम्पाय ।

गार्गीये तु ।

सेनोद्योगो भवत्यत्र दुर्भिक्षं भूमिकम्पनम् ।

नानाविधैर्व्याधिभिश्च तदा संक्षीयते प्रजा ॥

अथ पार्श्वशयनम् । तत्र गर्गः ।

याम्यकोट्यायतः किञ्चिद्युगाकारो यदा शशी ।

पार्श्वशायीति स ज्ञेयः सार्थहा वृष्टिकारकः ॥

याम्यकोट्यायतः किञ्चिदिति याम्यकोट्या किञ्चिदुन्नतः ।

तथा वराहसंहितायाम् ।

युगमेव याम्यकोट्यां किञ्चित् तुङ्गं स पार्श्वशायीति ।

विनिहन्ति सार्थवाहान् वृष्टेश्च विनिग्रहं कुर्यात् ॥

गार्गीये तु ।

किञ्चित् तुङ्गं याम्यकोट्यां युगमेव यदा भवेत् ।
अवृष्टिः पार्वतीयानां मरणं च तदा भवेत् ॥

भार्गवीये तु ।

पार्श्वशायी तु विप्राणां भवेद्विघ्नसमन्वितः ।

वटकणिकायाम् ।

दण्डावाङ्मुखसंकटजर्जरकूटीकृतिर्न शुभः ।

जर्जर इति क्वचिन्निविडः क्वचिच्चानिविडः । कूटीकृतिः फालाकृतिः ।

तत्रैव ।

उदयत्रयमपि सदृशं न शुभं बहुरूपताऽथ चैकस्य ।

शुभमप्येकं स्थानं यदि निरन्तरमुदयत्रये भवति तदाऽप्यशुभम् । अशुभाभ्यन्तरमेवाशुभम् । एकस्मिन्नेवोदयेऽनेकरूपताऽप्यशुभा ।

वराहसंहितायाम् ।

प्रोक्तस्थानाभावादुदगुच्चः क्षेमवृद्धिवृष्टिकरः ।
दक्षिणतुङ्गश्चन्द्रो दुर्भिक्षभयाय निर्दिष्टः ॥

उत्तरायणस्थयो रविचन्द्रमसोः संयोगानन्तरमुदितस्य चन्द्रमसो दक्षिणशृङ्गोन्नतिरपि नाशुभा । रवितश्चन्द्रस्योत्तरावर्जितत्वेन तस्या एव प्रकृतत्वात् । उत्तरशृङ्गोन्नतिरप्यशुभफला प्रकृतिविपरीतत्वात् । तथा चोत्तरशृङ्गोन्नतावुत्तरायणे दक्षिणायने च ।

दक्षिणशृङ्गोन्नतावशुभफलमुक्तं भार्गवीये ।

प्रथमे दर्शने त्विन्दोः समासाद्य यदा ग्रहम् ।
उत्तरं वर्धते शृङ्गं नीचीभवति दक्षिणम् ॥
एवमेव श्रविष्ठाद्ये आश्लेषाद्ये च चन्द्रमाः ।
उद्गच्छेद्दक्षिणं शृङ्गं नीचीभवति चोत्तरम् ॥
अत्र नश्येत राष्ट्रं च अन्तर्गिरि महागिरिः ।
विदर्भान् मद्रकाँश्चैव कौशिकान् द्राविडाँस्तथा ॥
अन्ध्राँश्चैव शकाँश्चैव भारताँश्चापि सर्वशः ।

सागराँस्तिरजाँश्चैव समुद्रे ये तु दक्षिणे ॥

एताञ्जनपदान् हन्ति यदि स्यादुत्तरोन्नतः ।

काश्मीरान् दरदान् दर्भान् शूरसेनान् पटच्चरान् ॥

शाल्वाँश्च विरजाँश्चैव समुद्रे ये च पश्चिमे ।

एताञ्जनपदान् हन्ति यदा स्याद्दक्षिणोन्नतः ॥

समासाद्य यदा ग्रहमिति भूम्यावरणानन्तरितप्रथमदर्शनव्यावृत्त्यर्थम् ।

चन्द्रस्योदयसमये त्वयनरेखातः समोत्तरवर्त्तिनोः समदक्षिणवर्त्तिनोर्वा भिन्नायनस्थयोः सूर्याचन्द्रमसोः समशृङ्गता भवति तत्फलम् ।

वटकणिकायाम् ।

समः समः—इति ।

उदयदिनसमानि सुभिक्षादीनि तस्मिन् मासे करोतीति समः ।

तथा च गर्गः ।

समशृङ्गो यथा दृश्यः शशी क्षेमसुभिक्षदः ।

प्रतिपत्सदृशं तत्र वासवो वर्षते तदा ॥

प्रतिपत्सदृशमित्युभयत्र सम्बध्यते । प्रतिपत्सदृशक्षेमसुभिक्षदः शशी भवति वासवश्च प्रतिपत्सदृशं वर्षतीति ।

तथा च वराहसंहितायाम् ।

समशशिनि सुभिक्षक्षेमवृष्टयः प्रथमदिवससदृशाः स्युः ।

एकायनस्थयोस्तु रविचन्द्रमसोः समशृङ्गचन्द्रोदये विकृतिस्तत्फलमशुभमेव ।

तथा च पराशरः ।

समोभयशृङ्गः समस्थान इन्दुर्महाभयकृत् ।

वृद्धगर्गः ।

पीतकच्छन्नसंस्थाने एकशृङ्गे खशृङ्गके ।

रोगदुर्भिक्षशस्त्राणि प्राणिनां च पराभवः ॥

पराशरः ।

अथैतानि शुक्लप्रतिपदि द्वितीयायां वा लक्षणानि भवन्ति ।

एतानीति संस्थानानि ।

भयमेति तथेक्ष्वाकुर्माया च सह मालवैः ॥
कार्पासतिलमुद्गानां शाखानां च महीरुहाम् ।
सुभिक्षं जायते तत्र उत्तरा बलवत्तराः ॥

पराशरः ।

ज्येष्ठे ज्येष्ठनृपनृपपत्नीगणमुख्यशस्योपद्रवाय ।

वृद्धगर्गस्तु ।

ज्येष्ठाः श्रेष्ठाश्च पीडयन्ते ज्येष्ठ्यामुपगते ग्रहे ।

वराहसंहितायां तु ।

ज्येष्ठे नरेन्द्रद्विजराजपत्न्यः
शस्यानि वृष्टिश्च महागणाश्च ।
प्रध्वंसमायान्ति नराश्च सौम्याः
सान्त्वैः* समेताश्च निषादसंज्ञाः ॥

वृद्धगर्गस्तु ।

आषाढपौर्णमास्यां तु गृहीते रजनीकरे ।
क्वचिद्वर्षति पर्जन्यस्तथा शाल्वं निपातयेत् ॥

पराशरस्तु ।

शाल्वनिषादवृष्टिशस्यघ्नमाषाढे ।

वराहसंहितायां तु ।

आषाढपर्वण्युदपानवप्रनदीप्रवाहान् फलमूलवर्त्तान् ।
गान्धारकाश्मीरपुलिन्दचीनान् हतान् वदेन्मण्डलवर्षमस्मिन् ॥

वृद्धगर्गः ।

श्रावण्यां पौर्णमास्यां तु गृहीते रजनीकरे ।
योगक्षेमविनाशश्च शस्यनाशश्च जायते ॥

पराशरस्तु ।

श्रावणे च क्षेमसुभिक्षमन्यत्र चीनकाश्मीरपुलिन्दगान्धारेभ्यः ।

---

* सौख्यैः इति ख. । साल्वैः इति ग. ।

वराहसंहितायाम् ।

काश्मीरान् सपुलिन्दचीनयवनान् हन्यात् कुरुक्षेत्रजान्
गान्धारानपि मध्यदेशसहितान् दृष्टो ग्रहः श्रावणे ।
काम्बोजैकशफांश्च शारदमपि त्यक्त्वा यथोक्तानिमा-
नन्यत्र प्रचुरान्नवृष्टिमनुजैर्धात्रीं करोत्यावृताम् ॥

वृद्धगर्गः ।

प्रौष्ठपदे गृहीते तु प्रावृड्भवति पुष्कला* ।
क्षेमं तु वङ्गमगधकाश्मीरदरदान् प्रति ॥

पराशरस्तु ।

भाद्रपदे मगधदरदकलिङ्गवङ्गानपास्य शस्यक्षेमाय च ।

वराहसंहितायाम् ।

कलिङ्गवङ्गान् मगधान् सुराष्ट्रान्
म्लेच्छान् सुवीरान् दरदान् शकांश्च ।
स्त्रीणां च गर्भानसुरो निहन्ति
सुभिक्षकृद्भाद्रपदेऽभ्युपेतः ॥

वृद्धगर्गः ।

क्षेमं भवति शस्यं च गृहीतेऽश्वयुजि ग्रहे ।

पराशरस्तु ।

अश्वयुग्ग्रहणे सुभिक्षक्षेमायावन्तिवाह्लीकचीनकाम्बोजसैन्धवानामभावाय च ।

वराहसंहितायां तु ।

काम्बोजचीनयवनान् सह शल्यहृद्भि-
र्बाह्लीकसिन्धुतटवासिजनांश्च हन्यात् ।
आनर्त्तपौण्ड्रभिषजश्च तथा किरातान्
दृष्टोऽसुरोऽश्वयुजि भूरिसुभिक्षकृच्च ॥

---

* निष्फला इति ख. ।

पराशरः।

कार्त्तिके सुभिक्षक्षेमारोग्याय काशिकोशलशूरसेनाभावाय च।

वराहसंहितायां तु।

कार्त्तिक्यामनलोपजीविमगधान् प्राच्याधिपान् कोशलान्
कल्माषानथ शूरसेनसहितान् काशीं च संतापयेत्।
हन्यादाशु कलिङ्गदेशनृपतिं सामात्यभृत्यं तमो
दृष्टं क्षत्रियतापनं जनयति क्षेमं सुभिक्षान्वितम्॥

वृद्धगर्गः।

पौर्णमास्यां यदा चन्द्रः कार्त्तिक्यामुपरज्यते।
पौण्ड्रान् कलिङ्गान् मत्स्याँश्च शूरसेनाँश्च पीडयेत्॥

काश्यपः।

कार्त्तिके कोशला गावः प्रधानाश्चाहिताग्नयः।
वाधन्ते गणमुख्याश्च क्षत्रिया गोमिनस्तथा॥
सुवृष्टिर्जायते चापि शस्यसम्पत् तथोत्तमा।
प्राच्यां दिशि भयं ब्रूयात् क्षेममन्यत्र निर्दिशेत्॥

पराशरस्तु।

मार्गशीर्षे मृगपौण्ड्रसोमपभयाय वृष्टये च।

वराहसंहितायां तु।

काश्मीरकान् कोशलकान् सपौण्ड्रान् मृगाँश्च हन्यादपरान्तकाँश्च।
ये सोमपास्ताँश्च निहन्ति सौम्ये सुवृष्टिकृत् क्षेमसुभिक्षकृच्च॥

सौम्ये मार्गशीर्षे।

वृद्धगर्गस्तु।

मार्गशीर्षे गृहीते तु क्षेमं शस्यं च नश्यति।
पौराश्च भयमृच्छन्ति मृगाश्च सह सोमपैः॥
औशीनरान् काश्यपाँश्च ब्राह्मणाँश्च तपः स्पृशेत्।
ग्रीष्मे शस्यं च भवति शारदं चोपहन्यते॥

पराशरः ।

पौषे भयदुर्भिक्षब्रह्मक्षत्रोपरोधाय ।

वराहसंहितायां तु ।

पौषे द्विजक्षत्रजनोपरोधः ससैन्धवाख्याः कुकुरा विदेहाः ।
ध्वंसं व्रजन्त्यत्र च मन्दवृष्टिर्भयं च विन्द्यादसुभिक्षयुक्तम् ॥

वृद्धगर्गस्तु ।

पौर्णमास्यां यदा पौष्यामुपरज्येत चन्द्रमाः ।
कुरवश्च विदेहाश्च फलमश्नन्ति दारुणम् ॥
मन्दा वृष्टिर्भवत्यत्र श्रेष्ठो वर्णो विनश्यति ।
अनयान्मन्त्रिणश्चैव पीडयन्ते नात्र संशयः ॥
पित्तज्वरोऽपि भवति श्रेष्ठः पञ्चत्वमृच्छति ।
महाबला महाविद्याः पीडयन्ते पशुवाहनाः ॥
कुक्षिरोगोऽतिसारश्च ज्वररोगश्च वर्धते ।

पराशरः ।

माघे शस्त्रप्रकोपप्रावृड्वृद्धये बङ्गाङ्गानर्त्तयवनकाशिदेशोत्सादनकृत् ।

वराहसंहितायां तु ।

माघे तु मातृपितृभक्तवशिष्ठगोत्रान्
स्वाध्यायधर्मनिरतान् करिणस्तुरङ्गान् ।
बङ्गान् सकाशिमनुजांश्च दुनोति राहु-
र्वृष्टिं च कर्षकजनानुमतान् करोति ॥

पराशरः ।

फाल्गुनेऽन्नसम्पच्च ।

वृद्धगर्गस्तु ।

फाल्गुन्यां कुरवश्चैव स्त्रियश्च सुभगास्तथा ।
दाक्षिणात्याश्च राजानः पीडयन्ते नात्र संशयः ॥

वराहसंहितायाम् ।

पीडाकरं फाल्गुनमासि पर्व वङ्गाश्मकावन्तिकमेकलानाम् ।
नृत्यज्ञशस्यप्रवराङ्गनानां धनुर्धरक्षत्रतपस्विनां च ॥

पराशरः ।

नटनर्त्तकधनुर्धरशस्यविनाशाय चैत्रे ।

वृद्धगर्गस्तु ।

पौर्णमास्यां यदा चैत्र्यां चन्द्रमा गृह्यते तदा ।
शस्यानि च प्रणश्यन्ति क्षेमं च सह कारुभिः ॥
लेखकाँश्चित्रशिल्पाँश्च सुमहानामयः स्पृशेत् ।

वराहसंहितायां तु ।

चैत्रे तु चित्रकरलेखकगेयसक्तान्
रूपोपजीविनिगमज्ञहिरण्यपण्यान् ।
पौण्ड्रोड्रकैकयजनानथ वाऽश्मकाँश्च
तापः स्पृशत्यमरपोऽत्र च चित्रवर्षी ॥

वृद्धगर्गः ।

पौर्णमासीषु यत् सोमे फलमेतदुदाहृतम् ।
एतदेव भवेदर्के त्वमावास्याफलं त्विति ॥

अथ राशिफलं वराहसंहितायाम् ।

पाञ्चालकलिङ्गशूरसेनाः काम्बोजौड्रकिरातशस्त्रवार्त्ताः ।
जीवन्ति तु ये हुताशवृत्त्या ते पीडामुपयान्ति मेषसंस्थे ॥
गोपाः पशवोऽथ गोमिनो मनुजा ये च महत्त्वमागताः ।
ते पीडामुपयान्ति भास्करे ग्रस्ते शीतकरेऽपि वा वृषे ॥
मिथुने प्रवराङ्गना नृपा नृपमात्रा बलिनः कलाविदः ।
यमुनातटजाश्च बाह्लिका मत्स्याः सुह्मजनैः समन्विताः ॥
आभीरान् शबरान् सपह्लवान् मल्लान् मत्स्यकुरून् शकानपि

पाञ्चालान् विकलाँश्च पीडयेदन्नं चापि निहन्ति कर्कटे ॥
सिंहे पुलिन्दगणमेकलसिन्धुयुक्तान्*
राजपोमान् नरपतोन् वनगोचराँश्च ।
षष्ठे तु शस्यकविलेखकगेयसक्तान्
हन्त्यश्मकत्रिपुरशालियुताँश्च देशान् ॥
तुलाधरेऽवन्त्यपरान्त्यसाधून् वणिग्दशार्णान् मरुकच्छपाँश्च ।
अलिन्यथोदुम्बरमद्रचोलान् द्रुमान् सयौधेयविषायुधीयान् ॥
धन्विन्यमात्यवसुधाजि†विदेहमल्लान्
पाञ्चालवैद्यवणिजो विषमायुधज्ञान् ।
हन्यान्मृगे तु झषमन्त्रिकुलानि नीचान्
मन्त्रौषधीषु कुशलान् स्थविरायुधीयान् ॥
कुम्भेऽन्तर्गिरिजात्यपश्चिमजनान्‡भारोद्वहाँस्तस्करान्
आभीरान् दरदार्यसिंहलजनान्§हन्यात् तथा बर्बरान् ।
मीने सागरकूलसागरभवद्रव्याणि ¶माल्यान् जनान्
प्राज्ञान् वाय्वुपजीविनः शुभफलं कूर्मोपदेशाद्वदेत् ॥

अथ नक्षत्रफलं वटकणिकायाम् ।

कूर्मविभागेन वदेत् पीडां देशस्य वीक्ष्य नक्षत्रम् ।

पराशरस्तु ।

अश्विन्यामश्वानश्वजीविनश्च । याम्ये कलिङ्गान् दक्षिणाँश्चोपतापयति । कृत्तिकासु कलिङ्गमत्स्याधिपतीन् । रोहिण्यां क्षुच्छस्त्रकोपैः प्रजाः । मृगशिरसि शाल्वनिषादकैकेयान् । रौद्रे शकान् कुकुरान् पल्व-

* सक्त युक्तान्-इति अ. । † वरजाजि-इति अ. । वरराजि-इति ख. ।
‡ ऽन्तर्गिरिजान् सपश्चि-इति अ. । § सिंहपुरकान्-इति अ. ।
¶ धन्यान् इति अ. । मान्यान्-इति ख. ।

लोपजीविनश्च । पुनर्वसौ पाण्ड्यभरुकच्छकार्पासाँश्च । पुष्ये गोमन्तसिधुसौवीरकुरुपाञ्चालान् । सार्पे काशिकलिङ्गसिंहलराजन्यान् । पित्र्ये दण्डकारण्यवासिनः पितृधान्यं च । भाग्येषु भगान् काम्बोजान् सुराष्ट्राधिपतिं च । आर्यम्णे मगधाङ्गयवनान् । हस्ते दशार्णान् । त्वाष्ट्रे मद्रान् कुरुक्षेत्रं च । वायव्ये काश्मीरोशीनरान् वाजिनश्च । विशाखयोर्वृक्षाश्मकान् । मैत्रे काशिकोशलान् । ज्येष्ठायां ज्येष्ठजातीयान् दरदाँश्च । मूले क्षुद्रकमालवयौधेयान् । आप्ये पञ्चनदान् सुवीराधिपतिं च । वैश्वदेवे आर्जुनायनपौण्ड्रशिविमालवान् । श्रवणे शाल्वानानर्त्तकाँश्च । वासवे धनिनः शकारण्यजाँ*श्च । वारुणे कैकेयान् जलचराँश्च । आजे अङ्गवङ्गमगधकुकुरान् । आहिर्बुध्न्ये अश्मकेक्षुक्षुद्रकत्रिगर्त्तान् । पौष्णे वैदेहानर्त्तकसिन्धुसौवीरान् ।

ज्यौतिषपराशरविष्णुधर्मोत्तरयोः ।

ग्रहोपश्लिष्टे नक्षत्रे ग्रहणं तु यदा भवेत् ।
तदा पीडा विनिर्देश्या सैनिकानां नृपैः सह ॥

अथ दिक्फलं तत्र पराशरः ।

उदग्दक्षिणप्रत्यक् ब्राह्मणक्षत्रियविट्शूद्रोत्सादनायानुपूर्व्या ।

काश्यपः ।

सौम्यपार्श्वगते विप्रान् पूर्वस्यां क्षत्रजातयः ।
वैश्यान् दक्षिणतो राहुर्हन्ति पश्चिमतोऽपरान् ॥

वटकणिकायां तु ।

उदगादिषु दिक्षु शुभो विप्रादीनां सितादिवर्णघ्नः ।

काश्यपः ।

पूर्वे सलिलजान्† हन्यात् पश्चाद्धन्यात् कृषीवलान् ।
याम्ये वरगजान् हन्ति सौम्ये गोनाशकृन्मतः ॥

---

* शकानन्त्यजाँश्च इति ख. । † पूर्वे सलिलघाती स्यादिति क्वचित् पाठः ।

तथा च वराहसंहितायाम् ।

पूर्वेण सलिलपूर्णां करोति वसुधां समागतो दैत्यः ।

पश्चात् कर्षकसेवकबीजविनाशाय निर्दिष्टः ॥

सलिलवरदन्तिघाती याम्येनोदग्गवामशुभः ।

वटकणिकायाम् ।

विदिग्गादिगतो हन्याद्राहुर्म्लेच्छान् सविजिगीषून् ।

वराहसंहितायाम् ।

म्लेच्छान् विदिक्स्थितो यायिनश्च हन्याद्धुताशसक्ताँश्च ।

अथ ग्रासविशेषो वराहसंहितायाम् ।

सव्यापसव्यलेहग्रसननिरोधावमर्दनारोहाः ।

आघ्रातं मध्यतमस्तमोऽन्त्य इति ते दश ग्रासाः ॥

पराशरेणान्यथा दश ग्रासा दर्शितास्तद्यथा ।

देशोपद्रवा ग्रसनारोहणोपघ्राणोन्मर्दननिरोधपरिलेहनापसव्यसव्यान्तमध्यतमउपप्लवाश्च—इति ।

अत्रान्तमध्य इत्येकः । तमउप्लव इत्यपरः ।

अथैतेषां लक्षणानि फलं च । तत्र पराशरः ।

प्रदक्षिणं सव्यं प्रजाहिताय ।

भार्गवीये तु ।

प्रदक्षिणे तु सौमनस्यम् ।

वराहसंहितायां तु ।

सव्यं गते तमसि जगज्जलप्लुतं भवति मुदितमभयं च ।

पराशरः ।

अप्रदक्षिणमपसव्यं प्रजाभावाय ।

वराहसंहितायां तु ।

अपसव्ये नरपतितस्करावमर्दैः प्रजानाशः ।

पराशरः ।

समन्ताज्जिह्वयाऽभिलेहनं स्समानफलं पूर्वेण—इति ।

पूर्वेण निरोधेनेत्यर्थः। निरोधनान्तरस्याभिधानात्।

वराहसंहितायां तु।

जिह्वावलेढि परितस्तिमिरनुदो मण्डलं स यदि लेहः।
प्रमुदितसमस्तभूप*प्रभूततोया च तत्र मही॥

पराशरः।

अर्धत्रिभागपादग्रहणं ग्रसनप्रख्यातं नृपतिप्रच्युतये।

वराहसंहितायाम्।

ग्रसनमिति यदा त्र्यंशः पादो वा गृह्यतेऽथ वाऽप्यर्धम्।
स्फीतनृपतिवित्तहानिः पीडा च स्फीतदेशानाम्॥

तत्रैव।

पर्यन्तेषु गृहीत्वा मध्ये पिण्डीकृतं तमस्तिष्ठेत्।
स निरोधो विज्ञेयः प्रमोदकृत् सर्वभूतानाम्॥

पराशरेण त्वन्यथा निरोधोऽभिहितः।

सर्वमण्डलधूमावरणं निरोधस्तदारोग्यक्षेमसुभिक्षलक्षणम्।

पराशरः।

उन्मर्दनं चिरमर्केन्दुसकलमण्डलाक्रमणं प्रजाविद्रवकरम्।

काश्यपस्तु।

अवमर्दे पापमर्दात् स्वयं संक्षुभ्यते नृपः।

वराहसंहितायाम्।

अवमर्दनमिति निःशेषमेव संछाद्य यदि चिरं तिष्ठेत्।
हन्यात् प्रधानभूपान् प्रधानदेशांश्च तिमिरमयः॥

भार्गवीये।

सर्वं संग्रह्य च ज्योतिश्चिरमन्तर्दधाति च।
हन्ति स्फीतानि राष्ट्राणि प्रधानं च नराधिपम्॥

पराशरः।

मण्डलमध्ये ग्रहणावर्त्तनमारोहणं नरपतिविक्षोभः प्रजानाशकरः।

---

* प्रमुदितसमस्तभूता इति ख।

दाहज्वरः कुक्षिरोगो मरकश्चात्र जायते ॥
तदा न वर्षेत् पर्जन्योऽन्त्यजाञ्छूद्रांश्च पीडयेत्।
श्वेतो वा पाण्डुवर्णो वा द्विजघ्नः पार्श्वरोगकृत् ॥

विष्णुधर्मोत्तरेऽप्युपरागमात्रवर्णफलमुक्तम्। तद्यथा।

उपरागे श्वेतरक्तः पीतकृष्णो राहुर्ब्राह्मणक्षत्रियविट्शूद्रपीडाकरो भवति।

ज्यौतिषपराशरेऽपि।

पांशुर्ब्रह्मघ्नः। लोहितक्षत्रियविनाशाय। कृष्णः कापोतकश्च शूद्रघ्नः क्षयकुक्षिरोगाय।

वराहेणापि सामान्येनैव वर्णफलमुक्तम्।

श्वेते क्षेमसुभिक्षं ब्राह्मणपीडां च निर्दिशेद्राहौ।
पांशुविलोहितरूपे क्षत्रध्वंसाय भवति वृष्टेश्च ॥
विमलकमणिपीताभो वैश्यध्वंसी भवेत् सुभिक्षाय।
कापोतः शूद्राणां व्याधिकरः कृष्णवर्णश्च ॥
अग्निभयमनलवर्णे पीडा च हुताशवृत्तीनाम्-इति।

भार्गवीये।

धूमवर्णोऽग्निवर्णो वा ग्रामेषु नगरेषु च।
अग्न्युत्पातं गृहस्थानां सदा स कुरुते ग्रहः ॥

वृद्धगर्गस्तु।

धूम्रवर्णोऽग्निवर्णो वा मारीमग्निं च कोपयेत्।

वराहसंहितायां तु।

सार्च्चिष्मत्यग्निभयं गैरिकरूपे तु युद्धानि।

अर्च्चिष्मान् अग्निस्तद्वति सार्च्चिष्मति।

पराशरः।

पाटलकुसुमसंकाशोऽशनिभयदो भवति।

वराहसंहितायां तु ।

अशनिभयसंप्रदायी पाटलकुसुमोपमो राहुः ।

भार्गवीये ।

ताम्रो भवति शस्त्राय रूक्षो भवति मृत्यवे ।
नीलो लोहितपर्यन्तो राहुश्चरति भास्करे ॥
पीडयेदाहिताग्नीँश्च ये चान्येऽग्न्युपजीविनः ।
यदा त्विन्द्रधनुर्वर्णो राहुश्चरति भास्करे ॥
अमात्यो हन्ति राजानं राजा वाऽमात्यमात्मनः ।

वृद्धगर्गस्तु ।

राहुरिन्द्रधनुष्प्रख्यो भयादिव्याधिवर्धनः ।
भयं घोरं विजानीयाद्रूक्षो यदि च दृश्यते ॥

पराशरः ।

बालार्कांशुकपिलो दुर्भिक्षाय ।

वराहसंहितायाम् ।

बालरविकमलसुरचापरूपभृच्छस्त्रकोपाय ।

पराशरः ।

नीलः स्तेयवृद्धये चैत्यविनाशाय । दूर्वाङ्कुरहरितो जनमरणाय । हरिद्रो व्याधये ।

वराहसंहितायां तु ।

हरिते रोगोल्वणता शस्यानामीतिभिश्च विध्वंसः ।
दूर्वाकाण्डश्यामे हारिद्राभे च निर्दिशेन्मरकम् ॥

भार्गवीये तु ।

श्यामो भवति वाताय धूम्रो भवति वृष्टये ।
हारिद्रः सर्वरोगाणां कोपं सृजति दारुणम् ॥

वराहसंहितायाम् ।

कापोतारुणकपिलश्यावाभे क्षुद्भयं विनिर्देश्यम् ।

आधूम्रे क्षेमसुभिक्षमादिशेन्मन्दवृष्टिश्च ॥

भार्गवीये ।

चक्राकारस्तु लोकानां घोरं जनयति ज्वरम् ।

स्वाभाविकवर्णानाह ब्रह्मगुप्ताचार्यः ।

"आन्तद्यन्तयोः स धूम्रः कृष्णः खण्डग्रहेऽर्धतोऽत्यधिके ।
ग्रासः कृष्णाताम्रः सर्वग्रहणे कपिलवर्णः*" ॥

अथाङ्गारकादीनां ग्रहराशिस्थितफलं च वराहसंहितायाम् ।

आवन्तिका[†] जनपदाः कावेरीनर्मदातटाश्रयिणः ।
दृप्ताश्च मनुजपतयः पीडान्ते क्षितिसुते ग्रस्ते ॥

ग्रस्ते ग्रहणराशिस्थिते । न तु चन्द्रादित्यवद्ग्रस्ते । चन्द्रग्रहणे छादिकाया भूछायाया भौमकक्षापर्यन्तमनुत्थानात् ।

भूछायापरिमाणम् ।

खतिथिनगानललोचन-२३७१५०
योजनदीर्घा च भवति भूच्छाया ।
स्पृशति च बुधकक्षोपरि
गजरसनृपयमशैल-७२१६६८योजनान्येव ॥

रविग्रहे च सूर्यासन्नस्थानां ग्रहाणामस्तमितत्वाद्ग्रहणादर्शनात् । न च गणिता-नुमानमात्रेण ग्रहणफलं भवति ।

अत एव ग्रहसहितत्वमात्रमुक्तं वटकणिकायाम् ।

सहितो ग्रहेण येन च तद्देशश्चाप्नुयात् पीडाम् ।

वराहसंहितायाम् ।

अन्तर्वेदीं सरयूं नेपालं पूर्वसागरं शोणम् ।
स्त्रीनृपयोधकुमारान् सह विद्वद्भिर्बुधो हन्ति ॥
ग्रहणोपगते जीवे विद्वं नृपमन्त्रिगजहयध्वंसः ।

* ब्रह्मसिद्धान्ते चन्द्रग्रहणाधिकारस्य १२ श्लो. । तत्र 'ग्रासे स कृष्णताम्र' इति ।

† आवर्त्तका इति ख. ।

सिन्धुतटवासिनामप्युदग्दिशं संश्रितानां च ॥
भृगुतनये राहुगते दशार्णकाः कैकयाः सयौधेयाः ।
आर्यावर्त्ताः शिवयः स्त्रीसचिवगणाश्च पीड्यन्ते ॥

बुधभार्गवयोगफलं सूर्यग्रहण एव बोद्धव्यम् । चन्द्रग्रहणे तद्योगासम्भवात् ।

सौरे मरुभवपुष्करसौराष्ट्रिकधातवोऽर्वुदान्त्यजनाः ।
गोमन्तपारियात्राश्रिताश्च नाशं व्रजन्त्याशु ॥

अथ ग्रहदृष्टिफलं वराहसंहितायाम् ।

पश्यन् ग्रस्तौ* सौम्यो घृतमधुतैलक्षयाय राज्ञां च ।

यदा रविचन्द्रौ ग्रस्तौ भवतस्तदा ग्रहैर्दर्शनादेतानि फलानि भवन्तीति व्याख्येयम् । पश्यन्तीति यथासम्भवं सम्बन्धनीयम् । तत्र सौम्यश्चन्द्रं पश्यन्निति सम्बन्धः । बुधस्यादित्यदर्शनासम्बन्धत्वादिति ।

भौमः समरविमर्दं शिखिकोपं तस्करभयं च ।
शुक्रः शस्यविमर्दं नानाक्लेशं च जनयति धरित्र्याम् ॥
रविजः करोत्यवृष्टिं दुर्भिक्षं तस्करभयं च ।
यदशुभमवलोकनाभिरुक्तं ग्रहजनितं ग्रहणे प्रमोक्षणे वा ।
सुरपतिगुरुणाऽवलोकिते तच्छममुपयाति जलैरिवाग्निरिद्धः ॥

अथ हीनातिरिक्तवेलाफलम् । तत्र गर्गः ।

वेलाहीने शस्त्रभयं गर्भाणां श्रवणं तथा ।
अतिवेले फलानां तु शस्यानां क्षयमादिशेत् ॥

वराहसंहितायां तु ।

वेलाहीने पर्वणि गर्भविपत्तिश्च शस्त्रकोपश्च ।
अतिवेले कुसुमफलक्षयो भयं शस्यनाशश्च ॥

काश्यपस्तु ।

अनागतमतीतं वा वेलाहीनाधिकं च यत् ।
गर्भस्रावस्त्वनावृष्टिः फलं पुष्पं विनश्यति ॥

---

* ग्रस्तम् इति अ. । न तत्र सूर्यचन्द्रयोः कश्चिद्विशेषोऽर्थोऽभिहितः ।

अथ खांशफलम्। तत्र दृश्यनभोभागं त्रिधा विभज्य फलमुक्तं भार्गवीये।

यौवनस्थाँश्च पूर्वाह्णे हन्ति यज्ञविदाङ्गनान्।
औदकानि च सत्त्वानि नागेन्द्रश्चात्र दुःखितः॥
अथ मध्यपथं प्राप्तः शूद्रान् हन्ति सतस्करान्।
उपरक्तो नृपं हन्ति चन्द्रश्च वरवारणात्॥
प्रलम्बः प्रमदां हन्ति क्षत्रं राष्ट्रं च सर्वशः।
त्रिगर्त्ताश्चात्र पीडयन्ते मत्स्याश्च कुरवो जनाः* ॥

षट्कर्णिकायाम्।

पीडयति विप्रराजन्यसत्रिनृपवैश्यशूद्रदस्युगणान्।
खांशेष्वसुरः सप्तसु दृष्टो नष्टः शिवायोक्तः॥

वृद्धगर्गस्तु।

गवां तु प्रथमं क्षेत्रं द्वितीयं ब्रह्मवादिनाम्।
क्षत्रियाणां तृतीयं स्यान्मध्यमं सार्वलौकिकम्॥
पञ्चमं पुरवैश्यानां षष्ठं स्याच्छूद्रयोषिताम्।
सर्वासामन्त्यजातीनां सप्तमं क्षेत्रमुच्यते॥
येषां सोमो युगे ग्रस्तो विमर्दो यत्र वा भवेत्।
तेषां पीडां विजानीयान्मोक्षे क्षेममथादिशेत्॥

काश्यपस्तु।

प्रथमांशे विप्रपीडा क्षत्रियाणां द्वितीयके।
तृतीये चान्त्यजानां तु चतुर्थे मध्यदेशजान्॥
वैश्यानां पञ्चमे खांशे षष्ठांशे प्रमदाभयम्।
दस्युप्रत्यन्तिकान् म्लेच्छान् नाशयेत्† सप्तमांशके॥
येषामंशे भवेन्मोक्षस्तज्जातीनां शुभं वदेत्।

---

* ये च दण्डभृतो जनाः इति छ.।
† प्रत्यन्तम्लेच्छविनाशः इति अ.।

इन्तीत्यनुवृत्तौ वराहसंहितायां तु ।

अग्नपजीविगुणाधिकविप्राश्रमिणोऽयुगाभ्युदितः ।

कर्षकपाखण्डवणिक्क्षत्रियबलनायकान् द्वितीयांशे ॥

अयुगाभ्युदितः प्रथमांशोदितः ।

विनाशाय ग्रहणमित्यनुवृत्तौ पराशरः ।

क्षत्रियबलाध्यक्षयोर्मध्याभिलाषिणः—इति ।

मध्याभिलाषी तृतीयखांशस्थः ।

वराहसंहितायां तु ।

कारुकशूद्रान् म्लेच्छाँस्तृतीयखांशे च मन्त्रिजनान् ।

पराशरः ।

श्वेतभवानां मध्यप्राप्तस्य ।

वराहसंहितायां तु ।

मध्यांशे नरपतिमध्यदेशहा शोभनश्च धान्यार्घः ।

मध्यारेखायां विशेषमाह वृद्धगर्गः ।

नभोमध्यगतो राहुः सोमे सूर्येऽथ वा स्थितः ।

प्रजानामथ राज्ञां च भयं कुर्याद्विसर्पतः ॥

पञ्चमषष्ठसप्तमांशफलमाह पराशरः ।

चतुर्थात् किञ्चिदावृत्तस्य क्षत्रियस्त्रीणां व्यालम्बितस्य शूद्रतस्कराणामस्तमये ।

वराहसंहितायाम् ।

तृणभुगमात्यान्तःपुरवैश्यघ्नः पञ्चमे खांशे ।

स्त्रीशूद्रान् षष्ठेऽंशे दस्युप्रत्यन्तहाऽस्तमयकाले ॥

यस्मिन् खांशे मोक्षस्तत्रोक्तानां फलं भवति ।

अथ ग्रस्तोदयास्तफलम् । तत्र काश्यपः ।

उदितास्तमितौ ग्रस्तौ सर्वशस्यक्षयङ्करौ ।

वराहसंहितायाम् ।

ग्रस्ताबुदितास्तमितौ शारदधान्यावनीश्वरक्षयदौ ।

हरिवंशे च कंसवधनिमित्तम् ।

"ग्रस्तः स्वर्भानुना सूर्यो दिवा नक्तमजायत"* ।

पराशरस्तु ।

गृहीतो यद्युदागच्छेदस्तं वा यदि गच्छति ।
अयोगक्षेममाचष्टे त्रीणि वर्षाण्यसंशयम् ॥

बार्हस्पत्ये तु ।

गृहीतो राहुणा सार्धमुत्तिष्ठति यदा शशी ।
तदा धर्मपरिक्षीणा कलिमाविशति प्रजा ॥
अमुक्तो राहुणा सार्धमस्तं गच्छति चन्द्रमाः ।
तदा तमोमयस्तस्मान्मृत्युमाविशति प्रजा ॥

वृद्धगर्गस्तु ।

गृहीतो यद्युदागच्छेदस्तं वा यदि गच्छति ।
शारदं तु तदा शस्यं जातमात्रं विपद्यते ॥
ग्रैष्मेण तत्र जीवन्ति नरा मूलफलेन वा ।
भयदुर्भिक्षरोगैश्च तदा संक्षिप्यते जगत् ॥

भार्गवीये ।

गृहीतो यद्युदागच्छेद्यदि वा प्रतितिष्ठति ।
अयोगक्षेम आदेश्यस्त्रिषु लोकेषु दारुणः ॥

प्रतितिष्ठत्यस्तमेति ।

शारदं त्रीणि वर्षाणि शस्यजातं न पच्यते ।
निदाघेनात्र जीवन्ति प्रजा मूलफलेन वा ॥

आदित्यस्य ग्रस्तोदयास्तमये विशेषो बार्हस्पत्ये ।

पराजितो राहुनिपीतमण्डलो त्रिवर्णभावाधिगतोऽपि ‡निष्प्रभः ।
यदाऽस्तमायाति हि वै दिवाकरस्तदाऽऽशु विद्यात् तु महज्जनक्षयम् ॥

---

* २३ अ. ३१ श्लो. । † तमोग्रस्तो यदोदेति इति च. ।

‡ विवर्णसन्ध्याधिगतोऽपि इति च. ।

पराजितो ग्रस्यमानः। निष्प्रभमण्डलः सर्वग्रस्तः।
अथार्धोदयास्तग्रहणफलम्। तत्र पराशरः।

यज्ञनैकृतिकविनाशायार्धोदितग्रहणम्।

वराहसंहितायां च।

अर्धोदितोपरक्तो नैकृतिकान् हन्ति सर्वयज्ञाँश्च।

भार्गवीये तु।

उदितो गृह्यमाणश्च हन्ति वेदविदो जनान्।
बालाँश्च जटिलान् हन्ति ये च काषायवाससः॥

ऋषिपुत्रस्तु।

उदयेऽस्तमये वाऽपि सूर्यस्य ग्रहणं भवेत्।
तदा नृपभयं विद्यात् परचक्रस्य चागमम्॥

अथोदितग्रहणफलम्। तत्र वृद्धगर्गः।

उदितो गणमुख्याँश्च ब्राह्मणाँश्चापि पीडयेत्।

उदितो नीललोहितः।
विनाशाय ग्रहणमित्यनुवृत्तौ पराशरस्तु।

गुणाधिकगणमुख्यानामुदितस्य।

सन्ध्याग्रहणफलम्। तत्र वृद्धगर्गः।

सन्ध्याकाले तु गर्भस्था गृहीतः पीडयेत् प्रजाः।
गावो गर्भं विमुञ्चन्ति न च वर्षेत् पुरन्दरः॥

सन्ध्यापरिमाणं सन्ध्यालक्षणं च वक्ष्यामः।
अथ मोक्षलक्षणम्। तत्र पराशरः।

षड्विधो मोक्षो वामदक्षिणच्छर्दनाभिनिर्वहणान्तमध्यो नृपक्षयाभिवर्षणसुभिक्षशस्त्रकोपमध्यजनाक्षेमशरच्छस्यनाशकरः।

इति मोक्षषट्कस्य क्रमेणैतानि फलानि।
वराहसंहितायां तु।

हनुकुक्षिपायुभेदा द्विर्द्विः संछर्दनं च मरणं च।
मध्यान्तयोर्विदरणमिति दश शशिसूर्ययोर्मोक्षाः॥

अस्यार्थः । हनुभेदादयस्त्रयो द्विर्द्विर्द्विधाकारा भवन्ति । दक्षिणो वामश्च मध्यान्तयोश्च विदारणमिति मध्यविदारणमन्तविदारणं च ।

काश्यपः ।

दक्षिणे हनुभेदः स्यादाग्नेय्यां यदि गच्छति ।
शस्यनाशं च कुरुते नृपभङ्गं सुदारुणम् ॥

वराहसंहितायां तु ।

आग्नेय्यामपगमनं दक्षिणहनुसंज्ञितं शशिनः ।
शस्यविमर्दो मुखरुग्नृपपीडा स्यादवृष्टिश्च ॥

काश्यपः ।

पूर्वोत्तरहनुभेदो* नृपपुत्रवधप्रदः ।

वराहसंहितायां तु ।

पूर्वोत्तरे ण वामो हनुभेदो नृपकुमारभयदायी ।
मुखरोगः शस्त्रभयं तस्मिन् विन्द्यात् सुभिक्षं च ॥

काश्यपः ।

दक्षिणः कुक्षिभेदः स्याद्याम्ये मोक्षो भवेद्यदि ।
राजपुत्रभयं तत्र दक्षिणाशापतेर्वधः ॥

वराहसंहितायां तु ।

दक्षिणकुक्षिविभेदो दक्षिणपार्श्वे यदि भवेन्मोक्षः ।
पीडा नृपपुत्राणामभियोज्या दाक्षिणा रिपवः ॥

काश्यपः ।

सौम्यायां तु यदा मोक्षो वामकुक्षिविभेदनम् ।
स्त्रीणां गर्भविनाशाय सौम्याशाधिपतेर्भयम् ॥

वराहसंहितायां तु ।

वामस्तु कुक्षिभेदो यद्युत्तरमार्गसंस्थितो राहुः ।
स्त्रीणां गर्भविपत्तिः शस्यानि च तत्र मध्यानि ॥

---

* पूर्वोत्तरेऽपरो भेदः इति अ. ।

काश्यपः ।

पायुभेदगतो राहुर्वायव्यो निर्ऋताश्रयः ।

गुदरोगभयं विन्द्याद्वामे राज्ञीभयं भवेत् ॥

वायव्यो मोक्षो पायुभेदो नैर्ऋत्यो दक्षिणः । उभयोरेव गुदारोगफलं पायुभेदत्वात् । वामे तु राज्ञीभयमधिकम् ।

तथा च वराहसंहितायाम् ।

नैर्ऋतवायव्यस्थौ दक्षिणवामौ तु पायुभेदौ द्वौ ।

गुह्यरुगल्पा वृष्टिर्द्वयोस्तु राज्ञीक्षयो वामे ॥

काश्यपः ।

ग्रासो मोक्षो यदा पूर्वे छर्दनं तु तदा भवेत् ।

क्षेमहार्दिप्रदो ज्ञेयः शस्यनिष्पत्तिकारकः ॥

वराहसंहितायां च ।

पूर्वेण प्रग्रहणं कृत्वा प्रागेव चापसर्पेत ।

संछर्दनमिति तत् क्षेमशस्य हार्दिप्रदं जगतः ॥

काश्यपः ।

पूर्वेण ग्रसते राहुरपरस्यां विमुञ्चति ।

क्षुत्तस्करभयं* तत्र मोक्षस्तु जरणं स्मृतम् ॥

वराहसंहितायां च ।

प्राक् प्रग्रहणं यस्मिन् पश्चादपसर्पणं तु तज्जरणम् ।

क्षुच्छस्त्रभयोद्विग्ना न शरणमुपयान्ति तत्र जनाः ॥

मध्ये यदि प्रकाशस्तन्मध्यविदारणं नाम ।

अन्तःकोपकरं स्यात् सुभिक्षदं नातिवृष्टिकरम् ॥

तदिति वृष्टिकरं सुभिक्षदं न भवति । दुर्भिक्षमेव करोतीत्यर्थः ।

तथा च काश्यपः ।

यदा प्रकाशते मध्ये दुर्भिक्षमरकौ तदा ।

पराशरेण चाऽस्य शरच्छस्यनाशकत्वमात्रमुक्तम् । तद्वचनं प्रागेव लिखितम् ।

---

* क्षुच्छस्त्रभयम् इति वराहसम्मतः पाठः ।

काश्यपः ।

पर्यन्ते विमलत्वं स्यात् तमो मध्ये यदा भवेत् ।
मध्याख्यदेशनाशः स्याच्छरच्छस्यं विनाशयेत् ॥

वराहसंहितायां च ।

पर्यन्तेषु विमलता बहुलं मध्ये तच्छमोऽन्त्यदरणाख्यम् ।
मध्याख्यदेशनाशः शारदशस्यक्षयश्चास्मिन् ॥
एते सर्वे मोक्षा वक्तव्या भास्करे किन्तु ।
पूर्वा दिक् शशिनि यथा तथा रवौ पश्चिमा कल्प्या ॥

पराशरः ।

मोक्षागमो दिग्भ्यो राज्ञां जयपराजयौ वेदितव्यौ । गृहीत्वा ततः पूर्वनिवर्त्तनमभियोक्तृवधाय विपर्ययेणाभियुक्तस्य ।

अथ ग्रहणसमयाद्ग्रहणफलम् । तत्र गर्गः ।

दिग्दाहोल्कामहीकम्पास्तमोधूमरजांसि च ।
सूचयन्त्यागमं राहोः पुनः पर्वण्युपस्थिते ॥

वराहसंहितायां तु ।

ग्रस्ते क्रमान्निमित्तैः पुनर्ग्रहो मासषट्कपरिवृद्ध्या ।
पवनोल्कापातरजःक्षितिकम्पतमोऽशनिनिपातैः ॥

पराशरस्तु ।

उपरक्ते यदा चन्द्रे बलवान् वाति मारुतः ।
मासे षष्ठे तदा विन्द्याद्राहोरागमनं ध्रुवम् ॥
उल्कायां द्वादशे मासि रजस्यष्टादशे तथा ।
भूमिकम्पे चतुर्विंशे त्रिंशे तमसि निर्दिशेत् ॥
षड्विंशेऽशनिपातेऽस्मात् सर्वेषां स्यात् षडन्तरः—इति ।

एवं सर्वेषामुक्तनिमित्तानां सम्भवे क्रमेण षडन्तरे भवतीत्युक्तस्यैव संक्षेपः । अथ वा सर्वेषामुक्तनिमित्तानामेकस्मिन् ग्रहणे सम्भवे षडुत्तरे षड्विंशे ग्रासे द्वाचत्वारिंशन्मासे पुनर्ग्रहणं भवतीत्यर्थः ।

पराशरः।

षण्मास्या चन्द्रमसस्ततोऽर्धषष्ठे चादित्यस्याभिपूजितमाहुराचार्याः।

वृद्धगर्गस्तु।

स्वर्भानुरिन्दुं षष्ठे तु मासे यद्युपतिष्ठति।
तदा क्षेमं सुभिक्षं च योगक्षेमं च निर्दिशेत्॥
यदा त्वष्टादशे मासि राहुः सोममुपक्रमेत्।
रसक्षयो व्याधिभयं विनाशः फलपुष्पयोः॥
चतुर्विंशे यदा सोमो दैत्येन ग्रस्यते यदि।
अनावृष्टिभयं घोरं दुर्भिक्षं च विनिर्दिशेत्॥
यदा तु त्रिंशतितमे मासि संगृह्यते शशी।
तदा क्षयः समुत्पद्येत् प्रचलेद्वाऽपि मेदिनी॥
चन्द्रे पञ्चममासे तु मासे त्वेकादशे तथा।
सप्तदशे तु सूर्यस्य ग्रहणं क्षुद्भयाय तु॥

पराशरस्तु।

सप्तदशत्रयोदशपञ्चत्रिंशन्मासिकानि चन्दोस्त्रीणि विसन्धिग्रहणानि क्षुद्व्याधिमरकदुर्भिक्षोपद्रवाय वेदितव्यानि।

एवमेवैतानि प्राकृतग्रहणानि वटकणिकायाम्।

वर्षस्य व्यतीतान्यतिकष्टानि पर्वाणि।

विष्णुधर्मोत्तरे।

अत्यन्तादर्शने राहोस्तथा चात्यन्तदर्शने।
प्रजापीडा विनिर्देश्या व्याधिदुर्भिक्षतस्करैः॥

अथ ग्रहणनिर्मुक्ताद्भुतफलम्। तत्र वराहसंहितायाम्।

"परुषपवनाब्दगर्जितविद्युत्परिवेषभूमिकम्पाद्याः।

सप्ताहन्तर्न शुभा ग्रहणनिवृत्तौ शुभा वृष्टिः"* ॥

वृद्धगर्गपराशरौ तु ।

अथेन्द्रग्रहनिर्मुक्ते सप्ताहन्तर्भवेद्यदि ।
पांशुवर्षोऽन्ननाशः स्यान्नीहारो रोगवृद्धये ॥
नृपनाशाय भूकम्प उल्का मन्त्रिविपत्तये ।
रोगाय परिवेषः स्याद्भयायैवाभ्रसंप्लवः ॥
विद्युद्गर्भविनाशाय दिग्दाहश्चाग्निवृद्धये ।
निर्घातेन्द्रधनुर्दण्डो दुर्भिक्षाय भयाय च ॥
पवनः परुषो रूक्षश्चौरोपद्रवसूचकः ।

वराहसंहितायाम् ।

मुक्ते सप्ताहान्तः पांशुनिपातोऽन्नशस्यसंक्षयं कुरुते ।
नीहारो रोगभयं भूकम्पः प्रबलनृपमृत्युं च ॥
उल्का मन्त्रिविनाशं नानावर्णाश्च भयमतुलम् ।
स्तनितं गर्भविनाशं विद्युन्नृपदंष्ट्रिपरिपीडाम् ॥
परिवेषो रुक्पीडां दिग्दाहो नृपभयं च साग्निभयम् ।
रूक्षो वायुः प्रबलश्चौरसमुत्थं भयं धत्ते ॥
निर्घातः सुरचापो दण्डश्च क्षुद्भयं सपरचक्रम् ।
ग्रहयुद्धे नृपयुद्धं केतुश्च तदेव संदृष्टः ॥

वृद्धगर्गपराशरौ ।

सर्वोपद्रवनाशः स्यात् सम्यग्वृष्टिर्भवेद्यदि ।

वराहसंहितायां तु ।

अविकृतसलिलनिपातैः सप्ताहान्तः सुभिक्षमादेश्यम् ।

---

* अयं श्लोको वराहसंहितायां नोपलभ्यते । 'मुक्ते सप्ताहान्तः' इत्यादिश्लोकटीकायां भट्टोत्पलेन स च समाससंहितायाः प्रमाणत्वेनाभिरक्षितः । एतदर्थं द्रष्टव्या अ. ६२ पृ. १ पं. ।

यच्चाशुभं ग्रहणजं तत्सर्वं नाशमायाति ॥

अथोभयपक्षीयग्रहणफलं वटकणिकायाम् ।

समरागमाय राहुर्यदि पक्षान्ते पुनर्दृश्यः ।

भार्गवीये ।

यदि च राहुरुभौ शशिभास्करौ ग्रसति पक्षमनन्तरगं ततः ।
पुरुषशोणितकर्दमवाहिनी भवति भूर्न च वर्षति वासवः ॥

एकस्मिन् मासे उभयपक्षीयग्रहणफलमेतत् ।

तथा च काश्यपः ।

एकमासेऽर्कचन्द्राभ्यां ग्रहणं न प्रशस्यते ।
परस्परवधं कुर्युः स्वबलक्षोभिता नृपाः ॥

वराहसंहितायां च ।

यद्येकस्मिन् मासे ग्रहणं रविसोमयोस्तदा क्षितिपाः ।
स्वबलक्षोभैः संक्षयमायान्त्यतिशस्त्रकोपं च ॥

मासभेदे तु फलमुक्तं भार्गवीये ।

गृहीत्वा भास्करं पूर्वं गृह्णाति शशिनं यदि ।
तत्र मासोत्तरं नाम आराध्यन्ते हि देवताः ॥

वराहसंहितायां तु ।

अर्कग्रहात् तु शशिनो ग्रहणं यदि दृश्यते ततो विप्राः ।
नैकक्रतुफलभाजो भवन्ति मुदिताः प्रजाश्चैव ॥
सोमग्रहे निवृत्ते पक्षान्ते यदि भवेद्ग्रहोऽर्कस्य ।
तत्रामयः प्रजानां दम्पत्योर्वैरमन्योन्यम् ॥

वृद्धगर्गपराशरौ ।

यद्राहुचरितं प्रोक्तं चन्द्रग्रहणहेतुकम् ।
तदेव सकलं सूर्ये वेदितव्यं शुभाशुभम् ॥

अत्रानुक्तविशेषशान्तिषु राहूत्पातेषु रविग्रहणे रविराहुपूजापूर्विका चन्द्रग्रहणे चन्द्रराहुपूजापूर्विका प्रभूतकनकान्नगोमहीदा-

नादिका सामान्यशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या-इति।

अथ विहितविशेषशान्तयो राहूत्पाताः। तत्रा पर्वग्रहणे वृद्धगर्गः।

अपर्वणि भयं यस्माद्ग्रहणं शशिसूर्ययोः।

पराशरस्तु।

अपर्वण्युपरक्तः प्रजानाशाय।

मयूरचित्रे।

अपर्वग्रहणे दस्युशस्त्रकोपा भवन्ति च।
वधो मुख्यस्य भूपस्य तथा राष्ट्रस्य जायते॥

आरण्यककाण्डे खरादिवधनिमित्तम्।

"सकबन्धः सपरिघः स्वर्भानुश्च दिवाकरः।
जग्राह कालपर्यन्तमपर्वणि महाग्रहः"* ॥

त्रयोदशीग्रहणे तु विशेषः। तथा च मुशलपर्वणि यदुकुलोत्सादननिमित्तम्।

"चतुर्दशीपञ्चदशीकृतेयं राहुणा पुनः।
प्राप्ते वै भारते युद्धे दृष्टा चाद्यक्षयाय नः"† ॥

भीष्मपर्वणि कुरुपाण्डवसैन्यवधनिमित्तम्।

"चतुर्दशीं पञ्चदशीं भूतपूर्वां च षोडशीम्।
चन्द्रसूर्यावुभौ ग्रस्तावेकपक्षे त्रयोदशीम्‡ ॥
अपर्वणि ग्रहेणोभौ प्रजासंक्षपयिष्यतः"§ ।

वृद्धगर्गस्तु।

दृश्यते च त्रयोदश्यां चन्द्रार्कौ ग्रहणं गतौ।
छत्राण्यनेकानि तदा भृज्यन्ते भूमिपक्षये॥

---

* वाल्मीकीये २३ सर्गे ११-१२ श्लो.।
"कबन्धः परिघाभासो दृश्यते भास्करान्तिके।
जग्राह सूर्यं स्वर्भानुरपर्वणि महाग्रहः" ॥ इत्युपलभ्यते।

† २ अ. ११ श्लो.।

‡ ग्रस्तावेकमासीं त्रयोदशीम् इति महाभारते उपलभ्यते।

§ ३ अ. ३२ श्लो.।

सपुत्रदारा नश्यन्ति संग्रामे लोमहर्षणे।
अनेन वनितायाः स वैधव्यान्तकरोऽधिकम्॥

त्रयोदश्यां चन्द्रार्कौ ग्रहणं गताविति एकस्यामेव त्रयोदश्यां युगपद्ग्रस्तावित्यर्थः।

तथा च भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम्।

"चन्द्रादित्यावुभौ ग्रस्तावेकाह्ना हि त्रयोदशीम्।
अपर्वणि ग्रहौ जातौ प्रजासंक्षयमिच्छतः"* ॥

ग्रहौ जातौ मुखपुच्छाभ्यां ग्रासौ जाताविल्यर्थः।

एतच्चापर्वग्रहणं द्विविधं राहुकृतं त्वष्टृकृतं च तथा च कठश्रुतिः।

यच्चापर्वणि राहुदर्शनं तत्र नरपतेर्वधमादिशेत्।

सभापर्वणि तु पाण्डवानां वनप्रवेशे कुरुक्षयनिमित्तम्।

"राहुरग्रसदादित्यमपर्वणि विशां पते"† ।

ज्योतिषपराशरविष्णुधर्मोत्तरयोः।

अपर्वणि शशाङ्कार्कौ त्वष्टा नाम महाग्रहः।
आवृणोति तमः श्यामः सर्वलोकविपत्तये॥

बराहसंहितायां तु।

सतमस्कं पर्व विना त्वष्टा नामार्कमण्डलं कुरुते।
स निहन्ति सप्तभूपाञ्जनांश्च शस्त्राग्निदुर्भिक्षैः॥

राहुयुक्तराशिस्थितयोस्तत्सप्तमराशिस्थितयोश्च रविचन्द्रमसोरपर्वग्रहणं राहुकृतमिति राहुकृतपर्वग्रहणशान्तिमाह नारदः।

अकस्माल्लक्ष्यते चन्द्रेऽपर्वणि राहुदर्शनम्।
अद्भुतं तत्र विज्ञेयं शान्तिं चेमां प्रयोजयेत्॥
औदुम्बर्याः सहस्राणि अष्टौ च जुहुयाद्द्विजः।
मध्वक्तानि घृतान्यत्र जातवेदसि मन्त्रवित्॥
विप्राय दक्षिणां दद्याद्धेनुं च वृषभं तथा।

---

* ३ अ. २८ श्लो.। † ८० अ. २१ श्लो.।

एकरात्रोषितो भूत्वा ततः संपद्यते शुभम् ॥

इति कोटिहोमशक्तावियं शान्तिः । राहुकृतापर्वग्रहे कठश्रुतिविहिता सूर्यदैवत्याऽपि शान्तिः कर्त्तव्या सा च कठश्रुत्युक्ताऽद्भुतमिश्रके लिखितव्या ।

त्वष्टृकृतापर्वग्रहणे तु ।

प्रभूतफलकनकान्नगोमहीदानादिका सामान्यशान्तिः कर्त्तव्या—इति ।

अथाग्नेयमण्डलग्रहणफलं मयूरचित्रे ।

आग्नेयमण्डले सूर्यचन्द्रयोर्ग्रहणे सति ।
पित्तदाहोऽतिसारश्च शिरोरोगस्तथैव च ॥
ज्वरस्तापस्तथा कुष्ठं कासश्वासस्तथैव च ।
कुक्षिरोगादयो रोगाः प्रभवन्तीह देहिनाम् ॥
भूमिदोहोऽत्र कर्त्तव्यो नगरे भ्रमणे तथा ।
कार्यो दूर्वासमिद्धोमो जपश्चैव विशेषतः ॥
नटप्रेक्षणकं कुर्यान्नोपघातः कथंचन ।

इति चतुर्थीशान्तिः ।

अथ वायव्यमण्डलग्रहणफलं मयूरचित्रे ।

वायव्यमण्डले वायोः क्षोभो वृष्टिर्न जायते ।
प्रासादामरवेश्मानि शैला वृक्षाः पतन्ति च ॥
दुर्भिक्षमशुभं रोगो गूढगर्भाः स्त्रियस्तथा ।
भूमिदोहो गवां दानं हेमदानं जपस्तथा ॥
होमाश्च नगरस्थाने ततः सम्पद्यते सुखम् ।

होमाः कोटिहोमाः । आहुतिबहुत्वाद्बहुवचनम् ।

इति पञ्चदशी शान्तिः ।

आग्नेयादिमण्डलानि भूमिकम्पे लिखिष्यामः ।

अथ जन्मराशिस्थचन्द्रादित्यग्रहणशान्तिः । मत्स्यपुराणे ।

यस्य राशिं समासाद्य भवेद्ग्रहणसम्भवः ।

तस्य स्नानं प्रवक्ष्यामि मन्त्रौषधिविधानवत् ॥
चन्द्रोपरागं संप्राप्य कृत्वा ब्राह्मणवाचनम् ।
संगृह्य चतुरो विप्रान् शुक्लमाल्यानुलेपनैः ॥
पूर्वमेवोपरागस्य समासाद्यौषधादिकम् ।
स्नापयेच्चतुरः कुम्भान् ब्रह्मणान् सागरानिति* ॥
गजाश्वरथ्यावाल्मीकसङ्गमाद्ध्रदगोकुलात् ।
राजद्वारप्रवेशाच्च मृदमानीय निःक्षिपेत् ॥
पञ्चगव्येन कुम्भेषु शुद्धमुक्ताफलानि च ।
रोचनापद्मशङ्खौ च पञ्चभङ्गसमन्वितौ ॥

पञ्चगव्येनेति पञ्चगव्येन सह निःक्षिपेदित्यर्थः ।

अथ पञ्चभङ्गः ।

पालाशाश्वत्थकपित्थविल्वोदुम्बरपल्लवैः ।
पञ्चभङ्ग इति ख्यातो बालानां शान्तिकारकः–इति ॥
स्फटिकं चन्दनं श्वेतं तीर्थवारि ससर्षपम् ।
गजदन्तं सकुमुदं तथैवोशीरगुग्गुलम् ॥
एतत्सर्वं विनिःक्षिप्य कुम्भेष्वावाहयेत् सुरान् ।
सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ॥
आयान्तु यजमानस्य दुरितक्षयकारकाः ।
योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः ॥
सहस्रनयनश्चन्द्रग्रहपीडां व्यपोहतु ।
मुखं यः सर्वदेवानां सप्तार्चिरमितद्युतिः ॥
चन्द्रोपरागसम्भूतामग्निपीडां व्यपोहतु ।

---

* मागध्यानपि इति च. ।

यः कर्मसाक्षी लोकानां धर्मो महिषवाहनः ॥
यमश्चन्द्रोपरागोत्थां पीडामत्र व्यपोहतु ।
रक्षोगणाधिपः साक्षात् प्रभयाऽनलसप्रभः ॥
खड्गव्यग्रोऽतिभीमश्च रक्षःपीडां व्यपोहतु ।
नागपाशधरो देवः सदा मकरवाहनः ॥
स जलाधिपतिश्चन्द्रग्रहपीडां व्यपोहतु ।
प्राणरूपेण यो लोकान् पाति कृष्णमृगाश्रयः ॥
वायुश्चन्द्रोपरागोत्थां ग्रहपीडां व्यपोहतु ।
योऽसौ निधिपतिर्देवः खड्गशूलगदाधरः ॥
चन्द्रोपरागकलुषं धनदोऽत्र व्यपोहतु ।
योऽसाविन्दुप्रभो रुद्रः पीनाकी वृषवाहनः ॥
चन्द्रोपरागपापानि स नाशयतु शङ्करः ।
त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ॥
ब्रह्मविष्णवर्कयुक्तानि तानि पापं दहन्तु च ।
एवमामन्त्रितैः कुम्भैरभिषिक्तो गुणान्वितैः ॥
ऋग्यजुःसाममन्त्रैश्च शुक्लमाल्यानुलेपनैः ।
पूजयेद्वस्त्रगोदानैर्ब्राह्मणानिष्टदेवताम् ॥
एतानेव ततो मन्त्रान् विलिख्य कनकान्वितान् ।
वस्त्रे पट्टेऽथ वा* भूर्जे पञ्चरत्नसमन्विते ॥
यजमानस्य शिरसि निदध्युस्ते नरोत्तमाः ।
ततोऽतिवाहयेद्वेलामुपरागानुगामिनीम् ॥
प्राङ्मुखः पूजयित्वा तु संपश्यन्निष्टदेवताम् ।

* वर्णपट्टेऽथ वा पट्टे इति च. ।

चन्द्रग्रहे निवृत्ते तु कृतगोदोहमङ्गलः ॥
कृतस्नानस्तु तत् पट्टं ब्राह्मणाय* निवेदयेत् ।
अनेन विधिना यस्तु ग्रहस्नानं समाचरेत् ॥
न तस्य ग्रहपीडा स्यान्न च बन्धुधनक्षयः ।
परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम् ॥
सूर्यग्रहे सूर्यनाम सदा मन्त्रेषु कीर्त्तयेत् ।
अधिकाः पद्मरागाः स्युः कपिला च सुशोभना ॥
य इदं शृणुयान्नित्यं श्रावयेद्वाऽपि मानवः ।
सर्वपापविनिर्मुक्तः शक्रलोके महीयते ॥

अथ जन्मनक्षत्रग्रहणफलं ज्योतिषपराशरविष्णुधर्मोत्तरयोः ।

यन्नक्षत्रगतो राहुर्ग्रसते चन्द्रभास्करौ ।
तज्जातीनां भवेत् पीडा यदि ते शान्तिवर्जिताः ॥

अत्र जन्मनाडीनक्षत्रोपतापविहिता शान्तिः कर्त्तव्या । ताश्च नाडीनक्षत्रोपशान्तौ वक्ष्यामः ।

भार्गवीये ।

यस्य राज्यस्य नक्षत्रे स्वर्भानुरुपरज्यते ।
राज्यभ्रंशं सुहृन्नाशं मरणं चात्र निर्दिशेत् ॥

राज्यस्य नक्षत्रेऽभिषेकः । तदभिषेकनक्षत्रं यदि जन्मनक्षत्रमपि नृपतेः स्यात् तदा मरणं फलम् । अथाभिषेकनक्षत्रोपतापशान्तिश्च कर्त्तव्या फलपाकसमये ।

वराहसंहितायां तु ।

सुरद्विषोऽब्दार्धाद्वर्षात् सूर्यग्रहणे–इति ।

एतान्याद्भुतानि राहुकृतग्रहणे गर्गादिभिरभिहितानि । वराहादिभिस्तु ग्रहणमेव राहुकृतं न भवतीत्युक्तम् ।

तथा च वराहसंहितायाम् ।

अमृतास्वादविशेषाच्छिन्नमपि शिरः किलासुरस्येदम् ।

---

* गणकाय इति च. ।

प्राणैरपरित्यक्तं ग्रहतां यातं वदन्त्येके ॥
इन्द्वर्ककमण्डलाकृतिरसितत्वात् किल न दृश्यते गगने ।
अन्यत्र पर्वकालाद्वरप्रसादात् कमलयोनेः ॥
मुखपुच्छविभक्ताङ्गं भुजङ्गप्राकारमुपदिशन्त्येके ।
कथयन्ति मूर्त्तमपरे तमोमयं सैंहिकेयाख्यम् ॥
यदि मूर्त्तो भविचारी शिरोऽथ वा भवति मण्डली राहुः ।
भगणार्धेनान्तरितो गृह्णाति कथं नियतचारः ॥
अनियतचारो यदि चेदुपलब्धिः संख्यया कथं तस्य ।
पुच्छाननाभिधानोऽन्तरेण कस्मान्न गृह्णाति ॥
अथ तु भुजगेन्द्ररूपः पुच्छेन मुखेन वा स गृह्णाति ।
मुखपुच्छान्तरसंस्थं स्थगयति कस्मान्न भगणार्धम् ॥
राहुद्वयं यदि स्याद्ग्रस्तेऽस्तमितेऽथ वोदिते चन्द्रे ।
तत्समगतिनाऽन्येन ग्रस्तः सूर्योऽपि दृश्येत ॥
भूछायां स्वग्रहणे भास्करमर्कग्रहे प्रविशतीन्दुः ।
प्रग्रहणमतः पश्चान्नेन्दोर्भानोश्च पूर्वार्धात् ॥
वृक्षस्य स्वच्छाया यथैकपार्श्वे न भवति दीर्घचया ।
निशि निशि तद्वद्भूमेरावरणवशाद्दिनेशस्य ॥
सूर्यात् सप्तमराशौ यदि चोदग्दक्षिणेन नातिगतः ।
चन्द्रः पूर्वाभिमुखश्छायामोर्वी तदा विशति ॥
चन्द्रोऽधःस्थः स्थगयति रविमम्बुदवत् समागतः पश्चात् ।
प्रतिदेशमतश्चित्रं दृष्टिवशाद्भास्करग्रहणम् ॥

तथा च भट्टबलभद्रः ।

भूछाया शशिकक्षास्था विधौ भार्धेऽर्कतः स्थिते ।

यदा विशत्यविक्षिप्ता चन्द्रस्य स्यात् तदा ग्रहः ॥

"इन्दुना छादितं सूर्यमधोविक्षिप्तगामिना ।
न पश्यन्ति यदा लोकास्तदा स्याद्भास्करग्रहः"* ॥

वराहसंहितायाम् ।

आवरणं महदिन्दोः कुण्ठविषाणस्ततोऽर्धसंछन्नः ।
स्वल्पं रवेर्यतोऽतस्तीक्ष्णविषाणो रविर्भवति ॥
एवमुपरागकारणमुपदिष्टं दिव्यदृग्भिराचार्यैः ।
राहुरकारणमस्मिन्नित्युक्तः शास्त्रसद्भावः ॥
योऽसावसुरो राहुस्तस्य वरो ब्रह्मणा समाज्ञप्तः ।
आप्यायनमुपरागे दत्तहुताशेन ते भविता ॥
तस्मिन् काले सान्निध्यमस्य तेनोपचर्यते राहुः ।
याम्योत्तरा शशिगतिर्गणितेऽप्युपचर्यते तेन ॥

ब्रह्मसिद्धान्ते तु ।

"एवं वराहमिहिरश्रीषेणार्यभटविष्णुचन्द्राद्यैः ।
लोकविरुद्धमभिहितं वेदस्मृतिसंहिताबाह्यम् ॥
यद्येवं ग्रहणफलं गर्गाद्यैः संहितासु यदभिहितम् ।
तत्काले होमजपस्नानादिफलस्य चाभावः ॥
राहुकृतं ग्रहणद्वयमागोपालाङ्गनाप्रसिद्धमिदम् ।
बहुफलमिदमपि सिद्धं जपहोमस्नानफलमत्र ॥
स्मृतिषूक्तं न स्नानं राहोरन्यत्र दर्शनाद्रात्रौ ।
राहुग्रस्ते सूर्ये सर्वं गङ्गासमं तोयम् ॥
स्वर्भानुरासुरिरिनं तमसा विव्याध वेदबाह्यमिदम् ।

* अयं श्लोको भट्टोत्पलेन वराहसंहिताटीकायां सूर्यसिद्धान्तस्य प्रमाणत्वेनाभिहितः । द्रष्टव्या अ, १२१ पृ, १७ पं, ।

श्रुतिसंहितास्मृतीनां भवति यथैक्यात् तदुक्तिरतः ॥
राहुस्तच्छादयति प्रविशति यच्छुक्लपञ्चदश्यन्ते ।
भूछायातमसोन्दोर्वरप्रसादात् कमलयोनेः''* ॥

तथा च गर्गः ।

तपःप्रवृत्तस्य राहोर्ब्रह्मा वरं ददौ पञ्चदश्यन्ते चन्द्रमुपसर्प-इति ।

ब्रह्मसिद्धान्ते ।

"चन्द्रोऽम्बुमयोऽधःस्थो यदग्निमयभास्करस्य मासान्ते ।
छादयति शमिततापो राहुश्च्छादयदि तरसवितुः''* ॥

सूर्य्यसिद्धान्ते ।

"तमोमयस्य तमसो रविरश्मिपलायिनः ।
भूछाया चन्द्रविम्बं च स्थाने द्वे परिकल्पिते''† ॥

ब्रह्मसिद्धान्ते ।

भूछायाव्याससमः शशिकक्षायां स्थितः शशिग्रहणे ।
राहुश्छादयतीन्दुं सूर्य्यग्रहणेऽर्कमिन्दुसमः ॥
यत् तदधिकं तमोमयराहुव्यासस्य सूर्य्यदृष्टत्वात् ।
नश्यति भूछायेन्द्वोर्व्याससमोऽस्माद्भवति राहुः ॥
भूछाया नेन्दुमतो ग्रहणे छादयति नार्कमिन्दुर्वा ।
तत्स्थस्तद्व्याससमो राहुश्छादयति शशिसूर्य्यौ''‡ ॥

वीरभद्रः ।

सिंहिकातनयस्यास्य राहोः पुच्छमुखादृते ।
नान्यदस्त्युदरं बाहुपादादिकमिति श्रुतिः ॥

---

* ब्राह्मस्फुटसिद्धान्ते गोलाध्याये ३१-४४ श्लो. ।

† ब्राह्मस्फुटसिद्धान्ते गोलाध्याये ४४ श्लो. ।

‡ नाधुनिकसूर्य्यसिद्धान्तेऽस्योपलब्धिः ।

§ ब्राह्मस्फुटसिद्धान्ते गोलाध्याये ४७-४८ श्लो. ।

वसिष्ठः ।

स्वर्भानुः प्रत्यासन्नभगणार्धान्तरितः सूर्याचन्द्रमसौ मुखपुच्छाभ्यां गृह्णाति-इति ।

इति महाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचितेऽद्भुतसागरे राहोरद्भुतावर्त्तः ।

---

## अथ मङ्गलाद्भुतावर्त्तः ।

तत्र शुभसूचकमङ्गललक्षणमाह पराशरः ।

वर्णरश्मिप्रमाणतेजोयुक्त उदग्मार्गगः स्नेहवान् सर्वलोकहिताय भवति चात्र ।

प्रदक्षिणगतिः कान्तः स्निग्धः स विपुलोऽमलः* ।
तप्तकाञ्चनसंकाशो भवेल्लोकस्य वृद्धये ॥

प्रदक्षिणगतिर्ग्रहाणामुदग्गामी ।

वराहसंहितायां तु ।

विपुलविमलमूर्त्तिः किंशुकाशोकवर्णः
स्फुटरुचिरमयूखस्तप्तताम्रप्रभाभः ।
विचरति यदि मार्गं चोत्तरं मेदिनीजः
शुभकृदवनिपानां हार्दिदश्च प्रजानाम् ॥

अत्र मध्यमार्गचारी मध्यमफलः । दक्षिणमार्गचारी भयद इत्यूहनीयम् ।

यथाऽऽह गर्गः ।

याम्यादिपित्र्यनिधनं† नवर्क्षं मार्गमुत्तरम् ।
भाग्यादिनैर्ऋतान्तं तु मध्यमं मार्गमुच्यते ॥
आषाढपौष्णभान्तं तु दक्षिणं समुदाहृतम् ।

---

* कलसप्रभः इति अ. ।     † याम्यादिपितृपर्यन्तम् इति अ. ।

सौम्यमार्गस्थितो भौमः प्रजानां हितकारकः ॥
मध्ये तु मध्यफलदो याम्ये तु भयदः स्मृतः ।

येषामयं स्वामी तेषां वर्णरश्मिप्रभादिशुभलक्षणयुक्तो विशेषेण शुभकरः । विपरीतो विशेषेण विपरीतकरः ।

मङ्गलस्वामिकान्याह यवनेश्वरः ।

चमूनृपस्तेनहुताशवृत्तिविषाग्निशस्त्रक्षतजक्षितीनाम् ।
प्रवालधात्वाकरपुष्पजातिचामीकराणां क्षितिसूनुरीशः ॥

काश्यपस्तु ।

महेन्द्रमलयं विन्ध्यं सिप्रा वेणा महानदी ।
गोदावर्या नर्मदाया भीमायाः पश्चिमा दिशः ॥
चेदिकाः कौङ्कणा दुर्गा द्रविडा वेत्रवन्नदी ।
मन्दाकिनी पयोष्णी च मालती सिंधुपारकाः ॥
सपाण्ड्याश्चोलदेशस्था द्रविडा वाऽश्मकास्तथा* ।
भासापराः कुन्तलाश्चा केरला दण्डकास्तथा ॥
नागराः पौरवाश्चैव कर्षकाः शस्त्रवृत्तयः ।
हुताशनाजीविनो ये कुञ्जराः पशुपास्तथा ॥
सांग्रामिका नृशंसाश्च सङ्कराश्चोपघातकाः ।
कुमारा भूमिपतयो दाम्भिकास्तस्करा अपि ॥
एतेषां भूमिजः स्वामी तथैवाग्न्युपजीविनाम् ।

वराहसंहितायाम् ।

शोणस्य नर्मदाया भीमरथायाश्च पश्चिमार्धस्थाः ।
निर्विन्ध्या वेत्रवती सिप्रा गोदावरी वेणा ॥
मन्दाकिनी पयोष्णी महानदी सिन्धुमालतीपाराः ।
उत्तरपाण्ड्यमहेन्द्राद्रिविन्ध्यमलयोपगाश्चोलाः ॥

---

* विदेहान्ध्राश्मकास्तथा इति अ. ।

द्रविडविदेहान्ध्राश्मकभासापरकौङ्कणाः समन्त्रिषिकाः ।
कुन्तलकेरलदण्डककान्तिपुरम्लेच्छसङ्करिणः ॥
नागरकृषिकरपारतहुताशनाजीविशस्त्रवार्त्तानाम् ।
आडविकदुर्गकर्वटवधिकनृशंसावलिप्तानाम् ॥
नरपतिकुम्भारकुञ्जरदम्भिकडिम्भाभिघातपशुपानाम् ।
रक्तफलकुसुमविद्रुमचमूपगुडमद्यतीक्ष्णानाम् ॥
कोषभवनाग्निहोत्रिकधात्वाकरशात्र्यभिक्षुचौराणाम् ।
शठदीर्घवैरबह्वाशिनां च वसुधासुतोऽधिपतिः ॥

अथ वर्णफलम् । तत्र वृद्धगर्गः ।

पीतकः कृष्णवर्णो वा विरश्मिर्वा विगर्हितः ।

अथ चारफलम् । तत्र वृद्धगर्गः ।

त्रिंशद्भिर्लोहितो मासैर्विचरेद्राशिविंशकम् ।
यदा स पूजितश्चारो न च न्यूनो न चाधिकः ॥

अथास्य नक्षत्रविशेषेषु चारादिफलं वराहसंहितायाम् ।

चारोदयाः प्रशस्ताः श्रवणमघादित्यमूलहस्तेषु ।
एकपदादिविशाखाप्राजापत्येषु च कुजस्य ॥
प्राजापत्ये श्रवणे मूले त्रिषु चोत्तरेषु शाक्रे च ।
विचरन् घननिवहानामुपघातकरः क्षमातनयः ॥

विष्णुधर्मोत्तरे तु ।

ध्रुवेषु वैष्णवे मूले शाक्रे च विचरन् कुजः ।
घोरां करोत्यनावृष्टिं कृत्तिकासु मघासु च ॥

ध्रुवेषु उत्तरात्रयरोहिणीषु ।

वराहसंहितायाम् ।

दक्षिणतो रोहिण्याश्चरन्महीजोऽर्घवृष्टिनिग्रहकृत् ।
धूमायन् सशिखो वा विनिहन्यात् पारियात्रस्थान् ॥

अर्घकृदधिकमूल्यकृदित्यर्थः ।

भित्त्वा मघा विशाखां भिन्दन् भौमः करोति दुर्भिक्षम् ।
मरकं करोति घोरं यदि भित्त्वा रोहिणीं याति ॥

वृद्धगर्गः ।

वक्रकाले तु संप्राप्ते स्थूलो भवति लोहितः ।
हर्षितश्चातिरक्तश्च ज्वलिताग्निशिखोपमः ॥

विष्णुधर्मोत्तरे ।

गतागतं तदा कुर्यान्मघामध्येन लोहितः ।
तदा भवत्यनावृष्टिः पाण्ड्यो राजा विनश्यति ॥

वराहसंहितायाम् ।

मध्येन यदि मघानां गतागतं लोहितः करोति ततः ।
पाण्ड्यो नृपो विनश्यति शस्त्रोद्योगाद्भयमनावृष्टिः ॥

भीष्मपर्वणि कुरुपाण्डवक्षयनिमित्तम् ।

"वक्रानुवक्रं कृत्वा च श्रवणं पावकप्रभः ।
ब्रह्मराशिं समावृत्य लोहिताङ्गो व्यवस्थितः"* ॥

वृद्धगर्गः ।

यद्द्वारे कुरुते वक्रमनुवक्रं च लोहितः ।
नक्षत्रसप्तजान् देशाँस्तद्द्वारं च निहन्ति सः ॥
नाधोभात् सप्तजान् द्रुह्यान्न चाष्टादशतोऽधिकान् ।
उदयर्क्षान्महीजस्य भवेद्वक्रं कथंचन ॥

अथास्य पञ्च वक्त्राणि वराहसंहितायाम् ।

उष्णमश्रुमुखं व्यालं लोहिताननमेव च ।
निस्त्रिंशमुशलं चेति पञ्च वक्रकुजस्य तु ॥

तत्रोष्णमुखम् । तत्र गर्गः† ।

उदयात् सप्तमे कुर्यादष्टमे नवमेऽपि वा ।

* ३ अ, १८ श्लो. ।

† तत्र शङ्कः इति छ. ।

निवृत्तिं लोहिताङ्गस्तु तदुष्णं वक्रमुच्यते ॥
नरोऽग्निजीविनो ये च पचन्ति च दहन्ति च ।
तेषामेवोच्यते तापो जायते च धनसंक्षयः ॥

विष्णुधर्मोत्तरे ।

अथ यस्मिन् नक्षत्रे भौमोदयं प्रतिपद्यते । यस्मात् सप्ताष्टनवमर्क्षेषूष्णमुखं नाम वक्रं करोति येनाग्निमन्तो ब्राह्मणा अग्रजीविनश्च पीड्यन्ते ।

वृद्धगर्गः ।

कुर्यादुदयनक्षत्रात् सप्तमादष्टमादपि ।
निवृत्तिं नवमाद्वाऽपि वक्रमुष्णं तदुच्यते ॥
अग्निहोत्रपरा विप्राः पीड्यन्ते चाग्निजीविनः ।
प्रजासु प्रायशश्चात्र ज्वरदाहश्च जायते ॥

पराशरस्तु ।

उदयर्क्षात् सप्ताष्टनवमेषु नक्षत्रेषु निवृत्तः प्रजानां संक्षयं विशेषतः पचतां दहतां च पीडां धत्ते ।

अथाश्रुमुखं विष्णुधर्मोत्तरे ।

दशमैकादशद्वादशेऽश्रुमुखं नाम मरककारकम् ।

गर्गस्तु ।

दशमैकादशे चापि निवृत्ते द्वादशेऽपि वा ।
लोहिताङ्गे ग्रहे ज्ञेयं वक्रमश्रुमुखं च तत् ॥
तत्र वर्षति पर्जन्ये दूषयन् वै शुभान् रसान् ।
दुष्टास्ते दूषयन्त्याशु नृणां धातूँस्तथा दृशम् ॥
बहवो व्याधयो दुष्टा उत्पाद्यन्ते शरीरिणाम् ।
चतुर्भिः कारणैरेतैस्ततो धातुः प्रलीयते ॥

दूषयति वर्षति दुष्टवर्षे रसान् दूषयतीत्यर्थः ।

यथा च पराशरः।

दशमैकादशद्वादशेषु प्रदुष्टवर्षैर्द्रव्यरसान् दूषयन् प्राजानां धातून् प्रकोपयति व्याधीन् प्रवर्त्तयति।

अथ व्यालं विष्णुधर्मोत्तरे।

त्रयोदशचतुर्दशयोर्व्यालाख्यं व्यालवृद्धिकरम्॥

पराशरस्तु।

त्रयोदशचतुर्दशयोः शस्यव्यालदंष्ट्रिप्राबल्यं हिरण्यसंचयम्।

वृद्धगर्गस्तु।

त्रयोदशगतः कुर्याच्चतुर्दशगतोऽपि वा।
निवृत्तिमुदयाद्भौमो वक्रं व्यालं तदुच्यते॥
भवेत् तत्र मृगव्यालदंष्ट्रिभ्यः सर्वतो भयम्।
औदकानि च सत्त्वानि शस्यमुत्तमतां व्रजेत्॥

गर्गस्तु।

त्रयोदशे वा नक्षत्रे यदि चापि चतुर्दशे।
निवृत्तिं कुरुते भौमस्तद्वक्रं व्यालमुच्यते॥
भवन्ति प्रचुरा व्यालास्तस्मिन् सर्पा ह्यशेषतः।
नृपाणां च भयं विन्द्याच्छस्यसम्पत्तिमादिशेत्॥

अथ लोहितमुखं विष्णुधर्मोत्तरे।

पञ्चदशषोडशयो रुधिरमुखं संग्रामकारकम्।

गर्गः।

यदि पञ्चदशे भेऽथ भूसुनः षोडशेऽपि वा।
निवृत्तिं कुरुते भौमस्तद्वक्रं लोहिताभिधम्॥
दीप्तिमन्तः पार्थिवाश्च भवन्ति प्रस्थिता भुवि।
क्षुद्ररोगश्च सुमहान् मुखरोगा भवन्ति च॥

पराशरस्तु।

पञ्चदशषोडशयोर्मुखरोगनृपक्षोभशस्त्रकोपाश्च।

तद्वक्त्रमुष्णमुदये पीडाकरमग्निवार्त्तानाम् ॥

द्वादशदशमैकादशनक्षत्राङ्किते कुजेऽश्रुमुखम् ।
दूषयति रसानुदये करोति रोगानवृष्टिं च ॥

व्यालं त्रयोदशर्क्षाच्चतुर्दशाद्वा विपच्यतेऽस्तमये ।
दंष्ट्रिव्यालमृगेभ्यः करोति पीडां सुभिक्षं च ॥

रुधिराननमिति वक्त्रं पञ्चदशात् षोडशाच्च विनिवृत्तेः ।
तत्कालं मुखरोगं सभयं च सुभिक्षमावहति ॥

असिमुशलं सप्तदशाष्टादशतोऽपि वा तदनुवक्रे ।
दस्युगणेभ्यः पीडां करोत्यवृष्टिं सशस्त्रभयाम् ॥

ज्यौतिषपराशरविष्णुधर्मोत्तरयोः ।

फल्गुन्योरुदयं कृत्वा वक्रं स्याद्वैश्वदैवते ।
प्राजापत्ये प्रवासः स्यात् त्रैलोक्यं तत्र पीड्यते ॥

प्रवासोऽस्तमयः ।

तथा च वराहसंहितायाम् ।

भाग्यार्यमोदितो यदि निवर्त्तते वैश्वदैवते भौमः ।
प्राजापत्येऽस्तमितस्त्रीनपि लोकान् निपीडयति ॥

पराशरस्तु ।

उदितः श्रवणे भौमः पुष्ये वक्रमियाद्यदि ।
प्राजापत्योदितश्चैव नाशाय स्यान्महीक्षिताम् ॥

हरिवंशे कंसवधनिमित्तम् ।

"एवं घोरो ग्रहः स्वातिमुल्लिखन् खे गभस्तिभिः ।
वक्रमङ्गारकश्चक्रे चित्रायां घोरदर्शनः"* ॥

बाणयुद्धे च ।

"वक्रमङ्गारकश्चक्रे कृत्तिकासु भयङ्करः ।

---

* २३ अ. २५ श्लो. ।

गणस्य जन्मनक्षत्रं भर्त्सयन्निव सर्वशः"* ॥

वृद्धगर्गः ।

त्रैमासिकः क्षुद्भयाय भयकृत् पाञ्चमासिकः ।

प्रवासो लोहिताङ्गस्य चतुर्मासस्तु पूजितः ॥

वराहसंहितायाम् ।

यस्मिन्नृक्षेऽभ्युदितस्तद्दिग्व्यूहाङ्गनान् हन्ति ।

पराशरः ।

यथा जनपदव्यूहे दिग्विभागः प्रकल्पितः ।

नक्षत्रे मोहितं कुर्याल्लोहिताङ्गस्तथाऽऽमयम् ॥

नक्षत्राणां दिग्देशादिकं नक्षत्राद्भुते वक्ष्यामः ।

अत्रानुक्तविशेषशान्तिषु मङ्गलोत्पातेषु मङ्गलपूजापूर्विकाप्रभूतकनकान्नगोमहीदानादिकसामान्यशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

फलपाकसमयो गार्गीये ।

त्रिभिर्मासैस्तु भौमस्य— ।

वराहसंहितायां तु ।

अङ्गारकस्य च वक्रोक्तः—इति ।

इति महाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-ऽद्भुतसागरे मङ्गलाद्भुतावर्त्तः ।

---

अथ बुधाद्भुतावर्त्तः ।

तत्र शुभसूचकबुधलक्षणमाह पराशरः ।

विमलजलरजतस्फटिकाभः प्रशस्यते ।

वराहसंहितायाम् ।

हेमकान्तिरथ वा शुकवर्णः शस्यकेन मणिना सदृशो वा ।

---

* ११६ अ. ६६ श्लो. ।

स्निग्धमूर्त्तिरलघुश्च हिताय व्यत्ययेन शुभकृच्छशिपुत्रः ॥

शस्यको मणिर्नीलवर्णः शस्याख्यो मणिः। येषामयं स्वामो तेषामेवंविधो विशेषेण हिताय विपरीतो विशेषेण विपरीताय।

बुधस्वामिकान्याह यवनेश्वरः।

नानागुणद्रव्यविकल्पयुक्तिनैपुण्यशिल्पश्रुतिवेसराणाम्।
माहात्म्यमन्त्रार्थविदाब्दिकानां प्रभुर्बुधश्चैत्यवनस्पतीनाम् ॥

वटकणिकायां तु।

बुधस्य सौराष्ट्रकभोजबङ्गा गङ्गाश्रिताश्चोत्तरकूलनद्यः।
सिन्धोश्च मध्या मथुरापुरस्ताद्गोमन्तसिन्ध्वद्रिगुहाश्रिताश्च ॥

काश्यपस्तु।

चित्रकूटगिरी रम्यो हिमवान् कौशिकी तथा।
मथुरायाश्च पूर्वार्धं लोहित्यः सिन्धुरेव च ॥
गाम्भीरिका च सरयू रथाख्या गण्डकी नदी।
गान्धर्वा लेख्यहाराश्च दर्दुराश्चोपकृत्रिमाः* ॥
विदेहाः सर्वजलजाः काम्बोजाश्च सुराष्ट्रकाः।
गन्धयुक्तिविदो ये च सौगन्धिकप्रलेपकाः ॥
सुवर्णरजतं रत्नमातङ्गतुरगादि यत्।
पौरा जनपदाः सौम्याः सोमपुत्रोऽधिपः स्मृतः ॥

वराहसंहितायाम्।

लोहित्यः सिन्धुनदः सरयूर्गाम्भीरिका रथाख्या च।
गङ्गाकौशिक्याद्याः सरितो वैदेहकाम्बोजाः ॥
मथुरायाः पूर्वार्धं हिमवद्गोमन्तचित्रकूटस्थाः।
सौराष्ट्रसेतुजलमार्गपण्यविलपर्वताश्रयिणः ॥

---

* तथोदाराश्च कृत्रिमाः इति अ.।

उदपानयन्त्रगान्धर्वलेख्यमणिरागगन्धयुक्तिविदः ।
आलेख्यशब्दगणितप्रसाधकायुष्यशिल्पज्ञाः ॥
चरपुरुषकुहकजीवकशिशुकविशठसूचकाभिचाररताः ।
दूतनपुंकहास्यज्ञभूततन्त्रेन्द्रजालज्ञाः ॥
आवर्त्तिक*नटनर्त्तकघृततैलस्नेहतिक्तबीजानि ।
व्रतचारिरसायनकुशलवेसराश्चन्द्रपुत्रस्य ॥

अथास्य नक्षत्रविशेषचारफलं वराहसंहितायाम् ।

विचरन् श्रवणधनिष्ठाप्राजापत्येन्द्रवैश्वदेवानि ।
मृद्नन् हिमकरतनयः करोत्यवृष्टिं सरोगभयाम् ॥

मृद्नन् भिन्नन् ।

तथा च काश्यपः ।

सौम्यं विष्णुं धनिष्ठां च रोहिणीं विष्णुमेव च ।
शशिजश्च यदा हन्ति प्रजा रोगैश्च पीड्यते ॥

वराहसंहितायाम् ।

रौद्रादीनि मघान्तान्युपाश्रिते चन्द्रजे प्रजापीडा ।
शस्त्रनिपातक्षुद्भयरोगानावृष्टिसन्तापैः ॥

काश्यपस्तु ।

रौद्रादीनि यदा पञ्च भेदितानि समन्ततः ।
चन्द्रजेन तदा पीडा शश्वत् क्षुद्भव्याधिभिः ॥
हस्तादिषु यदा षट्सु नक्षत्रेष्विन्दुजः स्थितः ।
गवामशोभनः प्रोक्तः सुभिक्षं शस्यसम्पदः ॥

वराहसंहितायां तु ।

हस्तादीनि चरन् षडृक्षाण्युपपीडयन् गवामशुभः ।
स्नेहरसार्घविवृद्धिं करोति चोर्वीं प्रभूतान्नाम् ॥

---

* आरक्षक इति अ. ।

आर्यम्णं हौतभुजं भाद्रपदामुत्तरां यमेशं च ।
चन्द्रस्य सुतो निघ्नन् प्राणभृतां संक्षयं कुरुते* ॥

काश्यपस्तु ।

भरणीकृत्तिकार्यम्णमाहिर्बुध्नं च चन्द्रजः ।
धातुद्रव्यविनाशाय धनवार्त्तांश्च पीडयेत् ॥

निघ्नन्निति सम्बन्धः ।

रेवतीं वारुणं मूलमश्विनीं चैव सोमजः ।
वणिजां जलजानां च तुरङ्गाणां च पीडनम् ॥

निघ्नन् करोतीति सम्बन्धः ।

वराहसंहितायां तु ।

आश्विनवारुणमूलान्यपमृद्नन् रेवतीं च चन्द्रसुतः ।
पण्यभिषग्गोजाविकसलिलजतुरगोपघातकरः ॥
पूर्वाद्यृक्षत्रितयादेकमपीन्दोः सुतोऽभिमृद्नीयात् ।
क्षुच्छस्त्रतस्करामयभयप्रदायी चरन् जगतः ॥

काश्यपस्तु ।

पूर्वाद्यृक्षत्रये सौम्यो भेदं कृत्वा यदि व्रजेत् ।
क्षुच्छस्त्रतस्करभयं करोति प्राणिनां वधम् ॥

पराशरस्तु ।

विशेषस्तु सौम्यादिषड्नक्षत्रचारी सुवृष्टये । श्रविष्ठावारुणयोश्च । दक्षिणतो नैर्ऋतेन्द्रपूर्वासु भयकृत् । अश्विन्यां वणिग्विनाशाय । त्वाष्ट्रे शरच्छस्यानाम् । रोहिणीश्रवणाग्नेयब्रह्मराशिष्वम्भोदविनाशाय ।

अथास्य देवलमतेनोदयदिनैर्गतिचतुष्टयं वराहसंहितायाम् ।

ऋज्वतिवक्राऽवक्रा विकला च मतेन देवलस्यैताः ।

* धातुसंक्षयकृत् इति अ. ।

पञ्चचतुर्थ्येकाहा ऋष्यादीनां षडभ्यस्ताः ॥

तथा च देवलः ।

दिनानि त्रिंशदुदितस्तिष्ठेद्यदि च सोमजः ।
ऋज्वी गतिः सा विज्ञेया प्रजानां हितकारिणी ॥
चतुर्विंशद्दिनान्येवं यदि तिष्ठेच्च सोमजः ।
अतिवक्रा गतिर्ज्ञेया दुर्भिक्षभयलक्षणा ॥
अहानि द्वादश यदा बुधस्तिष्ठेत् तथोद्गतः ।
वक्रा गतिस्तु विज्ञेया शस्त्रसंभ्रमकारिणी ॥
षड्दिनानि यदा तिष्ठेदुद्गतः सोमनन्दनः ।
विकला सा गतिर्ज्ञेया भयरोगविवर्धिनी ॥

अथास्योदयदिनैर्गतिसप्तकमाह वृद्धगर्गः ।

प्रकृता च विमिश्रा च संक्षिप्ता तीक्ष्णसंज्ञिता ।
बुधस्य घोरा पापा च गतिर्योगान्तिकी तथा ॥
प्राकृतीं गतिमास्थाय त्रिपक्षं दृश्यते ग्रहः ।
मासं मासं च पादोनं मिश्रासंक्षिप्तयोर्भवेत् ॥
अष्टादशाहं तीक्ष्णायां पक्षं योगान्तिकीगतः ।
एकादशाहं पापायां दर्शयित्वाऽस्तमृच्छति ॥
अह्नां द्वाविंशतिं सार्धां संक्षिप्तामेत्य लक्ष्यते ।
अष्टादशाहं तीक्ष्णायां घोरायां दशपञ्च च ॥
पापायां पादहीनानि तथैकादश तिष्ठति ।
योगान्तिक्यामिन्दुसूनुर्नवाहं लक्ष्यते तथा ॥
चारकाले य एवोक्ताः सोमपुत्रस्य भागशः ।
अस्तकाले त एव स्युः सूर्यमण्डलचारिणः ॥

चारकाले उदयकाले ।

पराशरश्च ।

अथ चत्वारिंशत्त्रिंशद्द्वाविंशत्यष्टादशपञ्चदशैकादशनक्षत्राणि गतिक्रमादुदितोऽभिदृश्यते । तान्येवास्तमिते भवन्तीति ।

उदयदिनान्नवदिनपर्यन्तं योगान्तिकी । तदुपरि एकादशाहपर्यन्तं पापा । तदुपरि पञ्चदशपर्यन्तं घोरा । एवमन्या अपि । अत्र यान्युदयास्तदिनानि गणिते न सम्भवन्ति तान्युत्पातवशाद्भवन्ति ।

उदयश्चास्य सोत्पात एव तथा च वराहसंहितायाम् ।

नोत्पातपरित्यक्तः कदाचिदपि चन्द्रजो व्रजत्युदयम् ।
जलपवनदहनभयकृद्धान्यार्घक्षयविवृद्ध्यै वा ॥

वृद्धगर्गस्तु ।

स्नेहशस्यरसादीनां तथाऽर्घक्षयवृद्धयोः ।
ग्रहाणामुदयार्थं वा दृश्यते ह्युदितो बुधः ॥
अत्युष्णमतिशीतं च वर्षं वायुरथोभयम् ।
फलं बुधोदयस्यैतद्रसधान्यविनाशकम् ॥

पराशरस्तु ।

उष्णशीतवात्यवभ्रसूर्येन्दुग्रहणायोदयते शस्यविघाताय च ।

अथैतासां फलं गर्गः ।

क्षेमारोग्यसुभिक्षेषु लक्षणा प्राकृता गतिः ।
संक्षिप्ता च विमिश्रा च शुभा शुभफलोदये ॥

शुभमशुभं च मिलितमेतयोः फलम् ।

तथा च नक्षत्रदिनाभ्यां प्राकृतां गतिमभिधायोक्तं वराहसंहितायाम् ।

संक्षिप्तमिश्रयोर्मिश्राम्—इति ।

गर्गः ।

तीक्ष्णा घोरा च पापा च तथा योगान्तिकी परा ।
एताश्चतस्रः सौम्यस्य दुर्भिक्षक्षेमलक्षणाः ॥

नक्षत्रविशेषे चारैरपि प्राकृतादिगतयो भवन्ति । तथा च वराहसंहितायाम् ।

प्राकृतविमिश्रसंक्षिप्ततीक्ष्णयोगान्तघोरपापाख्याः ।
सप्त पराशरतन्त्रे नक्षत्रैः कीर्त्तिता गतयः ॥
प्राकृतसंज्ञा वायव्ययाम्यपैतामहानि बहुलाश्च ।
मिश्रा गतिः प्रदिष्टा शशिशिवपितृभुजगदेवानि ॥
संक्षिप्तायां पुष्यः पुनर्वसुः फाल्गुनीद्वयं चेति ।
तीक्ष्णायां भाद्रपदाद्वयं सशक्राश्वयुक् पौष्णम् ॥
घोरा श्रवणं त्वाष्ट्रं वसुदेवं वारुणं चैव ।
पापाख्या सावित्रं मैत्रं चन्द्राग्निदैवतं चेति ॥
योगान्तिकी तु मूलं द्वे आषाढे गतिः सुतस्येन्दोः ।
प्राकृतगत्यामारोग्यवृष्टिशस्यप्रवृद्धयः क्षेमम् ॥
संक्षिप्तमिश्रयोर्मिश्रमेतदन्यासु विपरीतम् ।

तथा च पराशरः ।

अथास्य गतीः सप्त वक्ष्यन्ते प्राकृता विमिश्रा संक्षिप्ता तीक्ष्णा घोरा पापा योगान्तिकी चेति । प्राकृता याम्याग्नेयरोहिणीवायव्यानि सा क्षेमारोग्यशस्यवती । विमिश्रा सौम्यार्द्रामघाऽऽश्लेषा च । संक्षिप्ता पुष्यार्यम्णभाग्यादित्यानि । तीक्ष्णाऽजपादश्चत्वारि ज्येष्ठा च । घोरा त्रीणि श्रवणादीनि त्वाष्ट्रं च। पापा सावित्र्यैन्द्राग्न्यमित्राणि। योगान्तिकी मूलमाषाढे। एताश्चतस्रो दुर्भिक्षाक्षेमाय।

अथोदयास्तफलं तत्र पराशरः ।

हस्तोदितो मैत्रमनुचरन् पशुगोकोशलानभिहन्ति । विशाखामध्यगस्तु शस्यम् ।

विष्णुधर्मोत्तरे ।

कार्त्तिकेऽश्वयुजे पौषे आषाढे श्रावणे बुधः ।

दृष्टो लोकभयाय स्यान्माघवैशाखयोस्तथा ॥

वृद्धगर्गस्तु ।

वैशाखे पौर्णमासे च श्रावणाषाढयोरपि ।
न दृश्यते बुधः प्रायो मासेष्वन्येषु दृश्यते ॥
यदाऽदृश्येषु दृश्यः स्याद्दृश्येषु च न दृश्यते ।
गवां रोगमनावृष्टिं दुर्भिक्षं चातिनिर्दिशेत् ॥

पौर्णमासे कार्त्तिके ।

अथोदयदिनफलम् । तत्र वृद्धगर्गः ।

पुरस्तादुदितः सौम्यो धान्यस्नेहार्घवर्धनः ।
अर्घह्रासकरः स्निग्धो भवत्ययनमास्थितः ॥

अथ वक्रफलम् । तत्र वृद्धगर्गः ।

अवर्षे कुरुते वर्षं वर्षे वर्षति यच्छति ।
भयं च कुरुते क्षेमं सर्वत्र प्रतिलोमगः ॥

अत्रानुक्तविशेषशान्तिषु बुधोत्पातेषु बुधग्रहपूजापूर्विका प्रभूतकनकान्नगोमहीदानादिका सामान्यशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

फलपाकसमयो गार्गीये ।

बुधे यावत् तु दर्शनम्—इति ।

इति महाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे बुधाद्भुतावर्त्तः ।

---

## अथ बृहस्पत्यद्भुतावर्त्तः ।

तत्र शुभसूचकबृहस्पतिलक्षणं वराहसंहितायाम् ।

अकलुषांशुजटिलः पृथुमूर्त्तिः कुमुदकुन्दकुसुमस्फटिकाभः ।
ग्रहहतो न यदि सत्पथवर्त्ती हितकरोऽमरगुरुर्मनुजानाम् ॥

येषामयं स्वामी तेषामेवंविधो विशेषेण हितकरः। विपरीतो विशेषेण विपरीतकरः।
बृहस्पतिस्वामिकान्याह यवनेश्वरः।

मङ्गल्यधर्मद्विजवेदयज्ञधान्याकरस्थानगुणात्मजानाम्।
सुवर्णयानासनपौष्टिकानां प्रभुर्गुरुर्मन्त्रिमहत्तराणाम्॥

काश्यपस्तु।

त्रैगर्त्ताः सिन्धुसौवीराः शतद्रुर्मथुरा नदी।
शुभ्रौदीच्या विपाशा च दारुकाम्बष्ठका अपि॥
राजा पुरोहितो मन्त्री माङ्गल्यं पौष्टिकं व्रतम्।
कारुण्यकर्मसिद्धानां विद्याशौचतपस्विनाम्॥
मत्स्याश्च वाटधानाश्च यौधेयाश्चार्जुनायनाः।
सारस्वताः पारतकाः हस्त्यश्वध्वजचामराः॥
शब्दार्थविदुषः पौरा नीतिज्ञाः शीलसंयुताः।
मांसी तगरकुष्टं च शैलेयं लवणं सुरा॥
मधुरस्वादुवल्लीजविप्राणां चाधिपो गुरुः।

वराहसंहितायाम्।

सिन्धुनदपूर्वभागो मथुरापश्चार्धभरतसौवीराः।
शुभ्रौदीच्यविपाशासरिच्छतद्रूरमठशाल्वाः॥
त्रैगर्त्तपौरवाम्बष्ठपारता वाटधानयौधेयाः।
सारस्वतार्जुनायनमत्स्यार्धग्रामराष्ट्राणि॥
हस्त्यश्वपुरोहितनृपतिमन्त्रिमाङ्गल्यपौष्टिकासक्ताः।
कारुण्यसत्यशौचव्रतविद्यादानधर्मरताः॥
पौरमहाधनशब्दार्थवेदविदुषोऽभिचारनीतिज्ञाः।
मनुजेश्वरोपकरणं छत्रध्वजचामराद्यं च॥
शैलेयकमांसीकुष्ठतगररससैन्धवानि वल्लीजम्।

मधुररसमधूच्छिष्टानि चोरकश्चेति जीवस्य ॥

अथ वर्णफलम् । तत्र पराशरः ।

श्वेतरक्तपीतकृष्णवर्णो ब्राह्मणादिवर्णजयाय ।

वराहसंहितायाम् ।

धूम्राभेऽनावृष्टिस्त्रिदशगुरौ नृपवधो दिवा दृष्टे ।
विपुलेऽमले सुतारे रात्रौ दृष्टे नृपाः स्वस्थाः ॥
अनलभयमनलवर्णे व्याधिः पीते रणागमः श्यावे ।
हरिते च तस्करेभ्यः पीडा रक्ते च शस्त्रभयम् ॥

अथ नक्षत्रफलम् । तत्र पराशरः ।

मध्यदक्षिणोत्तरमार्गप्रविचारी मध्यदारुणोत्तमप्रजावकरः ।

वराहसंहितायां तु ।

उदगारोग्यसुभिक्षक्षेमकरो वाक्पतिश्चरन् भानाम् ।
याम्ये तद्विपरीतो मध्येन तु मध्यफलदायी ॥

पराशरः ।

प्रच्छादनेऽवरोहिण्याः प्रजापीडां विनिर्दिशेत् ।
शकटारोहणे विद्याज्जगतः संभ्रमं बुधः ॥

अथ राशिफलं विष्णुधर्मोत्तरे ।

जीवस्त्रयोदशभिर्मासै राशिं विचरन् शुभफलो भवति । अन्यथा कष्टफलः ।

पराशरस्तु ।

सपादमृक्षद्वयमब्देन प्रविचरन् सम्पत्करो विपर्ययाद्विपरीतः ।

वराहसंहितायां तु ।

विचरन् नक्षत्रद्वयमिष्टस्तत्सार्धवत्सरेण मध्यफलः ।
शस्यानां विध्वंसो विचरेदधिकं यदि कदाचित् ॥

अथ बार्हस्पत्याब्दफलं वराहसंहितायाम् ।

वर्षाणि कार्त्तिकादीन्याग्नेयाद्भद्वयानुयोगीनि ।

क्रमशस्त्रिभं च पञ्चममुपान्त्यमन्त्यं च यद्वर्षम् ॥

काश्यपश्च ।

कार्त्तिकादिसमा ज्ञेया द्विद्विनक्षत्रचारिणः ।

त्रिभं भाद्रपदं ज्ञेयं फाल्गुनाश्वयुजौ* तथा ॥

नक्षत्रचारिण इति चारशब्द उदयचारपरः ।

तथा च काश्यपः ।

संवत्सरे युगे चैव षष्ट्यब्देऽङ्गिरसः सुतः ।

यन्नक्षत्रोदयं कुर्यात् तत्संज्ञं वत्सरं विदुः ॥

वृद्धगर्गश्च ।

प्राग्वासान्ते समर्क्षेण तूदितो युगपच्चरन् ।

तस्मात् कालात् तदृक्षाद्यो गुरोरब्दः प्रवर्त्तते ॥

वराहसंहितायां च ।

नक्षत्रेण सहोदयमुपगच्छति येन देवपतिमन्त्री ।

तत्संज्ञं वक्तव्यं वर्षं मासक्रमेणैव ॥

पराशरेणाप्युदयादेव फलमुक्तं तद्वाक्यमत्रैव लिखिष्यामः । अतो यत्र चारमात्रेण बार्हस्पत्याब्दश्रवणं तत्रोदयचारपरता । पराशरवृद्धगर्गाभ्यां तु श्रवणादित्रये श्रावणः । पूर्वभाद्रपदादित्रये भाद्रः । अश्विनीभरण्योराश्विन इत्युक्तम् । तद्वाक्यमनन्तरमेव लिखितम् ।

अथैतेषां फलम् । तत्र पराशरः ।

तस्मिन् कृत्तिकारोहिणीषूदिते क्षुच्छस्त्राग्न्यनावृष्टिप्राबल्यं गोशाकटिकपीडा च । सौम्यरौद्रयोरेतदेव गवादिवर्जम् । तिष्यपुनर्वस्वोरुक्तविपर्ययः । पुष्यवन्मघाऽऽश्लेषासु राज्ञामुपतापश्च । फाल्गुनीसावित्रेषु क्वचित् क्षेमसुभिक्षं नारीदौर्भाग्यं च । चित्रास्वात्युदितो नृपशस्यवर्षक्षेमारोग्यकरः । एवमेवैन्द्राग्न्यमैत्रयोः । ऐन्द्रनैर्ऋतयोर्वनस्पतिवर्षश्रेष्ठनृपतिप्रधानविनाशायेतरवृद्धये । आषाढ-

* त्रिभं भाद्रपदे ज्ञेयं फाल्गुने श्रावणे इति अ. ।

योः प्राक्परशस्यानां वृद्धिक्षयौ मध्यक्षेमवर्षणमन्योन्यंभेदश्च । श्रवणश्रविष्ठावारुणेषु यज्ञनृपशस्यवर्षक्षेमारोग्यवृद्धये । अजाहिर्बुध्न्यपौष्णेष्वाषाढफलं प्राक्शस्यविपर्ययः । प्रभूतशस्यविक्षेप*क्षेमाण्यश्वयुग्भरण्योः ।

विष्णुधर्मोत्तरे ।

आग्नेयकेशगे जीवे वर्षे स्याद्वह्निदैवतम् ।
अहितं तु विनिर्दिष्टं गोद्विजाग्न्युपजीविनाम् ॥

केशगे रोहिणीगते ।

गर्गस्तु ।

कार्त्तिकः प्रचुरातङ्कः क्षुच्छस्त्राग्निभयप्रदः ।
गोशाकटिकपीडाकृद्दारुणोऽवर्षकृन्मतः ॥

वराहसंहितायां तु ।

शकटानलोपजीविकगोपीडाव्याधिकोपश्च ।
वृद्धिस्तु रक्तपीतककुसुमानां कार्त्तिके वर्षे ॥

वृद्धगर्गस्तु ।

कृत्तिकां रोहिणीं चापि चरेद्यदि बृहस्पतिः ।
अब्दः स कार्त्तिको नाम भयव्याधिसमाकुलः ॥
अग्निः कुप्यति शस्त्रं च चित्रं वर्षति वासवः ।
अपरं पुष्कलं विन्द्यात् पूर्वशस्यमपुष्कलम् ॥

कार्त्तिकः ।

विष्णुधर्मोत्तरे ।

सौम्यरौद्रोपगे जीवे सौम्यं वर्षमुदाहृतम् ।
ईतयः सकलास्तत्र अनावृष्टिभयं तथा ॥

गर्गस्तु ।

वर्षाहन्ता विशुष्काम्बु†-मिथोभेदभयावहः ।

---

* प्रभूतजलशस्यर्द्धिजल—इति अ. । † व्याधिकरः इति अ. ।

शलभाद्याकुलः सौम्यो दुर्भिक्षभयकारकः ॥

वराहसंहितायाम् ।

सौम्येऽब्देऽनावृष्टिर्मृगाखुशलभाण्डजैश्च शस्यवधः ।
व्याधिभयं मित्रैरपि भूपानां जायते वैरम् ॥

वृद्धगर्गस्तु ।

सौम्यं रौद्रं च नक्षत्रं चरेद्यदि बृहस्पतिः ।
भवेत् स मार्गशीर्षोऽब्दः सर्वदोषसमन्वितः ॥
न वर्षति तदा देवः शुष्यन्ति च जलाशयाः ।
न समृद्ध्यन्ति शस्यानि जातं चैव विहन्यते ॥
दुर्भिक्षभयरोगैश्च विविधैश्चाप्युपद्रवैः ।
चराचराणां भूतानामनयः संप्रवर्त्तते ॥

मार्गशीर्षः ।

विष्णुधर्मोत्तरे ।

आदित्यपुष्यगे चाब्दं विज्ञेयं गुरुदैवतम् ।
आतङ्करहिते लोके क्षेमारोग्यसुखप्रदम् ॥

वराहसंहितायाम् ।

शुभकृज्जगतः पौषो निवृत्तवैराः परस्परं क्षितिपाः ।
द्वित्रिगुणो धान्यार्घः पौष्टिककर्मप्रसिद्धिश्च ॥

द्वित्रा गुणा हि यस्मात् स द्वित्रिगुणो हि धान्यार्घः । यावता मूल्येन यावद्धान्यं लब्धमासीत् तावता तद्द्विगुणं त्रिगुणं वा लभ्यत इत्यर्थः ।

गर्गस्तु ।

पुनर्वसुं च पुष्यं च चरेद्यदि बृहस्पतिः ।
पौषः संवत्सरः स स्यात् सर्वौषधिसमन्वितः ॥
शस्यं सम्पद्यते सर्वं सम्यग् वर्षति वासवः ।
उत्तमं क्षेमसौभिक्षं भवेद्धर्मस्तदा सताम् ॥

पौषः ।

विष्णुधर्मोत्तरे ।

सार्पपित्रोपगे जीवे पित्र्यं वर्षमुदाहृतम् ।
हार्दिवृष्टिप्रदं लोके शिवसौभिक्षकारकम् ॥

वराहसंहितायां तु ।

पितृप्रजापतिवृद्धिर्माघे हार्दिश्च सर्वभूतानाम् ।
आरोग्यवृष्टिधान्यार्घसम्पदो मित्रलाभश्च ॥

गर्गस्तु ।

क्षेमारोग्यसुभिक्षाणि वर्षाणि च शुभानि च ।
पितृपूजाः प्रवर्त्तन्ते माघे राज्ञां च सन्धयः ॥

वृद्धगर्गस्तु ।

आश्लेषां च मघां चैव चरेद्यदि बृहस्पतिः ।
माघसंवत्सरः स स्यात् सर्वभूतहितोदयः ॥
सम्यग्वर्षति पर्जन्यः शस्यमुत्तमतां भजेत् ।
क्षेमारोग्यसुभिक्षाणि प्रजा धर्मकरी तदा ॥

माघः ।

विष्णुधर्मोत्तरे ।

फाल्गुनीद्वयहस्तस्थे वर्षं भाग्यमुदाहृतम् ।
चौरप्राबल्यदं घोरं नारीदौर्भाग्यकारकम् ॥

गर्गस्तु ।

नारीदौर्भाग्यकृद्घोरः फाल्गुनः शस्यवर्षदः ।
क्वचित् क्षेमसुभिक्षाणि क्वचिदक्षेमकारकः ॥

वराहसंहितायाम् ।

फाल्गुनवर्षे विन्द्यात् क्वचित् क्वचित् क्षेमवृष्टिशस्यानि ।
दौर्भाग्यं प्रमदानां प्रबलाश्चौरा नृपाश्चोग्राः ॥

वृद्धगर्गः ।

फाल्गुन्यौ चैव हस्तं च चरेद्यदि बृहस्पतिः ।

स फाल्गुनोऽतिक्रूरः स्याद्धान्यमुत्कर्षतां व्रजेत् ॥
क्वचिन्निष्पद्यते शस्यं क्वचिच्छस्यं विपद्यते ।
क्वचित् सुभिक्षं भवति क्वचित् क्षेमः क्वचिद्भयम् ॥

फाल्गुनः ।

विष्णुधर्मोत्तरे ।

चित्रास्वातिगते जीवे त्वाष्ट्रं वर्षमुदाहृतम् ।
शूकधान्यक्षयकरं भूपानां भयवर्धनम् ॥

गर्गस्तु ।

मृदुभावाश्च राजानः स्त्रियः कामपरायणाः ।
क्षेमारोग्ये च मृदुनी चैत्रो वर्षस्तदा मृदुः ॥

वृद्धगर्गस्तु ।

चित्रां स्वातिं च नक्षत्रं चरेद्यदि बृहस्पतिः ।
चैत्रः संवत्सरः सोऽल्पक्षेमारोग्यसुभिक्षकृत् ॥
मृदवः पार्थिवाश्चात्र चित्रं च मृदु वर्षति ।

वराहसंहितायां तु ।

चैत्रे मन्दा वृष्टिः प्रियमन्नं क्षेममवनिपा मृदवः ।
वृद्धिस्तु कोशधान्यस्य भवति पीडा च रूपवताम् ॥

चैत्रः ।

विष्णुधर्मोत्तरे ।

विशाखामैत्रगे जीवे वर्षमिन्द्राग्निदैवतम् ।
सौभिक्षानन्दजनकं यज्ञधर्मप्रवर्धनम् ॥

वराहसंहितायां तु ।

वैशाखे धर्मपरा विगतभयाः प्रमुदिताः प्रजाः सर्वाः ।
यज्ञक्रिया प्रवृत्तिर्निष्पत्तिः सर्वशस्यानाम् ॥

गर्गस्तु ।

ईतयः प्रशमं यान्ति सन्धिं कुर्वन्ति पार्थिवाः ।

वैशाखे शस्यजनना वृष्टयः सम्भवन्ति च ॥

वृद्धगर्गस्तु ।

विशाखां चैव मैत्रं च चरेद्यदि बृहस्पतिः ।
निरीतिकः स वैशाखो हायनः प्राणवर्षकृत्* ॥
सर्वशस्यानि पुष्यन्ति सुभिक्षं क्षेममेव च ।
नरेन्द्राश्चाविरोधेन प्रजा रक्षन्ति धर्मतः ॥

वैशाखः ।

विष्णुधर्मोत्तरे ।

ज्येष्ठामूलोपगे जीवे वर्षं स्याच्छक्रदैवतम् ।
पीडाकरं धर्मभृतां सम्यक् श्रेष्ठमहोभृताम् ॥

गर्गः ।

वृक्षगुल्मलताशस्यक्षेमकर्मविनाशनः ।
क्रूराज्ञादीतिजननो ज्येष्ठः श्रेष्ठनरान्तकृत् ॥

वराहसंहितायां तु ।

ज्येष्ठे ज्ञातिकुलधनश्रेणीश्रेष्ठा नृपाः ससर्वधर्मज्ञाः ।
पीड्यन्ते धान्यानि च हित्वा कङ्गुं शमीजातिम् ॥

वृद्धगर्गस्तु ।

ज्येष्ठे मूले च नक्षत्रे चरेद्यदि बृहस्पतिः ।
ऐन्द्रसंवत्सरः स स्यात् सर्वभूतहिते शिवः ॥
दुर्भिक्षं जायते घोरं वैरं चैव प्रवर्त्तते ।
न च वर्षेत् तदा देवो न च निर्वर्त्तते सदा ॥

ज्येष्ठः ।

विष्णुधर्मोत्तरे ।

आषाढद्वयगे जीवे वैश्वदेवमुदाहृतम् ।
नाशुभं न शुभं लोके राजविग्रहकारणम् ॥

---

* जलवृष्टिकृदित्यर्थः ।

वराहसंहितायाम् ।

आषाढे जायन्ते शस्यानि क्वचिदवृष्टिरन्यत्र ।
योगक्षेमं मध्यं व्यग्राश्च भवन्ति भूपालाः ॥

गर्गस्तु ।

दुर्भिक्षाक्षेमजनन आषाढोऽन्योन्यभेदकृत् ।
भूपालयुद्धजननो मध्यमक्षेमकारकः ॥

वृद्धगर्गस्तु ।

पूर्वोत्तरे च आषाढे चरेद्यदि बृहस्पतिः ।
आषाढः स तु विज्ञेयस्तस्य संवत्सरोऽशुभः ॥
मिथो भेदाः प्रवर्त्तन्ते बलक्षोभा भवन्ति च ।
शारदं पच्यते धान्यं ग्रीष्मधान्यं न पच्यते ॥

आषाढः ।

विष्णुधर्मोत्तरे ।

विष्णुवासवभस्थे तु वैष्णवं परिकीर्त्तितम् ।
क्षेमसौभिक्षदं लोके पाखण्डपरिपीडनम ॥

वराहसंहितायां तु ।

श्रावणवर्षे क्षेमं सम्यक् शस्यानि पाकमुपयान्ति ।
क्षुद्रा ये पाखण्डास्ते पीड्यन्ते च तद्भक्ताः ॥

गर्गस्तु ।

श्रावणः शस्यसम्पन्नः क्षेमारोग्यविवर्धनः ।
धान्यमाहार्घ्यमायाति सम्यग्वर्षति वासवः ॥
क्षुद्राः पाखण्डिनः सर्वान् सद्भक्ताँश्चोपतापयेत् ।

वृद्धगर्गस्तु ।

श्रावणादीनि च त्रीणि चरेद्यदि बृहस्पतिः ।
श्रावणो नाम सोऽब्दः स्यात् क्षेमसौभिक्षपुष्टिमान् ॥

श्रावणः ।

गर्गस्तु ।

प्रौष्ठपादे वरं शस्यं विनश्यत्यपरं च यत् ।
निष्पद्यते क्वचित् क्षेमं क्वचिदक्षेमकारकम् ॥

वरं शस्यं श्रेष्ठशस्यं सम्भवति । अपरं भावि तद्विनश्यतीति योजनम् ।

तथा च विष्णुधर्मोत्तरे ।

प्रौष्ठपादद्वयोपगे जीवे वारुणगे तथा ।
पूर्वशस्यप्रदं त्वाजं पश्चाद्धान्यविनाशकम् ॥

वराहसंहितायां तु ।

भाद्रपदे वल्लीजं निष्पत्तिं याति पूर्वशस्यं च ।
न भवत्यपरं शस्यं क्वचित् सुभिक्षं क्वचिच्च भयम् ॥

वृद्धगर्गस्तु ।

रेवतीं च प्रौष्ठपदं चरेद्यदि बृहस्पतिः ।
प्रौष्ठपाद इति ज्ञेयो मध्यः संवत्सरो भवेत् ॥
सम्पद्यते शस्यपूर्वमुत्तरं नोपपद्यते ।
योगक्षेमो भवेन्मध्यो धान्यमुत्सार्धतां व्रजेत् ॥

भाद्रः ।

विष्णुधर्मोत्तरे ।

पौष्णाश्वियाम्यगे जीवे वर्षं स्यादश्विदैवतम् ।
सुवृष्टिक्षेमदं लोके सर्वातङ्कविवर्जितम् ॥

वराहसंहितायां तु ।

अश्वयुगब्देऽजस्रं पतति जलं प्रमुदिताः प्रजाः क्षेमः ।
प्राणचयः प्राणभृतां सर्वेषामन्नबाहुल्यम् ॥

पराशरस्तु ।

भवेच्छस्याम्बुजलजक्षेमश्चाश्वयुजः शिवः ।
संवृत्तो वत्सरः श्रीमान् सर्वकामसुखावहः ॥

वृद्धगर्गस्तु ।

अश्विनीं चैव याम्यं च चरेद्यदि बृहस्पतिः ।
संवत्सरः सोऽश्वयुजः सर्वभूतहितावहः ॥
सुभिक्षारोग्यक्षेमं च भवेत् स हि सदोत्तमः ।

आश्विनः ।

अथ बार्हस्पत्ये द्वादशयुगानि ।

विष्णुधर्मोत्तरे ।

तथा खण्डयुगानीह द्वादशोक्तानि भूपते ।
षष्ट्यब्दे च निवर्त्तन्ते पञ्चाब्दानि पृथक् पृथक् ॥
एतेषां तु प्रवक्ष्यामि दैवतानि पृथक् पृथक् ।
विष्णुर्बृहस्पतिः शक्रो वह्निस्त्वष्टा तथैव च ॥
अहिर्बुध्नश्च मरुतो*विश्वेदेवा निशाकरः ।
इन्द्राग्नी चैव नासत्यौ भगश्चैव महाबलः ॥
इति द्वादश ये प्रोक्ता मया खण्डयुगे खलु ।

घटकर्णिकायाम् ।

चत्वारि युगान्यादौ शुभानि चत्वारि मध्यानि ।
चत्वारि तान्यशुभानि बुधैर्विशेषः कृतो वर्षे ॥

प्रभवादिनिर्विशेषो विष्णुधर्मोत्तरे ।

प्रभवो विभवः शुक्लः प्रमोदश्च प्रजापतिः ।
वैष्णवे तु युगे पञ्च प्रोक्ताः संवत्सराः शुभाः ॥

वराहसंहितायाम् ।

क्वचित् खवृष्टिः पवनाग्निकोपः सन्तीतयः श्लेष्मकृताश्च रोगाः ।
संवत्सरेऽस्मिन् प्रभवे प्रवृत्ते न दुःखमाप्नोति जनस्तथाऽपि ॥
तस्माद्द्वितीयो विभवः प्रदिष्टः शुक्लस्तृतीयः परतः प्रमोदः ।

---

* पितरः इति अ. ।

प्रजापतिश्चेति यथोत्तराणि शस्तानि वर्षाण्यथ पञ्च चैवम्* ॥
सम्पन्नशस्यां खलु रोगशोक†भयैर्विमुक्तामुपशान्तवैराम् ।
संहृष्टदोषां कलिदोषमुक्तां क्षत्रं तदा शास्ति च भूतधात्रीम् ॥

क्रमेण पञ्चानां फलं पञ्चकम् । विष्णुधर्मोत्तरे ।

अङ्गिराः श्रीमुखो भावो युवा धाता तथैव च ।
अब्दा जीवयुगे पञ्च तेषामाद्याः शुभास्ततः ॥

वराहसंहितायां तु ।

अद्योऽङ्गिराः श्रीमुखभावसंज्ञौ युवा च धातेति युगे द्वितीये ।
वर्षाणि पञ्चैव यथाक्रमेण त्रीण्यत्र शस्तानि समे परे द्वे ॥
त्रिष्वङ्गिराद्येषु ‡निकामवर्षी देवो निरातङ्कभयश्च लोकः ।
अब्दद्वयेऽप्येव समा सुवृष्टिः किन्त्वत्र रोगाः समारागमश्च ॥

विष्णुधर्मोत्तरे ।

ईश्वरो बहुधान्यश्च प्रमाथी विक्रमो वृषः ।
शाक्रेऽब्दाः पञ्च निर्दिष्टा येषामद्यौ शुभावहौ ॥

वराहसंहितायां तु ।

शाक्रे युगे पूर्वमथेश्वराख्यं वर्षं द्वितीयं बहुधान्यमाहुः ।
प्रमाथिनं विक्रममप्यतोऽन्यं वृषं च विन्द्याद्गुरुचारयोगात् ॥
आद्यं द्वितीयं च शुभे तु वर्षे कृतानुकारं कुरुतः प्रजानाम् ।
पापः प्रमाथी वृषविक्रमौ च सुभिक्षदौ रोगभयप्रदौ च ॥

कृतानुकारं सत्ययुगसादृश्यम् ।

विष्णुधर्मोत्तरे ।

वह्नौ सुभानुस्तरणो वारिदश्च तथा नृपः ।
आग्नेये पञ्च निर्दिष्टा द्वितीयं तेषु शोभनम् ॥

---

* वर्षाणि फलान्यथैषाम् इति अ. । † निष्पन्नशालीक्षुयवादिशस्याम् इति अ. ।
‡ त्रिष्वाद्यवर्षेषु इति अ. ।

वराहसंहितायाम् ।

श्रेष्ठं चतुर्थस्य युगस्य पूर्वं यच्चित्रभानुं कथयन्ति वर्षम् ।
वर्षं द्वितीयं तु सुभानुसंज्ञं रोगप्रदं मृत्युकरं नवं* च ॥
तारणं तदनु भूरिवारिदं शस्यवृद्धिमुदितातिपार्थिवम् ।
पञ्चमं व्ययमुशन्ति शोभनं मन्मथप्रबलमुत्सवाकुलम् ॥

विष्णुधर्मोत्तरे ।

सर्वजित् सर्वधारी च विरोधी विकृतः खरः ।
त्वाष्ट्रे पञ्चयुगे येषां द्वितीयस्तु शुभप्रदः ॥

वराहसंहितायां तु ।

त्वाष्ट्रे युगे सर्वजिदाद्य उक्तः संवत्सरोऽन्यः खलु सर्वधारी ।
तस्माद्विरोधी विकृतः खरश्च शस्तो द्वितीयोऽत्र भयाय शेषाः ॥
नन्दनोऽथ विजयो जयस्तथा मन्मथश्च परतश्च दुर्मुखः ।
कान्तमत्र युग आदितस्त्रयं मन्मथः समफलोऽधमः परः ॥

विष्णुधर्मोत्तरे ।

नन्दनो विजयश्चैव जयः कामश्च दुर्मुखः ।
अहिर्बुध्न्ययुगे पञ्च येषामाद्या हितास्त्रयः ॥

वराहसंहितायां तु ।

हेमलम्ब इति सप्तमे युगे स्याद्विलम्बि परतो विकारि च ।
शर्वरीति तदनु प्लवः स्मृतो वत्सरो गुरुवशेन पञ्चमः ॥
ईतिप्रायाः प्रचुरपवना वृष्टिरब्दे तु पूर्वे
मन्दं शस्यं न बहु सलिलं वत्सरेऽत्र द्वितीये ।
अत्युद्वेगः प्रचुरसलिलः स्यात् तृतीयश्चतुर्थो
दुर्भिक्षाय प्लव इति ततः शोभनो भूरितोयः ॥

* नतम् इति अ. ।

विष्णुधर्मोत्तरे ।

शोककृच्छुभकृत् क्रोधी विश्वावसुपरावसू ।
वैश्वे पञ्च शुभौ येषामब्दौ राजन् द्विपञ्चमौ ॥

वराहसंहितायां तु ।

वैश्वे युगे शोककृ*दित्यथाद्याः संवत्सरोऽतः शुभकृद्द्वितीयः ।
क्रोधी तृतीयः परतः क्रमेण विश्वावसुश्चेति परावसुश्च† ॥
पूर्वापरौ प्रीतिकरौ प्रजानामेषां तृतीयो बहुदोषदोऽब्दः ।
अन्त्यौ समौ किन्तु पराभवेऽग्निः शस्त्रामयार्त्तिद्विजगोभयं च ॥

विष्णुधर्मोत्तरे ।

प्लवङ्गः कीलकः सौम्यः समो रोधकृदेव च ।
सौम्ये पञ्च शुभौ येषां प्रथमानन्तरावुभौ ॥

वराहसंहितायां तु ।

आद्यः प्लवङ्गो नवमे युगेऽब्दः स्यात् कीलकोऽन्यः परतश्च सौम्यः ।
साधारणो रोधकृदित्यथैवं शुभप्रदौ कीलकसौम्यसंज्ञौ ॥
कष्टः प्लवङ्गो बहुशः प्रजानां साधारणोऽल्पं जलमीतयश्च ।
यत् पञ्चमं रोधकृदित्यथाब्दं चित्रं जलं तत्र च शस्यसम्पत् ॥

विष्णुधर्मोत्तरे ।

धावनं मथनं वीरं राक्षसं चानलं तथा ।
इन्द्राग्निदैवते पञ्च सर्व एवाशुभप्रदाः ॥

वराहसंहितायां तु ।

इन्द्राग्निदेवं दशमं युगं यत् तत्राद्यमब्दं परिधाविसंज्ञम् ।
प्रमाथिनं विक्रममप्यतोऽन्यत् स्याद्राक्षसं चानलसंज्ञितं च ॥
परिधाविनि मध्यदेशनाशो नृपहानिर्जलमल्पमग्निकोपः ।
अलसस्तु जनः प्रमाथिसंज्ञे मरकं रक्तकपुष्पबीजनाशः ॥

---

* शोककृत् इति भट्टोत्पलसम्मतः पाठः ।

† पराभवश्च इति अ, ।

विक्रमः सकललोकनन्दनो राक्षसः क्षयकरोऽनलस्तथा ।
ग्रीष्मधान्यजननोऽथ राक्षसो वह्निकोपमरकप्रदोऽनलः ॥

विष्णुधर्मोत्तरे ।

पिङ्गलः कालयुक्तश्च सिद्धार्थो रौद्रदुर्मती ।
आश्विने तु युगे पञ्च तृतीयस्तेषु शस्यते ॥

वराहसंहितायाम् ।

एकादशे पिङ्गलकालयुक्तसिद्धार्थरौद्राः खलु दुर्मतिश्च ।
आद्ये त्ववृष्टिर्महती सचौरा श्वासो हनुत्कम्पयुतश्च कासः ॥
यत्कालयुक्तं तदनेकदोषं सिद्धार्थसंज्ञे बहवो गुणाश्च ।
रौद्रोऽतिरौद्रः क्षयकृत् प्रदिष्टो यो दुर्मतिर्मध्यमवृष्टिकृत् सः ॥

विष्णुधर्मोत्तरे ।

दुन्दुभ्यङ्गारकौ रक्तः क्रोधश्चापि क्षयस्तथा ।
भाग्ये पञ्च शुभाः सर्वे विशेषेण च पञ्चमः ॥

वराहसंहितायां तु ।

भाग्ये युगे दुन्दुभिसंज्ञमाद्यं शस्यस्य वृद्धिं महतीं करोति ।
अङ्गारसंज्ञं तदनु क्षयाय नरेश्वराणां विषमा च वृष्टिः ॥
रक्ताख्यमब्दं कथितं तृतीयं तस्मिन् भयं दंष्ट्रिकृतं गदाश्च ।
क्रोधं बहुक्रोधकरं चतुर्थं राष्ट्राणि शून्यं कुरुते विरोधैः ॥

क्षयमिति युगास्यान्त्यस्यान्त्यं बहुक्षयकारकम् ।
जनयति भयं तद्विप्राणां कृषीवलवृद्धिदम् ॥
उपचयकरं विट्शूद्राणां परस्वहृतां तथा ।
कथितमखिलं षष्ट्यब्दे यत् तदत्र समासतः ॥

षष्ट्यब्दारम्भसमयो विष्णुधर्मोत्तरे ।

माघशुक्लसमारम्भे चन्द्रार्कौ वासवर्क्षगौ ।
जीवयुक्तौ यदा स्यातां षष्ट्यब्दादिस्तदा भवेत् ॥

अतः कल्पादौ नास्यारम्भः । तत्राश्विन्याद्यस्थत्वाद्ग्रहाणाम् । कल्पारम्भाच्चत्वारिंशल्लक्षाधिकसप्ततिकोटि-७०४००००००मितवर्षैर्माघशुक्लप्रतिपदादौ रविचन्द्रबृहस्पतीनां धनिष्ठाद्यवस्थाने षष्ट्यब्दप्रवेशो भवति । अपरं चत्वारिंशल्लक्षाधिकषडशीतिकोटि-८६४००००००मितवर्षैः पुनरेवंविधो योगो भवति । एवमस्यारम्भपञ्चकं कल्पे । पञ्चमारम्भानन्तरं षोडशकोटि-१६०००००००मितवर्षैः कल्पसमाप्तिः । ततो द्वात्रिंशत्कोट्यधिकपद्मचतुष्क-४३२००००००००वत्सरैः कल्पसमाप्तिरिति ।

अथाद्भुतसागरारम्भशकाब्दात् षष्ट्यब्दयुगगणनम् ।

खनवदशो-१०९०नशकाब्दात्
षड्-६गुणितात् पुनः कृताब्धि-४४गुणात् ।
षट्त्रिगुणाश्वि-२३६समेता
द्युतत्रय-३००००लब्धयुतो गताब्दगणः ॥
तस्मादिषुभि-५र्लब्धानि पञ्चयुक्तानि सूर्य-१२-शिष्टानि ।
वृत्तानि वैष्णवादीन्यधःप्रविष्टस्य वर्षाणि ॥

अत्रानुक्तविशेषशान्तिषु बृहस्पत्युत्पातेषु बृहस्पतिपूजापूर्विका प्रभूतकनकान्नगोमहोदानादिका सामान्यशान्तिरौत्पातिकगुरुलाघवमवगम्य कर्त्तव्या ।

फलपाकसमयो वराहसंहितायाम् ।

जीवस्य वर्षेण-इति ।

इति महाराजाधिराजनिश्शङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचितेऽद्भुतसागरे बृहस्पत्यद्भुतावर्त्तः ।

## अथ भार्गवाद्भुतावर्त्तः ।

तत्र शुभसूचकभार्गवलक्षणमाह पराशरः ।

हिमकनकरजतशङ्खस्फटिकवैदूर्यमुक्तामधुघृतमेदमांससम*-

* मण्डकुमुदशशाङ्कच्छवि इति अ. ।

वपुरच्छस्निग्धदीपकान्तिप्रकाशः प्रसन्नार्चिरणुरवनिपतिहितकरः प्रशान्तवैरदुर्भिक्षरोगावृष्टिश्च ।

अपि च ।

कूटाङ्गारनिभः स्निग्धो मार्गस्थो रजतप्रभः ।
भार्गवो विस्तृतो विश्वप्रजाभावकरः स्मृतः ॥

कूटाङ्गारनिभः सप्तलोहवर्णः ।

वराहसंहितायां तु ।

दधिकुमुदशशाङ्ककान्तिभृत् स्फुटविकसन् किरणो बृहत्तनुः ।
सुगतिरविकृतो जयान्वितः कृतयुगरूपकरः सिताह्वयः ॥

येषामयं स्वामी तेषामेवम्भूतो विशेषेणाभ्युदयाय विपरीतो विशेषेण विपरीताय ।

भार्गवस्वामिकान्याह यवनेश्वरः ।

वज्रादिरत्नाकरगोसुतस्त्रीविवादगन्धाम्बरभूषणानाम् ।
सौभाग्यसौख्यश्रुतिसञ्चयानां प्रभुर्निधीनां धनिनां च शुक्रः ॥

काश्यपस्तु ।

चन्द्रभागां वितस्तां च ऐरावतीं पिबन्ति ये ।
पुष्कलावर्त्तकैकेया गान्धारं पुष्कलावतम्* ॥
तक्षशिला मालवका दशार्णा मौक्तिकं गिरिः ।
धान्याढ्याः कुकुरा† गावः प्रस्थापनविलेपने ॥

गिरिर्बहुगिरिर्नाम देशः ।

सुरूपं सुभगोद्यानं कामुकाः कामचारिणः ।
पेशला मधुरा हृद्याः सलिलाशयजीविनः ॥
तरुणा योषितः क्रीडा विदुषां जनगोष्ठिका ।
चित्राण्डजाः कुशास्तरणपत्त्रोर्णं नालिकामलम्‡ ॥

---

* प्रस्थलास्तथा इति अ. । पृष्ठलम्बतम् इति छ. । † कुञ्जरा इति अ. ।
‡ चित्राण्डजाश्च कौशेयं पत्त्रोर्णं काशिकौशलम् इति अ. ।

पिप्पल्यश्चन्दनं जातिरजाद्यामलकं* तथा ।
गन्धपत्रं च लोध्रं च शुक्र एषां पतिः स्मृतः ॥

वराहसंहितायां तु ।

तक्षशिलमार्त्तिकावतबहुगिरिगान्धारपुष्कलावतकाः ।
प्रस्थलमालवकैकयदशार्णकोशीनरः शिवयः ॥
ये च पिबन्ति वितस्तामैरावतीं चन्द्रभागसरितं च ।
रथरजताकरकुञ्जरतुरगमहामात्रधनयुक्ताः ॥
सुरभिकुसुमानुलेपनमणिवज्रविभूषणाम्बुरुहशय्याः ।
वरतरुणयुवतिकामोपकरणमृष्टान्नमधुरभुजः ॥
उद्यानसलिलकामुकयशःसुखौदार्यरूपसम्पन्नाः ।
विद्वदमात्यवणिग्जनपट† कृच्चित्राण्डजास्त्रिफलाः ॥
कौशेयकटुक‡कम्बलपत्रौर्णिकलोध्रगन्धपत्राणि§ ।
जातीफलागुरुवचापिप्पल्यश्चन्दनं च भृगोः ॥

वटकणिकायां तु ।

देशा भृगोस्तक्षशिला वितस्ता गान्धारकाः पुष्कलमालवाश्च ।
दशार्णकोशीनरचन्द्रभागाश्चैद्याश्च संप्रस्थलकैकयाख्याः ॥

अशुभसूचकभार्गवलक्षणमाह पराशरः ।

श्यावनीलरूक्षकपिलरक्तध्वस्तदीनाल्पलोध्रसन्निभः शस्त्रवैरव्याध्यवर्षान्नक्षयकरः ।

अथ वर्णफलम् । तत्र वृद्धगर्गः ।

सुवर्णरजताभश्च घृतमण्डनिभो महान् ।
शुक्रो माञ्जिष्ठवर्णश्च दधिवर्णश्च वर्षकः ॥

* जातीफलमामलकम् इति अ. । † घट इति अ. । ‡ पट्ट इति अ. ।
§ गन्धपत्रचोचानि इति अ. । तत्र चोचं मलिनपत्रं नारिकेलं च इति भट्टोत्पलः ।

वराहसंहितायाम् ।

शिखिभयमनलाभे शस्त्रकोपश्च रक्ते
कनकनिकषगौरे व्याधयो दैत्यपूज्ये ।
हरितकपिशरूपे श्वासकासप्रकोपः
पतति न सलिलं खाद्भस्मरूक्षासिताभे ॥

वृद्धगर्गश्च ।

नीले कपिलवर्णे वा भयं भवति भार्गवे ।
ताम्रवर्णे तथा रूक्षे मेघेष्वम्बु न विद्यते ॥
श्यामवर्णोऽभिघाताय नीलपीतस्तु रोगकृत् ।
चित्रे भयान्युदीर्यन्ते दुर्भिक्षं कपिले भवेत् ॥
धूम्रवर्णोऽग्निवर्णो वा कुर्याद्दस्त्राग्निसम्भवम् ।

अथ नक्षत्रगतफलम् । तत्र काश्यपः ।

अश्विन्यां तुरगे पीडा याम्ये तु कृषिजीविनाम् ।

वराहसंहितायां तु ।

अश्विन्यां हयपीडा याम्ये तु किरातयवनाम् ।

पराशरः ।

अनलमभिव्रजन् पुरविरोधाय ।

काश्यपस्तु ।

भेदयेत् कृत्तिकां शुक्रो बहु तोयं हि पातयेत् ।
रोहिणीतुरगं घोरं गृद्धाकुलभयावहम् ॥

वराहसंहितायां तु ।

भिन्दन् गतोऽनलर्क्षं कूलातिक्रान्तवारिवाहाभिः ।
अव्यक्ततुङ्गनिम्ना समा सरिद्भिर्भवति धात्री ॥

काश्यपः ।

मृगे तु सर्वशस्यानां क्षयं कुर्याद्भृगोः सुतः ।

*आर्द्रायां कलिङ्गजातान् कोशलाँश्च निपीडयेत् ॥

वराहसंहितायां तु ।

सौम्योपगतो रसशस्यसंक्षयायोशनाः समादिष्टः ।
आर्द्रागतस्तु कोशलकलिङ्गहा सलिलनिकरकरः ॥

काश्यपः ।

पुनर्वसौ विदर्भाँश्च पीडयत्युशनाः शुभः ।
पुष्ये तु वृष्टिमाख्याति पुष्टां शस्यविवृद्धये ॥

वराहसंहितायां तु ।

अश्मकवैदर्भाणां पुनर्वसुस्थे सिते महाननयः ।
पुष्ये पुष्टा वृष्टिर्विद्याधररणविमर्दश्च ॥

काश्यपः ।

आश्लेषासु च सर्पाणां पीडां कुर्याद्भृगोः सुतः ।
मघायां तु गते घोरं भयं विन्द्यात् तु भार्गवे ॥
सलिलं च भवेद्भूरि येन धात्री न दृश्यते ।

वराहसंहितायां तु ।

आश्लेषासु भुजङ्गमदारुणपीडावहश्चरन् शुक्रः ।
भिन्दन्मघां महामात्रदोषकृद्भूरिवृष्टिकरः ॥

काश्यपस्तु ।

भाग्ये पुलिन्दशवरान् नाशयेत् सलिलं पतेत् ।
आर्यम्णे तु भवेत् पीडा पाञ्चालकुरुजाङ्गले ॥
सुवृष्टिश्च सुभिक्षश्च चरत्यस्मिन् भृगोः सुते ।

वराहसंहितायां तु ।

भाग्ये शवरपुलिन्दप्रध्वंसकरोऽम्बुनिवहमोक्षाय ।
आर्यम्णे कुरुजाङ्गलपाञ्चालघ्नः सलिलदायी ॥

---

* इतः प्रभृतीनि सर्वाणि शुक्रनक्षत्रचारफलबोधकानि काश्यपवचनानि अ. पुस्तकेऽन्यथा दृश्यन्ते । द्रष्टव्यम् अ. पृ. २२३ ।

काश्यपः ।

हस्ते प्राप्ते कौरवाणां पीडां चित्रकरेषु च ।
जलस्य तु निरोधं वै कुर्यादेवं तु भार्गवः ॥
सवृष्टिं कूपकृत्पीडां चित्राभेदं यदा व्रजेत् ।

वराहसंहितायाम् ।

कौरवचित्रकराणां हस्ते पीडा जलस्य च निरोधः ।
कूपकृद्दण्डजपीडा चित्रास्थे शोभना वृष्टिः ॥

काश्यपः ।

स्वातिं स्थित्वा सुवृष्टिं च वणिङ्नाविकभीतिकृत् ।

वराहसंहितायां तु स्वातिगतिमात्रेण फलमुक्तम् ।

स्वातौ प्रभूतवृष्टिर्दूतवणिङ्नाविकान् स्पृशत्यनयः ।

काश्यपः ।

विशाखायां सुवृष्टिश्च मैत्रे मैत्रं विकाश्यते ।
ऐन्द्रे पौरविरोधः स्यान्मूले तु भिषजां भयम् ॥

वराहसंहितायां तु ।

ऐन्द्राग्नेऽपि सुवृष्टिर्वणिजां च भयं विजानीयात् ।
मैत्रे क्षत्रविरोधो ज्येष्ठायां क्षत्रमुख्यसंतापः ॥
मौलिकभिषजां मूले त्रिष्वपि चैतेष्वनावृष्टिः ।

काश्यपः ।

आषाढयोर्व्याधिभयं वैष्णवे श्रवणे रुजः ।
धनिष्ठायां कर्मकृतां वारुणे शौण्डिकक्षयः ॥
प्रोष्ठपादे व्याघ्रहिंसा आहिर्बुध्न्ये फलक्षयः ।
पापिनां सनृपाणां च पौष्णे विद्यान्महाभयम् ॥

वराहसंहितायां तु ।

आप्ये सलिलजपीडा विश्वेशे व्याधयः प्रकुप्यन्ति ।
श्रवणे श्रवणव्याधिः पाखण्डभयं धनिष्ठासु ॥

शतभिषजि सौण्डिकानामजैकभे द्यूतजीविनां पीडा ।
कुरुपाञ्चालानामपि करोति चास्मिन् सितः सलिलम् ॥
आहिर्बुध्न्ये फलमूलतापकृद्यायिनां च रेवत्याम् ।

पराशरः ।

भाग्यार्यमानिलेन्द्राग्नेयप्रौष्ठपादरौद्रयाम्यतिष्यगतः स्निग्धो रश्मिवान् वर्षकरः ।

घटकर्णिकायाम् ।

भाद्रपदानिलचित्रा याम्यविशाखे सफाल्गुन्यौ ।
समुपेत्य वर्षति सितो भिन्दंश्च गतो मघाग्नेये ॥
मूलज्येष्ठाषाढापुनर्वसूनां यदैति मध्येन ।
भौमहते चामार्गे यावत् तावत् कुतः सलिलम् ॥

पराशरः ।

प्राजापत्यत्वाष्टेन्द्राग्नेयमैत्राणामुदङ्मध्यदक्षिणेन च व्रजन् क्षेमशस्यवृष्टीनां प्रकृष्टमध्यान्तफलो भवति । मित्र्याग्नेययोरुदङ्मध्यगतः । प्रजाहिताय एवमेवाषाढादित्यरोहिणीमध्यगत इन्दोर्दक्षिणतः सुवृष्टये सूर्यादुत्तरतः ।

अवर्षके भे विचरन् यदि वर्षति भार्गवः ।
वर्षकर्क्षगतो वर्षं षोडशार्च्चिर्न वर्षति ॥

षोडशार्च्चिरिति संपूर्णरश्मिरपि न वर्षतीत्यर्थः ।

वृद्धगर्गस्तु ।

आग्नेयत्वाष्ट्रमैत्राणि रोहिणीं पित्र्यमेव च ।
ऐन्द्राग्नं चापि रौद्रं च शुक्रो दक्षिणतश्चरन् ॥
करोत्यर्थकृतां वृद्धिमवृष्टिं शस्यनिग्रहम् ।
शस्त्रं रोगं च कोपं च ग्रीष्मे चाग्निभयं भवेत् ॥
आषाढरोहिणीनां च भेदने च पुनर्वसोः ।

एतदेव फलं कुर्यात् पुराणं चापि विद्रवन् ॥
एषामेवोत्तरेणेह चरन् सौभिक्षवृष्टिकृत् ।
भार्गवो मध्यगश्चापि कुर्यान्मध्यशुभाशुभम् ॥

अथास्य वीथीमार्गनिर्णयो वराहसंहितायाम् ।

नागगजैरावतवृषभगोजरद्गवमृगाजदहनाख्याः ।
अश्विन्याद्याः कैश्चित् त्रिभाः क्रमाद्वीथयः कथिताः ॥

तथा च काश्यपः ।

त्रिष्वश्विन्यादिकर्क्षेषु विज्ञेया नागवीथिका ।
गजा तु रोहिणी चैवमादित्यैरावती स्मृता ॥
मघाद्या वृषभा ज्ञेया गोवीथी हस्तसंज्ञिता ।
जारद्गवी विशाखाद्या मूलाद्या मृगवीथिका ॥
अजा तु विष्णुदैवत्या भाद्राद्या दहना स्मृता ।

आश्विन्यादिभिस्त्रिभिर्नक्षत्रैर्भार्गवस्यैता वीथयो भवन्ति । गजा तु रोहिणी चैवेति । रोहिण्यादिनक्षत्रत्रयेण गजवीथी भवतीत्यर्थः । एवमन्यत्रादिशब्दोऽध्याहार्यः ।

तथा चासितः ।

अश्विन्यादित्रिभाः सर्वा नागाद्या दहनान्तिकाः ।
वीथयो भृगुपुत्रस्य नव प्रोक्ता मनीषिभिः ॥

वराहेण त्वेता एव वीथयो नक्षत्रान्तरैः कथिताः ।

तथा च वटकणिकायाम् ।

वीथी नागानाम्नी स्वातिर्भरणी च कृत्तिका चैव ।
स्वायम्भुवात् त्रिभा स्याद्गजा तथैवरावती वृषभा ॥
अजपादादिचतुष्कं गौः स्याज्जारद्गवी त्रिभा श्रवणात् ।
मैत्रादित्रिमृगाऽजा हस्ता चित्रा विशाखा च ॥
द्वे आषाढे दहना तिस्र उदग्वीथयः क्रमाच्छुभदाः ।
तिस्रो मध्या पापा याम्याः पापा मृगाद्यास्तु ॥

बृहत्संहितायां च ।

नागा तु पवनयाम्यानलानि पैतामहात् त्रिभास्तिस्रः ।
गोवीथ्यामश्विन्यः पौष्णं द्वे चापि भाद्रपदे ॥
जारद्गव्यां श्रवणात् त्रिभं मृगाख्या त्रिभं च मैत्राद्यम् ।
हस्तविशाखात्वाष्ट्राण्यजा त्वषाढाद्वयं दहना ॥
तिस्रस्तिस्रस्तासां क्रमादुदङ्मध्ययाम्यमार्गस्थाः ।
तासामप्युत्तरमध्यदक्षिणावस्थितैकैका ॥
उत्तरवीथीषु सितः सुभिक्षशुभकृद्गतोऽस्तमुदयं वा ।
मध्यासु मध्यफलदः कष्टफलो दक्षिणस्थासु ॥
अत्युत्तमोत्तमोनं सममध्यन्यूनमधमकष्टफलम् ।
उदगाद्यासु यथाक्रममेवं फलनिश्चयं ब्रूयात् ॥

पराशरेण त्वस्य वीथयो न कथिताः । सामान्यग्रहवीथय एवास्य वीथय इति तत्सुरसः । ताश्च मार्गनिर्णये लिखिष्यामः । वीथीफलानि तु लिख्यन्ते तद्यथा ।

तत्र नागवीथीगतो नागाजामाश्रितांश्च पीडयति । गजकुलानि गजवीथ्याम् । ऐरावत्यां नृपतिबलविरोधः । आर्षभ्यां वयोवित्तज्ञानबलाधिकशस्यपीडा श्लेष्मव्याधिप्रादुर्भावश्च । गोवीथ्यां शस्यगोमतां हानिः । जरद्गववीथ्यां शास्त्रविदाम् । मृगवीथ्यां मृगव्याधिः शस्यतपस्विनां पित्तरोगोद्भवश्च । अजायां शस्यकर्षब्रह्मचारिणामाधिक्यम् । दहनवीथ्यां शस्यमेघविलपनमग्निपित्तव्याधिसम्भवश्च । दीप्तिमदृक्षमपि चरन् सुभिक्षक्षेमाय निष्प्रभं वीपरीतः ।

अथ मण्डलफलं वटकणिकायाम् ।

भरणीरौद्रमघानिलशाक्रधनिष्ठादिसंप्रवृत्तेषु ।
चारोदयः शुभो मण्डलेषु हित्वेन्द्रपित्राद्ये ॥

विष्णुधर्मोत्तरे ।

अथोदयास्तमयचारैः शुक्रस्य याम्याद्यं नक्षत्रचतुष्टयाद्यं म-

ण्डलं सुभिक्षजननम्। रौद्राद्यमपि चतुष्टयं द्वितीयं सुभिक्षजननमेव। मघाद्यं पञ्चर्क्षं तृतीयं शस्यम्। स्वात्याद्यं पञ्चनक्षत्रं चतुर्थमभयप्रदम्। शाक्रात् पञ्चर्क्षं पञ्चमं च रोगजननम्। धनिष्ठाद्यं षड्नक्षत्रं वसुमतिवृद्धिकरम्।

वृद्धगर्गस्तु।

भरण्यादीनि चत्वारि प्रथमं शुक्रमण्डलम्।
सर्वभूतहितं नाम क्षेमसौभिक्षवर्षदम्॥
शाल्वाधिपः शूरसेनः पीड्यते मगधाधिपः।
मत्स्याधिपः शिम्बिपतिर्गवां रोगं च निर्दिशेत्॥
आर्द्रादिरोहिणीं नाम द्वितीयं शुक्रमण्डलम्।
चण्डातिवर्षी पर्जन्यः सर्वशस्यानि भावयेत्॥
क्षेमारोग्यसुभिक्षैश्च मोदन्ते सर्वतः प्रजाः।
कलिङ्गाश्मकविप्राणामनयस्तत्र जायते॥
मघादिदारुणं नाम्ना तृतीयं शुक्रमण्डलम्।
अहितं सर्वभूतानां दारुणव्याधिसंकुलम्॥
संजातान्यपि नश्यन्ति सर्वशस्यानि चेतिभिः।
उद्योगाश्चापि जायन्ते वायुरग्निश्च कुप्यति॥
वैरोचनं चतुर्थं तु स्वात्याद्यं शुक्रमण्डलम्।
शिवाभिवर्षी पर्जन्यः शर्वशस्यानि भावयेत्॥
सुभिक्षं जायते लोकं सन्धिं कुर्वन्ति पार्थिवाः।
यज्ञोत्सवसमाजैश्च प्रजा नन्दति भूरिशः॥
ज्येष्ठाद्यमूर्धदण्डं च पञ्चमं शुक्रमण्डलम्।
उद्युक्तदण्डा राजानस्तत्र यान्ति पराभवम्॥

जायन्ते विविधा रोगा दुर्भिक्षं चापि जायते ।
वैश्वानरपथे ह्येष मण्डलः स्यादवृष्टिमान् ॥
षट्कं षट्कं श्रविष्ठादि मण्डलं तीक्ष्णसंज्ञितम् ।
तत्रोत्तमा शस्यसम्पद्वर्षते वाऽतितीक्ष्णतः ।

वराहसंहितायां तु ।

भरणीपूर्वं मण्डलमृक्षचतुष्कं सुभिक्षकरमाद्यम् ।
वङ्गाङ्गमगधवाह्लिककलिङ्गदेशेष्वभयजननम् ॥
अत्रोदितमारोहेद्ग्रहोऽपरो यदि सितं ततो हन्यात् ।
भद्राश्वशूरसेनकयौधेयककोटिवर्षनृपान् ॥
भचतुष्टयमार्द्राद्यं द्वितीयममिताम्बुशस्यसम्पत्त्यै ।
विप्राणामशुभकरं विशेषतः क्रूरचेष्टानाम् ॥
अन्येनात्र क्रान्ते म्लेच्छाटविकश्वजीविगोमन्तान् ।
गोनर्दनीचशूद्रान् वैदेहाँश्चामयः स्पृशति ॥
विचरन् मघादिपञ्चकमुदितः शस्यप्रणाशकृच्छुक्रः ।
क्षुत्तस्करभयजननो नीचोन्नतिसङ्करकरश्च ॥
पित्र्याद्येऽवष्टब्धो हन्त्यश्मकनाविकान् शवरशूद्रान् ।
पौड्रापरान्त्यमौलिक*वनवासिद्रविडसामुद्रान् ॥
स्वात्याद्यं भत्रितयं मण्डलमेतच्चतुर्थमभयकरम् ।
ब्रह्मक्षत्रसुभिक्षाभिवृद्धये मित्रभेदाय ॥
अत्राक्रान्ते मृत्युः किरातभर्त्तुः पिनष्टि चेक्ष्वाकून् ।
प्रत्यन्तावन्तिपुलिन्दतङ्गणाशूरसेनाँश्च ॥
ज्येष्ठाद्यं पञ्चर्क्षं क्षुत्तस्कररोगदं प्रवाधयति ।

* शूलिक इति अ. ।

काश्मीराश्मकमत्स्यान् सचारुदेवीमवन्ती च ॥
अत्रारोहेद्द्रविडाभीराम्बष्ठत्रिगर्त्तसौराष्ट्रान् ।
नाशयति सिन्धुसौवीरकाँश्च काशीश्वरस्य वधः ॥
षष्ठं षणनक्षत्रं शुभमेतन्मण्डलं धनिष्ठाद्यम् ।
भूरिधनगोकुलाकुलमनल्पधान्यं क्वचित् सभयम् ॥
अत्रारोहेच्छौलिकगान्धारावन्तयः प्रपीड्यन्ते ।
वैदेहवधः प्रत्यन्तयवनशकदासपरिवृद्धिः ॥

पराशरस्तु वैरोचनाख्यं चतुर्थमण्डलं चित्राद्यमाह । तद्यथा ।

आद्यरोहितदारुणवैरोचनोर्ध्वदण्डतीक्ष्णानि षणमण्डलानि । तत्र भरण्यादीनि चत्वारि चतुर्नक्षत्राणि । ज्येष्ठाश्रविष्टाद्ये द्वे पञ्चषणनक्षत्रे । अथैतेषु मण्डलेषु प्रविचरन् क्रमात् गोब्रह्मचारिनृपपत्नीतनयसुहृद्भूपालप्रजानामुपतापाय । तथैवोदयास्तमयौ कुर्वन् प्रथमेऽतीव सुभिक्षायाङ्गवङ्गशवरकलिङ्गाननयैः स्पृशति । अत्रैवान्यग्रहारूढोऽसौ माञ्जिष्ठपुरुषादशूरसेनपट्टच्चरपण्यागाराभावाय । द्वितीयेऽन्नसम्पत्प्रदोऽवन्त्यश्मकमालवपाण्ड्यकैकयोपद्रवाय । तृतीये शकसौराष्ट्रनृपानयायान्यग्रहारूढः काश्मीरयवनक्षुद्रमालवकिरातशकाननयेन युनक्ति । चतुर्थेषु वर्षशस्यक्षेमाणि विधत्ते । अन्यग्रहारूढः सुभगान् शिक्षिताँश्चोपतापयति । पञ्चमे मगधान् शूद्रान् जनननयैः स्पृशति । अत्रैवान्यग्रहारूढो व्याधिभयदुर्भिक्षाय वर्षाणि सृजति। विशेषतस्तु कुरुपाञ्चालशाल्वेयशूरसेनपटच्चराहारप्रभृतयोऽभिपीड्यन्ते । षष्ठे बालगर्भान् बालशूद्रान् हिनस्ति । यद्यारोहेत तदा काम्बोजैः सैन्धवो नृपतिः पराजायेत । आवन्त्यश्मकाधिपतो चोपसृज्येते ।

वराहसंहितायाम् ।

अपरस्यां स्वात्याद्यं ज्येष्ठाद्यं चापि मण्डलं शुभदम् ।
पित्र्याद्यं पूर्वस्यां शेषाणि यथोक्तफलदानि ॥

पराशरः ।

आद्यमेव मण्डलं वातमार्गमाहुस्तीक्ष्णम् । व्यालमार्गमूर्द्ध्व-दण्डं वैश्वानरमृते श्रवणात् । वातमार्गगोऽतिरूक्षो वातरिक्ताम्भोदाशनिदः । व्यालेन विषाग्निचौरप्राबल्यम् । वैश्वानरेण तीव्रवर्ण-निग्रहकर्त्ता च ।

हरिवंशे कंसवधनिमित्तम् ।

"वैश्वानरपथे शुक्रो ह्यतिचारं चचार ह"* ।

अथास्यायनक्रमेण पञ्चमार्गानाह पराशरः । तद्यथा ।

प्राक्प्रतीच्योरुदयास्तमयादुदङ्मध्यदारुणास्त्रयो मार्गास्तेषां दक्षिणोत्तरमध्यमोत्तरमध्यममध्यमदक्षिणा गत्यन्तरालदेशं पञ्चधा विभज्य पञ्च मार्गाः कल्पनीयाः ।

एतदुक्तं भवति । दक्षिणायनादनुलोमविलोमाभ्यां षट्त्रिंशद्भिरंशकैरुत्तरमध्य-मोत्तरमध्यममध्यमदक्षिणदक्षिणाः पञ्च मार्गा भवन्तीति । एतेष्वस्तमितस्य मार्गवस्य क्रमेणास्तदिनान्याह ।

पराशरः ।

प्रागस्तमित उत्तरोत्तरमध्यमध्यमानुत्तरदक्षिणेषु मार्गेषु पञ्च-पञ्चाशत्षष्टिपञ्चसप्तत्येकाशीतिनवतिभिर्दिवसैः पश्चाद्दर्शनमुपैति । प्रतीच्यामस्तमितः षडष्टद्वादशपञ्चदशचतुर्विंशतिभिरहोभिः प्रागुदयते । अन्यथा जगदशिवकरो भवति ।

अथोदयास्तफलम् । तत्र पराशरः ।

प्रागुदितो नवभिर्मासैरेकविंशतिनक्षत्राणि चरति । प्रतीच्यामष्टभिरेकोनविंशतिनक्षत्राण्यास्तः शुभाशुभफलः ।

* २३ अ. २६ श्लो. ।

कार्त्तिके तु यदा मासि कुरुतेऽस्तमनोदयौ ।
तदाऽह्नां नवतिं पूर्णां देवो भुवि न वर्षति ॥

काश्यपः ।

कृष्णपक्षे पञ्चदशीचतुर्दश्यष्टमीषु च ।
शुक्रो यदोदयं कुर्यात् तदा वृष्टिं विमुञ्चति ॥

वराहसंहितायाम् ।

चतुर्दशे पञ्चदशेऽथ वाऽष्टमे तमिस्रपक्षस्य तिथौ भृगोः सुतः ।
यदा व्रजेद्दर्शनमस्तमेव वा तदा मही वारिमयी च लक्ष्यते ॥

अत्रानुक्तविशेषशान्तिषु भार्गवोत्पातेषु भार्गवपूजापूर्विका प्रभूतकनकान्नगोमहीदानादिका सामान्यशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

फलपाकसमयो गार्ग्ये ।

षाण्मासिकस्त्वौशनसः—इति ।

इति महाराजाधिराजनिश्शङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-ऽद्भुतसागरे भार्गवाद्भुतावर्त्तः ।

---

## अथ शनैश्चराद्भुतावर्त्तः ।

तत्र शुभसूचकशनैश्चरलक्षणमाह पराशरः ।

पाण्डुः स्निग्धोऽमलः श्यामो विशुद्धार्चिः शनैश्चरः ।
मार्गस्थश्चापि सव्यश्च नक्षत्राद्धित इष्यते ॥

मार्गस्थश्चापि सव्यश्चेति । उत्तरमार्गस्थ इत्यर्थः ।

येषामयं स्वामी तेषामेवंविधो विशेषेण हितो विपरीतो विशेषेण विपरीतः ।

शनैश्चरस्वामिकान्याह यवनेश्वरः ।

आनर्त्तवाहाहन*वृद्धनीचपुंस्त्वोनसत्त्वालसदीक्षितानाम् ।

---

* मृतदाहनं च इति छ. ।

विद्धान्नदासाञ्जनसीसलौहकाष्ठायसानां प्रभुरर्कसूनुः ॥

वटकणिकायां तु ।

सरस्वती यत्र गता प्रणाशं वेदस्मृती मालवकं सुराष्ट्रम् ।
पाश्चात्यदेशो विदिशाननं च शौरेः स्मृतं पुष्करमर्बुदं च ॥

काश्यपस्तु ।

अर्बुदो रैवतगिरिः सौराष्ट्राभीरकास्तथा ।
ऋतुभुजो प्रभासं सरस्वती दक्षिणा दिशः* ॥
आनर्त्तशूद्रविदिशः खलतैलिकनीचकाः ।
वेदस्मृती शौकरिका मलिनश्च नदीतटम् ॥
दुःशीलकाः शाकुनिका पशुपालवधास्तथा ।
पाखण्डिनश्च वैतण्डा निर्गुण्डा शवराः शकाः ॥
विरूपाः कटुतिक्ताश्च रसायनविघातकाः ।
पुलिन्दास्तस्कराः सर्पा महिषोष्ट्रखरा अपि ॥
चणका वातला वल्लाः पुंस्त्वसत्त्वविवर्जिताः ।
काकगृद्धश्रृगालानां मृगाणां च शनैश्चरः ॥

वराहसंहितायां तु ।

अनर्त्तार्बुदपुष्करसौराष्ट्राभीरशूद्ररैवतकाः ।
नष्टा यस्मिन् देशे सरस्वती पश्चिमो देशः ॥
कुरुभूमिजाः प्रभासं विदिशा वेदस्मृती नदीतटजाः ।
खलमलिननीचतैलिकविहीनसत्त्वोपहतपुंस्काः ॥
बन्धनशाकुनिकाशुचिकैवर्त्तविरूपवृद्धशूकरिकाः ।
गणपूज्यस्खलितव्रतशवरपुलिन्दार्थपरिहीनाः ॥
कटुतिक्तरसायनविधवयोषितो भुजगतस्करमहिष्यः ।

* सरस्वती पश्चिमाशा प्रभासं कुरुजाङ्गलम् । इति अ. ।

खरंकरभचणकवातुलमाषतिलाश्चार्कपुत्रस्य ॥

अशुभसूचकशनिलक्षणमाह वृद्धगर्गः ।

वपुष्मात्रश्मिमाली च चन्द्रसूर्यसमीपगः ।
नातीव च विनिर्भाति नित्यं च परिवेषवान् ॥
भवत्यथ सधूमश्च यदा स्यात् तु शनैश्चरः ।
राजानश्च विनश्यन्ति तदा देशाश्च मानुषाः ॥
कृष्णः कषायवर्णो वा पीतको लोहितोऽपि वा ।
श्यामो वा धूम्रवर्णो वा वैश्वानरपथे स्थितः ॥
त्रीणि वर्षाणि नक्षत्रं पीडयन्नुपगच्छति ।
तदा देशो निराधारः शून्यो भवति नित्यशः ॥

अथ वर्णफलं वराहसंहितायाम् ।

वैदूर्यकान्तिरमलः शुभदः प्रजानां
बालातसीकुसुमवर्णनिभश्च शस्तः ।
यश्चापि वर्णमुपगच्छति तत्सवर्णान्
सूर्यात्मजः क्षपयतीति मुनिप्रवादः ॥

तथा च पराशरः ।

यद्यद्वर्णस्तत्तद्वर्णविनाशको भवति ।

गर्गस्तु ।

भवत्यर्कात्मजे रूक्षे श्यामपीतारुणप्रभे ।
तदाऽत्मजानां भावानां क्षुच्छस्त्राग्निकृतं भयम् ॥

पराशरः ।

नीलपीतः क्षुधे । रक्तभस्मचित्रवर्णः शस्त्रवैरदोऽण्डजनिहन्ता-
इति ।

शस्त्रदो वैरदश्चेति सम्बन्धः । रक्तादिवर्णत्रयस्यैतत्क्रमेण फलत्रयम् ।

तथा च वराहसंहितायाम् ।

अण्डजहा रविजो यदि चित्रः क्षुद्भयकृद्यदि पीतमयूखः ।

शस्त्रभयाय च रक्तसवर्णो भस्मनिभो बहुवैरकरश्च ॥

वृद्धगर्गस्तु ।

मांसशोणितसंकाशो यदा स्यात् तु शनैश्चरः ।
अयुध्यमानाः शस्त्रेण वधमृच्छन्ति मानवाः ॥

हरिवंशे मत्स्यपुराणे च हिरण्यकशिपुवधनिमित्तम् ।

"शनैश्चरो लोहिताङ्गो लोहिताङ्गसमद्युतिः"* ।

अथ नक्षत्रचारफलं विष्णुधर्मोत्तरे ।

यद्देशद्रव्यपुरुषनक्षत्रेषु शौरिर्विचरति तत्पीडावहो भवति ।

वटकणिकायां तु ।

यस्मिन्नृक्षे विचरति सौरो बलवाञ्छुभैरयुतदृष्टः ।
तद्देशजन्यकर्मद्रव्यघ्नोऽतीव पापयुतः ॥

वराहसंहितायां तु ।

श्रवणानिलहस्तार्द्राभरणीभाग्योपगः सुतोऽर्कस्य ।
प्रचुरसलिलोपगूढां करोति धात्रीं यदि स्निग्धः ॥

तथा च गर्गः ।

याम्यवायव्यसावित्र्यरौद्रश्रवणसंस्थितः ।
भवेत् स्निग्धवपुः सौरो मार्गो चैवातिवर्षदः ॥

वराहसंहितायाम् ।

अहिवरुणपुरन्दरदैवतेषु सुक्षेमकृन्न चातिजलम् ।
क्षुच्छस्त्रावृष्टिकरो मूले प्रत्येकमपि वक्ष्ये ॥

गर्गस्तु ।

सार्पवारुणमाहेन्द्रनक्षत्रेषु च संस्थितः ।
स्निग्धः सौरः क्षेमकरो नातिवर्षं प्रमुञ्चति ॥
क्षुच्छस्त्रावृष्टिदो मूलं सूर्यपुत्रः समाश्रितः ।

विष्णुधर्मोत्तरे ।

सौम्यत्वाष्ट्रश्रविष्ठासु स्थिते सौरे महीक्षितः ।

* ४६ अ, १२ श्लो, ।

सर्वे पीडां समृच्छन्ति जना यान्ति यमालयम् ॥

अथ प्रत्येकनक्षत्रचारफलं वराहसंहितायाम्

तुरगतुरगोपचारककविवैद्यामात्यहाऽर्कजोऽश्विगतः ।
याम्ये नर्त्तकवादकगेयज्ञक्षुद्रनैकृतिकान् ॥

पराशरस्तु ।

अश्विन्यामश्वारोहाश्वपालवैद्यामात्यकविनायकान् । भरणीषु वादकगायननर्त्तकक्षुद्रनैकृतिकान् पीडयति ।

वराहसंहितायाम् ।

बहुलास्थे पीडयन्ते सौरेऽग्न्युपजीविनश्चमूपाश्च ।
रोहिण्यां कोशलमद्रकाशिपाश्चालशाकटिकाः ॥

पराशरस्तु ।

आग्नेये प्रविचरन्नर्कजोऽग्निस्थलशूरसेनाहिताग्निलोहकारधात्वाकराङ्गनाशौण्डिकाग्न्युपजिविन उपतापयति । प्राजापत्ये मद्रकपाञ्चालकाशिकोशलाङ्गशाकटिकाश्चालोडयन्ते* ।

भीष्मपर्वणि कुरुपाण्डवसैन्यवधनिमित्तम् ।

"रोहिणीं पीडयन्नेव स्थितो राजन् शनैश्चरः"† ।

यद्यपि 'चारेण पीडां कुरुतेऽर्कपुत्रः'–इत्येन चारमात्रेण शनैश्चरः पीडयतीत्युक्तं तथाऽपि कुरुपाण्डवसैन्यवधस्य गुरुत्वादत्र रोहिणीपीडनमवगन्तव्यम् ।

तथा च वराहसंहितायाम् ।

रोहिणीशकटमर्कनन्दनो यदि भिनत्ति रुधिरोऽथ वा शिखी ।
किं वदामि यदनिष्टसागरे जगदशेषमुपयाति संक्षयम् ॥

गर्गः ।

रोहिणीशकटं भौमो भिनत्त्यर्कसुतोऽथ वा ।
केतुर्वा जगतो ब्रूयात् प्रलयं समुपस्थितम् ॥

वराहसंहितायाम् ।

मृगशिरसि वत्सयाजकयजमानार्यजनमध्यदेशाश्च ।

---

* कन्यकाश्चोपताप्यन्ते इति अ. ।  † २ अ. ३२ श्लो. ।

रौद्रे पारतदूरं* मठतैलिकरजकचौराश्च ॥

पराशरस्तु ।

सौम्ये यजमानयाजकार्यजनमध्यदेशवत्सजनपदाः । रौद्रे पारतरमठतैलिकरजकदस्यवः ।

वराहसंहितायाम् ।

आदित्ये पाञ्चनदप्रत्यन्तसुराष्ट्रसिन्धुसौवीराः ।
पुष्ये घाण्टिकघौषिकयवनवणिक्कितवकुसुमानि ॥

पराशरस्तु ।

आदित्ये सुराष्ट्रसिन्धुसौवीरपञ्चनदप्रत्यन्ता विधवाश्च । पुष्येषु पुष्यमाणवकघाण्टिकघौषिकपोतयात्रिपवनवणिग्दूतान् ।

वराहसंहितायाम् ।

सार्पे जलरुहसर्पाः पित्र्ये वाल्हीकचीनगान्धराः ।
मौलिक†पारतवैश्याः कोष्ठागाराणि वणिजश्च ॥

पराशरश्च ।

आश्लेषासु च सर्पाः सलिलजाः । मघासु मौलिकचीनगान्धारवैश्यपारतदरदशिविकोष्ठागाराणि ।

वराहसंहितायाम् ।

भाग्ये रसविक्रयिणः पण्यस्त्रीकन्यकामहाराष्ट्राः ।
आर्यम्णे नृपगुडलवणभिक्षुकाम्बूनि तक्षशिला ॥

पराशरस्तु ।

भाग्ये रसविक्रयिकपण्यस्त्रीकन्यकामहाराष्ट्राः । आर्यम्णे नृपनृपतिपत्नीसुततिललवणगुडभिक्षकपूजककूर्च्चधरतक्षशिलादरदवासिनः ।

वराहसंहितायाम् ।

हस्ते नापितचाक्रिकचौरभिषक्सूचिकद्विपग्राहाः ।

---

* रौद्रस्थे पारततर इति अ. । † शूलिक इति अ. ।

बन्धत्रयः कौशलका मालाकाराश्च पीड्यन्ते ॥

पराशरस्तु ।

हस्ते हस्तिहस्तिग्राहस्तेनभिषग्रजकसूचिकनापितमालाकारबन्धकीकोशलाः ।

वराहसंहितायाम् ।

चित्रास्थे प्रमदाजनलेखकचित्रज्ञचित्रभाण्डानि ।
स्वातौ मागधचरदूतसूतपोतप्लवनटाद्याः ॥

पराशरस्तु ।

त्वाष्ट्रे प्रमदालेखकचित्रकरचित्रभाण्डानि । स्वातौ दूतचरसूतमागधप्लवकनटनर्त्तकगायकवादकपोतयात्रिकाः ।

वराहसंहितायाम् ।

ऐन्द्राग्नाख्ये त्रैगर्त्तचीनकौलूतकुङ्कुमं लाक्षा ।
शस्यान्यथ माञ्जिष्ठं कौसुम्भं च क्षयं याति ॥

पराशरस्तु ।

ऐन्द्राग्ने त्रिगर्त्तचीनकौलूतलाक्षाकुङ्कुमकुसुम्भमाञ्जिष्ठपीतकुसुमशस्यानि विग्रहकामाश्च ।

वराहसंहितायाम् ।

मैत्रे कुलूततङ्गणखसकाश्मीराः समन्त्रिचक्रचराः ।
उपतापं यान्ति च घाण्टिका विभेदश्च मित्राणाम् ॥

पराशरस्तु ।

अनुराधासु खसतङ्गणकुलूतकाश्मीरसमचक्रिचरमन्त्रिघाण्टिकाः* । मित्रभेदं च विन्द्यात् ।

वराहसंहितायाम् ।

ज्येष्ठासु नृपपुरोहितनृपसत्कृतशूरगणकुलश्रेण्यः ।
मूले च काशिकोशलपाञ्चालफलौषधीयोधाः ॥

---

* आलोड्यन्ते इति पूर्वसम्बन्धः ।

पराशरस्तु।

ऐन्द्रे जातिगणकुलश्रेणीज्येष्ठनृपनृपतिसत्कृतपुरोहितान्*। मूले काशिकोशलपाञ्चालमूलफलौषधीयोधान्।

वराहसंहितायाम्।

आप्येऽङ्गबङ्गकोशलगिरिव्रजा मगधपुण्ड्रमिथिलाश्च।
उपतापं यान्ति जना वसन्ति ये ताम्रलिप्त्यां च॥

पराशरस्तु।

पूर्वाषाढास्वङ्गमगधबङ्गपुण्ड्रकोशलमिथिलागिरिव्रजताम्रलिप्तिवासिनः।

वराहसंहितायाम्।

विश्वेश्वरेऽर्कपुत्रश्चरन् दशार्णान् निहन्ति यवनाँश्च।
उज्जयिनीं शबरान् पारियात्रकान् कुन्तिभोजाँश्च॥

पराशरस्तु।

उत्तरास्ववन्तिशबरकुन्तिभोजदशार्णयवनपारियात्रिकान्।

वराहसंहितायाम्।

श्रवणे तु गजाधिकृतान् विप्राग्र्यभिषक्पुरोहितकलिङ्गान्।
वसुभे मगधेशजयो वृद्धिश्च धनेष्वधिकृतानाम्॥

पराशरस्तु।

वैष्णवेऽग्निवेशकलिङ्गेशविद्वद्विप्राश्रमभिषग्राजाधिकृतपुरोहितान्। श्रविष्ठासु मगधाधिपतिविजयाय विविधवसुनिचयाय तदधिकृतानां देशाँश्च निपीडयति।

वराहसंहितायाम्।

साजे शतभिषजि भिषक् कविशौण्डिकपण्यनीतिवार्त्ताँश्च।
आहिर्बुध्न्ये नद्यो यानकराः स्त्रीहिरण्यं च॥

पराशरस्तु।

शतभिषजि भिषङ्मद्यसुरासवक्रयविक्रयवनितोपजीविदस्यु-

* पीडयन्तीति शेषः।

पाखण्डिनिवासिनः । प्राक्प्रोष्ठपदायां द्रविडकैवर्त्तावन्तिचोलपाण्ड्यसिंहलमहेन्द्रनगनिवासिनः । उत्तरायां स्त्रीहिरण्यनिचयतस्करशमीधान्यनदनदीयानयुग्यकरान् ।

वराहसंहितायाम् ।

रेवत्यां राजभृतः क्रौञ्चद्वीपाश्रिताः शरच्छस्यम् ।
शवराश्च निपीड्यन्ते यवनाश्च शनैश्चरे चरति ॥

पराशरस्तु ।

रेवत्यां शरच्छस्यराजभृतकशवरवनवासिक्रौञ्चद्वीपनिवासिनः ।

अथ नक्षत्रचारविशेषफलं वराहसंहितायाम् ।

एकर्क्षचरो वर्षाच्छुभप्रदो द्विभगतिश्च मध्यफलः ।
त्रिभगतिरधमफलकरो दिनकरतनयो विनिर्दिष्टः ॥

वृद्धगर्गस्तु ।

एकर्क्षचारी वर्षात् तु स्निग्धो मन्दगतिग्रहः ।
क्षेमशस्यसुभिक्षाणामाख्याता द्विगुणं चरन् ॥
प्रजाहितानां भावानां विदध्यान्मध्यमं गुणम् ।
त्रिनक्षत्रगतं चारं यदा सौरो निषेविते ॥
तदा भयान्युदीर्यन्ते धूमकेतुरुदेति वा ।
यदि चोर्ध्वं सनक्षत्रं सौरः प्रत्यवसर्पति ॥
समस्तानां भयं विद्यात् तदा चित्रं च वर्षति ।

अथ मार्गफलम् । तत्र वृद्धगर्गः ।

कुर्यात् प्रजानां सौभिक्षमुत्तरं मार्गमास्थितः ।
दुर्भिक्षं चाग्निमूर्च्छां च दक्षिणं मार्गमास्थितः ॥
चरन् कृत्तिकारोहिण्योरुत्तरे चापि दारुणः ।

पराशरस्तु ।

सममन्यैर्मार्गफलमन्यत्रार्द्रासावित्रश्रवणयाम्यानिलभाग्येभ्यः ।

अन्यत्राद्रेति । आर्द्रासावित्रयाम्यानिलानां तीक्ष्णसम्भ्रमः । लम्बमाने पुरस्तादेव तेन भाग्यस्य चोग्रं वाऽस्य चोग्रं तदुत्तरेणापि गमनमशोभनम् । एवमशोभनमध्यपतित्वाच्छ्रवणस्य तदुत्तरगमनमप्यशोभनमिति ।

वृद्धगर्गः ।

नक्षत्रपृष्ठतः सौरो यदा प्रत्यक् प्रलम्बते ।
तदा भवति दुर्भिक्षमुत्तरेण तु संभ्रमः ॥
लम्बमाने पुरस्तात् तु भयं भवति शस्त्रतः ।
व्याधिस्तु सुमहायासो जायते दक्षिणाश्रये ॥

बहूनामायासं करोतीति सुमहायासः ।

अधस्ताद्राजमरणमुपरिष्टात् पराजयः ।

अथोदयास्तफलं विष्णुधर्मोत्तरे ।

रौद्रे हस्ते तथा चाप्ये आहिर्बुध्न्ये शनैश्चरः ।
यदोदयं प्रपद्येत तदा नश्यन्ति पार्थिवाः ॥

वृद्धगर्गस्तु ।

द्वयोर्नक्षत्रयोर्मध्ये यदोदेति शनैश्चरः ।
दिशानां मध्यदेशानां प्रत्यन्तानवमर्दति ॥
विरश्मिश्चोदितो हन्याद्दुष्टान् सर्वान् सुजातिषु ।
उदितो वा पुनः सौरो वैश्वानरपथे स्थितः ॥
पुरपर्वतदुर्गाणि कुधान्यानि च मर्दति ।

पराशरस्तु ।

तस्याष्टाविंशतिवार्षिकः सप्तविंशतिनक्षत्रचारः । त्रिमार्गस्तत्र । प्रवासक्रमात् सप्तविंशतिस्त्रिंशदधिकोना चाह्नामन्यथा त्वहितः ।

अस्यार्थः । प्रवासोऽस्तमयः । तत्समयोऽह्नां त्रिंशत् । अधिकोना एकेनाधिका ऊना वेति ।

अथ वक्रफलं वराहसंहितायाम् ।

प्राग्द्वारेषु चरन् रविपुत्रो नक्षत्रेषु करोति च वक्रम् ।
दुर्भिक्षं कुरुते भयमुग्रं मित्राणां च विरोधमवृष्टिम् ॥

गर्गश्च ।

विलोमितगतिः सौरः प्राग्द्वारेषु यदा भवेत् ।
अनावृष्टिभयं घोरं दुर्भिक्षं मित्रविग्रहः ॥

विष्णुधर्मोत्तरे ।

प्राग्द्वारेषु चरँस्तेषु सौरो वक्रमियाद्यदि ।
पृथिवीं पीडयेत् सर्वां पूर्वदेशं विशेषतः ॥

अत्रानुक्तविशेषशान्तिषु शनैश्चरोत्पातेषु शनैश्चरपूजापूर्विका प्रभूतकनकान्नगोमहीदानादिका सामान्यशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

फलपाकसमयो वराहसंहितायाम् ।

अब्देन शनेः—इति ।

इति महाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे शनैश्चराद्भुतावर्त्तः ।

अथ केत्वद्भुतावर्त्तः ।

पौर्णिमास्यां तु यदृक्षं तस्मात् पञ्चदशो रविः ।
रवेर्द्वादशगः केतुः केतोः सप्तमगो बुधः ॥
बुधाद्द्वितीयगः शुक्रः शुक्रादष्टमगः कुजः ।
शनिः सुरगुरू राहुर्ज्ञेयाः शास्त्रात् स्थिरा नव ॥

तत्र शुभसूचककेतुलक्षणमाह पराशरः ।

स्निग्धः प्रसन्नो विमलः प्रदक्षिणगतिस्तथा ।
दृश्यते येषु देशेषु शिवं तेषां विनिर्दिशेत् ॥

वराहसंहितायाम् ।

ह्रस्वस्तनुः प्रसन्नः स्निग्धस्त्वृजुरचिरसंस्थितः शुक्लः ।

उदितो वाऽप्यभिवृष्टः सुभिक्षसौख्यावहः केतुः ॥

तथा च समाससंहितायाम्

अचिरस्थितोऽभिवृष्टस्त्वृजुस्तनुः स्निग्धमूर्त्तिरुदगुदितः ।

ह्रस्वः सितः प्रसन्नः केतुर्लोकस्य भावाय ॥

येषामयं स्वामी तेषामेवम्भूतो विशेषेण शुभकरः । विपरीतो विशेषेण विपरीतकरः ।

अशुभसूचककेतुलक्षणं वराहसंहितायाम् ।

उक्तविपरीतिरूपो न शुभकरो धूमकेतुरुत्पन्नः ।

इन्द्रायुधानुकारी विशेषतो द्वित्रिचूडो वा ॥

वटकणिकायाम् ।

न शुभो विपरीतोऽतो विशेषतः शक्रचापसंकाशः ।

द्वित्रिचतुश्चूडो वा दक्षिणदिक्स्थश्च मृत्युकरः ॥

हरिवंशे बाणयुद्धनिमित्तम् ।

"दक्षिणां दिशमास्थाय धूमकेतुः स्थितोऽभवत्"* ।

केतुस्वामिकान्याह काश्यपः ।

प्राकाराभ्युच्छ्रिताः शृङ्गगिरिस्था विजिगीषवः ।

प्रत्यन्तवासनिरताः परच्छिद्रविशारदाः ॥

मूर्खा विज्ञानहीनाश्च निर्मर्यादा नरास्तथा ।

परदाररता नीचाः केतोरेतान् विनिर्दिशेत् ॥

वराहसंहितायां तु ।

गिरिदुर्गपह्लवश्वेतहूणचोलावगाणमरुचीनाः ।

प्रत्यन्तनिग्रहेच्छा व्यवसायपराक्रमोपेताः ॥

परदारविवादरताः पररन्ध्रकुतूहला मदोत्सिक्ताः ।

मूर्खाधार्मिकविजिगीषवश्च केतोः समाख्याताः ॥

वटकर्णिकायां तु ।

सिखिनो गिरिसंस्थितावगाणा मरुभूः पह्लवचोलसुह्महूणाः ।

---

* ११६ अ, ६४ श्लो. ।

व्यवसायपराक्रमोपपन्नाः परदारार्थरता मदोत्कटाश्च ॥

अथ वर्णफलं गार्गीये ।

सर्वेषामेव केतूनामष्टौ वर्णाः प्रकीर्त्तिताः ।
श्वेतो रक्तस्तथा पीतः कृष्णश्चेति चतुष्टयम् ॥
अर्च्चिषो धूमकेतूनामुदयेषूपलक्षयेत् ।
हरितो धूम्रवर्णश्च कपिलो वह्निसन्निभः ॥
हन्ति वर्णांस्तथा सर्वान् धूमकेतुश्चराचरान् ।

भार्गवीये तु ।

विप्रान् श्वेताकृतिर्हन्ति क्षत्रियान् हन्ति लोहितः ।
वैश्यांस्तु पीतको हन्ति शूद्रान् हन्ति तथाऽसितः ॥
इतरान् पीडयेत् केतुरन्यवर्णो यदा भवेत् ।
षण्मासाभ्यन्तरे राज्ञो मरणं च तथा दिशेत् ॥
श्वेतः शस्त्राकुलं कुर्याल्लोहितस्त्वग्नितो भयम् ।
क्षुद्भयं पीतकः कुर्यात् कृष्णो रोगमथोल्बणम् ॥

अथाकृतिफलं भार्गवीये ।

वृक्षाकारो विनाशाय सुखाय मुशलाकृतिः ।
दीर्घसूक्ष्मः सुखायैव ह्रस्वः स्थूलो विनाशकृत् ॥

अथ केतूनामुदये पूर्वनिमित्तानि भार्गवीये ।

उष्णं वा यदि वा शीतं निर्घातः पांशुवृष्टयः ॥
नीहारो भूमिकम्पश्च दिशां दाहस्तथैव च ।
उल्काया दर्शने केतो रूपं विन्द्यादनागतम् ॥
अशुभस्य मयोक्तं ते शुभस्य च निबोध मे ।
मृदुस्निग्धाः शुभा वाता निर्मलाः सकला दिशः ॥
शान्ता मृगविहङ्गाश्च ग्रहाः स्फुटमरीचयः ।

कुवेरवायुवरुणसूर्याग्नियमपुत्रकाः ॥

षड्विधाः केतवो वसन्तादिषु षड्तुषूदयन्ते यदुक्तं भार्गवीये ।

चैत्रवैशाखयोर्मध्ये कौवेराँस्तु विनिर्दिशेत् ।
तेषां चैव तु कार्याणि लक्षणैः शृणु यादृशैः ॥
उद्धृतैर्यूपवेदीभिरुच्छ्रितैर्ध्वजतोरणैः ।
हविर्धूमाकुला तत्र दृश्यते च वसुन्धरा ॥
त्रिविष्टपं समापन्नस्तदा शक्रो महीपतिः ।
एवं प्रजास्तु मन्यन्ते कुवेरो गृहमागतः ॥
उदये कुवेरपुत्राणामेतद्भवति लक्षणम् ।
ज्येष्ठे चैव तथाऽऽषाढे वायुपुत्रान् विनिर्दिशेत् ॥
तेषा मेव तु कर्माणि लक्षणैः शृणु यादृशम् ।
वान्ति चैव महावाता महायुद्धं महाभयम् ॥
भज्यन्ते च महावृक्षास्तोरणाट्टालकानि च ।
गृहाणि रमणीयानि क्षयं यान्ति जलानि च ॥
उदये वायुपुत्राणामेतद्भवति लक्षणम् ।
श्रावणप्रौष्ठपदयोर्वारुणाँस्तु विनिर्दिशेत् ॥
तेषां चैव तु कर्माणि लक्षणैः शृणु यादृशैः ।
आवाहयन्ति ते मेघान् पूर्णां कुर्याद्वसुधराम् ॥
उन्मार्गाः सरितो यान्ति जलवेगसमाहताः ।
धान्यं समर्घतां याति ईतयो न भवन्ति हि ॥
उदये वरुणानां तु एतद्भवति लक्षणम् ।
आश्विने कार्त्तिके चैव सूर्यपुत्रान् विनिर्दिशेत् ॥
तेषां चैव तु कर्माणि लक्षणैः शृणु यादृशैः ।

ततो दहति शीतांशुः सर्वान्नानि दिवाकरः ॥
मृयन्ते च तदा गावः श्वापदाश्च विशेषतः ।
विषं च प्रबलं तत्र सर्वदंष्ट्रिषु दारुणम् ॥
उदये सूर्यपुत्राणामेतद्भवति लक्षणम् ।
मार्गशीर्षे च पौषे च वह्निपुत्रान् विनिर्दिशेत् ॥
तेषां चैव तु कर्माणि लक्षणैः शृणु यादृशैः ।
अग्निर्दहति राष्ट्राणि हरितश्च वनानि च ॥
विद्रवन्ति ततो देशाः समन्ताद्भयपीडिताः ।
कस्मिँश्चिज्जायते क्षेमं कस्मिँश्चिज्जायते भयम् ॥
उदये वह्निपुत्राणमेतद्भवति लक्षणम् ।
माघफाल्गुनयोर्मध्ये यमपुत्रान् विनिर्दिशेत् ॥
तेषां चैव तु कर्माणि लक्षणैः शृणु यादृशैः ।
शीघ्रं भवति दुर्भिक्षं हाहाभूतमचेतनम् ॥
छर्दिज्वरातिसाराश्च ग्लानिश्चैवाक्षिवेदना ।
उदये यमपुत्राणामेतद्भवति लक्षणम् ॥

देवलस्त्वाग्नेयाद्या नवविधा अष्टोत्तरशतकेतवः । कृत्तिकादिषु त्रिषु नक्षत्रेषु स्थिता उदयन्ते इत्याह ।

तद्यथा ।

कृत्तिका रोहिणी सौम्यं पृथिवीमध्यमुच्यते ।
केतवो ह्यत्र दृश्यन्ते आग्नेया दश पञ्च च ॥
आग्नेयेषु च दृष्टेषु लोकानां च क्षयो ध्रुवम् ।
नित्योद्विग्नाश्च राजानो जनमारस्तदा भवेत् ॥
रौद्रं पुनर्वसुः पुष्यः पृथिव्या पूर्वमुच्यते ।
केतवो ह्यत्र दृश्यन्ते रौद्रास्तेऽप्येकविंशतिः ॥

यदा रौद्राः प्रदृश्यन्ते दुर्भिक्षं निर्दिशेत् तदा ।
घूर्णन्ते च प्रजाः सर्वा मृत्युक्षुद्रोगपीडिताः ॥
आश्लेषापित्र्यभाग्यानि विन्द्याद्दक्षिणपूर्वतः ।
केतवो ह्यत्र दृश्यन्ते उद्दालकिसुता दश ॥
केतवो ह्यत्र दृश्यन्ते शिखिनो मुनिसम्भवाः ।
सुभिक्षं क्षेममारोग्यं सुवृष्टिः शस्यसम्पदः ॥
आर्यम्णादीनि च त्रीणि विन्द्याद्दक्षिणभागतः ।
केतवो ह्यत्र दृश्यन्ते काश्यपेयाश्चतुर्दश ॥
अनावृष्टिभयं घोरं प्रजानामतिदारुणम् ।
स्वाती विशाखा मैत्रं च भागो दक्षिणपश्चिमः ॥
केतवो ह्यत्र दृश्यन्ते चत्वारो मृत्युसम्भवाः ।
भयं च विविधं विन्द्याद्गर्गस्य वचनं यथा ॥
दुर्भिक्षं मरकं घोरमनावृष्टिश्च दारुणा ।
उपद्रवश्च भूतानां तदा भवति दारुणः ॥
ज्येष्ठा मूलमघाषाढा भाग एषां तु पश्चिमः ।
केतवो ह्यत्र दृश्यन्ते सुतास्ते सोमसम्भवाः ॥
सुभिक्षं च सुवृष्टिश्च मही यज्ञोत्सवाकुला ।
उत्तरा श्रवणं चैव नक्षत्रं वसुदैवतम् ॥
केतवो ह्यत्र दृश्यन्ते माहेयाः पञ्चविंशतिः ।
माहेयेषु च दृष्टेषु लोकानां संक्षयो ध्रुवम् ॥
तदा राजसहस्राणां मही पिबति शोणितम् ।
वारुणं चैव नक्षत्रं तथा भाद्रपदद्वयम् ॥
केतवो ह्यत्र दृश्यन्ते वारुणास्त्रय एव तु ।
ऊर्मिकेतुः श्वेतकेतुर्धूमकेतुस्तृतीयकः ॥

ऊर्मिकेतुर्यदा दृश्यस्तदा ह्युदकजं भयम् ।
श्वेतकेतुर्ययदा दृश्यः श्वेतास्थि कुरुते महीम् ॥
तदा मानुषमांसानि भक्षयन्तीह मानुषाः ।
न माता मन्यते पुत्रं पुत्रो वा मातरं तथा ॥
न पिता पुत्रसम्भूतं स्नेहं संप्रतिपद्यते ।
न पतिर्मन्यते नारी न बन्धुर्बान्धवं तथा ॥
क्षुद्भयार्त्तं जगत् कृत्स्नं चक्रवद्भ्रमते तदा ।
धूमकेतुर्यदा दृश्यस्तस्य वक्ष्यामि लक्षणम् ॥
स हन्ति तारया योधान् राजानं मन्त्रिणं तथा ।
स हन्ति शिखया देशान् सराष्ट्रजनकाननान् ॥
रेवत्याश्वयुजं चैव नक्षत्रं यमदैवतम् ।
केतवो ह्यत्र दृश्यन्ते यमपुत्रास्त्रयोदश ॥
यमपुत्रेषु दृष्टेषु लोकानां संक्षयो ध्रुवम् ।
स्थावरा मानुषाः सर्वे पशवः पक्षिणस्तथा ॥
चतुर्विधानां भूतानां संक्षयो जायते तदा ।

तथा च वराहसंहितायाम् ।

आग्नेयरुद्रजौद्दालकिकाश्यपमृत्युसोमजाश्चैव ।
क्षितितनयवरुणपुत्रा यमजाताः केतवश्चोक्ताः ॥
आग्नेये नृपमरणं क्षुद्भयमतुलं वदन्ति रौद्रेषु ।
औद्दालकिजे शस्यक्षेमे कश्यपसुते त्वनावृष्टिः ॥
क्षुच्छस्त्रमनारोग्यं यमतनये शस्यमुत्तमं सौम्ये ।
माहेये नृपमरणं वरुणसुते क्षुद्भयं च शस्त्रं च* ॥

* नैतानि वराहवचनानि अ. पुस्तके उपलभ्यन्ते प्रायो वटकणिकायां भवेयुः ।

गर्गश्च केतूनां सहस्रसंख्यामाह । तथा च तद्वाक्यम् ।

अनित्योदयचाराणामशुभानां च दर्शनम् ।
आगन्तूनां सहस्रं स्याद्ग्रहाणां तन्निबोध मे ॥

चकाराच्छुभाः केतवो न विंशतिजातयो भवन्ति ।

तत्रादित्यपुत्रा वराहसंहितायाम् ।

हारमणिहेमरूपाः किरणाख्याः पञ्चविंशतिः सशिखाः ।
प्रागितरदिशोर्दृश्या नृपतिविरोधप्रदा रविजाः ॥

गर्गस्तु ।

शुद्धस्फटिकसंकाशा मृणालरजतप्रभाः ।
मुक्ताहारसुवर्णाभा सशिखाः पञ्चविंशतिः ॥
किरणाख्यार्कपुत्रास्ते दृश्यन्ते प्राग्दिशि स्थिताः ।
तथा चापरभागस्था नृपतेर्भयदाश्च ते ॥

चन्द्रसुतानाह गर्गः ।

चन्द्ररश्मिसवर्णाभा हिमकुन्देन्दुसप्रभाः ।
त्रयस्ते शशिनः पुत्राः सौम्याशास्थाः शुभावहाः ॥

सौम्याशास्था उत्तरदिक्स्था इत्यर्थः ।

तथा च वराहसंहितायाम् ।

शशिकिरणरजतहिमकुमुदकुन्दकुसुमोपमाः सुताः शशिनः ।
उत्तरतो दृश्यन्ते त्रयः सुभिक्षावहाः शिखिनः ॥

भौमात्मजानाहाथर्वमुनिः ।

कुङ्कुमा लोहिताङ्गस्य पुत्रा विद्रुमवर्चसः ।
त्रिशिखा वा त्रितारा वा षष्टिरित्युत्तरे पथि ॥

त्रिशिखा वा त्रितारा वा इति वाशब्दौ समुच्चये ।

वराहसंहितायां तु ।

क्षतजानलानुरूपास्त्रिचूलताराः कुजात्मजाः षष्टिः ।
नाम्ना च कौङ्कुमास्ते सौम्याशासंस्थिताः पापाः ॥

त्रिचूलाश्च त्रिताराश्चेति त्रिचूलताराः ।

तथा च गर्गः ।

त्रिशिखाश्च त्रिताराश्च रक्ता लोहितरश्मयः ।
प्रायेणोत्तरभागं तु सेवन्ते नित्यमेव ते ॥
लोहिताङ्गात्मजा ज्ञेया ग्रहाः षष्टिः समासतः ।
नामतः कौङ्कुमा ज्ञेया राज्ञां संग्रामकारकाः ॥

बुधात्मजानाहाथर्वमुनिः ।

एकपञ्चाशतो ज्ञेयास्तस्कराः सूक्ष्मरश्मयः ।
बौधाः कमलगर्भाभाः किञ्चित्पाण्डुरतेजसः ॥

गर्गश्च ।

अरुन्धतीसमा रूक्षाः किञ्चिदव्यक्ततारकाः ।
सपाण्डुवर्णाः श्वेताभाः सूक्ष्मरश्मिभिरावृताः ॥
एते बुधात्मजा ज्ञेयास्तस्कराख्या भयावहाः ।
एकाधिकास्तु पञ्चाशद्यथोत्पथचरा ग्रहाः ॥

यथोत्पथचरा यथेष्टदिक्चराः ।

तथा च वराहसंहितायाम् ।

नातिव्यक्ताः सूक्ष्मा दीर्घाः शुक्ला यथेष्टदिक्प्रभवाः ।
बुधजास्तस्करसंज्ञाः पापफलास्त्वेकपञ्चाशत् ॥

बृहस्पतिपुत्रानाहाथर्वमुनिः ।

मुक्तानिकरगौराभास्त्यजन्त इव चार्चिषः ।
स्फुरन्त इव चाकाशे विकचा रश्मिभिर्वृताः ॥
प्रायशो दक्षिणे मार्गे नीचैर्विख्यातमण्डलाः ।
विकचाः पञ्चषष्टिस्ते बृहस्पतिसुताः स्मृताः ॥

गर्गस्तु ।

शुक्लाः स्निग्धाः प्रसन्नाश्च महारूपाः प्रभान्विताः ।
एकतारा वपुष्मन्तो विकचा रश्मिभिर्वृताः ॥

एते बृहस्पतेः पुत्राः प्रायशो दक्षिणाश्रयाः ।
नामतो विकचा घोराः पञ्चषष्टिर्भयावहाः ॥

अत्र शिखाया अनभिधानात् शिखाशून्यास्तारकामात्ररूपा एते बोद्धव्याः ।
तथा च वराहसंहितायाम् ।

विकचा नाम गुरुसुताः सितैकताराः शिखापरित्यक्ताः ।
षष्टिः पञ्चभिरधिका स्निग्धाः याम्याश्रिताः पापाः ॥

भार्गवसुतानाहाथर्वमुनिः ।

गोक्षीरकुसुमप्रख्यास्तीव्रेण वपुषाऽन्विताः ।
चरन्त्यन्तरवीथीषु स्निग्धा विपुलतेजसः ॥
एते विसर्पका नाम अर्चिष्मन्तो महाप्रभाः ।
विज्ञेयाश्चतुराशीतिः शुक्रपुत्रा महाग्रहाः ॥

वराहसंहितायां तु ।

सौम्यैशान्योरुदयं शुक्रसुता यान्ति चतुरशीत्याख्याः ।
विपुलसिततारकास्ते स्निग्धाश्च भवन्ति तीव्रफलाः ॥

तीव्रफला अतिविरुद्धफलाः ।
गर्गस्तु पूर्वस्यामेतेषामुदयमाह । तद्यथा ।

स्थूलैकतारकाः श्वेताः स्नेहवन्तश्च सप्रभाः ।
अर्चिष्मन्तः प्रसन्नाश्च तीव्रेण वपुषाऽन्विताः ॥
एते विसर्पका नाम शुक्रपुत्राः पुरोदयाः ।
अशीतिश्चतुरश्चैव लोकक्षयकराः स्मृताः ॥

शनैश्चरपुत्रानाहाथर्वमुनिः ।

ये श्वेताः किञ्चिदाकृष्णा द्विशिखाः सिततारकाः ।
ते षष्टिः कनका गौराः शनैश्चरसुता ग्रहाः ॥

गर्गस्तु ।

सस्निधा रश्मिसंयुक्ता द्विशिखाः सिततारकाः ।

षष्टिस्ते कनका घोराः शनैश्चरसुता ग्रहाः ॥

अनुक्तत्वादेषामुदये दिङ्नियमो नास्ति ।

तथा च वराहसंहितायाम् ।

स्निग्धाः प्रभासमेता द्विशिखाः षष्टिः शनैश्चराङ्गरुहाः ।

अतिकष्टफला दृश्याः सर्वत्रैते कनकसंज्ञाः ।

राहुपुत्रानाहाथर्वमुनिः ।

कृष्णाभा कृष्णपर्यन्ताः कलुषाकृतिरश्मयः* ।

राहुपुत्रास्त्रयस्त्रिंशत् कीलकाश्चातिदारुणाः ॥

वराहसंहितायां तु ।

त्रिंशत्यधिका राहोस्ते तामसकीलका इति ख्याताः ।

रविशशिगा दृश्यन्ते तेषां फलमर्कचारोक्तम् ॥

तामसकीलकसंज्ञा राहुसुताः केतवस्त्रयस्त्रिंशत् ।

ते चार्कमण्डलगताः पापफलाश्चन्द्रमण्डले सौम्याः ॥

ध्वाङ्क्षकबन्धप्रहरणरूपाः पापाः शशाङ्केऽपि ।

इत्यादि सप्रपञ्चं सूर्याद्भुतावर्त्ते उक्तमिति ।

अथ कालसुता वराहसंहितायाम् ।

षण्णवतिः कालसुताः कबन्धसंज्ञाः कबन्धसंस्थानाः ।

पुण्ड्रा भयप्रदाः स्युर्विरूपताराश्च ते शिखिनः ॥

पुण्ड्राश्चित्रवर्णाः । पुण्ड्रा नाम ये जनपदास्तेषामभयप्रदा इत्युत्पलेन †व्याख्यातम् । तदयुक्तम् ।

यदाहाथर्वमुनिः ।

पुण्ड्रताराः कबन्धाः स्यू रूक्षा भस्मसरश्मयः ।

कालपुत्राः कबन्धास्ते स्मृताः षण्णवतिर्ग्रहाः ॥

गर्गश्च ।

पुण्ड्रतारा विरूपाश्च कबन्धाकृतिसंज्ञिताः ।

पीतारुणसवर्णाश्च भस्मकर्बुर‡रश्मयः ॥

---

* संकुलाः कृष्णरश्मयः इति छ. । † द्रष्टव्या-२५२ पृ. ७ पं. । ‡ कर्पूर-इति अ. ।

कालपुत्राः कबन्धाश्च नवतिः षट् च ते स्मृताः ।
लोके मृत्युकरा घोरा भवन्त्यशुभदर्शनाः* ॥

अथ मृत्युसुता वराहसंहितायाम् ।

वक्रशिखा मृत्युसुताः कृष्णा रूक्षाश्च तेऽपि तावन्तः ।
दृश्यन्ते याम्ययां जनमरकावेदिनस्ते च ॥

तावन्तः पञ्चविंशतिरित्यर्थः । वराहेण पञ्चविंशतिसंख्यानां रविपुत्रकेतूनां पूर्वोक्तत्वात् ।

गर्गश्च ।

रूक्षाः कृष्णा वक्रशिखा दृश्यन्ते याम्यदिक्स्थिताः ।
पञ्चविंशा मृत्युसुताः प्रजानां भयकारिणः ॥

अग्निपुत्रा वराहसंहितायाम् ।

शुकवदनबन्धुयावकलाक्षाक्षतजोपमा हुताशसुताः ।
आग्नेय्यां दृश्यन्ते तावन्तस्तेऽपि शिखिभयदाः ॥

तावन्तः पञ्चविंशतिः ।

तथा च गर्गः ।

अग्निपुत्रा ग्रहा ज्ञेयास्तत्राग्निभयवेदिनः ।
आग्नेय्यां दिशि दृश्यन्ते लोहिताः पञ्चविंशतिः ॥

अथान्यान् विश्वरूपसंज्ञानग्निपुत्रानाहाथर्वमुनिः ।

नानावर्णाग्निसंकाशा ज्वालामाला विसर्पिणः ।
विश्वरूपाः सुता अग्नेर्ग्रहा विंशच्छतं स्मृताः ॥

गर्गस्तु ।

नानावर्णाग्निसंकाशाः दीप्तिमन्तो विशालिनः† ।
सृजन्त्यग्निमिवाकाशे सर्वज्योतिर्विनाशनाः ॥
तेऽप्यग्निपुत्रा विज्ञेयास्तीव्राग्निभयवेदिनः ।

---

* पुण्ड्राणामभयप्रदा इति अ. । † विचूलिनः इति अ. ।

विंशद्रूहशतं घोरं विश्वरूपेति नामतः ॥

विंशद्रूहशतं विंशत्यधिकं शतमित्यर्थः ।

तथा च वराहसंहितायाम् ।

विंशत्याऽधिकमन्यच्छतमग्नेर्विश्वरूपसंज्ञानाम् ।
तीव्रानलभयदानां ज्वालामालाकुलतनूनाम् ॥

वरुणपुत्रानाहाथर्वमुनिः ।

वंशगुल्मप्रतीकाशाश्चन्द्ररश्मिसरश्मयः ।
शुकतुण्डनिभैश्चापि रश्मिभिः किञ्चिदावृताः ॥
उदयेहः सृजन्तीव स्निग्धत्वात् सौम्यदर्शनात् ।
एते नाम्ना स्मृताः कङ्का द्वात्रिंशद्वारुणा ग्रहाः ॥

वराहसंहितायां तु ।

कङ्का नाम वरुणजा द्वात्रिंशद्वंशगुल्मसंस्थानाः ।
शशिवत्प्रभासमेतास्तीव्रफलाः केतवः प्रोक्ताः ॥

गर्गस्तु ।

वंशगुल्मप्रतीकाशा बृहन्तश्चारुरश्मयः ।
कीर*तुण्डनिभैर्युक्ता रश्मिभिस्तेऽतिदारुणाः ॥
उदयेऽहः सृजन्तीव† स्निग्धत्वात् सौम्यदर्शनाः ।
एते कष्टफलाः कङ्का द्वात्रिंशद्वारुणा ग्रहाः ॥

वायुपुत्रानाहाथर्वमुनिः ।

अरुणास्तु सुता वायोः परुषाः सप्तसप्ततिः ।
वातेरिता भ्रमन्तीव रूक्षा विस्तीर्णरश्मयः ॥

वराहसंहितायां तु ।

श्यामारुणा वितारा धूसररूपा विकीर्णदीधितयः ।
अरुणाख्या वायुसुताः पापफलाः सप्तसप्ततिः परुषाः ॥

---

* काक-इति अ. ।  † मयूखानुत्सृजन्तीव इति अ. ।

अथ वायुसुताः ।

पाण्डुराभिः सुदीर्घाभिः शिखाभिः शीतरश्मयः ।
मिश्रीभूतास्तु विज्ञेया गुण्ठिता इव रेणुभिः ॥
अतिसन्तानकास्त्वन्ये षष्टिर्वायोः सुता ग्रहाः ।

अथ धूमकेतुसुताः ।

विकेशकाः प्रकाशन्ते कृष्णलोहितरश्मयः ।
मिश्रीभूतास्तु ते ज्ञेया गुण्ठिता इव रेणुना ॥
धूमकेतोः सुता घोराः शतमेकाधिकं च यत् ।

अथानूरुपुत्राः ।

अत्यर्थकरकास्त्वन्ये प्रतप्तकनकप्रभाः ।
अनूरुपुत्रकाः षष्टी रात्रिका मध्यचारिणः ॥

अथ व्यालपुत्राः ।

ये तु नक्षत्रवर्गस्य भागमुत्तरमाश्रिताः ।
एकतारा वपुष्मन्तो महाकायाः प्रभान्विताः ॥
व्यालकस्य तु ते पुत्राः सप्तषष्टिः समन्ततः ।
नामतो विकचा नाम तत्रज्ञैः परिकीर्त्तिताः ॥

अत्र ब्रह्मराशिपुत्राः ।

सन्तानकनिभा ये तु दृश्यन्ते सूक्ष्मरश्मयः ।
एकतारा द्वितारास्च अथ वा पञ्चतारकाः ॥
ब्रह्मराशेस्तु ते पुत्रा ग्रहास्तत्स्थानसंस्थिताः ।
संचरन्ति नभः सर्वमुत्पन्ने पुरुषक्षये ॥

अथ प्रजापतिसुताः ।

अणवो लोहितास्त्वन्ये प्रकाशन्ते विकेशकाः ।
कनकाः पञ्चषष्टिस्ते प्राजापत्या ग्रहाः स्मृताः ॥

अथादित्यादिसप्तग्रहपरिवेषमण्डलगताः ।

परिवेषेषु जातेषु ग्रहाणां मण्डलेषु च ।

दृश्यन्ते कार्मुका नाम समान्ये ते समाश्रिताः ॥

अथाधर्मसम्भवाः ।

अधर्मसम्भवास्त्वन्ये चतुर्दश समाश्रिताः ।
अधःशिखाः प्रकाशन्ते विवर्णा घोरतारकाः ॥

अथ राहुपुत्राः ।

कर्णच्छिद्रप्रतीकाशाः कृष्णास्ते तारकाकृतौ ।
कीलका राहुपुत्राश्च चन्द्रसूर्यतलाश्रयाः ॥
वज्रः कबन्धस्त्रिशिखः शङ्खो भेरी खगो धनुः ।
दण्डः श्वा राहुपुत्रास्ते नव ते तुल्यवर्चसः ॥
सदा सोमार्कयोर्ह्येते मण्डलाभ्याससेविनः ।
राजान्यत्वाय दृश्यन्ते प्रजानां संक्षयाय च ॥
तत्र मन्दफला ज्ञेयाः शशाङ्कतलसेविनः ।
दिवाकरतलाभ्याससेविनो भृशदारुणाः ॥

अथ दिक्पुत्राः ।

पन्नगाख्याश्चतुर्विंशद्द्वात्रिंशत् कृष्णका ग्रहाः ।
विंशतिः सप्त च श्वेता अरुणा विंशतिर्ग्रहाः ॥
दक्षिणाद्यासु वीक्ष्यन्ते नीचैर्विभ्रान्तमण्डलाः ।
केवलं तारकाकारा दृश्यन्ते निष्प्रभा ग्रहाः ॥
पीतरक्ता ग्रहाः पञ्च पूर्वदक्षिणतः स्मृताः ।
दक्षिणापरतश्चापि पीतरक्तौ ग्रहौ स्मृतौ ॥
उत्तरापरतस्त्वेकः पीतरक्तो ग्रहः स्मृतः ।
ऐशान्यां श्वेतरक्ताभ एकस्तिष्ठति सूर्यभः ॥
यः सान्ध्यवेलास्वर्काभो दिक्षु सर्वासु दृश्यते ।
नातिदूरं च वै स्निग्धः स वर्षाभयदायकः ॥

अथ मृत्युनिःश्वासजाः ।

मृत्योर्निःश्वासजाश्चान्ये ज्ञेयाः षोडश केतवः ।
कूष्माण्डबिम्बवत्संस्था निर्दिष्टा दक्षिणे पथि ॥

अथादित्यजाः ।

एकादशैव विज्ञेया द्वादशादित्यसम्भवाः ।
सूर्यचन्द्रनिरीक्ष्यास्ते तेजोधातुमया ग्रहाः ॥

अथ रुद्रक्रोधजाः ।

दक्षयज्ञे तु रुद्रस्य क्रोधादन्ये तु निःसृताः ।
भीमरूपा दशैकश्च जालाङ्कुशधरास्तथा ॥

अथ पैतामहाः ।

सप्त पैतामहाश्चान्ये निर्याता जर्जरा ग्रहाः ।
शिखाः सृजन्तो विनताततशुक्लपटोपमाः ॥

अथौद्दालकिसुताः ।

श्वेताः केतव इत्यन्ये व्याख्याता दश पञ्च च ।
उद्दालकऋषेः पुत्रास्ते नीचैर्भ्रान्तमण्डलाः ॥
ते तु श्वेतशिखाः सर्वे सौम्याकारास्तनुप्रभाः ।

अथामृतजाः ।

चतुर्दशेन्दुना सार्धं मथ्यमाने पुराऽमृते ।
केतवः कुन्दपुष्पाभाः क्षीरोदार्णवसम्भवाः ॥
विरश्मयस्ते विशिखा ह्रस्वकाया निरर्चिषः ।
रौप्यकुन्दनिभाः सौम्या ग्रहास्ते सिततेजसः ॥

अथ ब्रह्मकोपजः

ब्रह्मकोपभवस्त्वेको विश्वात्मा सबलो ग्रहः ।
चतुर्युगान्ते लोकानामुदयस्तस्य दृश्यते ॥

अथ नाभसाः ।

नक्षत्रपथमुत्सृज्य नाभसाः पार्श्वचारिणः ।

पूर्वतोऽभ्युदिता वा स्युर्नीचैरुत्तरतस्तथा ॥
याम्याद्यभ्युदिता वा स्युर्ह्रस्वाः स्नेहपरिप्लुताः ।
सर्व एव तु विज्ञेया ग्रहा मन्दफलोदयाः ॥

अथ फलनिर्णयः ।

सर्वेषां पैतृकं रूपं प्रजाभाग्योद्भवं भवेत् ।
तत्कर्मजन्ममाहात्म्यशीलाभिजनमेव च ॥
तद्रूपाँस्तद्गुणाँश्चापि तद्देशाँस्तत्परिग्रहान् ।
सर्व एव क्षुधारोगमृत्युशस्त्राग्नितस्करैः ॥
पशुशस्योपघातैश्च हन्युरन्यैश्च कारणैः ।
धूपनात् स्पर्शनात् स्थानादुदयादस्तसम्भवात् ॥
हन्युः पञ्चविधाः सर्वे केतवो नात्र संशयः ।
शुक्रादीनां च ये पुत्रा ग्रहाणां परिकीर्त्तिताः ॥
तेषां बीजानि जानीयात् पितृभ्योऽभ्यधिकानि च ।
मृत्योः कालस्य सूर्यस्य ब्रह्मणस्त्र्यम्बकस्य च ॥
भौमस्य राहोरग्नेश्च ग्रहा वायोश्च दारुणाः ।
प्रजापतेरधर्मस्य सोमस्य वरुणस्य च ॥
दिशां च विदिशां पुत्रा विज्ञेया मृदुदारुणाः ।
कश्यपस्य च मारीचेरुद्दालकऋषेस्तथा ॥
पुत्रा मन्दफला ज्ञेयाः सौम्या अमृतसम्भवाः ।

अथैकादशजातय एकोत्तरशतकेतवो भवन्तीति पराशरादीनां मतम् ।

तथा च पराशरः ।

शतमेकोत्तरं केतूनां भवति तेषां षोडशमृत्युनिःश्वासजाः । द्वादशादित्यसम्भवाः। दश दक्षयज्ञविलयने रुद्रक्रोधजाः । षट् पैतामहाः । पञ्चदश क्रुद्धोद्दालकसुताः । पञ्च प्रजापतेर्हासजाः । सप्तदश

मारीचिकश्यपललाटजाः । त्रयो विभावसुजाः । चतुर्दश मथ्यमाने समुद्रे सोमेन सह सम्भूताः । धूमोद्भव एकः । एकस्तु ब्रह्मकोपजः—इति ।

वृद्धगर्गस्त्वौरसा द्वादशादित्यसम्भवा एकादश केतवो भवन्ति । रुद्रक्रोधजाश्चैकादशेति ।

तद्यथा ।

मृत्योर्निःश्वासजास्तेषां केतवः षोडश स्मृताः ।
एकादश च विज्ञेया द्वादशादित्यसम्भवाः ॥
दक्षयज्ञे तु रुद्रस्य क्रोधादन्ये विनिःसृताः ।
एकादशैते विख्याताः सप्त पैतामहाः स्मृताः ॥
ऋषेरुद्दालकस्यापि पुत्रा दश च पञ्च च ।
ते च यौवनसंवृद्धाः श्वेतकेतुत्वमागताः ॥
तथा प्रजापतेर्हासात् केतवः पञ्च निस्सृताः ।
षोडशैकश्च मारीचिकश्यपस्य ललाटजाः ॥
अग्निपुत्रास्त्रयस्तेषां केतवस्तिग्मतेजसः ।
सप्त पञ्च च द्वौ चाब्धेर्मथ्यमाने तदाऽमृते ॥
सोमेन सह सम्भूताः केतवो मध्यतः स्मृताः ।
अन्तकस्योग्ररूपस्य क्रोधादेको विनिस्सृतः ॥
धूमकेतुरिति ख्यातो ब्रह्मकोपात् तथाऽपरः ।

एतेषामेकादशजातीयानामेकोत्तरशतकेतूनां प्रत्येकानां नामान्याह वृद्धगर्गः ।

अतः परं प्रवक्ष्यामि केतूनां नामनिश्चयम् ।
विस्तरेण यथा शास्त्रं ब्रुवतो मे निबोधत ॥

तत्र मृत्युपुत्राः ।

दरस्तब्धः श्रमो मोहः श्यावः सर्वोऽत्ययस्तथा ।
पराशरस्तमो वृष्टिः शोषणोऽतिप्रभञ्जकः ॥

अस्थिकेतुर्वसाकेतुः शस्त्रकेतुरदर्शनः ।
एते निःश्वासजा मृत्योर्नामतः परिकीर्त्तिताः ॥

अथादित्यजाः ।

जृम्भाकेतुश्च दृष्टश्च वृक्षः कौम्भी ह्रदो रविः ।
तीक्ष्णो व्यालः कपालश्च तीव्रः प्रमथनस्तथा ॥
केतवस्ते दशैकश्च नामतस्तान् निबोधत ।
एकादशैते विख्याता द्वादशादित्यसम्भवाः ॥

अथ रुद्रक्रोधजाः ।

दक्षयज्ञे तु रुद्रस्य क्रोधादेवाभिनिस्सृताः ।
दंशस्तुण्डो व्रती क्रोधश्चलकेतुर्जलोदरः ॥
व्याधः कटाहो नक्रश्च शान्तिदश्च शतोदरः ।
दम्भो भवनकेतुश्च कलिर्वृषभगोशराः ॥

अथ पैतामहाः ।

एते पैतामहाः सप्त शिखण्डी चेति कीर्त्तिताः ।

अथोद्दालकिजाः ।

अग्निः श्वेतः कुशः क्षारी जटी क्रोधी निषूदनः ।
भस्मो भुवनकेतुश्च गोपो मृत्युः पराभवः ॥
गदः* प्रमथनः शोकः पञ्च वै पञ्च पञ्च च ।
ऋषेरुद्दालकस्यैते पुत्रा वै नामतः स्मृताः ॥

अथ प्रजापतिहासजाः ।

पिङ्गलो जटिलश्चैव विश्वरूपो महोदरः ।
कः प्रजापतिहासात् तु केतवः पञ्च निःसृताः ॥

अथ मारीचिकश्यपप्रजाः ।

बलः केतुर्द्रुमः श्वासः स्वधो चारी सुधीः क्षमः ।

* दमः इति छ. ।

कबन्धस्तापनः शम्भुश्चण्डो ग्राहो जटाधरः ॥
रक्षकौटपुटैरेभिर्नामतः परिकीर्त्तिताः ।
षोडशैकश्च मारीचाः कश्यपस्य ललाटजाः ॥

अथ विभावसुजाः ।

विभावसोस्तु ये पुत्रास्त्रयश्चैव तु कीर्त्तिताः ।
श्रुतकेतुर्मोहनश्च रश्मिकेतुश्च ते त्रयः ॥

अथामृतजाः ।

चतुर्दश तु ये चैते केतवोऽमृतसम्भवाः ।
नामतस्तु यथाशास्त्रं कीर्त्यमानान् निबोधत ॥
जलकेतुर्महाशङ्खः पद्मकेतुर्मणिस्तथा ।
रक्षो विसर्पणश्चैव हिमः शीतस्तथैव च ॥
आवर्त्तकेतुरूर्मिश्च कुक्षिः कुमुद एव च ।
कोपश्च भवकेतुश्च एते प्रोक्ताश्चतुर्दश ॥

अथान्तकक्रोधजः ।

अन्तकस्य तु यः क्रोधादेक एव विनिःसृतः ।
नामतस्तं वदन्तीह धूमकेतुरिति द्विजाः ॥

अथ ब्रह्मकोपजः ।

अथैको ब्रह्मकोपात् तु पृथगेव विनिःसृतः ।
एवं संवर्त्तको नाम केतुः परमदारुणः ॥
एकदैकशतं घूर्णन् नामतः परिकीर्त्तितः ।

एतेभ्यो ये उदयन्ते तानाह पराशरः ।

एभ्यः षड्विंशतिरुदयैः फलमावेदयन्ति । तन्नामतो रूपतः फलतस्तत्कालतोऽभिधास्यामः । तत्र मार्त्यवास्त्रय उदयन्ति । एकैकशो वसाकेतुरस्थिकेतुः शस्त्रकेतुर्वा ।

वृद्धगर्गस्तु ।

मृत्युनिःश्वासजा ये ते पूर्वमेवानुकीर्त्तिताः ।
तेषां दृश्यास्त्रयः प्रोक्ता विज्ञेया नभसि स्थिताः ॥
तेषां त्रयाणामेकैकं त्रिंशद्वर्षशते गते ।
केतूनामुदयो व्योम्नि दृश्यते तु गभस्तिमान् ॥
प्रथमस्तु वसाकेतुरस्थिकेतुरनन्तरम् ।
शस्त्रकेतुरिति ख्यातस्तृतीयो ज्ञानकोविदैः ॥

अथैषामुदये पूर्वनिमित्तान्याह वृद्धगर्गः ।

उत्थानसमये चैषां निमित्तान्युपलक्षयेत् ।
अप्रमत्तः सदा विद्वानुयुक्तः शास्त्रकोविदः ॥
देवतायतने देवीं चलन्तीं रुदतीमपि ।
धूमायन्तीं श्वसन्तीं वा दृष्ट्वा केतुं निवेदयेत् ॥
व्यभ्रे नभसि वर्षाणि विद्युतोऽशनिमारुताः ।
भौमान्तरिक्षाश्चोत्पाता दृश्यन्ते चातिभैरवाः ॥
स्मशाननिलयानां च स्मशाने चोपजीविनाम् ।
सत्त्वानामाभिपादानां श्रूयते सुमहान् स्वनः ॥
उत्पातैरीदृशैर्घोरैर्दृश्यद्भिरनिशं ततः ।
याम्यानां क्षुद्भयं विन्द्यात् केतूनां केतुशास्त्रवित् ॥

वसाकेत्वादीनां लक्षणं फलानि वराहसंहितायाम् ।

उदगायतो महान् स्निग्धमूर्त्तिरपरोदयी वसाकेतुः ।
सद्यः करोति मरकं सुभिक्षमप्युत्तमं कुरुते ॥
तल्लक्षणोऽस्थिकेतुः स तु रूक्षः क्षुद्भयावहः प्रथितः ।
स्निग्धस्तादृक् प्राच्यां शस्त्राख्यो डमरमरकाय ॥

पराशरस्तु ।

तत्र वसाकेतुः स्निग्धो महानुदगायतशिखस्त्रिंशद्वर्षशतं प्रोष्य संप्लवेषु* पश्चिमेनोदितः स सद्यो मरकफलः सौभिक्षकरः । रूक्षोऽस्थिकेतुरसौभिक्षकरस्तुल्य†प्रवासकालफलः । पूर्वेण स्निग्ध एव शस्त्रकेतुः शस्त्रवृत्तराजविरोधमरकफलः समो रूक्षः-इति ।

वृद्धगर्गस्तु ।

उदगायतो महान् स्निग्धो वारुण्यामुदितो निशि ।
वसाकेतुरिति ख्यातः सद्यो मरककारकः ॥
स दृष्ट एव कुरुते सौभिक्षमिति चोत्तमम् ।
उग्रया शिखया भीमो दक्षिणेन नताग्रया ॥
अस्थिकेतुर्जनान् हन्याद्दुर्भिक्षमरकाग्निभिः ।
स दृष्ट एव पृथिवीमाप्लावयति वारिणा ॥
रूक्षया शिखयाऽत्यर्थं क्षतजार्द्रप्रकाशया ।
शस्त्रकेतुर्भवेत् प्राच्यां शस्त्रमृत्युकरो महान् ॥

अथापरेषामुदितानां मृत्युसुतानां फलमाह वृद्धगर्गः ।

निकुटालयसंस्था ये ये च उत्तरवासिनः ।
चतुष्पथनिकेताश्च पुरत्रयनिवासिनः ॥
एते चान्ये च बीभत्साः पुरुषादा निशाचराः ।
लोकानन्तर्हिता घ्नन्ति केतवो मृत्युसम्भवाः ॥

वसादिकेतूनामुदयानन्तरममृतस्य कुमुदकेतोरुदयः ।

तल्लक्षणं वराहसंहितायाम् ।

कुमुद इति कुमुदकान्तिर्वारुण्यां प्राक्शिखो निशामेकाम् ।
दृष्टः सुभिक्षमतुलं दश किल वर्षाणि स करोति ॥

---

* संप्लवे युगे इति अ, ।  † भिक्षुकतुल्य-इति अ, ।

वृद्धगर्गस्तु ।

तेषां कर्मफलस्यान्ते प्रफुल्लकुमुदप्रभः ।
नामतः परिसंख्यातः कुमुदः संप्रदृश्यते ॥
पश्चिमेनोदितः श्रीमान् शिखां कृत्वाऽतिसुप्रभाम् ।
याम्यैः केतुभिरातप्तं लोकमाश्वासयन्निव ॥
शङ्खगोक्षीरमुक्ताभां पूर्वेणाभिनतां शिखाम् ।
दर्शयित्वा निशामेकां ततो गच्छत्यदर्शनम् ॥
सुभिक्षं जायते चात्र विरुध्यन्ते च पार्थिवाः ।
ज्वरा नानाविधाश्चात्र भवन्ति प्रबला नृणाम् ॥
पाण्डुरोगः प्रतिश्यायो मुखरोगावरोधकः ।
महिषान् वारणान् मत्स्यान् वराहानथ सारसान् ॥
मर्कटान् मकरान् नक्रानन्याँस्तोयचरानथ ।
सर्वान् प्रतापयत्येतान् केतुः कुमुदसम्भवः ॥
दश वर्षाणि वा प्राहुः फलं मासाँश्च षोडश ।

अयमुदितः क्षेमसुभिक्षावहः । पश्चिमोदितत्वात् पश्चिमदिग्देशस्थानां च पीडाकरः ।

यथा पराशरः ।

तत्र कुमुदकेतुर्वसादिकेतुचारसमाप्तौ वारुण्यां दर्शनमुपैति । गोक्षीरविमलस्निग्धप्रभां पूर्वेणाभिनतां शिखां कृत्वैकरात्रं चरन् स दृष्ट एव सुभिक्षमुत्पादयति दश वर्षाणि प्रजानामविरोधम् । प्रतीच्यां च मुखरोवगारोधकप्रतिश्यायपाण्डुरोगज्वरैः प्रजां बाधते—इति ।

अथापरकपालकेतोरुदयः । तल्लक्षणमाह वृद्धगर्गः ।

ततः कुमुदकेतोस्तु व्यतीतेऽमलदर्शने ।
द्वादशादित्यसम्भूतः केतुरन्यः प्रदृश्यते ॥

एकादश तु ये प्रोक्ता द्वादशादित्यसम्भवाः।
तेषामप्युत्तरः केतुः सधूमार्च्चिः प्रदृश्यते॥
पञ्चभिः पञ्चदशभिर्वर्षाणां पञ्चभिः शतैः।
पुरस्तात् त्रिषु पक्षेषु गतेषु प्रतिदृश्यते॥
निर्घातपांसुवर्षाद्यैः पूर्वरूपैः सुदारुणैः।
कपालकेतुरूपेण कालो दर्शयते दिवि॥
स दृष्ट एव दुर्भिक्षमनावृष्टिं प्रजाक्षयम्।
शस्त्रव्याधिभयं मृत्युं करोत्येव सुदारुणम्॥
यावद्दर्शयते मासाँस्तावद्वर्षाणि बाधते।
त्रिभागं नभसश्चार्धं गत्वा प्रतिनिवर्त्तते॥
प्रस्थार्धे उभयोरर्धं कृत्वैवमनयं तदा।
कृतकर्मा भवत्येष प्रजार्धमुपयुज्य च॥

पराशरेण त्वमावास्यायामस्योदय उक्तः।

तद्यथा।

आदित्यजानां कपालकेतुरुदयते। अमावास्यायां पूर्वस्यां दिशि सधूमार्च्चिःशिखो नभोविषयार्धे चरन् दृश्यते। पञ्चविंशतिवर्षशतं प्रोष्य त्रीँश्च पक्षानमृतजस्य कुमुदकेतोश्चारान्ते स दृष्ट एव दुर्भिक्षानावृष्टिव्याधिभयमृत्यूपद्रवान् जनयति। यावतो मासान् दृश्यते तावतो मासान् मासैर्वत्सरान् सप्तपञ्चप्रस्थं च शारदधान्यस्यार्धं कृत्वा प्रजानामर्धमुपयुङ्क्ते।

वराहसंहितायां च।

दृश्योऽमावास्यायां कपालकेतुः स धूमताम्रशिखः।
प्राङ्नभसोऽर्धविचारी क्षुन्मरकावृष्टिरोगकरः॥

अथादित्यजानामदृश्यकेतूनां फलमाह वृद्धगर्गः ।

तेषामेकादशानां तु ये चापि दश केतवः ।
अनेनैकेन विख्याता नामतः फलतस्तथा ॥
तेऽपि रूक्षाभया ख्याता वनस्थाः पर्वताश्रयाः ।
कीटाः पतङ्गा कण्टस्था वृश्चिका नकुलाः खगाः ॥
एते नानाविधा लोकान् विषवीर्यपराक्रमाः ।
केतवो घ्नन्ति भूमिष्टानन्तरिक्षचराँस्तथा ॥

अथापरमणिशिखस्य केतोरुदयः । यथाऽऽह वृद्धगर्गः ।

अस्य च प्रतिषेधार्थं कपालस्योपहिंसतः ।
केतुर्मणिशिखः श्रीमान् पश्चिमेनोदयिष्यति ॥
उत्थानसमये चास्य पूर्वरूपाणि लक्षयेत् ।
पूर्वरूपैर्हि शस्यः स्याद्विज्ञातुमुदितो ग्रहः ॥
स्निग्धजीमूतजालौघैः संपतद्भिरितस्ततः ।
स्रावद्भिर्वै सहस्राक्षो वर्षेणार्दयते जनान् ॥
न किञ्चिदपसव्यं स्यान्न किञ्चिदशुभं तथा ।
श्रूयते दृश्यते चापि तस्य दर्शनलक्षणैः ॥

पराशरस्तु ।

मणिकेतुरपि कपालकेतोश्चारावसाने प्रतीच्यामुदयन्नुपतापयति। प्रसूक्ष्मोऽरुन्धतीतारकामात्रः क्षीरप्रतीकाशया पूर्वाभिनतया स्तब्धया स्निग्धया शिखया शर्वर्यामेकमदृश्यः । स उदयात् प्रभृत्यर्धपञ्चमान् मासान् क्षेमसुभिक्षमुत्पादयति । क्षुद्रजन्तुप्रादुर्भावं करोत्यतिमात्रकालदृष्टः—इति ।

वराहसंहितायां च ।

सकृदेकयामदृश्यः सुसूक्ष्मतारोऽपरेण मणिकेतुः ।

ऋज्वी शिखाऽस्य दृश्या* स्तनोद्गता क्षीरधारेव ॥
उदयन्नेव सुभिक्षं चतुरो मासान् करोत्यसौ सार्धान् ।
प्रादुर्भावं प्रायः करोति स क्षुद्रजन्तूनाम् ॥

प्रायो बहुकालं दृष्टः क्षुद्रजन्तूनां मशकदंशादीनां प्रादुर्भावं करोति ।

क्षुद्रजन्तुलक्षणम् ।

क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः ।
शतं वा प्रसवो येषां केचिदानकुलादपि ॥

वृद्धगर्गस्तस्य रात्रियामत्रयोपरि दर्शनं सार्धचतुर्वर्षाणि सुभिक्षक्षेमादिकं चाह ।
यथा ।

यातेषु त्रिषु यामेषु दर्शयत्यनिमित्ततः ।
अरुन्धतीसमश्चापि सूक्ष्मत्वाद्रूपतः स्मृतः ॥
तनुस्निग्धां शिखां कृत्वा याममेकं प्रदर्शयेत् ।
एवं वर्षाणि चत्वारि पक्षान् द्वादश चापरान् ॥
सुभिक्षं क्षेममारोग्यं कुरुते नभसि स्थितः ।

याममात्रातिरिक्तकालदृष्टस्य तस्य फलम् ।

नानाव्यालसमाकीर्णाः सरीसृपसमाकुलाः ।
जानीयात् ताः समाः सर्वा मक्षिकादंशसंकुलाः ॥
भवत्यन्नमनास्वाद्यं नित्यं चैवाथ रोचकम् ।
केतौ मणिशिखे दृष्टे प्रजानामिति निर्दिशेत् ॥

अथापरकलिकेतोरुदयः । तत्र वृद्धगर्गः ।

दक्षयज्ञे तु रुद्रस्य क्रोधाद्ये चाभिनिःसृताः ।
तेषामेकादशानां तु केतुरेकः प्रदृश्यते ॥
अष्टादशेषु पक्षेषु शतैश्चान्यैस्त्रिभिर्गतैः ।
वर्षाणां दारुणाकारः कलिकेतुः प्रदृश्यते ॥

---

* शुक्ला इति अ. ।

अथास्योदये पूर्वरूपाण्याह वृद्धगर्गः ।

पूर्वरूपाणि चाग्नेये रौद्रे चाऽपि निशामय ।
अपसव्यानि सर्वाणि न तु कश्चित् प्रदक्षिणः ॥
सधूमा दारुणाकारा ज्वलदङ्गारसप्रभाः ।
ताराः पतन्ति गगनान्निर्घातोल्का दिशो दश ॥
एतैरेतादृशैर्घोरैः पूर्वरूपैः सुदारुणैः ।
केतोरुदय आचष्टे कलिरन्य उपस्थितः ॥

कलिकेतुलक्षणं वराहसंहितायाम् ।

प्राग्वैश्वानरमार्गे शूलाभः श्यावरूक्षताम्रार्चिः ।
नभसस्त्रिभागगामी रौद्र इति कपालतुल्यफलः ॥

रौद्रः केतुः ।

तथा च पराशरः ।

अथ दक्षयज्ञे रुद्रक्रोधोद्भवः कलिकेतुस्त्रीणि वर्षशतानि नव मासान् प्रोष्योदयते । पूर्वेण वैश्वानरपथेऽमृतजस्य मणिकेतोश्चारान्ते श्यावरूक्षताम्रारुणां शूलाग्राकारसदृशीं शिखां कृत्वा नभसस्त्रिभागचारी शस्त्रभयरोगदुर्भिक्षानावृष्टिमरकैर्भर्विद्रावयन् दिशान्ते दृश्यते । यावन्मासान् दृश्यते तावद्वर्षाणि त्रिभागशेषां प्रजां कृत्वाऽर्घं च शारदधान्यस्याप्याढकं व्रजति—इति ।

वृद्धगर्गस्तु ।

ज्येष्ठामूलानुराधासु या वीथी संप्रकीर्त्तिता ।
तां वीथीं समुपारुह्य केतुः संक्रीडते भृशम् ॥
दक्षिणाभिनतां कृत्वा शिखां घोरां भयङ्करीम् ।
शूलाग्रसदृशीं तीक्ष्णां श्यावताम्रारुणप्रभाम् ॥
पूर्वेणोदयते चैष नक्षत्राण्युपधूपयन् ।

प्रजासु सृजते घोरं फलं मासे त्रयोदशे ॥
त्रिभागं नभसो गत्वा ततो गच्छत्यदर्शनम् ।
यावतो दिवसाँस्तिष्ठेत् तावद्वर्षाणि तद्भयम् ॥
शस्त्राग्निभयरोगैश्च दुर्भिक्षमरकैर्हताः ।
शीर्यमाणाः प्रजास्तत्र विद्रवन्ति दिशो दश ॥
कलिकेतुर्यदा चैष पूर्वेणोदयते शिखी ।
कृत्तिकास्वपि चाग्नेयः पश्चिमेन प्रदृश्यते ॥
तावुभौ दर्शयित्वा तु कर्म कृत्वा सुदारुणम् ।
प्रजाक्षयकरैर्घोरैर्गच्छतोऽस्तमनं सह ॥
शरद्धान्याढके चार्घं कृत्वाऽष्टौ स महाकृतिः ।
क्षपयित्वा जगत् कृत्स्नं विनिवृत्तौ ततस्तु तौ ॥
तयोरन्तर्हिता ये च केतवो नभसि स्थिताः ।
यद्यद्घ्नन्ति विशेषेण तत्तच्छृणुत शास्त्रतः ॥
अजातमेव कार्पासमजातमतसी शणम् ।
हन्यात् पशूनथ च्छागान् नागान् केरिणस्तथा ॥
एतानेवं विधाँश्चैव केतवोऽन्तर्हिता दिवि ।
घ्नन्ति रौद्रास्तथाऽऽग्नेया रौद्रसत्त्वाश्रितान् जनान् ॥

अथातः परममृतजस्य शङ्खकेतोरुदयमाह वृद्धगर्गः ।

तयोस्तु द्वादशे पक्षे वर्षे चाष्टादशे गते ।
शिखया स्निग्धया स्निग्धः प्रदक्षिणनताग्रया ॥
मुक्ताहाराभया श्रीमानालोकं परतो व्रजेत् ।
नव मासान् स सौभिक्षं दृश्यमानं करोति वै ॥
आरोग्यं जनवृद्धिश्च दर्शनादस्य वर्धते ।

यज्ञोत्सवसमृद्धा च तदा भवति मेदिनी ॥
एतैर्निमित्तैर्विज्ञेयः प्रजानां भावनः शुभः ।
लोकोद्योतकरः श्रीमान् शङ्ककेतुरिहोदितः ॥

पराशरेण शङ्ककेतुः पृथङ्नोक्तः । ऊर्म्यादिष्वेवास्यान्तर्भावः कृत इति ।

अथातः परं चलकेतोरुदयः । तस्योदयपूर्वनिमित्तान्याह वृद्धगर्गः ।

पैतामहानां सप्तानां चलकेतुः प्रदृश्यते ।
प्रपातैः पञ्चदशभिः शतैः संवत्सरैर्दिवि ॥
उत्थाने चास्य लिङ्गानि यथावदुपधारयेत् ।
अनिष्टमशुभं तुच्छं नदन्ति मृगपक्षिणः ॥
अन्योन्यमभिसंरब्धाः पुरुषाः पुरुषैः सहः ।
विग्रहं दारुणं यान्ति राजानश्च परस्परम् ॥
उभे सन्ध्ये च विकृते रूक्षवर्णे सुलोहिते ।
न भ्राजति तदा व्योम पांशुध्वस्तं तमोवृतम् ॥

अथ चलकेतुलक्षणं वराहसंहितायाम् ।

अपरस्यां चलकेतुः शिखया याम्याग्रयाऽङ्गुलोच्छ्रितया ।
गच्छेद्यथायथोदक् तथातथा दैर्घ्यमायति ॥
सप्त मुनीन् संस्पृश्य ध्रुवमभिजितमेव च प्रतिनिवृत्तः ।
नभसोऽर्धमात्रमित्वा याम्येनास्तं समुपयाति ॥
हन्यात् प्रयागकूलाद्यावदवन्तीं त्रिपुष्करारण्यम्* ।
उदगपि च देविकामिति भूयिष्ठं मध्यदेशाख्यम् ॥
अन्यानपि च स देशान् क्वचित् क्वचिद्धन्ति रोगदुर्भिक्षैः ।
दश मासान् फलपाकः कैश्चिदिहाष्टादश प्रोक्तः ॥

---

* च पुष्करारण्यम् इति अ. ।

पराशरस्तु।

अथ पैतामहश्चलकेतुः। पञ्चदशवर्षशतं प्रोष्योदितः पश्चिमेनाङ्गुलिपर्वमात्रां शिखां दक्षिणाभिनतां कृत्वा कलिकेतोश्चारान्ते नभस्त्रिभागमनुचरन् यथायथा चोत्तरेण व्रजति तथातथा शूलाग्राकारां शिखां दर्शयन् ब्राह्मनक्षत्रमुपसृज्याल्पमना* ध्रुवं ब्रह्मराशिं सप्तर्षीन् स्पृशन् नभसोऽर्धमात्रं दक्षिणमनुक्रम्यास्तं व्रजति। यः स्ववर्गे दारुणकर्मा स्ववर्गप्राप्तत्वादेवं कृत्स्नमभिहिनस्ति। लोकमपि वा भूमिं कम्पयित्वा दशमासान् मध्यदेशे भूयिष्ठं जनपदमवशेषं कुरुते। अन्येष्वपि च क्वचिच्छस्त्रदुर्भिक्षव्याधिमरकभयैः क्लिश्नात्यष्टादशमासान्—इति।

वृद्धगर्गः।

पश्चिमेनाङ्गुलीमात्रां शिखां परमदारुणाम्।<br>
दक्षिणाभिनतां कृत्वा चलकेतुः प्रदृश्यते॥<br>
यथायथा दर्शयति त्रिभागं नभसश्चरन्।<br>
तथातथा शिखा चास्य सुदीर्घाऽप्युपजायते॥<br>
सुदीर्घां शूलसदृशीं शिखां कृत्वा सुदारुणाम्।<br>
धूपयेदथ नक्षत्रं ब्राह्मं पैतामहं शिखी॥<br>
धूपयेदथ नक्षत्रमेकं द्वे त्रीणि वा पुनः।<br>
स ब्रह्महृदयं स्पृष्ट्वा ध्रुवं सप्तर्षिभिः सह॥<br>
दिशं वैश्रवणाक्रान्तामेवं विपरिवर्त्तते।<br>
स चार्धमेव नभसः परिक्रम्य प्रदक्षिणम्॥<br>
सप्तर्षिभिः प्रतिहतस्ततोऽस्तमुपगच्छति।<br>
स्ववर्गे दारुणं कर्म कुरुते स महाग्रहः॥

---

* मनाक् इति अ.।

गङ्गायाः पश्चिमात् कूलाद्यावदावन्तिकान् जनान् ।
पश्चिमान् पुष्करारण्यमुत्तरेण च वैदिकम् ॥
अत्रैव दारुणं कर्म कुर्वन् हि परिबाधते ।
शस्त्रदुर्भिक्षमरकैः क्वचिदन्यैरुपद्रवैः ॥
स तथा दारुणं कर्म कृत्वा वै सुमहाद्युतिः ।
लोकं चैवाखिलं सोऽथ संपीडय स निवर्त्तते ॥
आढका आढकाः प्रस्थं धृत्वाऽर्घं सुमहत् तदा ।
कम्पयित्वा महीं कृत्स्नां चलकेतुर्निवर्त्तते ॥

अतः परममृतजस्य जलकेतोरुदयः । यथाऽऽह वृद्धगर्गः ।

चलकेतोरतीते तु यथावत् फलदर्शने ।
अमृतयोऽपरः श्रीमान् जलकेतुः प्रदृश्यते ॥
उत्थानसमये चास्य निमित्तान्युपधारयेत् ।
स्निग्धगम्भीरमधुरा वाचः शृण्वन्ति सर्वतः ॥
मृगाणां पक्षिणां चैव वन्यानां सन्ध्ययोर्द्वयोः ।
एतैर्निमित्तैर्विज्ञेयः प्रजानां भावनः शुभः ॥
जलकेतोरिह श्रीमानुदयः शास्त्रकोविदैः ।

जलकेतुलक्षणं वराहसंहितायाम् ।

जलकेतुरपि च पश्चात् स्निग्धः शिखयाऽपरेण चोन्नतया ।
नव मासान् स सुभिक्षं करोति शान्तिं च लोकस्य ॥

पराशरस्तु ।

अथ जलकेतुः पैजामहस्य चलकेतोर्नवमासावशिष्टे कर्मणि कृतं प्रवर्त्तयति । पश्चिमेनोदितः स्निग्धः सुजाततारः पश्चिमाभिनतशिखः स नवमासाभ्यन्तरे क्षेमसुभिक्षारोग्याणि प्रजाभ्यो धत्ते । अन्यग्रहकृतानां चाशुभानां व्याघाताय–इति ।

वृद्धगर्गस्तु।

स्निग्धः पश्चाच्छिखः श्रीमान् दृश्यते दिशि पश्चिमे।
अन्यकेतुभिरातप्तं जगत् प्रह्लादयन्निव॥
प्राप्तिः कृतयुगस्येव जलकेतौ नभोगते।
चतुर्मासोदितश्चैव ततः फलति कर्मभिः॥
कर्म चास्य शुभं शस्यमारोग्यं क्षेम एव च।
राहुणा केतुना वाऽपि बुधेनान्यग्रहेण वा॥
यदि पापं कृतं कर्म दर्शनादस्य नश्यति।
जलकेतुः प्रभुः प्रोक्तः शेषाः सौम्यास्त्रयोदश॥
शुभास्तमनुगच्छन्ति केतुमन्ये च केतवः।
सूक्ष्मरूपप्रभाश्चैव तथैवाक्रूरदर्शनाः॥
तारारूपास्तथा सर्वे विचरन्त्यस्य पार्श्वतः।
केतुज्ञास्तांस्तु पश्यन्ति ये चान्ये निपुणा जनाः॥
चतुर्दशानामेतेषां शेषा रौद्राः प्रकीर्त्तिताः।

ऊर्म्यादयोऽवशिष्टा अमृतजा जलकेतूदयानन्तरमुदयन्ते इति।

पराशरो यथाऽऽह।

अथ जलकेतोश्चारसमाप्तावूर्म्यादयः शीतान्ता अन्ये प्रादुर्भवन्ति। ते त्रयोदशचतुर्दशाष्टादशवर्षान्तरिता दृश्यन्ते। स्निग्धाः सुभिक्षक्षेमाय विपर्ययाय विपरीताः। क्षुद्रजन्तूनां वधाय च—इति।

वृद्धगर्गस्तु ऊर्म्यादीनामुदये विशेषमाह।

ऊर्मिकेतुः प्रदृश्येत मध्ये चन्द्रमसोऽसितः।
राहोर्दर्शनमास्थाय लोकं संमोहयन्निव॥
शोभनं तस्य नक्षत्रे दर्शनं पौर्णमासिके।
बालेन्दुसदृशीं सौम्यां शिखां दर्शयते शुभाम्॥

सोमस्य सप्तमे भागे नाम्ना चन्द्रसखः शिखी ।
अमृतेयो ग्रहः श्रीमानानन्दजलदो नृणाम् ॥
राहुमार्गमपावृत्य निशाः सप्त प्रदृश्यते ।
दर्शनं चास्य शंसन्ति विप्राः शास्त्रविशारदाः ॥

राहुमार्गमपावृत्येति यस्मिन् कृत्तिकादिसप्तनक्षत्रात्मकमार्गे राहुस्तिष्ठति तन्मार्गमाश्रित्येत्यर्थः ।

वृद्धगर्गः ।

ततः प्रभृति भूयिष्ठा आमृतेयाश्च केतवः ।
सुभिक्षाय तु ते सर्वे प्रदृश्यन्तेऽमृतोद्भवाः ॥
यस्य स्नेहो यथा वर्णः सुभिक्षाय स कल्प्यते ।
स एव रूक्षः कुरुते दुर्भिक्षं व्याध्युपद्रवम् ॥

अतः परममृतजस्य भवकेतोरुदयः । तत्र वृद्धगर्गः ।

ततः पर्यायशेषस्तु लोकानां हितकाम्यया ।
दर्शनेऽत्युत्तमः केतुर्भ्राजन् नभसि संस्थितः ॥
भवाय जगतः श्रीमान् भवकेतुः प्रदृश्यते ।
उत्थाने चास्य लिङ्गानि वेदितव्यानि पूर्वतः ॥
शास्त्रज्ञेनाभियुक्तेन प्राज्ञेनैतद्विजानता ।
न रौद्रं न च बीभत्सं न दीना न तु पापिनः ॥
व्याहरन्ति मृगारिष्टा ग्राम्यारण्याश्च पक्षिणः ।
एतैर्निमित्तैर्विज्ञेयं भवकेतुरुदेष्यति ॥

अथास्य लक्षणं वराहसंहितायाम् ।

भवकेतुरेकरात्रं दृश्यः प्राक् सूक्ष्मतारकः स्निग्धः ।
हरिलाङ्गूलोपमया प्रदक्षिणावर्त्तया शिखया ॥

पराशरः ।

तेषामष्टानां कर्मण्यतीते भवकेतुर्दृश्यते पूर्वेणैकरात्रम् ।

या कृत्तिकानामुत्तरतारा तत्प्रमाणया स्निग्धया रूक्षप्रभया सिंह-लाङ्गूलसंस्थानया प्रदक्षिणनताग्रया शिखयोदितः स यावन्मुहूर्त्तान् दृश्यते तावन्मासान् भवत्यतीव सुभिक्षम्। सुभिक्षाय रूक्षः प्राणहराणां रोगानां प्रादुर्भावाय च—इति ।

वृद्धगर्गस्तु ।

हरिलाङ्गूलसदृशीं शिखां कृत्वा तु भास्वतीम् ।
पूर्वेणैव निशामेकां दृष्टोऽस्तमुपगच्छति ॥
स सुभिक्षमथारोग्यं करोत्यथ महाद्युतिः ।
व्याधयश्चात्र बहव उत्पद्यन्ते सवेदनाः ॥
दन्तरोगप्रतिश्यायमुखरोगगलग्रहाः ।
एतानेवंविधांश्चान्यान् व्याधीन् दारुणदर्शनात् ॥
प्रजानीयाद्रूक्षवर्णादन्नप्राणभयं नृणाम् ।

अतः परं श्वेतकेतोः कसंज्ञितस्य च केतोरुदयः ।

तथा च वृद्धगर्गः ।

ऋषेरुद्दालकस्यापि पुत्रा ये संप्रकीर्त्तिताः ।
तेषां पञ्चदशानां तु श्वेतकेतुः प्रदृश्यते ॥
दशोत्तरे वर्षशते संप्रयाति ततो दिवि ।
उत्थानसमये चास्य निमित्तान्युपलक्षयेत् ॥
अनिष्टलक्षणान्यत्र निमित्तानि भवन्ति वै ।
अनिष्टसन्धयो भूपा वैरमायान्ति दारुणम् ॥
शोणितौघपरिक्लिन्ना मही तत्र च दृश्यते ।
एतैरेवंविधैर्घोरैः पूर्वरूपैः सुदारुणैः ॥
श्वेतकेतोः समुदयः परिज्ञेयः सुदारुणः ।
शोभनः स तु विज्ञेयो लक्षणैश्च सुशोभनैः ॥

अथ लक्षणम् ।

पूर्वेणोदयते चैष पश्चिमेनानतद्युतिः ।
कः प्रजापतिपुत्रश्च पश्चिमेन प्रपद्यते ॥
स तुल्यमुदितस्तेन प्रजाः शस्त्रेण हिंसति ।
निशार्धे दर्शनं चास्य प्रमाणं परिकीर्त्तितम् ॥
श्वेतः सप्त निशा दृश्यस्ततो गच्छत्यदर्शनम् ।
तावुभौ दश वर्षाणि प्रजाः पीडयतो भृशम् ॥
व्याधिभिर्दारुणैस्तैस्तैः प्रजानां मरणं ध्रुवम् ।
राजानश्च विरुध्यन्ते नानाव्याधिभयं क्वचित् ॥
क्वचित् पञ्चमिकी खारी क्वचिदर्वेण षष्टिका ।
क्षुद्भिरुत्सादितो देशो यत्र केतुः प्रदृश्यते ॥

पराशरस्तु ।

अथोद्दालिकिश्वेतकेतुर्दशोत्तरं वर्षशतं प्रोष्य भवकेतोश्चारान्ते पूर्वस्यां दिशि दक्षिणाभिनतशिखोऽर्धरात्रकाले दृश्यः । तेनैव सह द्वितीयः प्रजापतिसुतः पश्चिमेन कनामा ग्रहः केतुर्युगसंस्थायी युगपदेव दृश्यते । तावुभौ सप्तरात्रदृश्यौ दशवर्षाणि प्रजाः पीडयतः । कः प्रजापतिपुत्रो यदा ह्यधिकं दृश्येत तदा दारुणं प्रजानां शस्त्रकोपं कुर्यात् । तावेव स्नेहवर्णयुक्तौ क्षेमारोग्यसुभिक्षदौ भवतः ।

वराहसंहितायाम् ।

प्रागर्धरात्रदृश्यो याम्याग्रः श्वेतकेतुरन्यश्च ।
क इति युगाकृतिरपरे युगपत् तौ सप्तदिनदृश्यौ ॥
स्निग्धौ सुभिक्षशिवदावथाधिकं दृश्यते कनामायः ।
दशवर्षाण्युपतापं जनयति शस्त्रप्रकोपकृतम् ॥

अथादृश्यकेतूनां लक्षणमाह वृद्धगर्गः।

सप्त सप्त च ये शेषाः श्वेतस्यान्तर्हिता दिवि।
कः प्रजापतिपुत्रस्तु चत्वारस्तस्य चापरे॥
तेऽपि चान्तर्हिताः सर्वे समन्तात् केतवो दिवि।
शृणुयाद्दिवि हिंसन्ति द्रव्याणि च फलानि च॥
तपस्विजनभोज्यानि मूलानि च फलानि च।
गैरिकानि च धातूंश्च पीडयेत् पुनरेव च॥
स्त्रीणां गर्भान् गवां गर्भानण्डस्थान् पक्षिपन्नगान्।
एतानन्तर्हिता घ्नन्ति केतवो भृशदारुणाः॥

अतः परममृतजस्य पद्मकेतोरुदयः। यथाऽऽह वृद्धगर्गः।

श्वेतकेतावतीते तु पद्मगर्भवपुः शुभः।
पद्मकेतुरिति ख्यातश्चरन् नभसि दृश्यते॥
तस्य चोत्थानसमये निमित्तान्युपलक्षयेत्।
पर्वतो वै नभश्चैव दिशो भूमिरथापि वा॥
चन्द्रादित्यौ ग्रहाश्चैव भवन्ति विमला दिवि।
एतैरन्यैश्च सल्लिङ्गैरुदयं तस्य निर्दिशेत्॥

पद्मकेतुलक्षणं वराहसंहितायाम्।

अपरेण पद्मकेतुर्मृणालवर्णो भवेन्निशामेकाम्।
सप्त करोति सुभिक्षं वर्षाण्यतिहर्षयुक्तानि॥

मृणालवर्णो मृणालशिखः।

तथा च पराशरः।

अथातः पद्मकेतुः श्वेतकेतुफलसमाप्तौ पश्चिमेनाह्लादयन्निव मृणालकुमुदाभया शिखयैकरात्रं चरन् सप्तवर्षाण्युच्छ्रितं हर्षमावहति।

वृद्धगर्गस्तु ।

मृणालमुक्ताशीतांशुर्जगत् प्रह्लादयन्निव ।
पश्चिमेनोदितः श्रीमानेकां दर्शयते निशाम् ॥
स सुभिक्षं स चारोग्यं प्रजानां हर्षमेव च ।
नित्योत्सवसमाजश्च नित्यं यज्ञपरा नराः ॥
देशे देशे मनुष्याणां भवन्ति विविधाः क्रियाः ।
आमृतेयोऽपरः केतुः फलं सृजति दर्शनात् ॥
तस्य पञ्च च वर्षाणि मासान् पञ्चैव चापरान् ।
फलं दृष्टं च षण्मासान् महर्षिवचनं यथा ॥

अथातः परं स्वधिकेतोरुदयः । तत्र वृद्धगर्गः ।

षोडशैकश्च मारीचेः कश्यपस्य ललाटजाः ।
तेषामेकः स्वधिर्नाम चरन् पूर्वेण दृश्यते ॥
ततस्तु पञ्चदशभिः संवत्सरशतैर्गतैः ।
कृतान्तसदृशः क्रूरः प्रजानां च भयावहः ॥
तस्य चोत्थानसमये निमित्तान्युपलक्षयेत् ।
पतन्त्युल्काः सनिर्घाता वाता वान्ति सुदारुणाः ॥
महीकम्पा दिशां दाहाः परिवेषांशुमर्दनाः ।
स्त्रीणां च विकृता गर्भाः प्रदृश्यन्ते समन्ततः ॥

तस्य लक्षणं वराहसंहितायाम् ।

श्वेत इति जटाकारो रूक्षः श्यामो वियत्त्रिभागगतः ।
विनिवर्त्ततेऽपसव्यं त्रिभागशेषाः प्रजाः कुरुते ॥

श्वेत इति स्वधिकेतोरेव संज्ञान्तरम् ।

तथा च पराशरः ।

अथ काश्यपः स्वधिकेतुः पञ्चदशवर्षशतं प्रोष्यैन्द्र्यां सोमसहजस्य पद्मकेतोश्चारान्ते श्यावरूक्षो नभसस्त्रिभागमाक्रम्यापसव्य-

निवृत्तोर्ध्वप्रदक्षिणजटाकारशिखः । स यावतो मासान् दृश्यते तावन्ति वर्षाणि दुर्भिक्ष*मावहति । मध्यदेश आर्यगणानामादान-मौदीच्यैश्च भूयिष्ठां सत्रिभागशेषां प्रजामवशेषयति–इति ।

वृद्धगर्गस्तु ।

स कृत्वैव जटां रूक्षां शिखामूर्ध्वां प्रदर्शयेत् ।
वैष्णवं पदमाक्रम्य श्यावरूक्षसमद्युतिः ॥
त्रिभागं नभसो गत्वा अपसव्यं निवर्त्तते ।
याम्याग्रशिखया भौमो नक्षत्राण्युपधूपयेत्
दर्शनादेव लोकानां भयं जनयते भृशम् ।
अस्य दर्शनतो म्लेच्छाः शका ये च महाशकाः ॥
तगणा बहवः सर्वे परस्परजिगीषवः ।
क्रोधाविष्टाः समेष्यन्ति शस्त्रैर्घ्नन्तः परस्परम् ॥
ततः प्रथमसंग्रामे कबन्धैश्चित्रिता क्षितिः ।
वैमुख्यं क्षत्रियाः सर्वे गमिष्यन्ति कृतान्ततः ॥
तेषां रत्नानि पत्नीश्च क्षत्रियाणां महाशकाः ।
प्रतिगृह्य प्रयास्यन्ति मध्यदेशं विलुप्य च ॥
विप्राद्याँश्चतुरो वर्णान् कुरुक्षेत्रं तथैव च ।
अन्योन्यं ते तु संतुष्टाः प्रयास्यन्ति यमालयम् ॥
ये चाप्यन्तर्हिताः शेषाः केतवः षोडशैव तु ।
ते च भूमिगता व्याला वनपर्वतवासिनः ॥
सागराणां च सर्वेषां दुष्टसत्त्वाँस्तथैव च ।
मानुषान् भक्षयिष्यन्ति दारुणं रूपमास्थिताः ॥

---

* सुभिक्ष–इति अ. ।

अतः परममृतोद्भवस्यावर्त्तकेतोरुदयः । तत्र वृद्धगर्गः ।

अतिक्रान्ते स्वधौ केतौ निर्गते घोरदर्शने ।
आवर्त्तकेतुरात्मानं दर्शयत्यमृतोद्भवः ॥
उत्थानसमये चास्य निमित्तान्युपलक्षयेत् ।
यानि पूर्वाणि चोक्तानि पद्मकेतोः प्रदर्शने ॥

अथास्य लक्षणम् ।

पश्चिमेनोदितः श्रीमान् शिखां शङ्खोदरारुणान् ।
पूर्वेणाभिनतां कृत्वा रात्र्यर्धे संप्रदृश्यते ॥
प्रदक्षिणावर्त्तगतिः शिखया प्रहसन्निव ।
दर्शयित्वा निशामेकां ततो गच्छत्यदर्शनम् ॥
स दृष्ट एव षण्मासान् पक्षं चैव परं शिखी ।
सुवृष्टिं क्षेममारोग्यं सुभिक्षं कुरुते महत् ॥
यज्ञोत्सवप्रदानैश्च मही भवति संकुला ।

पराशरस्तु ।

अथावर्त्तकेतुः स्वधिकेतोः कर्मण्यतीते अपरस्यामर्धरात्रेण शङ्खोदरारुणाभया प्रदक्षिणनताग्रया शिखयोदितः स यावन्मुहूर्त्तान् निशि दृश्यते तावन्मासान् भवत्यतीव सुभिक्षं नित्यं यज्ञोत्सवश्च जगतः ।

वराहसंहितायां च ।

आवर्त्त इति निशार्धे सव्यशिखोऽरुणनिभोऽपरे स्निग्धः ।
यावत्क्षणान् स दृश्यस्तावन्मासान् सुभिक्षकरः ॥

अतः परं रश्मिकेतोरुदयः । तत्र पराशरः ।

अथ रश्मिकेतुर्विभावसुनः प्रोष्य वर्षशतमावर्त्तकेतोश्चारान्ते कृत्तिकासु धूम्रशिखः श्वेतकेतोः सदृशफलः ।

स्वधिकेतुफलं वराहसंहितायाम्।

आधूम्रया तु शिखया दर्शनमायाति कृत्तिकासंस्थः।
ज्ञेयः स रश्मिकेतुः श्वेतसमानं फलं धत्ते॥

वृद्धगर्गेण तस्य कलिकेतुना सह तुल्यकालमुदयः प्रोक्तः। तल्लक्षणं फलं च तत्रैवोक्तमिति।

अथाग्निकेतोरुदयः। तत्र वृद्धगर्गः।

अतिक्रान्तैस्त्रिभिर्वर्षैर्मासैः षड्भिस्तथा परैः।
किंशुकाशोकसदृशः सौदामिन्या समद्युतिः॥
पद्मकिञ्जल्कवर्णोऽयमग्निकेतुः प्रदृश्यते।
दर्शनं तस्य जानीयान्नक्षत्रे शक्रदैवते॥
अध्यर्धमाससंदृष्टस्ततो गच्छत्यदर्शनम्।
तस्योदयनकाले तु वर्त्तमानेऽग्निसंकुले॥
गणाश्च गणमुख्याश्च तथा पुरनिवासिनः।
उद्युक्ता घ्नन्ति राजानः परस्परवधैषिणः॥
नियुद्धं घोरमायान्ति क्रोधलोभपरायणाः।
त एव दृष्टाः सर्वे च विसर्पन्ति परस्परम्॥
केचित् स्वदेशं गच्छन्ति परिश्रान्ता निरर्थकाः।
एवमेव नरेन्द्राणां तथा ग्रामनिवासिनाम्॥
परस्परं पीडयतां कालो गच्छति दारुणः।
एष पञ्च च वर्षाणि मासान् पञ्चैव चापरान्॥
दारुणं कुरुते कर्म न तु दुर्भिक्षतो भयम्।

अथ गदाकेतोरुदयः। तत्र वृद्धगर्गः।

मार्गशीर्ष्याममावास्यां गदाकेतुः प्रदृश्यते।
आदित्यरौद्रसार्पाणि बार्हस्पत्यं तथैव च॥
कोष्ठागारं च शिखया धूमयन्नरुणाभया।

गदानिभो गदाकेतुर्हन्याद्दृश्यो नभोगतः ॥
गान्धारकाशीचीनांश्च शकांश्च दरदैः सह ।
शवरानेकपादांश्च पुलिन्दान् सूर्पकर्णकान् ॥
एतानेवंविधान् हन्याद्विशेषेणान्त्यवासिनः ।
यावद्दर्शयते पक्षाँस्तावन्मासान् निहन्ति च ॥
मासैर्वर्षाणि जानीयादिति शास्त्रस्य निश्चयः ।

एवं केतुचक्रस्य पुनः पुनः परिवृत्तिर्भवति । यथाऽऽह वृद्धगर्गः ।

नक्षत्रचक्रमाकाशे यथैव परिवर्त्तते ।
केतुचक्रं तथैवेदमाकाशात् परिवर्त्तते ॥

अथ धूमकेतसंवर्त्तकेत्वोर्युगपदुदयः । तत्र वृद्धगर्गः ।

ततो वर्षसहस्रान्ते दृश्येते चोदितौ दिवि ।
केतुमालाग्रहस्यान्ते धूमसंवर्त्तकौ ग्रहौ ॥
एतयोरुदये चापि निमित्तान्युपलक्षयेत् ।
स्त्रियो गर्भान् विमुचन्ति प्रतिरूपाण्यभीक्ष्णशः ॥
अभीक्ष्णं कम्पते वापी सशैलवनकानना ।
ससागरपुरद्वीपाऽनेकधातुधरा धरा ॥
पततामिव शैलानां नागानां बृहतामिव ।
नर्दतां क्षुद्रजातीनां श्रूयन्ते सुमहास्वनाः ॥
बालकानां कुमारीणां नराणां स्त्रीजनस्य च ।
क्रीडितस्याप्रशस्तानि व्याहृतानि तथैव च ॥
पतन्ति गगने चोल्काः सनिर्घाता दिशो दश ।
सज्वालाङ्गारधूमाद्याः सूर्यस्याभिमुखा इव ॥
एतैरेतादृशैर्घोरैः पूर्वरूपैर्भयावहैः ।
उदयं धूमकेतोश्च ब्रूयात् संवर्त्तकस्य च ॥

शि तिष्ठति तावद्वर्षाणि परस्परं शस्त्रैर्घ्नन्ति पार्थिवाः। यानि नक्षत्राणि धूपायति यत्र चोदेति तानि दारुणतरं पीडयति तदाश्रितांश्च देशान्—इति।

वराहसंहितायाम्।

पश्चात् सन्ध्याकाले संवर्त्तो नाम धूम्रताम्रशिखः।
आक्रम्य वियत्त्र्यंशं शूलाग्रावस्थितो रौद्रः॥
यावत एव मुहूर्त्तान् दृश्यो वर्षाणि हन्ति तावन्ति।
भूपान् शस्त्रनिपातैरुदयर्क्षं चापि पीडयति॥

अथ केवलधूमकेतोरुदयः। तत्रोदयपूर्वनिमित्तान्याह पराशरः।

धूमकेतोः प्रागुदयनिमित्तानि। अवनेर्विचलनमग्नेः प्रभामान्द्यं प्रधूमनं दिशां शीतोष्णविपर्यासोऽतिरूक्षवायुसम्भवश्च।

धूमकेतुलक्षणं फलं च भार्गवीये।

धूमध्वजो धूमशिखो धूमार्चिर्धूमतारकः।
एवं तावद्धूमकेतोर्लक्षणं समुदाहृतम्॥

धूमकेतुलक्षणमाह पराशरः।

अथानियतदिक्कालरूपवर्णप्रमाणसंस्थानो धूमकेतुः पराभविष्यतां देशानां राज्ञां जनपदानां च वृक्षपुरपर्वतवेश्मध्वजपताकाशस्त्रवर्मायुधावरणरथनागोष्ट्रपुरुषशयनभाण्डेषु वा दृश्यते। स एव च दिवि स्निग्धो विमलः प्रदक्षिणजटाकारशिखो गोगजाजनागवीथीं चोत्तरेण व्रजन् सुभिक्षं क्षेममारोग्यं चावहति।

वराहसंहितायां तु धूमकेतोरेव ध्रुवकेतुसंज्ञया फलमुक्तम्।

ध्रुवकेतुरनियतगतिप्रमाणवर्णाकृतिर्भवति विष्वक्।
दिव्यान्तरिक्षभौमो भवत्ययं स्निग्ध इष्टफलः॥
सेनाङ्गेषु नृपाणां गृहतरुशैलेषु चापि देशानाम्।

गृहिणामुपस्करेषु च विनाशिनां दर्शनं याति ॥

गार्गीये ।

मृत्युयात्मजः स एवेह धूमकेतुः क्षयावहः ।
दिव्यन्तरिक्षे भूमौ च जले चासौ प्रदृश्यते ॥

अपरेऽपि ये केतवः कथितास्ते दिव्यान्तरिक्षभौमाश्च भवन्ति अत एव शास्त्रे केतूनां गणनमशक्यत्वान्नोक्तम् ।

तथा च वराहसंहितायाम् ।

दर्शनमस्तमनं वा न गणितविधिनाऽस्य शक्यते ज्ञातुम् ।
दिव्यान्तरिक्षभौमास्त्रिविधाः स्युः केतवो यस्मात् ॥
अहुताशेऽनलरूपं यस्मिंस्तत्केतुरूपमेवोक्तम् ।
खद्योतपिशाचालयमणिरत्नादीन् परित्यज्य ॥
ध्वजशस्त्रभवनतरुतुरगकुञ्जराद्येष्वथान्तरिक्षास्ते ।
दिव्या नक्षत्रस्था भौमाः स्युरतोऽन्यथा शिखिनः ॥

गार्गीये तु ।

अन्तरिक्षे यदा धूमो ज्वाला वा संप्रपद्यते ।
आन्तरिक्षः स केतुः स्याद्दिव्यस्ताराश्रितः स्मृतः ॥
पर्वताश्चैव वृक्षाश्च प्रासादनगराणि च ।
अकस्माद्यत्र धूम्यन्ते ध्वजवर्मायुधानि च ॥
रसवर्णविपर्यासः शब्दसंस्पर्शयोस्तथा ।
वृक्षौषधितृणे गुल्मे विकृतिर्यत्र दृश्यते ॥
तत्र भौमं विजानीयाद्धूमकेतुमुपस्थितम् ।
आन्तरिक्षोऽथ भौमो वा यत्र केतुः प्रदृश्यते ॥
तस्य देशस्य षण्मासाद्विनाशं परिनिर्दिशेत् ।
दिवा वा यदि वा रात्रौ दृश्येत ज्वलनं यदि ॥
यत्रासौ केतुरुदितस्तस्य देशस्य नाशकृत् ।

दिव्यादिफलेषु विशेषो वटकणिकायाम् ।

दिव्या नक्षत्रस्थास्तीव्रफला मन्दफलकरा भौमाः ।
प्राणिध्वजादितुङ्गेष्वथान्तरिक्षा न चात्यशुभाः ॥
केचित् केतुसहस्रं शतमेकसमन्वितं वदन्त्यपरे ।
नारदमतमेकोऽयं त्रिस्थानभवो विविधरूपः ॥

तथा च नारदः ।

दिव्योऽन्तरिक्षो भौमाख्य एकः केतुः प्रकीर्त्तितः ।
शुभाशुभफलं लोके ददात्यस्तमनोदयैः ॥

असंख्याताः केतवो भवन्तीत्युक्तमाथर्वणाद्भुते ।

अनेकशतसाहस्रानेकशतलक्षणान् ।
देवलस्तु ग्रहानाह सर्वानेव पृथक्फलान् ॥

वराहसंहितायां तु ।

यद्येको यदि बहवः किमनेन फलं तु सर्वथा वाच्यम् ।
उदयास्तमनैः स्थानैः स्पर्शैराधूपनै*र्दृष्टैः ॥

वृद्धगर्गः ।

सर्वथैवोपहिंसन्ति केतवो दारुणा जगत् ।
दिक्कालाकारवर्णैश्च दृश्यमाना नभोगताः ॥

अथोल्काभिहतशिखाफलं वराहसंहितायाम् ।

उल्काभिताडितशिखः शिखी शिवः शिवतरोऽभिदृष्टो यः ।
अशुभं स एव चोलावगाणसितहूणचीनानाम् ॥

वृद्धगर्गस्तु ।

यानि यान्युपहिंसन्ति नक्षत्राणि महाग्रहाः ।
तेषां तेषां जनपदान् केतवो घ्नन्ति दर्शने ॥

नक्षत्रजनपदान् नक्षत्राद्भुतावर्त्ते वक्ष्यामः ।

---

* वर्णैः इति अ. ।

पराशरः ।

येषां नक्षत्रविषये रूक्षः सज्वाललोहितः ।
दृश्यते बहुमूर्त्तिश्च तेषां विन्द्यान्महद्भयम् ॥
अवर्षं शस्त्रकोपं च व्याधिदुर्भिक्षमेव च ।
कुर्यान्नृपतिपीडां च स्वचक्रपरचक्रतः ॥
यत्रोत्तिष्ठति नक्षत्रे प्रवासं यत्र गच्छति ।
धूपयेद्वा स्पृशेद्वाऽपि हन्याद्देशाँस्तदाश्रयान् ॥

वराहसंहितायाम् ।

ये शस्ताँस्तान् हित्वा केतुभिराधूपितेऽथ वा स्पृष्टे ।
नक्षत्रे भवति वधो येषां राज्ञां प्रवक्ष्ये तान् ॥
अश्विन्यामश्मकपं भरणीषु किरातपार्थिवं हन्यात् ।
बहुलासु कलिङ्गेशं रोहिण्यां शूरसेनपतिम् ॥
औशीनरमपि सौम्ये जलजाजीवाधिपं तथाऽऽर्द्रासु ।
आदित्येऽश्मकनाथं पुष्ये मगधाधिपं हन्ति ॥
असिकेशं भौजङ्गे पित्र्येऽङ्गं नाथमपि भाग्ये ।
औज्जयिनिकमार्य्यम्णे सावित्र्ये दण्डकाधिपतिम् ॥
चित्रासु कुरुक्षेत्राधिपस्य मरणं समादिशेत् तज्ज्ञः ।
काश्मीरककाम्बोजौ नृपती प्राभञ्जने न स्तः ॥
इक्ष्वाकुरलकनाथश्च हन्यते यदि भवेद्विशाखासु ।
मैत्रे पुण्ड्राधिपतिर्ज्येष्ठासु च सार्वभौमवधः ॥
मूलेऽन्ध्रमद्रकपती जलदेवे काशिपो मरणमेति ।
यौधेयकार्जुनायनशिविचैद्यान् वैश्वदेवे च ॥
हन्यात् कैकयनाथं पाञ्चनदं सिंहलाधिपं चाङ्गम्* ।

* बाङ्गम् इति अ. ।

नैमिषनृपं किरातं श्रवणादिषु षट्स्वनुक्रमतः ॥

मृदुनक्षत्राभ्युदिताशुभकेतुफलमाहाथर्वमुनिः ।

मृदुध्रुवोग्रक्षिप्रेषु साधारणचरेषु च ।
दारुणेषु च ऋक्षेषु विद्यात् तत्सदृशं फलम् ॥
यथादेशं यथावर्णं यथावर्गपरिग्रहम् ।
सर्व एवोदिता हन्युः सर्व एवाशुभा ग्रहाः ॥

भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

"धूमकेतुर्महाघोरः पुष्यमाक्रम्य तारकम् ।
सेनयोरशिवं घोरं ज्येष्ठामाक्रम्य तिष्ठति"* ॥

हरिवंशे कंसवधनिमित्तम् ।

"केतुना धूमकेतोस्तु नक्षत्राणि त्रयोदश ।
भरण्यादीनि भिन्नानि नानुयान्ति निशाकरम्"† ॥

वराहसंहितायाम् ।

उदयति सततं यदा शिखी चरति भचक्रमशेषमेव वा ।
अनुभवति पुराकृतं तदा फलमशुभं सचराचरं जगत् ॥

गार्गीये ।

अथ यत्रोदितः केतुः सोमं समुपधूपयेत् ।
तदा सर्वं शोषमेति भौमं स्थावरजङ्गमम् ॥
समुद्राश्च क्षयं यान्ति सर्वा नद्यः सरांसि च ।
हैमवत्यो‡ विशुष्यन्ति नद्योऽन्यासां तु का कथा ॥
नखकेशवहो वायुः कपालशकलाकुलः ।

---

* ३ अ, १३ श्लो, ।

† २३ अ, २७ श्लो, । केतोरुत्पातविशेषस्य केतुना पुच्छेन भरण्यादीनि त्रयोदश उत्तराभाद्रपदपर्यन्तं नक्षत्राणि यदि भिन्नानि तदा निशाकरं चन्द्रं नानुयान्ति चन्द्रकृतं फलं न भवतीति टीकाकारसम्मतोऽर्थः ।

‡ भौमवत्यः इति अ, ।

नद्यश्चासृक्प्रवाहिन्यः सोमे समुपधूपिते ॥
अथ यत्रोदितः केतुर्लोहिताङ्गं प्रधूपयेत् ।
तदा प्रायः प्रदह्यन्ते ग्रामाश्च नगराणि च ॥
रक्तवर्णाश्च पशवस्तथैव मृगपक्षिणः ।
रक्तपुष्पफला वृक्षाः सर्वे चाग्न्युपजीविनः ॥
हिरण्यं रजतं लोहं ताम्रसीसकमेव च ।
मणिरत्नं तथा वज्रं सर्वमेवोपहन्यते ॥
हिरण्यकारा कर्मकारास्ताम्रकांस्यादिकारकाः ।
प्राप्नुवन्ति वधं घोरं लोहिताङ्गे प्रधूपिते ॥
अथ यत्रोदितः केतुर्बुधं समुपधूपयेत् ।
तदा प्रजानां ये श्रेष्ठास्तेषां विन्द्यान्महद्भयम् ॥
पौराश्चात्र विनश्यन्ति वणिक्पथोपजीविनः ।
मृयन्ते राजपुत्राश्च राजकन्यास्तथैव च ॥
प्राज्ञा मेधाविनः शूराः कुमाराश्च विशेषतः ।
गर्भाश्चात्र विनश्यन्ति बुधे समुपधूपिते ॥
अथ यत्रोदितः केतुर्गुरुं समुपधूपयेत् ।
तत्र विद्याद्विशेषेण ब्राह्मणानामुपद्रवम् ॥
प्राज्ञा मेधाविनश्चैव तथैवाश्रमवासिनः ।
वाचा ये चोपजीवन्ति श्रेष्ठा जनपदाश्रये ॥
मद्राः कैकेयशाल्वाश्च नराः काशीनरास्तथा ।
कोशलाः कुरुपाञ्चाला मत्स्याश्च सह चेदिभिः ॥
एतद्देशमनुष्याश्च राजानश्च तदाश्रयाः ।
सर्वं एते विनश्यन्ति गुरौ समुपधूपिते ॥

यदा तु भार्गवं प्राप्य धूमकेतुः प्रधूपयेत् ।
तदा ससैन्या वध्यन्ते यात्रोद्युक्ता नराधिपाः ॥
यात्रागताश्च ये सार्था वसुमन्तश्च ये जनाः ।
क्षत्रिया योद्धृमुख्याश्च ख्यातविद्याश्च ये जनाः ॥
महाविषाश्च ये नागास्तथाऽन्ये ये च जन्तवः ।
तथा वा वारणः सर्वे भयमृच्छन्ति दारुणम् ॥
अथ यत्रोदितः केतुर्धूपयेत् तु शनैश्चरम् ।
तदा म्लेच्छगणाः सर्वे भयमृच्छन्ति दारुणम् ॥
कृष्णवर्णाश्च पशवस्तथैव मृगपक्षिणः ।
कृष्णपुष्पफला वृक्षा वराहा महिषास्तथा ॥
गृध्राः केकाः सुपर्णाश्च कपोताः शूकचिल्लकाः ।
सर्वं एते विनश्यन्ति मित्रपुत्रे प्रधूपिते ॥
यदा प्रधूपयेत् केतुः सप्तर्षीन् ध्रुवमेव च ।
तदा लोकाः क्षयं यान्ति सलिलं चापि शुष्यति ॥

वराहसंहितायाम् ।

मुनीनभिजितं ध्रुवं मघवतश्च भं संस्पृशन् ।
शिखी धनविनाशकृत् कुशलकर्महा शोकदः ॥
भुजङ्गमथ स्पृशेद्भवति वृष्टिनाशो ध्रुवम् ।
क्षयं व्रजति विद्रुतो जनपदश्च व्यालाकुलः ॥

भार्गवीये ।

यस्मिन् देशे शिरस्तस्य स देशः पीड्यते ध्रुवम् ।
मध्ये तु मध्यपीडा स्याद्यतः पुच्छं ततो जयः ॥

विष्णुधर्मोत्तरे ।

यस्यां दिशि केतोः शिखा दीप्ता भवति तद्देशं नृपतिरभियुञ्जीत ।

पराशरस्तु ।

यस्यां दिशि समुत्तिष्ठेत् तां दिशं नाभियोजयेत् ।
यतः शिखा यतो धूमस्ततो यायान्नराधिपः ॥
प्रतिलोमं तु यः केतोर्जयार्थी याति पार्थिवः ।
सामात्यवाहनबलः स नाशमुपगच्छति ॥

गार्गीये ।

यतो धूमस्ततो यात्रा यतो ज्योतिस्ततो जयः ।
यतः स्थानं ततः पीडा केतूनामुदये भवेत् ॥
प्रतिलोमं तु यः केतुं कृत्वा सेनां प्रयोजयेत् ।
जायते तस्य सेनाया भयं घोरं पराजयः ॥
यां दिशं धूपयेत् केतुर्न तत्राभिमुखो व्रजेत् ।
यस्यां दिशि प्रतिष्ठेत हन्ति तां स विशेषतः ॥

वराहसंहितायाम् ।

नम्रा यतः शिखिशिखाऽभिसृतो यतो वा
ऋक्षं च यत् स्पृशति तत्कथितांश्च देशान् ।
दिव्यप्रभावनिहतान् स यथा गरुत्मान्
भुङ्क्ते महीं नरपतिः परभोगिभोगान् ॥

वटकणिकायाम् ।

उदयास्तमनाधूमनसंयोगाकारवर्णदिक्पातैः ।
फलनिर्देशो दिवसैर्मासान्मासैश्च वर्षाणि ॥

वृहत्संहितायाम् ।

यावन्त्यहानि दृश्यो मासैस्तावद्भिरेव फलपाकः ।
मासैरब्दानि वदेत् प्रथमात् पक्षत्रयात् परतः ॥

गर्गश्च ।

यावन्त्यहानि दृश्येत तावन्मासान् फलं वदेत् ।

यावन्मासाँस्तु दृश्येत तावतोऽब्दाँस्तु वैकृतम् ॥
त्रिपक्षात् परतः कर्म पच्यतेऽस्य शुभाशुभम् ।
सद्यः समुदिते केतौ फलं नेहादिशेद्बुधः ॥
एवं त्रिपक्षात् परतः पापसंज्ञे विनिर्दिशेत् ।
शोभनेऽपि तथा केतौ फलं दर्शनतो वदेत् ॥
यस्य यस्य विशेषेण पाककालो न दर्शितः ।

अत्रानुक्तविशेषशान्तिकेषु केतूत्पातेषु केतुग्रहपूजापूर्विका ग्रहधूपने वा धूपितग्रहपूजापूर्विका च प्रभूतकनकान्नगोमहीदानादिका सामान्यशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या—इति ।

अथ विहितविशेषशान्तिजाः केतूत्पाताः ।

तत्र नारदः ।

अकस्माद्दृश्यते केतुरुदयेऽस्तमये यदा ।
हन्त्यस्यान्तःपुरं राज्ञो ज्वरपित्तोद्भवो भवेत् ॥
इन्द्रनीलमणेश्चैव हेमरत्नसमन्वितम् ।
केतुं कृत्वा प्रदातव्यो ब्राह्मणाय तपस्विने ॥

मयूरचित्रेऽप्येतद्वचनमधिकृतम् ।

शान्तिस्तु ।

दधिमधुघृताक्तानां पुष्पाणामयुतं ततः ।
जुहुयादिन्द्रनीलस्य केतुं दद्याद्द्विजातये ॥
भूषितं हेमरत्नाद्यैस्ततः संपद्यते शुभम् ।
अथ वा वैष्णवी शान्तिश्चतुष्कर्म तथैव च ॥
विष्णोरराटमन्त्रेण जुहुयाद्घृतसंप्लुताः ।
अष्टोत्तरसहस्राणि द्वादशाथ प्रयत्नतः ॥
समिधोऽश्वत्थवृक्षस्य ब्राह्मणाँस्तर्पयेत् ततः ।

पूर्वोक्तेन तु मन्त्रेण दद्याद्वत्सवृषादिकम् ॥
कुसुम्भस्याथ वा होमः केतुं कृण्वेति मन्त्रतः ।
इन्द्रनीलं सुवर्णं च दातव्यं च द्विजन्मने ॥

भार्गवीये ।

उत्थानं चैव केतूनां विनाशयेति हि स्मृतम् ।
तस्मादाथर्वणैर्मन्त्रैः शमनं कारयेद्बुधः ॥
आराधिताः शमं यान्ति ते ह्युत्पाता न संशयः ।
होमैर्जपैश्च विविधैर्दानैश्च बहुरूपकैः ॥
तस्य यत्र शिरोदेशस्तत उत्थाय वा व्रजेत् ।
धनं वा सर्वमुत्सृज्य मृत्योर्मुच्येत वा न वा ॥
दत्वा च पृथिवीं सर्वां राजा शान्तिं नियच्छति ।

अथ वर्णाद्भुते ।

केतूत्थिते तु सर्वस्मिन् भये तु समुपस्थिते ।
महाशान्तिं प्रकुर्वन्ति विविधां भूरिदक्षिणाम् ॥
उपयाति शमं सर्वं प्रजानां च सुखं भवेत् ।
राजानो मुदितास्तत्र पालयन्ति वसुन्धराम् ॥

पराशरः ।

यस्याभिषेकनक्षत्रं जन्मर्क्षं कर्मभं तथा ।
देशर्क्षं पीडयेत् केतुः सशान्तिपरमो भवेत् ॥

केतुपीडितेष्वभिषेकादिनक्षत्रेषु केतुग्रहपूर्विका नाडीनक्षत्राद्भुतविहिता सामान्यशान्तिः कर्त्तव्या । तां च नाडीनक्षत्राद्भुतावर्त्ते लिखिष्यामः ।

वृद्धगर्गः ।

एतत् ते केतुचक्रं तु केतुसंभव एव च ।
लक्षणं दर्शनं चैव यथावत् परिकीर्त्तितम् ॥
एतच्छिष्याय दातव्यं ब्राह्मणाय महात्मने ।

नित्यशुश्रूषमाणाय ब्रह्मचर्यपराय च ॥
निर्गुणायापि पुत्राय न दद्यात् केतुसम्भवम् ।

इति महाराजाधिराजनिश्शङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-ऽद्भुतसागरे केत्वद्भुतावर्त्तः ।

## अथ ध्रुवाद्यद्भुतावर्त्तः ।

तत्रागस्त्योदयास्तमयमाह ब्रह्मगुप्ताचार्यः ।

"राशिचतुष्केण यदा स्वर्क्षभयुतेन भवति तुल्योऽर्कः ।
उदयोऽगस्त्यस्य मुनेश्चक्रार्धाच्छोधितेऽस्तमयः"* ॥

अथ शुभसूचकागस्त्यलक्षणं वराहसंहितायाम् ।

शातकुम्भसदृशं स्फटिकाभं तर्पयन्निव महीं किरणाद्यैः ।
दृश्यते यदि ततः प्रचुरान्ना भूर्भवत्यभयरोगजनाढ्या ॥

अथाशुभसूचकागस्त्यलक्षणमाह पराशरः ।

संवृतः पुररोधाय स्पन्दनो भयाय—इति ।

संवृतः स्वल्पः ।

वराहसंहितायाम् ।

रोगान् करोति कपिलः परुषस्त्ववृष्टिं
धूम्रो गवामशुभकृत् स्फुरणो भयाय ।
माञ्जिष्ठरागसदृशः क्षुधमाहवं च
कुर्यादणुश्च पुररोधमगस्त्यनामा ॥

अथ वर्णफलम् । तत्र गर्गः ।

शङ्खकुन्देन्दुगोक्षीरमृणालरजतप्रभः ।
दृश्यते यद्यगस्त्यः स्यात् सुभिक्षक्षेमकारकः ॥

* ब्रह्मस्फुटसिद्धान्ते नोपलभ्यतेऽयं श्लोकः ।

पराशरः ।

सुस्निग्धवर्णः श्वेतश्च शातकुम्भसमप्रभः ।
मुनिः क्षेमसुभिक्षाय प्रजानामभयाय च ॥

तथा ।

नीलोऽतिवर्षाय । अग्निपरुषरूक्षाभो रोगाय । कपिलो वृष्टिनिग्रहाय । धूमाभो गवामभावाय । माञ्जिष्ठः क्षुच्छस्त्रभयाय ।

गर्गस्तु ।

वैश्वानरार्च्चिःप्रतिमो मांसशोणितकर्दमैः ।
रणैर्भयैश्च विविधैः किञ्चिच्छेषायते प्रजाः ॥

अथ सोत्पातागस्त्यफलं वराहसंहितायाम् ।

उल्कया विनिहतः शिखिना वा क्षुद्भयं मरकमेव विधत्ते ।

पराशरश्च ।

हन्यादुल्का यदाऽगस्त्यं केतुर्वाऽप्युपधूपयेत् ।
दुर्भिक्षं जनमारश्च तदा जगति जायते ॥

अथ सप्तर्षीणामद्भुतानि ।

भुजवसुदश१०८२मितशाके श्रीमद्बल्लालसेनराज्यादौ ।
वर्षैकषष्टि-६१भोगो मुनिभिर्विहितो विशाखायाम् ॥

वराहसंहितायाम् ।

एकैकस्मिन्नृक्षे शतं शतं ते चरन्ति वर्षाणाम् ।
प्रागुत्तरतश्चैते सदोदयन्तेससाध्वीकाः* ॥
पूर्वे भागे भगवान् मरीचिरपरे स्थितो वसिष्ठोऽस्मात् ।
तस्याङ्गिरास्ततोऽत्रिस्तस्यासन्नः पुलस्त्यश्च ॥
पुलहः क्रतुरिति भगवानासन्नानुक्रमेण पूर्वाद्याः ।
तत्र वसिष्ठं मुनिवरमुपाश्रिताऽरुन्धती साध्वी ॥

---

* प्रागुदयतोऽप्यविवराद्दजून् नयति तत्र संयुक्ताः । इति अ. ।

भीष्मपर्वणि कुरुपाण्डवसैन्यवधनिमित्तम् ।

"सप्तर्षीणामुदाराणां समवच्छाद्यते प्रभा"* ।

विष्णुधर्मोत्तरे ।

उल्कयाऽभिहता रूक्षाः स्फुरणा रजसा हताः ।
ऋषयः सर्वलोकानां विनाशाय सभूभृताम् ॥

वराहसंहितायां तु ।

उल्काशनिधूमाद्यैर्हता विवर्णा विरश्मयो ह्रस्वाः ।
हन्युः स्वं स्वं वर्गं विपुलाः स्निग्धाश्च तद्वृद्ध्यै ॥

गर्गस्तु ।

उल्कया केतुना वाऽपि धूमेन रजसाऽपि वा ।
हता विवर्णाः स्वल्पा वा किरणैः परिवर्जिताः ॥
स्वं स्वं वर्गं तदा हन्युर्मुनयः सर्व एव ते ।
विपुलाः स्निग्धवर्णाश्च स्ववर्गपरिपोषकाः ॥

एतेषां वर्गानाह पराशरः ।

देवदानवगन्धर्वाः सिद्धपन्नगराक्षसाः ।
नागा विद्याधराः सर्वे मरीचेः परिकीर्त्तिताः ॥

वराहसंहितायां तु ।

गन्धर्वदेवदानवमन्त्रौषधिसिद्धनागयक्षाणाम् ।
पीडाकरो मरीचिर्ज्ञेयो विद्याधराणां च ॥

उल्काहतपीडाकर इति सम्बन्धः ।

पराशरः ।

यवनाः पारदाश्चैव काम्बोजा दरदाः शकाः ।
वसिष्ठस्य विनिर्दिष्टास्तापसा वनमाश्रिताः ॥

वराहसंहितायां तु ।

शकयवनदरदपारदकाम्बोजाँस्तापसान् वनोपेतान् ।

---

* ३ अ, २६ श्लो, ।

हन्ति वसिष्ठाभिहतो विवृद्धिदो रश्मिसम्पन्नः ॥
अङ्गिरसो ज्ञानयुता धीमन्तो ब्राह्मणाश्च निर्दिष्टाः ।

पराशरस्तु ।

धीमन्तो ब्राह्मणा ये च ज्ञानविज्ञानपारगाः ।
रूपलावण्यसंयुक्ता मुनेरङ्गिरसः स्मृताः ॥

वराहसंहितयोस्तु* ।

अत्रेः कान्तारभवा जलजान्यम्भोनिधिः सरितः ।

पराशरस्तु ।

कान्तारजास्तथाऽम्भोजान्यत्रेर्नद्यः ससागराः ।

वराहसंहितयोस्तु ।

रक्षः पिशाचदानवदैत्यभुजङ्गाः स्मृताः पुलस्त्यस्य ।

पराशरश्च ।

पिशाचा दानवा दैत्या भुजङ्गा राक्षसास्तथा ।
पुलस्त्यस्य विनिर्दिष्टाः पुष्पमूलफलं च यत् ॥
तत्सर्वं पुलहस्योक्तं यज्ञा यज्ञकृतश्च ये ।
क्रतोरेव विनिर्दिष्टा वेदज्ञा ब्राह्मणास्तथा ॥

अत्र पुष्पमूलफलं पुलहस्य यज्ञादयः क्रतोरिति सम्बन्धः ।

तथा च वराहसंहितायाम् ।

पुलहस्य फलमूलं क्रतोस्तु यज्ञाः सुयज्ञकृतः ।

भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

"या चैषा विश्रुता राजंस्त्रैलोक्ये साधुसंमता ।
अरुन्धती तयाऽप्येष वसिष्ठः पृष्ठतः कृतः"† ॥

अगस्त्यसप्तर्षिध्रुवाणामशुभलक्षणं विष्णुधर्मोत्तरे ।

आगस्त्योऽरुणो रूक्षः श्यावो रेणूल्कयोपहतः शिखिशिखाध्वस्तो भयाय । एवंविधाः सप्तर्षयश्च । एवंविधे ध्रुवे त्रैलोक्यमपि पीड्यते ।

---

* वटकणिकाबृहत्संहितयोरिति । † २ अ. ३१ श्लो. ।

भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

"ध्रुवः प्रज्वलितो घोरमपसव्यं प्रवर्त्तते"* ।

अथर्वमुनिः ।

यवक्रीतोऽथ रैभ्यश्च नारदः पर्वतस्तथा ।
कण्वश्च रैभ्यपुत्राश्च अर्वावसुपरावसू ॥
सप्तैते स्थावरा ज्ञेयाः सह सूर्येण सर्पिणः ।
स्थावराणां नरेन्द्राणां प्राच्यानां पक्षमाश्रिताः ॥
स्वस्त्यात्रेयो मृगव्याधो रुरुधः प्रचुरस्तथा ।
प्रभासश्चन्द्रहासश्च तथाऽगस्त्यः प्रतापवान् ॥
दृढव्रतस्त्रिशङ्कुश्च अजो वैश्वानरो मृगः ।
अरुणः श्वदतश्चैव याम्यायां स्थावराः स्मृताः ॥
गौतमोऽत्रिर्वसिष्ठश्च विश्वामित्रश्च काश्यपः ।
ऋचीकपुत्रस्तु तथा भारद्वाजश्च वीर्यवान् ॥
एते सप्त महात्मान उदीच्यां स्थावराः स्मृताः ।
शिशुमारेण सहिता ध्रुवेण च महात्मना ॥
पुलस्त्यः पुलहः सोमो भृगुरङ्गिरसा सह ।
हाहा हूहूश्च विज्ञेया विष्णोर्हृदयमुत्तमम् ॥
एतेषां स्थावराणां तु नियतानीति बुद्धिमान् ।
अवस्थानानि सर्वेषां दिक्षु रूपाणि लक्षयेत् ॥
प्रभान्वितानि श्वेतानि स्निग्धानि विमलानि च ।
अर्चिष्मन्ति प्रसन्नानि तानि कुर्युः प्रजाहितम् ॥
निष्प्रभाणि विवर्णानि चेरुर्वीथ्याश्रितानि च ।

* ३ अ. १७ श्लो. ।

ह्रस्वाण्यस्नेहयुक्तानि न भवाय भवन्ति हि ॥
यत्किंचित् स्थावरं लोके तत् प्रसन्नेषु वर्धते ।
क्रूरस्थेषु प्रसन्नेषु स्थावरं परिहीयते ॥

अत्रानुक्तविशेषशान्तिष्वगस्त्याद्यद्भुतेषु अगस्त्यादिपूजापूर्विका प्रभूतकनकान्नगोमहीदानादिका सामान्यशान्तिरौत्पातिफलगुरुलाघवमवगम्य कर्त्तव्या ।

अत्रानुक्तफलपाकसमयविशेषणादगस्त्याद्यद्भुतानां संवत्सरेण फलपाको बोद्धव्यः ।

तथा च पराशरः ।

तत्रोत्पातफलं दिव्यं पूर्णे वर्षे विपच्यते—इति ।

इति महाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरेऽगस्त्यसप्तर्षिध्रुवाद्यद्भुतावर्त्तः ।

---

## अथ ग्रहयुद्धाद्यद्भुतावर्त्तः ।

तत्र गर्गः ।

छादनं रोधनं चैव रश्मिमर्दस्तथैव च ।
अपसव्यं ग्रहाणां च चतुर्धा युद्धमुच्यते ॥

छादनं सकलबिम्बाच्छादनम् । छादने सति भेदनं भवति । रोधनं किंचिदपवारणम् । एतदेवोल्लेखनम् ।

यदाह काश्यपः ।

भेदोल्लेखांशुसंमर्दा अपसव्यस्तथा परः ।
ततो योगो भवेदेषामेकांशकसमापनात् ॥

असंयुक्तबिम्बयोरन्योन्यरश्मिसंश्लेषोंऽशुसंमर्दः सुसंनिहितासंयुक्तरश्मिमण्डलयोः समदक्षिणोत्तरावस्थिभिरपसव्यम् । एवमेतान्यपसव्यादीनि प्रतिलोमानि सन्निधितारतम्याद्भवन्ति ।

पराशरतन्त्रे ।

अथ भगवन्तमनन्ततपसं पराशरकथान्ते शान्तशार्ङ्गधरः कृताञ्जलिः संपूज्योवाच । यत् सूत्रमुक्तं भगवता युद्धमिति तत्संशयो नः कथमुपर्युपरिव्यवस्थानां ग्रहाणां समागमः स्वर्गे वाऽपि विग्रहोऽस्तीति । तमुवाच भगवान् । एवमेतत् सौम्य । किन्तु योगदर्शनतः शुभाशुभं दर्शयन्ति प्रजानाम् ।

वराहसंहितयोस्तु ।

वियति चरतां ग्रहाणामुपर्युपर्यात् स्वमार्गसंस्थानाम् ।
अतिदूराद्दृग्विषये समतामिव संप्रयातानाम् ॥
आसन्नक्रमयोगाद्भेदोल्लेखांशुमर्दनासव्यैः ।
युद्धं चतुष्प्रकारं पराशराद्यैर्मुनिभिरुक्तम् ॥

पराशरेण त्वपसव्यमनभिधायारोहणेन चतुष्प्रकारत्वमुक्तम् ।

तद्यथा ।

भेदनमारोहणमुल्लेखनं रश्मिसंसर्गश्च—इति । ग्रहयुद्धं चतुर्विधमाचक्षते कुशलाः । तेषां पूर्वः पूर्वो गरीयान्—इति । संयुक्तयोः सपर्याधोऽवस्थितिरारोहणम् ।

इदं चोल्लेख एवान्तर्भवतीति गर्गादिभिर्नोक्तम् । पूर्वपूर्वो गरीयानिति । गुरुत्वमशुभफलतया ।

भार्गवीये ।

असव्यो विग्रहं ब्रूयात् संग्रामं रश्मिसंकुले ।
लेखनेऽमात्यपीडा स्याद्भेदने तु जनक्षयः ॥

वराहसंहितायां तु ।

भेदे वृष्टिविनाशो भेदः सुहृदां महाकुलानां च ।
उल्लेखे शस्त्रभयं मन्त्रिविरोधः प्रियान्नत्वम् ॥
अंशुविरोधे युद्धानि भूभृतां शस्त्ररुक्क्षुदवमर्दाः ।

युद्धे चाप्यपसव्ये भवन्ति युद्धानि भूपानाम् ॥

अथ पराजितजययुक्तलक्षणम् । तत्र वृद्धगर्गः ।

ग्रहो ग्रहं समागम्य श्यावीभवति यो भृशम् ।
हानिं प्राप्नोति चाव्यक्तः स्पन्दते च मुहुर्मुहुः ॥
परस्परं विशेषेण किरणैरवरुध्यते ।
स्वकात् प्रच्यवते स्थानाद्यदि चाप्यनुलोमतः ॥
विकीर्ण इव चात्यर्थं तमसा ह्यधिसंभृतः ।
दृश्यते यदि स ज्ञेयो रूपैरेभिः पराजयी ॥

गर्गस्तु ।

अरश्मिर्लोहितः श्यामः परुषः सूक्ष्मतारकः ।
अपसव्यः कृतो यश्च चक्रान्तःपतितस्तथा ॥
च्युतः स्थानाद्धतो यश्च प्रतिपूर्वस्तथैव च ।
निष्प्रभो विगतश्चापि जवेनाभिहतस्तथा ॥
अप्राप्य वा निवर्त्तेत वेपनः कृष्ण एव च ।
लक्षणैः सप्तदशभिर्ग्रहं विद्यात् पराजितम् ॥

विष्णुधर्मोत्तरे ।

ग्रहारूढश्च्युतः स्थानात् स्फुरणो विजितो ग्रहः ।
वर्जितो यदि लिङ्गैश्च कृष्णः श्यावद्युतिस्तथा ॥

लिङ्गैर्जयचिह्नैः ।

उदङ्मार्गगतिः स्निग्धो विमलो विमलप्रभः ।
बृहद्रूपोऽतिशुक्लश्च विजयी कथितो ग्रहः ॥

भार्गवीये तु ।

सर्वेषां नभसि समागमे ग्रहाणा-
मुत्कृष्टो भवति तथैव रश्मिवान् यः ।
स्निग्धत्वं भवति च स ग्रहो जयेन

संयुक्तो भवति तु यः पराजयेन ॥
श्यामो वाऽप्यपगतरश्मिमण्डलो वा
रूक्षो वाऽप्यपगतरश्मिवान् कृशो वा ।
आक्रान्तो विनिपतितः कृतापसव्यो
विज्ञेयो हत इति स ग्रहो ग्रहेण ॥

पराशरस्तु ।

दशभिर्लक्षणैर्ग्रहं जितं विद्यात् । विवर्णः परुषः सूक्ष्मो याम्याशामार्गस्थो विरूढो विकृतो निष्प्रभोऽथ वाऽभिहतोऽप्राप्य निवृत्तो वेपनश्चान्यथा विजयी ।

वराहसंहितायां तु ।

दक्षिणदिक्स्थः परुषो वेपथुरप्राप्य सन्निवृत्तोऽणुः ।
अधिरूढो विकृतो निष्प्रभो विवर्णश्च यः स जितः ॥
उक्तविपरीतलक्षणसंपन्नो जययुतो विनिर्दिष्टः ।
विपुलः स्निग्धो द्युतिमान् दक्षिणदिक्स्थोऽपि जययुक्तः ॥

प्रभाकरस्तु ।

भवेद्ग्रहो जयी युद्धे उदीच्यो दक्षिणे सितः ।

पुलिशाचार्यश्च ।

सर्वे जयिन उदक्स्था दक्षिणदिक्स्थो जयी शुक्रः ।

अथ रव्यादीनां पराजयफलं भार्गवीये ।

कनकरजतसंचयाश्च सर्वे शमदममन्त्रधराश्च ये मनुष्याः ।
शकयवनतुषारवाह्लिकाश्च क्षयमुपयान्ति दिवाकरं प्रयातम् ॥

पराशरस्तु ।

सूर्यपीडायां वरनृपतितपस्विधार्मिकयशस्विभ्राजिष्णुतेजस्विपीतलोहितबीजफलपुष्पौषधिमणिधात्वग्न्युपजीविनः शकयवनकाम्बोजदरदपारदपह्लवानागरैः सहोपतप्यन्ते ।

भार्गवीये ।

अथ सोमहते विद्याद्ध्रुवं राज्ञो विपर्ययम् ।
संहरन्ति च भूतानि भूमिपालाः पृथक् पृथक् ॥
परस्परं विरुध्यन्ते क्षुद्भयं चापि जायते ।
अनावृष्टिभयं घोरं विद्यात् सोमविपर्यये ॥

पराशरस्तु ।

सोमे सोमपद्विजस्वाध्यायिव्रतदीक्षितविद्वत्साधुसरित्सलिलोद्भवसागराश्रिताः क्षीरिण्योषधयो देवताभिः सहोपतप्यन्ते ।

भार्गवीये ।

त्रैगर्त्ताः क्षितिपतयः सयोधमुख्याः
पीड्यन्ते गिरिनिलयाग्निजीविनश्च ।
संग्रामाः सरुधिरपांशुवर्षमिश्रा
दुर्भिक्षं भवति धरासुतस्य घाते ॥

पराशरस्तु ।

अङ्गारकवधे स्फीतजनपदग्रामनैगमजनवनधान्यनिचयकोषेश्वरधनभूपलक्ष्म्यधिपौषधिबीजवनपुष्पफलशौण्डिकाग्न्युपजीविनो व्याधिभयशस्त्रेणोपतप्यन्ते ।

भार्गवीये ।

सागरनिलया घोराः क्षयमुपयान्ति नरा वणिक्प्रधानाः ।
भवति च राजा विजयी बुधेन प्रपतन्ति चात्र गर्भाः ॥

पराशरस्तु ।

बुधघाते नैगमजनधान्यनिचयमित्रोपजीविमन्त्रिपोतयात्रिकहयगजयोधमार्गणधीवराश्च तापमुपयान्ति ।

भार्गवीये ।

दैवज्ञास्तपसि सुनिश्चिता व्रतस्था आरूपा नृपतिगणाः पुरोहिताश्च ।
पीड्यन्ते भवति वधश्च नागराणां त्रैलोक्यं क्षयमुपयाति जीवघाते ॥

पराशरः ।

बृहस्पतिवधे सिन्धुसौवीराभिसारपौरत्रिगर्त्तमत्स्योसीनरशिविवैयासहारभृतयो नैगमजलचित्रकरशाल्वग्रामघोषनगरविहृज्जनब्राह्मणपुरोहितब्रह्मचारिदीक्षितजप्यमङ्गलतत्परा आश्रमाश्च पीड्यन्ते ।

भार्गवीये ।

यो राजा प्रथितपराक्रमः पृथिव्यां वङ्गाङ्गा मगधविदर्भशूरसेनाः ।
ये योधा जनभुवि चापि लब्धशब्दास्ते भृत्यैः क्षयमुपयान्ति शुक्रघाते॥

पराशरस्तु ।

हते शुक्रे नश्यन्त्यभियोक्तृवङ्गाङ्गकलिङ्गमगधविदर्भचेदिवत्सभद्रकारयौधेयतरुकच्छसिन्धुसौवीराभिसारपौरत्रिगर्त्तमालवकैकयाम्बष्ठकाः शिवयो मालवद्रविडपौण्ड्रकोटीवृषपह्लववर्णरूपवन्तः कुसुमानि हस्त्यश्वयोधेश्वरा राजानो वर्षविघातं च विद्यात् ।

भार्गवीये ।

महिषकपिवृषाः शकाः सपौण्ड्राः कृषिपशुपालरताश्च ये मनुष्याः ।
विविधभयसमाहिताश्च सर्वे क्षयमुपयान्ति शनैश्चरस्य घाते ॥

पराशरस्तु ।

शौरपीडायामपि गोरण्डसेनापतिप्रधानपश्वस्फीतजनपदाश्चाग्न्युपजीविनो बहुस्त्रीकास्तथा शकमहिषदरदपारता आश्विनैः सहोपतापमुपयान्ति ।

भार्गवीये ।

ये केचिन्नृपतिसुदाम्भिकाः पिशाचाः
कार्याणां व्रतनियमेषु ये च पालाः ।
ये चान्यैः शबरपुलिन्दचेदिगाधा
बध्यन्ते यदि भवतीह राहुघातः ॥

पराशरस्तु ।

वधे राहोर्निकृष्टजनवन्धनपालतस्करोपवर्त्तिकाः शितशमीधान्यशूलिकवार्धुषिकदुर्गविलकरवराहकुक्कुराश्वशृगालदुष्करा दस्यवश्च विनश्यन्ति ।

भार्गवीये ।

आक्रान्तं समनुभवन्ति पापसंज्ञा
बध्यन्ते यदि भवति परस्परं हि घातः ।
संग्रामाः सरुधिरपांशुवर्षमिश्रा
दुर्भिक्षं भवति तु केतुपीडनेन ॥

पराशरस्तु ।

वधे केतोः केतुभूतानां राज्ञां ग्रहक्षेत्रनिधिनिधानोद्युक्तनृपतिसाधुजनपार्वतीयानां शस्त्रवृष्टिप्रादुर्भावो भेदश्च ।

कस्य चित् पद्यम् ।

ग्रहस्य ये यस्य हतस्य देशाः पीडां समृच्छन्ति त एव तस्य ।
संप्राप्तवीर्यस्य जये समृद्धा जयन्ति शस्यद्विचतुष्पदाद्याः ॥

ग्रहदेशाः प्रत्येकं ग्रहाद्भुतेषु चोक्ताः । वराहेण तु रवियोगे ग्रहाणामस्तमितत्वाच्चन्द्रयोगे समागतत्वाद्रविचन्द्रयोर्युद्धं नास्तीति नियमत्वात् तत्पराजयफलं नोक्तम् । आर्यविष्णुचन्द्रादिभिरप्यस्तमयादिपक्ष एवोक्तस्तथाऽपि विष्णुचन्द्रः ।

दिवसकिरणास्तमास्तः समागमः शीतरश्मिसहितानाम् ।
कुसुतादीनां युद्धं निगद्यतेऽतोऽन्ययुक्तानाम् ॥

प्रभाकरश्च ।

भौमादीनां प्रतियुद्धं शशिना च समागमः ।
सूर्येणास्तं जयी युद्धे उदीच्ये दक्षिणे सितः ॥

रविचन्द्रविम्बे राहुदर्शनं तच्च ग्रहणं न तु युद्धम् । वृद्धगर्गेणापि । भौमादिपञ्चकस्यैव युद्धमङ्गीकृतम् ।

तथा च ग्रहयुद्धोपसंहारे ।

ताराग्रहाणां पञ्चानां युद्धान्युक्तानि योगतः ।
जयाः पराजयाश्चैव गर्गेण परिकीर्त्तिताः—इति ॥

अथ भौमादीनां बुधादिभिः पराजयफलम् । तत्र वृद्धगर्गः ।

पीड्यन्ते चानेकनृपा भौमे बुधनिपीडिते ।

वराहसंहितायां तु ।

शशिजेन शूरसेनः कलिङ्गशाल्वाश्च पीड्यन्ते ।
गुरुणा जितेऽवनिसुते वाह्लीकाः यायिनोऽग्निवार्त्ताश्च ॥

वृद्धगर्गस्तु ।

यायिनः क्षत्रमुख्याश्च पीड्यन्ते चाग्निजीविनः ।
बृहस्पतिहते भौमे पार्वतीयाश्च पार्थिवाः ॥

वराहसंहितायां तु ।

कोष्ठागारम्लेच्छक्षत्रियतापश्च शुक्रजिते ।

वृद्धगर्गस्तु ।

शुक्रेण भौमे तु हते जयन्ते यायिनो नृपाः ।
कोष्ठागाराणि म्लेच्छाश्च क्षत्रं च भुवि पीड्यते ॥

वराहसंहितायाम् ।

सौरेणारे विजिते जयन्ति पौराः प्रजाश्च सीदन्ति ।

वृद्धगर्गस्तु ।

सौरेणाभिहिते वक्रे क्षत्रं बध्यति दस्युभिः ।
प्रजाः सर्वाश्च सीदन्ति जयन्ते चापि नागराः ॥

वृद्धगर्गः ।

लोहिताङ्गे बुधहते नागराश्चापि पार्थिवाः ।
तापसाः सोमपा वृक्षाः सरितो दिक् तथोत्तरा ॥

पीड्यन्ते इति सम्बन्धः । हननं हतः । बुधस्य हननं यस्मात् कर्त्तृभूतात् स बुधहतः । बुधहतविलोहिताङ्गो भौमहतो बुध इत्यर्थः ।

तथा च वराहसंहितायाम्।

भौमेन हते शशिजे वृक्षसरित्तापसाश्मकनरेन्द्राः।
उत्तरदिक्स्थाः क्रतुदीक्षिताश्च सन्तापमुपयान्ति॥

वृद्धगर्गः।

गुरुणा निहते सौम्ये जयमृच्छन्ति यायिनः।
गर्भाः स्रवन्ति चाह्नाय कम्पते च वसुन्धरा॥
म्लेच्छान् श्रेष्ठांश्च बहुधा शूद्रांश्चैवानयः स्पृशेत्।

वराहसंहितायां तु।

गुरुणा बुधे जिते म्लेच्छशूद्रचौरार्थयुक्तपौरजनाः।
त्रैगर्त्तपार्वतीयाः पीड्यन्ते कम्पते च मही॥
भृगुणा जितेऽग्निकोपः शस्याम्बुदयायिविध्वंसः।

वृद्धगर्गस्तु।

बुधे च शुक्राभिहते शस्त्रमग्निश्च मूर्छति।
यायिनश्चात्र पीड्यन्ते शस्यं वृष्टिश्च हन्यते॥

वराहसंहितायाम्।

रविजेन बुधे ध्वस्ते नाविकयोधाब्जसधनगर्भिण्यः।

पीड्यन्ते इति सम्बन्धः।

वृद्धगर्गस्तु।

नौजीविनो वरा योधा गर्भिण्योऽथ महाधनाः।
पीड्यन्ते सौरनिहते बुधे मन्दं च वर्षति॥

वराहसंहितायाम्।

भौमेन जिते जीवे मध्यो देशो नरेश्वरा गावः।

नश्यन्तीति सम्बन्धः।

वृद्धगर्गस्तु।

मध्यदेशनृपा मुख्या गावोऽथाश्रमिणो द्विजाः।
नागराश्चापि पीड्यन्ते लोहिताङ्गहते गुरौ॥

म्लेच्छान् शस्त्रभृतः शस्यं नागराँश्चापि पार्थिवान् ।
हन्याद्गुरुर्बुधहतो मध्यदेशं च कृत्स्नशः ॥

वराहसंहितायां च ।

शशितनयेनापि जिते बृहस्पतौ म्लेच्छशस्यशस्त्रभृतः* ।
उपयाति मध्यदेशश्च संक्षयं पञ्चभक्तिफलम् ॥
जीवे शुक्रेण जिते कुलूतगान्धारकेकया मद्राः ।
शाल्वा वत्सा वङ्गा गावः शस्यानि नश्यन्ति ॥

वृद्धगर्गस्तु ।

गुरौ शुक्रहते मद्राः शाल्वा गान्धारकेकयाः ।
बङ्गा मत्स्याश्च कुरवः पीडयन्ते चापि नागराः ॥
ब्रह्मक्षत्रगणा गावः शस्यमाश्रमवासिनः ।
उत्तरादिक्प्रधानाश्च पीडयन्ते च नरा भुवि ॥

वराहसंहितायाम् ।

सौरेण चार्जुनायनवसातियौधेयशिविविप्राः ।

जीवे जिते नश्यतीति सम्बन्धः ।

वृद्धगर्गस्तु ।

नागराँश्चाभिहत्याच्छौरेणाभिहतो गुरुः ।
शूरसेनान् कलिङ्गाँश्च शाल्वान् क्षत्रं च पीडयेत् ॥

वराहसंहितायाम् ।

कुजविजिते भृगुतनये बलमुख्यवधो नरेन्द्रसंग्रामाः ।

वृद्धगर्गस्तु ।

अङ्गारकहते शुक्रे संग्रामस्तुमुलात्मकः ।
यायिनो बलमुख्याश्च पीडयन्ते च बलाधिकाः ॥

वराहसंहितायाम् ।

सौम्येन पार्वतीयक्षीरविनाशोऽल्पवृष्टिश्च ।

जिते भृगुतनय इति सम्बन्धः ।

---

* सत्यभृतः इति अ. ।

वृद्धगर्गस्तु ।

क्षीरिणः पार्वतीयाश्च पीड्यन्ते चापि यायिनः ।
न च वर्षति पर्जन्यो बुधेनाभिहते भृगौ ॥

वराहसंहितायाम् ।

शुक्रेण बृहस्पतिहते यायी श्रेष्ठो विनाशमुपयाति ।
ब्रह्मक्षत्रविरोधः सलिलं च न वासवस्त्यजति ॥
कोशलकलिङ्गवङ्गा वत्सा मत्स्याश्च मध्यदेशयुताः ।
महतीं व्रजन्ति पीडां नपुंसकाः शूरसेनाश्च ॥

वृद्धगर्गः ।

बृहस्पतिहते शुक्रे यायी श्रेष्ठो विनश्यति ।
ब्रह्मक्षत्रविरोधश्च देवश्चैव न वर्षति ॥
पाञ्चालाः शूरसेनाश्च वत्सा मत्स्याः सकोशलाः ।
पुण्ड्रा वङ्गाः कलिङ्गाश्च मध्यदेशश्च पीड्यते ॥
शनैश्चरहते शुक्रे गणमुख्याश्च यायिनः ।
शस्त्रोपजीविनश्चैव क्षत्रं च परिपीड्यते ॥

वराहसंहितायां तु ।

रविजेन सिते विजिते गणमुख्याः शस्त्रजीविनः क्षत्रम् ।
जलजाश्च निपीड्यन्ते सामात्यं भुक्तिफलमन्यत् ॥
क्षितिजेन तङ्गणान्ध्रोड्रकाशिवाह्लीकदेशानाम् ।

असिते निहते पीडेति सम्बध्यते ।

वृद्धगर्गस्तु ।

शूद्रान्धकान् पिठलकान् कोशलानपि तान् गणान् ।
अङ्गारकहतः सौरो नागराँश्चापि पीडयेत् ॥

वराहसंहितायाम् ।

सौम्येन पराभूते मन्देऽङ्गवणिग्विहङ्गपशुनागाः ।

संतप्यन्त इति सम्बन्धः ।

वृद्धगर्गस्तु ।

पशवः पक्षिणो गावो नदीजा वणिजो नगाः ।
नागराश्चापि पीडयन्ते हते सौरे बुधेन तु ॥

वराहसंहितायाम् ।

सन्ताप्यन्ते गुरुणा स्त्रीबहुला महिषकशकाश्च ।

पराभूते मन्दे इति सम्बन्धः ।

वृद्धगर्गस्तु ।

बृहस्पतिहतः सौरो वाह्लीकाँश्चापि पीडयेत् ।
बहुस्त्रीकाँश्च योधाँश्च ब्राह्मणाँश्चानयः स्पृशेत् ॥

वराहसंहितायाम् ।

असिते सितेन निहतेऽर्घवृद्धिरहिविहगमानिनां पीडा ।

वृद्धगर्गस्तु ।

तेजस्विनः खगान् सूर्यान् नागराँश्चानयः स्पृशेत् ।
धान्यार्घश्चापि वर्धेत सौरे शुक्रेण मर्दिते ॥

वराहसंहितायाम् ।

अयं विशेषोऽभिहितो हतानां कुजज्ञवागीशसितासितानाम् ।
फलं तु वाच्यं ग्रहभक्तितोऽन्यद्यथा तथा घ्नन्ति हताः स्वभक्तीः ॥

आदित्यादिभक्तय आदित्याद्भुतावर्त्तेषु लिखिताः ।

अथ नागरादिग्रहजयपराजयफलम् । तत्र नागरादिग्रहानाह ऋषिपुत्रः ।

बृहस्पतिस्तथाऽऽदित्यो लोहिताङ्गः शनैश्चरः ।
स्थावरा धूमकेतुश्च परास्तेभ्यश्चरा ग्रहाः ॥
एवमाङ्गिरसाः प्राहुराचार्याः शास्त्रकोविदाः ।

स्थावरा अकृतोद्यामयायिन उद्यमविषयास्त एव पौरा इत्युच्यन्ते । चराः कृतोद्यमा यायिन इत्यर्थः ।

भार्गवीये तु ।

दिवाकरश्चैव शनैश्चरस्तथा बृहस्पतिश्चैव बुधश्च नागराः ।
प्रजापतिः केतुरथैव चन्द्रमास्तथैव राहूशनसौ च यायिनः ॥

पराशरस्तु ।

सूर्यबुधबृहस्पतिशनैश्चरा नागराः । सोमाङ्गारकशुक्रराहुकेतवो यायिनः ।

विष्णुधर्मोत्तरे ।

राहुः केतुः कुजः शुक्रश्चन्द्रेण सह यायिनः ।
बुधो जीवः शनैश्चारी नागरा रविणा सह ॥
पूर्वे कपाले पौरोऽर्को यायी भवति चापरे ।

योगयात्रायां वराहः ।

मध्याह्नेऽर्कस्तुहिनकिरणो नित्यमाक्रन्दसंज्ञः
पौरः पूर्वे भवति दिनकृद्यायिसंज्ञोऽन्यसंस्थः ।
जीवः सौरस्तुहिनकिरणस्यात्मजश्चेति पौराः
केतुर्यायी सभृगुजकुजः सिंहिकानन्दनश्च ॥

आक्रन्दो यायिपौरेतरः पार्श्वस्थः ।

ऋषिपुत्रस्तु ।

गर्गशिष्या यथा प्राहुस्तथा वक्ष्याम्यतः परम् ।
भौमभार्गवराह्वर्ककेतवो यायिनो ग्रहाः ॥
आक्रन्दसारिणामिन्दुर्ये शेषा नागरास्तु ते ।
गुरुसौरबुधानेव नागरानाह देवलः ॥
परान् धूमेन सहितान् राहुभार्गवलोहितान् ।

परान् यायिनः ।

पूर्वाह्णे नागरं सूर्यमपराह्णे तु यायिनम् ।
आक्रन्दं दिनमध्ये तु चन्द्रमाक्रन्दितं सदा ॥
बृहस्पतेरपि मतं गर्गस्याप्येवमेव तु ।
किञ्चिदभ्यधिकं चात्र विशेषमुशनाऽब्रवीत् ॥
भजत्याक्रन्दसारित्वं चक्रकर्मणि लोहितः ।

संप्राप्तचक्रो वक्रश्च परमागन्तुरेव सः ॥
यवक्रीतोदयी दिक्षु ये ग्रहा ग्रहसङ्गमे ।
नागरास्ते ग्रहा ज्ञेयाः स्वासु दिक्ष्वन्यतोऽन्यथा ॥
केश्चित् कालवशादुक्तं दिग्भ्योऽन्यैर्वगतोऽपरैः ।
सर्वमेतदमीमास्यं न मिथ्या मुनिभाषितम् ॥

पराशरः ।

तेषां तज्जयाद्विजयो वधाद्वधोऽन्योन्यभेदाद्भेदः साम्यात् साम्यम् ॥

विष्णुधर्मोत्तरे च ।

यायिना विजिते पौरे राष्ट्रे स्याद्यायिनां जयः ।
यायिग्रहे पौरजिते पुरे राज्ञां जयो मृधे ॥

भार्गवीये ।

यदा ग्रहो नागर एव नागरं विजेष्यते वाऽप्यथ वाऽपि यायिनम् ।
तथा नृपो नागर एव नागरं विजेष्यते वाऽप्यथ वाऽपि यायिनम् ॥

विष्णुधर्मोत्तरे तु ।

पौरेण विजिते पौरे पौरैः पौरक्षयं वदेत् ।
यायिना यायिनि हते यायिना यायिनां क्षयः ॥
ग्रहाणां चेद्भवेत् साम्यं साम्यं राज्ञां विनिर्दिशेत् ।
जयाजयौ नरेन्द्राणां निर्देश्यौ ग्रहवद्बुधैः ॥

आक्रन्दादिलक्षणं तत्पराजयादिफलं च वराहसंहितयोः ।

रविराक्रन्दो मध्ये पौरः पूर्वे परे स्थितो यायी ।
पौरा गुरुबुधरविजा नित्यं शीतांशुराक्रन्दः ॥
केतुकुजराहुशुक्रा यायिन एते ग्रहैर्हता हन्युः ।
आक्रन्दयायिपौरा जयिनो जयदाश्च वर्गस्य ॥
पौराः पौरेण हताः पौराः पौरान् नृपान् विनिघ्नन्ति ।

एवं याम्याक्रन्दा नागरयायिग्रहाश्चैव ॥
द्वावपि मयूखयुक्तौ विपुलस्निग्धौ समागमे भवतः ।
तत्रान्योन्यप्रीतिर्विपरीता चात्मपक्षघ्नौ ॥
युद्धं समागमो वा यद्यव्यक्तैः स्वलक्षणैर्भवतः ।
भुवि भूभृतामपि तथा फलमप्युक्तं विनिर्देश्यम् ॥

भार्गवीये ।

असव्यं त्रिषु मासेषु सङ्गमो मासिकः स्मृतः ।
लेखने पक्ष इत्याहुर्भेदनं सप्तरात्रिकम् ॥

अत्रानुक्तविशेषशान्तिषु ग्रहयुद्धोत्पातेषु योद्धृग्रहपूजापूर्विका प्रभूतकनकान्नगोमहीदानादिका सामान्यशान्तिरौत्पातिकफलगुरु-लाघवमवगम्य कर्त्तव्या ।

इति महाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-ऽद्भुतसागरे ग्रहयुद्धाद्यद्भुतावर्त्तः ।

---

## अथ कृत्यादियोगाद्भुतावर्त्तः ।

विष्णुधर्मोत्तरे ।

पाशचक्रधनुर्वज्रसंस्थानाः क्षुद्वृष्टिदाः ।
ग्रहा भयावहा नित्यं शृङ्गाटकपुरोगमाः ॥

वराहसंहितायां तु ।

ग्रहसंवर्त्तसमागमसम्मोहसमाजसन्निपाताख्याः ।
कोपश्च* षडित्येषामभिधास्ये लक्षणं सकलम् ॥
एकर्क्षे चत्वारः सह पौरैर्यायिनोऽथ वा पञ्च ।
संवर्त्तो नाम भवेच्छिखिराहुयुतश्च सम्मोहः ॥

---

* कोशश्च इति ख ।

पौरः पौरसमेतो यायी सह यायिना समाजाख्यः ।
यमजीवसङ्गमेऽन्यो यद्यागच्छेत् तदा कोपः ॥

उदितः पश्चादेकः प्राक् चान्यो यदि स सन्निपाताख्यः ।
अविकलतनवः स्निग्धा विपुलाश्च समागमे धन्याः ॥

समौ तु संवर्त्तसमागमाख्यौ सम्मोहकोपौ भयदौ प्रजानाम् ।
समाजसंज्ञे तु समा प्रदिष्टा वैरप्रकोपः खलु सन्निपाते ॥

काश्यपश्च ।

संवर्त्तसङ्गमौ मध्यौ सम्मोहौ भयदस्तथा ।
कोपश्चानिष्टफलदः समाजाख्यस्तु मध्यमः ॥
सन्निपाते महावैरमन्योन्यमुपजायते ।

विष्णुधर्मोत्तरे ।

एकान्तरितनक्षत्रगताः स्युश्चेद्ग्रहा दिवि ।
माला नाम भवेद्योगो मध्यदेशक्षितीशहा ॥

पराशरस्तु ।

अथाष्टौ ग्रहयोगाः कोपः श्रृङ्गाटको व्यूहो माला धनुस्तुला ध्वजश्चक्रं चेति। तत्रैकर्क्षे पञ्च तारा ग्रहाः सूर्यानुगताः स्युः स कोपः। एकर्क्षगास्त्रयश्चन्द्रसंयुक्ताः स श्रृङ्गाटकः। विना सोमेन दृश्याश्चत्वारः स व्यूहः। पञ्चैकर्क्षगा दृश्येरन् स ध्वजः। एकैकर्क्षान्तरिताः पञ्च स माला। उदयेऽस्तमये च ग्रहरूपं दृश्यते सा तुला स एवाकृतिवशाद्धनुः। उदयास्तमध्यान्तरेभ्योऽन्यर्क्षगाः स चक्रं तत्र दुर्भिक्षकृतकोपः। श्रृङ्गाटको नृपयायिनां नाशाय भवति। व्यूहे पुराणामवरोधनम्।

मालाऽभिषिक्तनाशाय मध्यदेशविपत्तये ।
धनुः कुनृपनाशाय चोरदस्युक्षयाय च ॥

शस्याम्बुनाशाय तुला तुलाङ्गश्चोपजीवति ।
ध्वजः शस्यविनाशाय चक्रं चक्रं विनाशयेत् ॥

विष्णुधर्मोत्तरे ।

यदा सप्तसु दृश्येत कृत्तिकादिषु संपतन् ।
सह शुक्रेण तु बुधस्तदा देवो न वर्षति ॥

पराशरः ।

उदयास्तमयस्थौ तु यदा शुक्रबृहस्पती ।
पूर्वसन्ध्यागतौ घोरौ जनयेतां महद्भयम् ॥

ऋषिपुत्रस्तु ।

अन्योन्यमस्तमस्थौ तु यदि शुक्रबृहस्पती ।
पूर्वसन्ध्यागतौ घोरौ जनयेतां महद्भयम् ॥

वराहसंहितायां तु ।

गुरुर्भृगुश्चापरपूर्वकाष्ठयोः परस्परं सप्तमराशिगौ यदा ।
तदा प्रजा रुग्भयशोकपीडिता न वारि पश्यन्ति पुरन्दरोच्छ्रितम् ॥
निहन्ति शुक्रः क्षितिजेऽग्रतः प्रजा हुताशशस्त्रक्षुदवृष्टितस्करैः ।
चराचरं व्यक्तमथोत्तरापथं दिशो रजोल्कादहनैश्च पीडयेत् ॥

सौम्यास्तोदययोः पुरो भृगुसुतस्यावस्थितस्तोयकृ-
द्रोगान् कामलपित्तजाँश्च कुरुते पुष्णाति च ग्रैष्मिकम् ।
हन्यात् प्रव्रजितोऽग्निहोत्रिकभिषग्रङ्गोपजीव्यान् हयान्
वैश्यान् गाः सह वाहनैर्नरपतीन् मृद्नाति पश्चाद्दिशः ॥

बृहस्पतौ हन्ति पुरःस्थिते सितः सितं समस्तं द्विजगोसुरालयम् ।
दिशं च पूर्वां करकासृजोऽम्बुदा गले गदो भूरि भवेच्च शारदम् ॥
शनैश्चरे म्लेच्छविडालकुञ्जराः खरा महिष्योऽसितधान्यशूकराः ।
पुलिन्दशूद्राश्च सदक्षिणा पथाः क्षयं व्रजन्त्यक्षिमरुद्भवोद्भवैः ॥

यथा स्थिता जीवबुधारसूर्यजाः स्थितस्य सर्वोग्रपथानुवर्त्तिनः ।
नृनागविद्याधरसङ्गरास्तदा भवन्ति वार्त्ताश्च समुच्छ्रितान्तकाः ॥

गर्गः ।

कोष्ठागारगते शुक्रे पुष्यस्थे च बृहस्पतौ ।
विद्याच्छिवं सुखं लोके शान्तशस्त्रमनामयम् ॥

पराशरः ।

कृत्तिकासु शनैश्चारी विशाखायां बृहस्पतिः ।
तिष्ठेद्यदा तदा घोरः प्रजानामनयो भवेत् ॥
एकनक्षत्रमाश्रित्य दृश्येतां युगपद्यदि ।
अन्योन्यभेदं जानीयात् तदा पुरनिवासिनाम् ॥

वराहः ।

यदा विशाखासु महेन्द्रमन्त्री सुतश्च भानोर्दहनर्क्षमाश्रितः ।
तदा प्रजानामनयोऽतिघोरः पुरप्रभेदो गतयोऽब्दमेकम् ॥

भीष्मपर्वणि कुरुपाण्डवसैन्यवधनिमित्तम् ।

"संवत्सरस्थायिनौ च ग्रहौ प्रज्वालितावुभौ ।
विशाखायाः समीपस्थौ बृहस्पतिशनैश्चरौ"* ॥

संवत्सरनाम्नि वर्षे स्थायिनौ संवत्सरस्थायिनौ ।

विष्णुधर्मोत्तरे ।

चित्रायां लोहितो यत्र मूले देवगुरुस्तथा ।
भार्गवश्च धनिष्ठासु तदा पौरभयं भवेत् ॥
एकेन यदि वा द्वाभ्यां ग्रहाभ्यां सहितो गुरुः ।
शनैश्चरो वा दृश्येत तदा दुर्भिक्षमादिशेत् ॥

पराशरश्च ।

एकेन यदि वा द्वाभ्यां ग्रहाभ्यां सहितो गुरुः ।
शनैश्चरो वा दृश्येत कोपवत् फलमादिशेत् ॥

---

* ३ अ. २६ श्लो. ।

कोपफलं दुर्भिक्षम् ।

अस्तोदये तु शुक्रस्य यदि चन्द्रदिवाकरौ ।
आवृत्य मार्गं कुर्वीत तदा वर्षति भार्गवः ॥
पुरस्तादेकनक्षत्रे दृश्येरंश्चेत् त्रयो ग्रहाः ।
अवर्षदुर्भिक्षभयं गोमनुष्यभयं भवेत् ॥
हिमवन्तमयोध्यां च तङ्गणानेकपादकान् ।
पूर्वं समुद्रमगधानृक्षदेशांश्च पीडयेत् ॥
मध्ये यदा प्रदृश्यन्ते शृङ्गाटकपदाश्रिताः ।
त्रयेणैकर्क्षमारुह्य मध्यदेशविपत्तये ॥
वारुण्यां यत्र दृश्यन्ते लम्बमानास्त्रयो ग्रहाः ।
तदृक्षमण्डलान्तःस्थाँस्त्रिगर्भांश्चानयः स्पृशेत् ॥

काश्यपः ।

भूमिपुत्रादयः सर्वे यस्यामस्तमिते रवौ ।
दृश्यन्ते सर्वककुभि तत्रानिष्टं विनिर्दिशेत् ॥

विष्णुधर्मोत्तरे तु ।

पूर्वस्यां यदि दृश्यन्ते सर्वे तारा ग्रहा यदि ।
प्राच्यानां तु तदा राज्ञां भवेत् पीडा च दारुणा ॥
मध्येन यदि दृश्यन्ते मध्यदेशो विनश्यति ।
वारुण्यां यदि दृश्यन्ते तां दिशं पीडयन्ति ते ॥

मध्येन यदि दृश्यन्त इति बुधभार्गवव्यतिरिक्तताराग्रहपरम् । बुधभार्गवयोर्नभोमध्ये दर्शनासम्भवात् ।

पराशरस्तु ।

पुरस्ताद्यत्र दृश्यन्ते पञ्चतारा ग्रहा दिवि ।
प्रकाशन्ते ध्वजाग्राणि पार्थिवानां युयुत्सताम् ॥
यदा सर्वे समागम्य मध्ये तिष्ठति दारुणम् ।

तत्रापि देशाः पीड्यन्ते मध्यदेशो विशेषतः ॥

प्रतीच्यां यत्र दृश्यन्ते पञ्च ते दिवि चारिणः ।
क्षुभ्यते पृथिवी सर्वा न च शस्त्रं प्रकुप्यति ॥

वराहसंहितायां तु ।

दृश्येत यत्र खांशे ग्रहमाला दिनकरे दिनान्तगता ।
तत्रान्यो भवति नृपः परचक्रोपद्रवश्च महान् ॥

खांशे दशमस्थाने मध्याह्ने देश इत्यर्थः । ग्रहमाला बुधभार्गवव्यतिरिक्ता । दिनान्तगतेऽस्तमितमात्रे न तु समयान्तरे ।

यस्यां दिशीक्षमाणा विशन्ति तारा ग्रहा रविं सर्वे ।
भवति भयं दिशि तस्यामायुधकोपः क्षुदातङ्कैः ॥

पराशरः ।

यद्यत् फलमिह प्रोक्तं ग्रहसंयोगसम्भवम् ।
तत्तन्नक्षत्रदेशेषु तेषु तेषु विनिर्दिशेत् ॥

एतेष्वनुक्तविशेषशान्तिषु आकृत्यादिग्रहयोगाद्भुतेषु योगकर्तृकग्रहपूजापूर्विका प्रभूतकनकान्नगोमहीदानादिका सामान्यशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

अत्रानुक्तफलपाकसमयविशेषाणां दिव्याद्भुतानां वर्षेण फलपाकः पराशरेणोक्तः ।

बादरायणः ।

वृश्चिकस्थे सहस्रांशौ सौम्यैर्बलिभिरीक्षिते ।
तद्वत्केन्द्रयुतैर्विन्द्याद्ग्रीष्मधान्यस्य सम्पदः ॥

वराहसंहितयोः ।

भानोरलिप्रवेशे केन्द्रैस्तस्माच्छुभग्रहाक्रान्तैः ।
बलवद्भिः सौम्यैर्वा निरीक्षिते ग्रैष्मिकविवृद्धिः ॥
अष्टमराशिगतेऽर्के गुरुशशिनोः कुम्भसिंहसंस्थितयोः ।
सिंहघटसंस्थितयोर्वा निष्पत्तिर्ग्रीष्मशस्यस्य ॥

बादरायणः ।

सूर्याद्द्वितीयगे शुक्रे विधुजे तत्र संस्थिते ।
द्वयोर्वा द्वादशेऽप्येवं स्थितयोः शस्यसम्पदः ॥
सूर्येऽत्र गुरुणा दृष्टे योगः स्यादतिशोभनः ।

वराहसंहितयोस्तु ।

अर्कात् सिते द्वितीये बुधेऽथ वा युगपदेव वा स्थितयोः ।
व्ययगतयोरपि तद्वन्निष्पत्तिरतीव गुरुदृष्ट्या ॥
शुभमध्येऽलिनि सूर्याद्गुरुशशिनोः सप्तमे परा सम्पत् ।
अल्यादिस्थे सवितरि गुरोर्द्वितीयेऽर्धनिष्पत्तिः ॥
लाभहिबुकार्थयुक्तैः सूर्यादलिगात् सितेन्दुशशिपुत्रैः ।
शस्यस्य परा सम्पत् कर्मणि जीवे गवां चाग्र्या ॥

बादरायणः ।

वृश्चिकेऽर्के वृषे चन्द्रः कुम्भे जीवः कुजार्कजौ ।
मकरे चेद्भवेच्छस्यसम्पच्चक्रागमो महान् ॥

वराहसंहितयोस्तु ।

कुम्भे गुरुर्गवि शशी सूर्येऽलिमुखे कुजार्कजौ मकरे ।
निष्पत्तिरस्ति महती पश्चात् परचक्ररोगभयम् ॥

बादरायणः ।

वृश्चिकाय स्थितः सूर्यः पापमध्यगतो यदा ।
शस्यहा सप्तमे पापे जातं जातं विपद्यते ॥

वराहसंहितयोस्तु ।

मध्ये पापग्रहयोः सूर्यः शस्यं विनाशयत्यलिगः ।
पापः सप्तमराशौ जातं जातं विनाशयति ॥
अर्थस्थाने क्रूरः सौम्यैरनिरीक्षितः प्रथमजातम् ।
शस्यं निहन्ति पश्चाद्रुप्तं निष्पादयेद्व्यक्तम् ॥

बादरायणः ।

पापौ सूर्यात् सप्तमस्थौ केन्द्रस्थौ चापि घातकौ ।
सौम्यदृष्टौ न सर्वत्र नाशनौ वृष्टिकोपतः ॥

वराहसंहितयोः ।

जामित्रकेन्द्रसंस्थौ क्रूरौ सूर्यस्य वृश्चिकस्थस्य ।
शस्यविपत्तिं कुरुतः सौम्यैर्दृष्टौ न सर्वत्र ॥
वृश्चिकसंस्थादर्कात् सप्तमषष्ठोपगौ यदा क्रूरौ ।
भवति तदा निष्पत्तिः शस्यानामर्घपरिहानिः ॥

बादरायणः ।

स एव योगाभिहितो वृश्चिकस्थे दिवाकरे ।
वृषेऽपि ते शारदानां चिन्तनीया यथार्थतः ॥

वराहसंहितयोः ।

विधिनाऽनेनैव रविर्वृषप्रवेशे शरत्समुत्थानाम् ।
विज्ञेयः शस्यानां नाशाय शिवाय वा तज्ज्ञैः ॥
त्रिषु मेषादिषु सूर्यः सौम्ययुतो वीक्षितोऽपि वा विचरन् ।
ग्रैष्मिकधान्यं कुरुते समर्घमुभयोपभोग्यं च* ॥
कार्मुकमृगघटसंस्थः शारदशस्यस्य तद्वदेव रविः ।
संग्रहकाले ज्ञेयो विपर्ययः क्रूरदृग्योगात् ॥

अत्रानुक्तविशेषशान्तिषु योगोत्पातेषु योगकर्त्तृग्रहपूजापूर्विका जपहोमादिका शान्तिः कर्त्तव्या ।

इति महाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवरचिते-
ऽद्भुतसागरे आकृत्यादियोगाद्भुतावर्त्तः ।

---

* समर्घमभयोपभोग्यं च इति अ. ।

## अथ रव्यादिवर्षाद्भुतावर्त्तः ।

वटकणिकायाम् ।

वर्षाधिपा अशुभदा दिनकरतनयप्रभाकरमहीजाः ।
क्षुच्छस्त्रदहनतस्कररोगभयावृष्टयः प्रोक्ताः ॥
शेषाणामतिशुभदं शोभनकनकान्नवारिसंपूर्णा ।
भवति वसुधा क्रियावाँल्लोकश्च नृपाः स्वभावस्थाः ॥

विष्णुधर्मोत्तरे ।

तीक्ष्णोऽर्कः स्वल्पशस्यश्च गतमेघोऽतितस्करः ।
बहूरगव्याधिगणैर्भास्कराब्दो रणाकुलः* ॥

यवनेश्वरस्तु ।

दिवाकराब्दे रणविग्रहोग्रपृथ्वीश्वरस्तीव्रविषज्वराग्निः ।
अवर्षशुष्कक्षयशस्यसंघः† प्रचण्डवह्न्युग्रशिरोऽक्षिरोगः ॥

वराहसंहितयोस्तु ।

सर्वत्र भूर्विबलशस्यवती वनानि
दैवाहिभक्षयिषुदंष्ट्रिसमावृतानि ।
स्पन्दन्ति नैव च पयः प्रचुरं स्रवन्ति
रुग्भेषजानि न तथाऽतिबलान्वितानि ॥
तीक्ष्णं तपत्यदितिजः शिशिरेऽपि काले
नात्यम्बुदा जलमुचोऽचलसन्निकाशाः ।
नष्टप्रभर्क्षगणशीतकरं नभश्च
सीदन्ति तापसकुलानि सगोकुलानि ॥
हस्त्यश्वपत्तिमदसह्यबलैरुपेता

---

* इत्यादीन्येतद्विषयकाणि वचनानि अ. पुस्तके समाससंहितायाः प्रमाणत्वेनाभिहितानि ।

† अवर्षशुष्कद्रुमशुष्कस्य–इति अ. ।

बाणाशनासिमुशलातिशयाश्चरन्ति ।
घ्नन्तो नृपा युधि नृपानुचरैश्च देशान्
संवत्सरे दिनकरस्य दिनेऽथ मासे ॥

विष्णुधर्मोत्तरे ।

बहुवर्षातिशस्यश्च गवां क्षीरप्रदायकः ।
चन्द्राब्दः कामिनामिष्टश्चित्यङ्कितमहीतलः ॥

यवनेश्वरस्तु ।

सम्पन्नशस्याक्षुपशस्यशालिप्ररूढगुल्मो बहुवर्षवारिः* ।
रसौषधिस्नेहपटुप्रसेकश्चान्द्रो रतिस्त्रीबल†वर्धनोऽब्दः ॥

वराहसंहितायां तु ।

व्याप्तं नभः प्रचलिताचलसन्निकाशै-
र्व्यालाञ्जनालिगवलच्छविभिः पयोदैः ।
गां पूरयद्भिरखिलाममलाभिरद्भि-
रुत्कण्ठितेन गुरुणा ध्वनितेन चाशाः ॥
तोयानि पद्मकुमुदोत्पलवन्त्यतीव
फुल्लद्रुमाण्युपवनान्यलिनादितानि ।
गावः प्रभूतपयसो नयनाभिरामा
रामा रतैरविरतं रमयन्ति रामान् ॥
गोधूमधान्ययवशालिवरेक्षुवाटा
भूः पाल्यते नृपतिभिर्नयकर्मयुक्तैः‡ ।
च्चित्यङ्किता क्रतुवरेष्टिविघुष्टनादाः
संवत्सरे शिशिरगोरभिसंप्रवृत्ते ॥

---

* बहुवर्षधारः इति अ. ।  † स्त्रीसुख-इति अ. ।
‡ नगराकराढ्या इति अ. ।

विष्णुधर्मोत्तरे ।

अग्नितस्कररोगाढ्यो नृपविग्रहदायकः ।
उपशस्यो* बहुव्यालो भौमाब्दो बालहा भृशम् ॥

यवनेश्वरस्तु ।

रणप्रचण्डः क्षितिरल्पशस्या विशुष्कवारिद्रुमशस्यवीरुत्† ।
अङ्गारकाब्दः प्रचुरोरगाग्निरातङ्कचौर्यक्षुदवृष्टिदृष्टः ॥

वराहसंहितायां तु ।

वातोद्धतश्चरति वह्निरतिप्रचण्डो
ग्रामान् वनानि गराणि च संदिधक्षुः ।
हाहेति दस्युगणपातहता रटन्ति
निःस्वीकृता विपशवो भुविमर्त्त्यसङ्घाः ॥
अभ्युन्नता वियति संहतमूर्त्तयोऽपि
मुञ्चन्ति कुत्रचिदपः प्रचुरं पयोदाः ।
सीम्नि प्रजातमपि शोषमुपैति शस्यं
निष्पन्नमप्यविनयादपरे हरन्ति ॥
भूपा न सम्यगभिपालनसक्तचित्ताः
पित्तोत्थरुक्प्रचुरता भूजगप्रकोपः ।
एवंविधैरुपहता भवति प्रजेयं
संवत्सरेऽवनिसुतस्य विपन्नशस्या ॥

विष्णुधर्मोधरे ।

ब्रह्मक्षत्रस्य शस्यानां जनानां च कलाविदाम् ।
वृद्धिप्रदोऽब्दो बौधस्तु भूयः शस्यकरः‡ क्षितौ ॥

---

* गतशस्य इति अ. । † शष्पशीर्णः इति अ. ।

‡ भूयसाम्यकरः इति अ. ।

यवनेश्वरस्तु ।

सन्धानदानप्रयतः क्षितीशः स्वाध्यायतीर्थानुरतिर्द्विजौघः* ।
निराधिरुत्पादित†शस्यवर्षो बौधः सुहृत्स्नेहविवर्धनोऽब्दः ॥

वराहसंहितायां तु ।

माहेन्द्र‡जालकुहकाकरनागराणां
गान्धर्वलेख्यगणितास्त्रविचारबुद्धिः§ ।
पिप्रीषया नृपतयोऽद्भुतदर्शनानि
दित्सन्ति तुष्टिजननानि परस्परेभ्यः ॥
वार्त्ता जगत्यवितथा विकलात्रयी च
सम्यक् चरत्यपि मनोरिव दण्डनीतिः ।
मध्यस्थतासु विनिविष्ट¶धियोऽपि केचि-
दान्वीक्षिकीषु च परं पदमीहमानाः ॥
हास्यज्ञदूतकविबालनपुंसकानां
युक्तिज्ञसेतुजलपर्वतवासिनां च ।
हार्दिं करोति मृगलाञ्छनजः स्वकेऽब्दे
मासेऽथ वा प्रचुरतां भुवि चौषधीनाम् ।

विष्णुधर्मोत्तरे ।

बहुयज्ञोऽतिशस्यश्च गोगजाश्वहितस्तथा ।
बहुवृष्टिप्रदः क्षेमो जीवाब्दो द्विजपुष्टिदः*† ॥

यवनेश्वरस्तु ।

सुवर्षयज्ञोत्सवर्षदानो नीरुग्भयथो धर्मपरोऽवनीशः ।
स्फीतान्नपानै*‡र्बहुशस्यकर्त्ता गुरोश्च धर्म*§प्रयतप्रजोऽब्दः ॥

---

* स्वाध्यायतीर्थाध्वरभीद्विजौघः इति अ. । † निराधिरुग्मध्यम इति अ. ।
‡ मायेन्द्र-इति अ. । § विदां च बुद्धिः इति अ. ।
¶ अध्यक्षरस्वभिनिविष्ट-इति अ. । *† पुरन्दरगुरोरब्धे बहुशस्यप्रदः शिवः । इति अ. । *‡ स्फीतानुपानैः-इति अ. । *§ स्वकर्म इति अ. ।

वराहसंहितायां तु ।

ध्वनिरुच्चरितोऽध्वरे द्युगामी विपुलो यज्ञमुषां मनांसि भिन्दन् ।
विचरन्त्यनिशं द्विजोत्तमानां हृदयानन्दकरोऽध्वरांशभाजाम् ॥
क्षितिरुत्तमशस्यवत्यनेकद्विपपत्त्यश्वधनोरुगोकुलाढ्या ।
क्षितिपैरतिपालनप्रवृद्धा द्युचरस्पर्धिजना तदा विभान्ति ॥
विविधैर्वियदुन्नतैः पयोदैर्वृतमुर्वीं पयसाऽभितर्पयद्भिः ।
सुरराजगुरोः शुभेऽथ वर्षे बहुशस्या क्षितिरुत्तमर्द्धियुक्ता ॥

विष्णुधर्मोत्तरे ।

शस्याढ्यो धर्मबहुलो गतातङ्को बहूदकः ।
कामिनां कामदः कामं सिताब्दो नृपपुष्टिदः ॥

यवनेश्वरस्तु ।

पर्याप्तशस्यस्फुटकृष्णमेघाः प्ररूढवल्लीनवशस्यपुष्पाः ।
कामः प्रकामः क्षितिपैरथाढ्यः शौक्रोऽङ्गनाहर्षवसुप्रदोऽब्दः ॥

वराहसंहितायां तु ।

शालीक्षुमत्यपि धरा धरणी धराभ-
धाराधरोज्झितपयःपरिपूर्णवप्रा ।
श्रीमत्सरोरुहतताम्बुतडागकीर्णा
योषेव भात्यभिनवाऽभरणोज्ज्वलाङ्गी ॥
क्षत्रं क्षितौ क्षपितभूरिबलारिपक्ष-
मुद्घुष्टनैकजयशब्दविराविताशम् ।
संहृष्टशिष्टजननष्टविनष्टवर्गां
गां पालयन्त्यवनिपा नगराकराढ्याम् ॥
पेपीयते मधु मधौ सह कामिनीभि-
र्जेगीयते श्रवणहारि सवेणुवीणाम्* ।

* सवेणुघोषम्–च इति ।

बोभुज्यतेऽतिथिसुहृत्स्वजनैः सहान्न-
मब्दे सितस्य मदनस्य जयावघोषः ॥

विष्णुधर्मोत्तरे ।

दुर्भिक्षमरकौ रोगान् करोति पवनं तथा ।
शनैश्चराब्दश्चौरांश्च विग्रहानिव भूभृताम् ॥

यवनेश्वरस्तु ।

दुष्टाल्पवर्षः प्रबलानिलोऽपि विपन्नशस्यश्चलितक्षितीशः ।
मृत्युक्षुधातङ्कभयोपसृष्टः शनैश्चराब्दः पशुशूद्रगोघ्नः ॥

वराहसंहितायां तु ।

उद्वृत्तदस्युगणभूरिरणाकुलानि
राष्ट्राण्यनेकपशुवित्तविनाकृतानि ।
रोरूयमाणहतबन्धुजनैर्जनैश्च
रोगोत्तमाकुलकुलानि बुभुक्षया च ॥
वातोद्धताम्बुधरवर्जितमन्तरीक्ष-
मारुग्णनैकविटपं च धरातलं द्यौः ।
नष्टाऽर्कचन्द्रकिरणातिरजोनिरुद्धा
तो याशयाश्च विजलाः सरितोऽपि तन्व्यः ॥
जातानि कुत्र चिदतोयतया विनाश-
मृच्छन्ति पुष्टिमपराणि जलोक्षितानि ।
शस्यानि मन्दमभिवर्षति वृत्तशत्रौ
वर्षे दिवाकरसुतस्य सदा प्रवृत्ते ॥

तत्रैव ।

अणुरपटुमयूखो नीचगो निर्जितो वा
न सकलफलदाता पुष्टिदाताऽन्यथाऽतः ।

यदशुभमशुभेऽब्दे मासजं तस्य वृद्धिः
शुभफलमपि चैवं याप्यमन्योन्यतायाम्॥

यवनेश्वरः।

अब्दाश्रयं लक्षणमीरितं यद्ग्रहस्वभावप्रभवं जनानाम्।
तदेव तन्मासदिनर्त्तुयुक्तं तदीश्वरस्थानविकल्पितं च॥

अथ वत्सराधिपगणनं विष्णुधर्मोत्तरे।

सप्तच्छिन्ने तु यच्छेषं कलियातसमागणे*।
आदित्यादिः स बोद्धव्यो ग्रहः संवत्सराधिपः॥

अथ कलेर्गतसंवत्सराः।

नन्दमैत्रा†ग्नि-३१७९संयुक्तः शककालः कलेर्गतः।

ब्रह्मसिद्धान्तकृता तु

"सावनवर्षाधिपोऽर्कादिः"‡—इत्युक्तम्।

अतस्तन्मतेनैतद्ग्रन्थारम्भशकाद्वर्षाधिपगणनम्।

खनवदश-१०९०शेषशाके माघप्रथमांशके सितोऽब्दपतिः।
चतुरंशोनैकाब्दे तुर्यस्य दिने तु सावनाब्दपतिः॥

एवम्।

वर्षाधिपास्तृतीयक्रमेण मासाधिपा ग्रहा ज्ञेयाः।
होरेशा वारेशा स्पष्टाहोराऽत्रनाडिके सार्धे॥

अत्राशुभफल वर्षे वर्षाधिपग्रहपूजाजपहोमादिका शान्तिः कर्त्तव्या।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे रव्यादिवर्षाद्भुतावर्त्तः।

---

* कलियातसमागणे इत्यत्र कल्पयातसमागणे इति पाठेन भवितव्यम्। ब्रह्मगुप्तेनेपि कल्पाभिप्रायेणैवार्कादिर्वर्षेश्वर आनीतः। † मैत्रशब्देनात्र सप्तदशग्रहणम्।

‡ द्रष्टव्यौ ब्राह्मस्फुटसिद्धान्ते मध्यगत्युत्तराध्यायस्य ४३-४४ श्लो.।

## अथ संवत्सराद्भुतावर्त्तः ।

विष्णुधर्मोत्तरे ।

आद्यः संवत्सरो नाम द्वितीयः परिवत्सरः ।
इदाख्यश्च तृतीयोऽत्र चतुर्थश्चानुवत्सरः ॥
तद्वत्सरोऽन्यः कथितस्तथा चैवात्र पञ्चमः ।

पराशरः ।

अथ वर्षेषु तावदाग्नेयः संवत्सरः परिवत्सर इदावत्सरश्चान्द्रो वायव्योऽथ वत्सरः ।

विष्णुधर्मोत्तरे ।

संवत्सरोऽग्निः परिवत्सरोऽर्क इदाभिधानो भगवाँच्छशाङ्कः ।
ब्रह्मा स्वयम्भूर*नुवत्सरोऽत्र इद्वत्सरः शैलसुतापतिश्च ॥
वृष्टिः समाद्ये प्रमुखे द्वितीये प्रभूततोया कथिता तृतीये ।
पश्चाज्जलं मुञ्चति यच्चतुर्थं स्वल्पोदकं पञ्चममब्दमुक्तम् ॥

वराहसंहितायामप्येवम्

पराशरस्तु ।

आग्नेये विद्यात् प्राबल्यमग्नेः पैत्तिकानां च रोगाणाम्। सौरे शङ्करसूनुनामक्षामपुष्पफलशस्यदमतीव । चान्द्रे ग्रैष्मिकाणां व्याधीनां बहुत्वमन्नस्य सम्पदं सर्वौषधीनां च विशेषेण क्षीरणीनाम्। वायव्ये वातवेगवान् वातरोगप्रबल्यं घनानामल्पोदकत्वं च । मार्त्यवे सर्वव्याधिप्राबल्यं बालमरकं गर्भस्रावं च—इति ।

अथ संवत्सरादिगणनम् ।

खनववियदिन्दु-१०९० हीना व्येकाः शकवत्सराः शरैस्तष्टाः ।
क्रमशोऽत्र संपरीदान्विन्द्व्याद्या वत्सराः पञ्च ॥

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते
ऽद्भुतसागरे संवत्सराद्यद्भुतावर्त्तः ।

---

* इदाग्निकः शीतमयूखशाली । प्रजापतिश्चाप्य—इति अ. ।

## अथ ऋक्षाद्यद्भुतावर्त्तः ।

ऋक्षं नक्षत्रं राशिश्च । वटकणिकायाम् ।

नक्षत्राणां तारकाः सग्रहाणां धूमज्वालाविस्फुलिङ्गान्विताश्चेत् ।
आलोकं वा निर्निमित्तं न यान्ति ध्वंसं यायात् सर्वलोकः सभूपः ॥

विष्णुधर्मोत्तरे ।

रोहिणीशकटं भिन्द्युर्ग्रहा यदि भवेत् तदा ।
नाशः प्रजानां क्रूरैश्च विशेषेणेह संक्रमे ॥

वराहसंहितयोः ।

प्राजापत्ये शकटे भिन्ने कृत्वेव पातकं वसुधा ।
केशास्थिशकलबाला कापालिकमिव व्रतं धत्ते ॥

बृहत्संहितायाम् ।

रोहिण्याऽनलभं च वत्सरतनुर्नाभिस्त्वषाढाद्वयं
सार्पं हृत् पितृदैवतं च कुसुमं शुद्धैः शुभैस्तैः फलम् ।
देहे क्रूरनिपीडितेऽग्न्यनिलजं नाभ्यां भयं क्षुत्कृतं
पुष्ये मूलफलक्षयोऽथ हृदये शस्यस्य नाशो ध्रुवम् ॥

काश्यपश्च ।

कृत्तिका रोहिणी चोभे संवत्सरतनुः स्मृता ।
आषाढाद्वितयं नाभिः सार्पं हृत् कुसुमं मघा ॥
क्रूरग्रहहते देहे दुर्भिक्षानलमारुताः ।
क्षुद्भयं तु भवेन्नाभ्यां पुष्ये मूलफलक्षयः ॥
हृदये शस्यहानिः स्यात् सौम्यैः पुष्टिः प्रकीर्त्तिता ।

पराशरः ।

अथ दश ऋक्षाणि रहस्यभूतानि भवन्ति । तद्यथा कृत्तिका रोहिणी मघा प्रौष्ठपदं सार्पमैन्द्रं वारुणं याम्यमाप्यं वैश्वदेवं च ।

तेषूपसृष्टेषु शुभग्रहाणां वक्रचारोदयास्तमयैः शुभानामप्यथ यथोक्त-चारैर्भूकम्पोल्कापातनिर्घाताशनिराहुकेतुविकृतैर्वर्षासु वर्षं विद्यात्। समग्रैरुपसृष्टैः फलसामग्र्यमसमग्रैरसामग्र्यम्। रोहिणीज्येष्ठा-प्रौष्ठपदानामुपघाते तीव्रतरं फलम्।

अपि च।

वारुणं पित्र्यमाग्नेयं ज्येष्ठामपि च रोहिणीम्।
पीडयेयुर्यदैतानि राहुषष्ठाधिकारिणः॥
दुर्भिक्षं जायते लोके शस्यमत्र न रोहति।
शुष्यन्ति सरितः सर्वाः पर्जन्यश्च न वर्षति॥
एतेष्वनुपतप्तेषु दशमर्क्षेषु कालवित्।
विमुक्तान्तकसन्तापं जगद्वर्षासु निर्दिशेत्॥

वराहसंहितायोः।

रविरविसुतभोगमागतं क्षितिसुतभेदनचक्रभूषितम्।
ग्रहणहतमथोल्कया हतं नियतमुखाकरपीडितं च यत्॥
तदुपहतमिति प्रचक्षते प्रकृतिविपर्ययपातमेव च।
निगदितपरिवर्गदूषणं कथितविपर्ययगं समृद्धये॥

निगदितपरिवर्गदूषणमिति रव्यादिभोगदुष्टं नक्षत्रं स्ववर्गदूषणं करोतीत्यर्थः।

अथ नक्षत्रवर्गः। वराहसंहितायाम्।

आग्नेये सितकुसुमाहिताग्निमन्त्रज्ञसूत्रभाष्यज्ञाः।
आकरिकनापितद्विज*पटकारपुरोहिताब्दज्ञाः॥
रोहिण्यां सुव्रतपण्यभूपधनियोगयुक्तशाकटिकाः।
गोवृषजलचरकर्षकशिलोच्चयैश्वर्यसंपन्नाः॥
मृगशिरसि सुरभिवस्त्राब्जकुसुमफलरत्नवनचरविहङ्गाः।
मृगसोमपीथिगान्धर्वकामुका लेखहाराश्च॥

---

* घटकार इति अ.।

रौद्रे वधबन्धानृतपरदारस्तेयशाठ्यभेदरताः ।
तुषधान्यतीक्ष्णगन्धाभि*चारवेतालकर्मज्ञाः ॥
आदित्ये सत्यौदार्यशौचकुलरूपधीयशोऽर्थयुताः ।
उत्तमधान्यं वणिजः सेवाभिरताः सशिल्पिजनाः ॥
पुष्ये यवगोधूमाः शालीक्षुवनानि मन्त्रिणो भूपाः ।
सलिलोपजीविनः साधवश्च यज्ञेष्टिसक्ताश्च ॥
अहिदेवे कृत्रिमकन्दमूलफलकीटपन्नगविषाणि ।
परधनहरणाभिरतास्तुषधान्यं सर्वभिषजश्च ॥
पित्र्ये धनधान्याढ्याः कोष्ठागारणि पर्वताश्रयिणः ।
पितृभक्तवणिक्शूराः क्रव्यादाः स्त्रीद्विषो मनुजाः ॥
प्राक्फाल्गुनीषु नटयुवतिसुभगगान्धर्वशिल्पिपण्यानि ।
कर्पासलवणमाक्षिकतैलानि कुमारकाश्चापि ॥
आर्यम्णे मार्दवशौचविनयपाखण्डदानशास्त्ररताः ।
शोभनधान्यमहाधनकर्मानुरताः समनुजेन्द्राः ॥
हस्ते तस्करकुञ्जररथिकमहामात्रशिल्पिपण्यानि ।
तुषधान्यं श्रुतयुक्ता वणिजस्तेजोयुताश्चात्र ॥
त्वाष्ट्रे भूषणमणिरागलेख्यगान्धर्वगन्धयुक्तिज्ञाः ।
गणितपटुतन्तुवायाः शालक्या राजधान्यानि ॥
स्वातौ खगमृगतुरगा वणिजो धान्यानि वातबहुलानि ।
अस्थिरसौहृदलघुसत्त्वतापसाः पण्यकुशलाश्च ॥
इन्द्राग्निदैवते रक्तपुष्पफलशाखिनः सतिलमुद्गाः ।
कार्पासमाषचणकाः पुरन्दरहुताशभक्ताश्च ॥

* मन्त्राभि-इति अ. ।

मैत्रे शौर्यसमेता गणनायकसाधुगोष्ठियानरताः ।
ये साधवश्च लोके सर्वं च शरत्समुत्पन्नम् ॥
पौरन्दरेऽतिशूराः कुलवित्तयशोऽन्विताः परस्वहृतः ।
विजिगीषवो नरेन्द्राः सेनानां चापि नेतारः ॥
मूले भेषजभिषजो गणमुख्याः कुसुममूलफलवार्त्ताः ।
बीजान्यतिधनवार्त्ता मूलफलैर्ये च वर्त्तन्ते ॥
आप्ये मृदवो जलमार्गगामिनः सत्यशौचधनयुक्ताः ।
सेतुकरवारिजीवकफलकुसुमान्यम्बुजातानि ॥
विश्वेश्वरे महामात्रमल्लकरितुरगदेवतासक्ताः ।
स्थावरयोधा भोगान्विताश्च ये तेजसा युक्ताः ॥
श्रवणे मायापटवो नित्योद्युक्ताश्च कर्मसु समर्थाः ।
उत्साहिनः सधर्मा भागवताः सत्यवचनाश्च ॥
वसुभे मानोन्मुक्ताः क्लीवाश्चलसौहृदाः स्त्रियो द्वेष्याः ।
दानाभिरता बहुवित्तसंयुताः शमपराश्च नराः ॥
वरुणेशे पाशिकमत्स्यबन्धजलजानि जलचरा जीवाः ।
सौकरिकरजकशौण्डिकशाकुनिकाश्चापि वर्गेऽस्मिन् ॥
आजे तस्करपशुपालहिंस्रकीनाशनीचशठचेष्टाः ।
धर्मव्रतैर्विरहिता नियुद्धकुशलाश्च ये मनुजाः ॥
आहिर्बुध्न्ये विप्राः क्रतुदानतपोयुता महाविभवाः ।
आश्रमिणः पाखण्डा नरेश्वराः सारधान्यं च ॥
पौष्णे सलिलजफलकुसुमलवणमणिशङ्खमौक्तिकाब्जानि ।
सुरभिकुसुमानि गन्धा वणिजो नौकर्णधाराश्च ॥
अश्विन्यामश्वहराः सेनापतिवैद्यसेवकास्तुरगाः ।

तुरगारोहा वणिजो रूपोपेतास्तुरगरक्षाः ॥
याम्येऽसृक्पिशितभुजः क्रूरा वधबन्धताडनासक्ताः।
तुषधान्यनीचकुलोद्भवा विहोनाश्च सत्येन ॥

वराहसंहितायाम्।

पूर्वात्रयं सानलमग्रजानां राज्ञां तु पुष्येण सहोत्तरणि।
सपौष्णमैत्रं पितृदैवतं च प्रजापतेर्भं च कृषीवलानाम् ॥
आदित्यहस्ताभिजिताश्विनानि वणिग्जनानां प्रवदन्ति तानि।
मूलत्रिनेत्रानिलवारुणानि भान्युग्रजातेः प्रभविष्णुतायाः ॥
सौम्येन्द्रचित्रावसुदैवतानि सेवाजनस्वाम्यमुपागतानि।
सार्पं विशाखाश्रवणाभरण्यश्चाण्डालजातेरभिनिर्दिशन्ति ॥

अथ प्रत्येकं मिलितानां च नक्षत्रतारकाणां पीडाफलम्। तत्र पराशरः।

अथर्क्षोपसर्गाः। अयथावद्योगश्चन्द्रमसः सूर्यानुप्रवेशो ग्रहोदयास्तमयो रश्मिसंसर्गः। स्थानचारः परिवेष उल्काभिघातो रश्मिहानिर्विवर्णमिति। तेषां तारावयवशः पृथक्पृथक् फलमुपदेक्ष्यामः। तत्र कृत्तिकानामाद्या तारोपसृष्टा कलिङ्गानां दुर्भिक्षमुत्पादयति। प्रादक्षिण्येन द्वितीया दस्युगणवैद्यकपीडनी। तृतीया नृपशस्यविनाशनी। चतुर्थी मगधकोशलानामुपतापाय। पञ्चमी विप्रान् पीडयति। षष्ठी दक्षिणपश्चिमान् जनवरान् निषादाँश्च। युगपदुपसृष्टाः सर्वाः शूरसूक्ष्ममत्स्यपुण्ड्रताम्रलिप्तगौरेयहाटकपाण्ड्रकामरूपवङ्गाङ्गवेणुबन्धनसत्यारण्याहिताग्निब्रह्मचारिणो धान्येषु यवानुपहन्ति। यच्चैकैकस्यां तारायामुक्तम्।

रोहिणीनां प्रागुत्तरेणाद्या तारोपसृष्टा मगधेशान् भुजगाँश्च पीडयति। उत्तरेण द्वितीया शस्यं सलिलं चोपतापयति। उत्तर

एव तृतीया सा भूपान् महान्ति च कुलानि। दक्षिणपूर्वा चोपतप्ता-श्रीजोपतापिनी दक्षिणतः। दक्षिणतः पञ्चमी प्रजानामुपतापाय। युगपदुपसृष्टाः सर्वा मौञ्जिपुरुषादगौडकपञ्चालबन्धुधुर्यमहिषकुरुजाङ्गलशूरसेनानाम्। अन्नानां शालयः पीडयन्ते। अस्यां पार्थिवानां शस्त्रप्रादुर्भावश्च। यच्चैकेकेश उक्तम्।

मृगशिरस्युत्तरेण या तारोपसृष्टा यतिमुनिब्राह्मणान् पीडयति। पूर्वेण द्वितीया तङ्गणोशीनरान्। तृतीया सर्वशस्यानि। युगपत् सर्वाः शाल्वनिषादगान्धारौदीच्याम्बष्ठविदेहान्। बीजेष्वलाबुकका-रुक्षोर्वारुकषष्टिकान्। यच्चैकैकस्यामुक्तशाल्वानां चाग्र्यम्।

आर्द्रायाः प्राग्भागस्योपतापे मालवादेविकानिवासिनश्चोपताप्यन्ते। दक्षिणस्य व्याधिचण्डालवैकृतिकबन्धनेपालानां कलिङ्गानां च सन्धिः। पश्चिमस्य मृगा धनुर्वृत्तयश्च। उत्तरस्य नदनदीपल्वलाक्षोदकचराश्च। सर्वतस्त्वश्मकाः। स्नेहेषु तैलं पयः सुरासवेषु। यच्च पार्श्वेषूक्तम्।

पुनर्वसोरुत्तरतारोपसर्गे देवमनुष्याः पीड्यन्ते। इतराया वणिजश्चावन्तिकाश्च। उभ्यां भरुकच्छपाण्ड्यापरान्तकान्तगिर्युपगिरिसूर्पोपावृत्तकाः। कार्पासं बीजेषु। यच्चोभाभ्यामुक्तम्।

पुष्ये पूर्वेणोपतप्तः पार्थिवान् पीडयति। दक्षिणेन चेदिमत्स्यान्। पश्चिमेन कुरून्। उत्तरेण क्षितीशान्। सर्वतः पाञ्चालसिन्धुसौवीरवर्धमाननास्तिक्यरामगिरिगौरीपुरनिवासिनः। कार्षिका द्विजाग्र्यमेधाविकधार्मिकदधिघृतपयांसि च। यच्च पार्श्वेषूक्तम्।

सार्पाणामुत्तरेणाद्या तारा तस्या उपसर्गाद्दंष्ट्रिण उपतप्य-

न्ते । प्रदक्षिणेन द्वितीयायाम् । अहिग्राहिमायाकारबन्धनपालाः । तृतीयायां गजगजाध्यक्षाः । तदनु चतुर्थ्युपसृष्टा तस्करान् विनाशयति । पञ्चमी दौवारिकान् खरकरभशूकरान् । षष्ठी भुजगसरीसृपसुरामैरेयविदानुपहन्ति । युगपत् सर्वा विदर्भनैमिषमणिमतीनिवासिनः । वर्षाशालिशुण्ठीकोद्रवविनाशाय । यच्चैकैकश उक्तम् ।

मघानां दक्षिणतारोपतापे वासिष्ठाः पीड्यन्ते । तदुत्तरेण द्वितीया । तस्यामुपतप्तायामौषधयस्ताम्रपर्णकाश्च । तृतीयायां वृक्ष्युपजीविनः । चतुर्थ्यां कोष्ठागाराणि पितृधान्यं च । पञ्चम्यां माहिष्मतीनिवासिनः । षष्ठ्यां नागा नागाश्रिताश्च । युगपदुपसृष्टासु मल्लताम्रपर्णकाधिपगणबाह्यानि । यच्चैकैकश उक्तम् ।

भाग्योत्तरतारोपघातेन किराताश्चोपताप्यन्ते । अपरायाः सुभगवनकाम्बोजाः । युगपदुपसृष्टे तदधिपतिपाञ्चालाभीरभागीरथमहापथविदेहान् पीडयतः । रसेषु गुडविकारान् । यच्चैकैकश उक्तम् ।

आर्यम्णस्य दक्षिणोपसृष्टा मगधाधिपतिविनाशाय । उत्तरा उत्तरनिवासिनां शस्यानां च । उभे विदेहशाल्वमत्स्याङ्गमगधनेपालत्रैपुराहिताग्नीनाम् । शस्येषु कुलत्थानाम् । यच्चैकैकश उक्तम् ।

सावित्रस्य पूर्वदक्षिणेन तारोपसृष्टा तस्करान् पीडयति । द्वितीया दक्षिणेन प्राच्यान् । तृतीयोत्तरेण सौरगिरिकान् । चतुर्थ्युत्तरेण योगयुगन्धरभिक्षुकान् । एतस्यां तु पञ्चमी समिकलोत्कलद्वीपपुरराष्ट्राणि । युगपत् सर्वा दण्डकमध्यारण्यकच्चेदिगोकर्णयामुनसप्तराष्ट्रवैणिकदशार्णाङ्गवङ्गसौरगिरिकांश्च । चतुष्पदेषु द्विरदान् । बीजेषु निष्पावमूलकानि । औषधेषु पीप्पलीम् । यच्चैकैकश उक्तम् ।

अथ चित्रा प्राच्यां दिशि उपसृष्टा चेदीनामपां चाहिताय याम्यायां दण्डकाश्मकानाम्। वारुण्यां नटनर्त्तकचित्रकराणाम्। सौम्यायामार्त्तिकानां भावानाम्। सर्वासु पञ्चालकैकयभागीरथकुरुगन्धर्वस्थलमद्रमाषमुद्गानाम्। विशेषतः कैकयश्रेष्ठानाम्। यच्चाशासूक्तम्।

स्वातिः पूर्वेणोपसृष्टा वातवृष्टिं जनयति। दक्षिणेनातिवृष्टिम्। पश्चिमेन सिन्धुसौराष्ट्रनृपाँश्चोपहन्ति। उत्तरेण यवनकाम्बोजान्। सर्वतस्तुशीनरावन्तिचेदिवासोदिव्याभिसारकदरदकाश्मीरोत्तरकुरूणामभावाय। शाकेषु सर्वपाराणाम्। चतुष्पदेष्वेकशफानाम्। पश्चाच्चाभिषिक्तः शैलाटविकश्च राजा विनश्यतीति।

विशाखोत्तरतारोपसर्गे कोशलेक्ष्वाकव उपसृष्यन्ते। इतरायां भ्रातरो विभक्ताः कुरवश्च। युगपदुपसर्गे यमजाः। शष्पेषु यवगोधूमाः। यच्चैकैकश उक्तम्।

ज्येष्ठामध्यमधिष्ण्योपघाते ज्येष्ठनृपतिप्रधानजननारीविनाशं विन्द्यात्। पूर्वेण विदेहानाम्। एकशफानां पशुषु। स्वदेशेषु नृपस्य। शस्येषु कलायानां च। यच्चैकैकश उक्तम्।

अनुराधानामुत्तरेण ज्योतिरुपहतं सन्धिविग्रहं मित्रभेदं स्वस्थकोशलानां चोपतापं जनयति। दक्षिणेन द्वितीयचमूपतिद्वाराऽधिपतीनाम्। तृतीयं दक्षिणेन बालेषु विदग्धानां च। चतुर्थं शस्यानां च। युगपदुपसृष्टा मगधाङ्गकाशिवैदेहभागीरथहिरण्यकुटुम्बकानाम्। तत्पश्चिमे यवनकाम्बोजानाम्। युगपत्सर्वास्विन्द्रप्रथममिन्द्रप्रस्थमाहेन्द्रगिरिम्। मध्यं पृथिव्याश्चेदिपृष्ठमभिसारं क्षेमधूर्तिदरदाँश्चोपहन्ति। मृगादिपशुहानिः। ऐडविडानां च श्रेष्ठस्येति। यच्चैकैकश उक्तम्।

मूलस्य पूर्वेणैकातारोपसृष्टा शस्यानां विपत्तये राष्ट्रदुर्भिक्षाय । उभे ग्रामनगरनिगमजनोपदेष्टृकर्णप्रावरणदस्युसौवीरमहिषमाहिष्मतीगिरिव्रजनिवासिनामभावाय । रसेषु च लवणस्य । मणिमतीनां च श्रेष्ठस्य । यच्चैकैकश उक्तम् ।

पूर्वाषाढायाः पूर्वेण ताराद्वयमुपसृष्टं कूपनदीसरःसागरसलिलाशयानामुपतापं जनयति । अपरं काशीनामवर्षं शवरेशविनाशं च । युगपच्चतस्रस्त्रिगर्त्तवीतिहोत्रभार्गववर्हिणप्रभासमार्यसुखं संजनयति । सागराश्रितांश्चोपहन्ति । मत्स्येषु वर्हिकान् माहिष्मत्याः श्रेष्ठम् । यच्चासां द्वन्द्वश उक्तम् ।

वैश्वदेवस्योत्तरेण धिष्ण्यद्वयमुपसृष्टं चतस्रः समाः प्रजाः पीडयन्ति । दक्षिणेनामात्यधर्मिष्ठकाशिपुत्रं गृहस्थान् । युगपत्सर्वेषूपतप्तेषु वीतिहोत्रमर्जुनायनताम्रपर्णसैन्धवारण्यनैमिषजच्युतमार्गकौशिकसारस्वतान् । सर्वाणि च पुण्यायतनानि वर्णेषु । ब्राह्मणान् । पार्थिवेषूग्यान् । यच्च द्वन्द्वश उक्तम् ।

तथाऽभिजिता मध्यतारोपतापः शोषयति देवान् । द्वितीयोत्तरेण ब्राह्मणानृषिगणाँश्च । तृतीया दक्षिणेन नृपराष्ट्रकामात्यान् । युगपत् सर्वान् ब्राह्मणान् ब्राह्मीं पुरव्रीहिमतीं पूर्वगङ्गां स्वर्गङ्गां कालकूटां स्वस्तिभद्रां सर्पातिपन्नगयवनद्वीपं ब्रह्मचारिणो द्वीपेषु भद्राश्वान् पर्वतेषु पञ्चपर्वतपुष्परुद्रकान् कुलेषु श्रेष्ठान् । यच्चैकैश उक्तम् ।

श्रवणस्य मध्यमतारोपसृष्टा धनुर्धराणामभावाय । अपरा दक्षिणेन शूरसेनानां क्षत्रस्य । उत्तरेण तृतीया शूरसेनयवनकाम्बोजानां च । युगपत् सर्वास्त्रिगर्त्तानर्त्तमालवक्षुद्रकार्जुनायनाभीरयौधेयाम्ब-

ष्ठसुह्मकानाम्। रसेषु सर्वरसानां च सकामानां च श्रेष्ठस्य। यच्चैकैकश उक्तम्।

धनिष्ठायाः पश्चिमेन तारोपसृष्टा शकयवनकाम्बोजोत्तरनेपालानामहिताय। द्वितीयोत्तरेणोत्तरपर्वतवासिनाम्। तृतीया पूर्वेण पूर्वसागरसंस्थितानाम्। चतुर्थी दक्षिणेन पक्षियवकलायसर्षपाणाम्। प्रत्यग्दक्षिणेन। पञ्चमी सिन्धुसौवीराभीराणाम्। युगपत् सर्वाः पाण्ड्यकेरलोड्रशोकमोकम्बमोकतलरवाङ्गवङ्गहेमकूटसिंहलोत्कलनैकरसमूलमध्यदेशवाह्लीकसैन्धवकालकूटेक्षुमती निवासिनाम्। शस्येषु मुद्गानाम्। शकेषु श्रेष्ठानाम्। यच्चैकैकश उक्तम्।

अथ वारुणं पूर्वणोपतप्तं कलिङ्गान् पीडयति। दक्षिणेन दक्षिणसमुद्रम्। पश्चिमेन पश्चिमभिषक्क्षुद्रौषधानि। चोत्तरेण सर्वौषधीः स्त्रोश्च सर्वतस्ताम्रपर्णीं ताम्रलिप्तकहाटकसह्यभरुकच्छपिङ्गभूपतिमलापरान्तकपुक्कशाश्मकपुरेन्द्रराष्ट्रसौरगिरिशैलेयपारियवनान्। शस्येषु यवगोधूमान्। ताम्रपर्णपार्थिवान्। यच्च पश्चेषूक्तम्।

प्राक्प्रोष्ठपदोत्तरतारोपसृष्टा मगधाङ्गपुण्ड्रयवनकाम्बोजानामुपतापकर्त्री। दक्षिणेनैकपगोमताम्। युगपदुभे भिषगम्बष्ठमेकलोत्कलपुलिन्दशबरदर्दुरमलयनर्मदासिन्धुसौवीरकाश्मीरहितहिरण्यबाहुवैशालेयशशकुन्तराजमार्गगोगजाश्वानाम्। यच्चैकैकश उक्तम्।

आहिर्बुध्न्योत्तरतारोपसृष्टा महात्मनां राज्ञामहिताय। अपरा मगधकाश्मीरराजानाम्। युगपदुभे काम्बोजोशीनरत्रिगर्त्तकाश्मकार्जुनायनक्षुद्रकमालवाभीराणाम्। सर्वत्र महतां कुशलानाम्। रसेष्विक्षुरसानाम्। यच्चैकैकश उक्तम्।

रेवती पूर्वेणोपसृष्टा पशूनुपहन्ति दक्षिणेनानर्त्तान्। पश्चिमे-

न वाल्हीकसिन्धुसौवीरकीरपह्लवान् । उत्तरेणापः सर्वतः सुराष्ट्रवैदेहहिरण्यपादक्षुद्रकमालवमलयजवृजिनहैमवतबाहुदाकुम्भिभोजानाम् । हिरण्यपादानां च श्रेष्ठम् । यच्च पार्श्वेषूक्तम् ।

आश्विनस्योत्तरतारोपसृष्टा किरातकाम्बोजगर्त्तपह्लवान् पीडयति । अपरा रूपधनगुणान्वितचिकिरसकैकद्दिशफानाम् । युगपदुभे प्राच्योदीच्यवाल्हीकपारतदरदकाशिवत्सनिषदानर्त्तान् किष्किन्धान् यवनानां च श्रेष्ठ बीजन्वौषधोन् । अध्यक्षेषु चाध्यक्षान् । यच्चैकैकश उक्तम् ।

भरणीनां प्राक्तारोपतप्ता मेकलोल्कलकलिङ्गान् पीडयति । दक्षिणा प्रत्यन्ततस्करान् उदक् प्राणिनः शस्यं च । सर्वाः शबरवर्वरपुलिन्दतिमिङ्गिलदुर्भटाङ्गवङ्गरोडुमेकलान् । सर्वदस्युकलिङ्गानां दक्षिणार्धम् । शस्येषु शूकधान्यम् । पूर्वमेकलानां श्रेष्ठं च । यच्चैकैकश उक्तम् ।

अत्रानुक्तविशेषशान्तिषु नक्षत्रोत्पातेषु प्रभूतकनकान्नगोमहीदानादिका सामान्यशान्तिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

एतेषां फलपाकसमयं पाकसमयावर्त्ते वक्ष्यामः ।

अथ ग्रहाणां नक्षत्रमार्गचारफलं वराहसंहितायाम् ।

उत्तरमार्गो याम्यादि निगदितो मध्यमस्तु भाग्यादि ।
दक्षिणमार्ग आषाढादि कैश्चिदेवं कृता मार्गाः ॥

तथा च गर्गः ।

भरण्यादौ मघान्ते च प्रथमे नवके गणे ।
वर्त्तमानः शुभो ज्ञेय उत्तरे पथि वर्त्तते ॥

उत्तरमार्गाश्रितः क्रूरग्रहोऽपि शुभफलो भवतीत्यर्थः ।

क्रूरो निर्ऋतिपर्यन्ते भाग्यादौ नवके गणे ।

वर्त्तमानश्च मध्यस्थो मध्यमे पथि वर्त्तते ॥

मध्यमार्गाश्रितः क्रूरग्रहोऽपि समफलो भवतीत्यर्थः ।

अश्वयुग्योगपर्यन्ताषाढादौ नवके गणे ।

वर्त्तमानः सदा क्रूरो दक्षिणे पथि वर्त्तते ॥

दक्षिणमार्गाश्रितः शुभग्रहोऽपि क्रूरफलो भवतीत्यर्थः ।

तिसृभिस्तिसृभिर्वा वीथीभिरप्युदग्दक्षिणमार्गा भवन्ति ।

यदाह गर्गः ।

पूर्वोत्तरा नागवीथी गजवीथी तदुत्तरा ।

ऐरावती तृतीया स्यादेवं तास्तूत्तराः स्मृताः ॥

आर्षभी तु चतुर्थी स्याद्गोवीथी पञ्चमी स्मृता ।

षष्ठी जारद्गवी ज्ञेयास्तिस्रस्ता मध्यमाश्रिताः ॥

सप्तमी मृगवीथी स्याद्दक्षिणं मार्गमाश्रिताः ।

अष्टमी त्वजवीथी स्याद्दहना नवमी तथा ॥

पराशरश्च ।

अथर्क्षमार्गास्त्रयो भवन्ति उत्तरमध्यदक्षिणाः । पुनरेकैकशस्त्रिधा नव वीथय इत्याचक्षते । उत्तरोत्तरे नागगजैरावत्यः । मध्ये ऋषभगोजारद्गव्यः । दक्षिणे नृगाजाविकाः । आसां नामान्यग्नेययाम्यवायव्यानि । गजवीथी रोहिण्यादीनि त्रीणि । चत्वारि गजैरावरयौ । आर्षभी फाल्गुन्यौ । गोवीथी प्राक्प्रौष्ठपदादीनि चत्वारि । श्रवणाश्रविष्ठावारुणानि जारद्गवी । मृगवीथी त्वाष्ट्रहस्तम् । आजी मैत्रमैन्द्राग्न्यम् । आविकेन्द्रमूलमाषाढे वैश्वानरं तमेयाच्छति ।

विष्णुधर्मोत्तरे ।

कृत्तिका याम्यवायव्या नागवीथ्युत्तरोत्तरा ।

गजवीथी उदङ्मध्ये प्राजापत्यादयस्तु या ॥

ऐरावती ह्युदग्याम्या आदित्यादिचतुष्टयम् ।

मध्योत्तरगताऽऽर्षभी फाल्गुन्योर्ऋक्षयोर्द्वयोः ॥
मध्यमध्ये तु गोवीथी अजाद्यं भचतुष्टयम् ।
मध्ययाम्ये जरद्गुः स्यात् त्रितयं श्रवणादिकम् ॥
याम्योत्तरेण तु मृगा हस्तचित्रे प्रकीर्त्तिते ।
अजा दक्षिणमध्ये तु विशाखा मैत्रसंयुता ॥
आविका स्यात् तु याम्ये तु शक्राद्यं भचतुष्टयम् ।
वैश्वानरपथं प्राहुस्तामेवात्यन्तदारुणम् ॥

वृद्धगर्गस्तु श्रवणादित्रयेण गोवीथीं पूर्वभाद्रपदादिचतुष्टयेन जरद्गवीं वीथीमाह । तद्यथा ।

वायव्यानलयाम्येषु नागाद्या उत्तरोत्तराः ।
रोहिण्यादिषु त्रिष्वेव द्वितीया गजवीथिका ॥
चतुर्ष्वादित्यपूर्वेषु तृतीयैरावती स्मृता ।
फाल्गुन्यौ चार्षभी ज्ञेया चतुर्थी मध्यमादिगा ॥
वैष्णवाद्येषु त्रिष्वाहुर्गोवीथीमथ पञ्चमीम् ।
षष्ठी चतुर्भिराजाद्यैर्वीथी जारद्गवी भवेत् ॥
सप्तमी मृगवीथी स्यात् सावित्रं त्वाष्ट्रमेव च ।
वैश्वानरी तथैन्द्राद्यैश्चतुर्भिर्नवमी भवेत् ॥
नागवीथ्युत्तराद्ये ता वीथ्यो नव निदर्शिताः ।

वराहसंहितायाम् ।

वीथीमार्गानपरे कथयन्ति यथास्थितान् भमार्गेषु ।

तथा च काश्यपः ।

नक्षत्राणां च ये मार्गा दक्षिणोत्तरमध्यमाः ।
त्रिधा विभज्य तानेव वीथीमार्गान् प्रकल्पयेत् ॥

अथ वीथीचारफलम् । तत्र गर्गः ।

उत्तरोत्तरमार्गस्था रश्मिमालाध्वगा ग्रहाः ।

निष्पन्दना इवात्यर्थं जयमाहुरुपस्थितम् ॥

विष्णुधर्मोत्तरे तु ।

उदयास्तमयेऽस्यां तु चारेणापि तथा ग्रहाः ।
उत्तरास्तु शुभा ज्ञेया दक्षिणाश्चाशुभा ग्रहाः ॥
सुप्रभारश्मिवन्तश्च नागवीथ्यां यदा ग्रहाः ।
तत् तदस्ति शुभं लोके यत्र पश्यन्ति मानवाः ॥
विरश्मयो विवर्णाश्च वैश्वानरपथाश्रिताः ।
न तदस्त्यशुभं नाम यत् तत् कुर्युर्जगत्त्रये ॥

वृद्धगर्गेण प्रत्येकवीथीफलमुक्तम् । तद्यथा ।

यदोदये प्रवासे वा चारे वा नागवीथिगाः ।
ग्रहास्तदाऽतिवर्षा स्यात् सुभिक्षक्षेम एव च ॥
गजवीथीगताश्चापि क्षेमवर्षसुभिक्षदाः ।
श्रेष्ठिकाश्चात्र पीड्यन्ते कुलानि च महान्ति च ॥
ऐरावत्यां सुभिक्षं स्याद्वर्षमारोग्यमेव च ।
नृपाः सवैरा जायन्ते बलक्षोभा भवन्ति च ॥
गोवीथ्यार्षभवीथ्योश्च मध्यमं शस्यमुच्यते ।
बलिनो गोमिनो गावः पीड्यन्ते च महानृपाः ॥
जरद्गुवीथ्यां पीड्यन्ते वित्तज्ञानवयोऽधिकाः ।
धान्यार्घाश्चापि वर्धन्ते रोगाश्चापि कफोत्तराः ॥
अजवीथ्यां च पीड्यन्ते विप्रा ये च प्रजाधिकाः ।
जायते चापि दुर्भिक्षं दुर्वृष्टिभयमेव च ॥
मृगवीथ्यां मृगव्याधाः पीड्यन्ते च तपस्विनः ।
क्षुद्भयं त्वपि वर्धेत विकाराश्चापि वातिकाः ॥
वैश्वानर्यां तथा वीथ्यां पित्तमग्निश्च जायते ।

मेघाश्च विलयं यान्ति धान्यादीनां च संचयाः ॥

वराहसंहितायाम् ।

नक्षत्राणां तारा याम्योत्तरमध्यमास्तद्वत् ।

याम्योत्तरमध्यमा नक्षत्रतारा यम्योत्तरमध्यमार्गान् कथयन्तीत्यर्थः ।

तथा च काश्यपः ।

उदक्स्थास्तारकाः सौम्यो मध्यस्था मध्यमस्तथा ।
दक्षिणे दक्षिणो मार्गो नक्षत्रेषु प्रकीर्त्तितः ॥

एतद्वद्ग्रहेषु यथासम्भवं बोद्धव्यम् ।

अथोत्तरादिमार्गेषु ग्रहाणामुदयास्तफलम् । तत्र गर्गः ।

उदयास्तमयं कुर्यान्मध्यमं मार्गमाश्रितः ।
मध्यमं वर्षशस्यं च योगक्षेमं च निर्दिशेत् ॥
उदयास्तमयं कुर्याद्दक्षिणं मार्गमाश्रितः ।
धान्यसंग्रहणं कृत्वा केदारेषु तिलान् वपेत् ॥

अत्रानुक्तविशेषशान्तिषु नक्षत्रमार्गतारोत्पातेषु चारकर्त्तृकग्रहपूजापूर्विका प्रभूतकनकान्नगोमहीदानादिका सामान्यशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

अथ दिग्देशनक्षत्रपीडाफलम् । तत्र पराशरः ।

कृत्तिकादीनि नक्षत्राणि मध्यदेशेऽस्मिन् वर्षे भवन्त्यार्द्रादीनि त्रीण्युक्तवर्गक्रमात् पूर्वादिष्वष्टसु दिक्षु दिङ्नक्षत्रेषूपसृष्टेषु दिग्जनपदानां तापो भवति ।

गर्गस्तु ।

कृत्तिकाद्यैस्त्रिनक्षत्रैर्भवर्गैर्नवभिः क्षितिः ।
कल्पिता मध्यदेशादिग्रामादिक्रमयोगतः* ॥
कृत्तिकादिस्त्रिनक्षत्रप्रथिता मध्यमा यदा ।

* मध्यदेशादौ प्रागादिक्रमयोगतः इति अ. ।

सा पीडिता पीडयति मध्यदेशमशेषतः ॥
रौद्रादिः पीडिता पूर्वां सार्पादिः पूर्वदक्षिणाम् ।
आर्यम्णादिस्तथा याम्यां स्वात्यादिर्दक्षिणां पराम् ॥
ज्येष्ठादिः पश्चिमामाशां वैश्वादिरुत्तरोत्तराम् ।
वारुणादिस्तथा सौम्यां पूर्वादिः पूर्व-उत्तराम् ॥

विष्णुधर्मोत्तरे ।

कृत्तिका रोहिणी सौम्या मध्यदेशस्य निर्दिशेत् ।
पीडिते त्रितये तस्मिन् मध्यदेशः प्रपीड्यते ॥
आर्द्रा पुनर्वसू पुष्पः पूर्वस्यां तु भवेद्दिशि ।
पीडिते त्रितये तस्मिन् पूर्वदेशः प्रपीड्यते ॥
सार्पं मित्रं तथा भाग्यमनलस्य दिशि स्मृतम् ।
पीडिते त्रितये तस्मिन्नाग्नेयी पीड्यतेऽथ दिक् ॥
आर्यम्णमथ हस्तं च त्वाष्ट्रं स्याद्दिशि दक्षिणे ।
पीडिते त्रितये तस्मिन् दक्षिणा दिक् प्रपीड्यते ॥
स्वातिर्विशाखा मैत्रं च नैर्ऋत्यां दिशि कीर्त्तितम् ।
पीडिते त्रितये तस्मिन् नैर्ऋती पीड्यतेऽथ दिक् ॥
ज्येष्ठा मूलं च तोयं च वरुणस्य दिशि स्मृतम् ।
पीडिते त्रितये तस्मिन् वारुणी पीड्यतेऽथ दिक् ॥
वायव्यां दिशि निर्दिष्टा वैश्ववैष्णववासवाः ।
पीडिते त्रितये तस्मिन्नैशानी दिक् प्रपीड्यते ॥

काश्यपस्तु ।

क्षितौ भारतवर्षेऽस्मिन् नवभागव्यवस्थया ।
बहुलाद्यास्त्रयो ऋक्षा* मध्यदेशादिषु स्थिताः ॥

---

* ऋक्षाणीत्यत्र ऋक्षा इत्यार्षः ।

क्रूरग्रहहते तैस्तु पीडयन्ते तन्निवासिनः ।
ते पीडामुपयास्यन्ति भिन्नैः क्रूरैश्च मर्दितैः ॥

विष्णुधर्मोत्तरे ।

स्वदेशपीडनं कुर्यान्नक्षत्रं पीडितं कथम् ।
सर्वमेतन्ममाचक्ष्व सर्वधर्मभृतां वर ॥

मार्कण्डेय उवाच ।

शनैश्चरार्कौ चारेण वक्रेणाङ्गारको ग्रहः ।
उपरागेण राहुस्तु केतुश्चाधूमनोदयैः ॥
उदयास्तमयाभ्यां च जीवशुक्रशशाङ्कजाः ।
संछादनेन च शशी असम्यग्योगतस्तथा ॥
तथा च यस्मिन् नक्षत्रे दिव्यपार्थिवनाभसाः ।
दृश्यन्ते सुमहोत्पाताः स्वां दिशं तत्र पीडयेत् ॥

पराशरस्तु ।

दिङ्नक्षत्रेषूपसृष्टेषु दिग्जनपदानामुपतापो भवति । विशेषतस्तु शूरसेनमगधकलिङ्गावन्तिसौरसैन्धवहारभूतिमद्रपुलिन्दाधिपतीनाम् ।

वराहसंहितायां तु ।

वर्गैराग्नेयाद्यैः क्रूरग्रहपीडितैः क्रमेण नृपाः ।
पाञ्चालो मागधिकः कालिङ्गश्च क्षयं याति ॥
आवन्तोऽथानर्त्तो मृत्युं चायाति सिन्धुसौवीरः ।
राजा च हारहौरो मद्रेशोऽन्यश्च कालिन्दः ॥

यदा उक्तविपरीतलक्षणं नक्षत्रं शुभग्रहादियुक्तं भवति तदा दिग्देशानामभ्युदयं करोति तथा चाभिहितक्रमेण मध्यप्रागादिदिग्देशानां नक्षत्राण्यभिधायोक्तम् ।

मार्कण्डेयपुराणे ।

एतत्पीडास्वमी देशाः पीडयन्ते ये क्रमोदिताः ।

यान्ति चाभ्युदयं विप्र ग्रहैः सम्यग्व्यवस्थितैः ॥

अथ दिग्देशाः । तत्र काश्यपः ।

कुशस्थलं यजन्ती च उपज्योतिष्मती पुरी ।
मध्यमाश्च कलिङ्गाग्रकपित्थाः शूरसेनकाः ॥
आश्वत्था गुडनीपाश्च मेदाः काञ्चनकास्तथा ।
मन्दारमेदकालिङ्गाः कैकेया कुचरा अपि ॥
गौरग्रीवाः सपाखण्डाः पारियात्रकमेकलाः ।
सारस्वता माथुराश्च पाञ्चाला यामुनास्तथा ॥
कुरुक्षेत्रं कालकोटी तथा स्याद्धस्तिनापुरम् ।
पाण्डवाः पाण्डुशाल्वाश्च उज्जिहाननिवासिनः ॥

पराशरस्तु ।

अथ मध्यदेश आर्यावर्त्त इति च आख्यायते । तत्र जनपदाः शूरसेनोद्दैहिकमद्राश्वत्थ*नीपकाञ्चनककौरवोत्तमज्यौतिषभद्रारिमेदमाध्यमिकशाल्वशाकेतमत्स्यकपिष्ठलदौलेयमाण्डव्याः । पाण्डुनगरगौरग्रीवपारियात्रमरुकुकुरौदुम्बरयामुनगजाह्वौज्जिहानकालकोटिमथुरोत्तरदक्षिणपाञ्चालधर्मारण्यकुरुक्षेत्रसारस्वताः ।

मार्कण्डेयपुराणे तु ।

भद्रारिमेदमाण्डव्यशाल्वनीपास्तथा शकाः ।
उज्जिहानास्तथा वत्सघोषसंख्यानयामुनाः ॥
मत्स्याः सारस्वता वत्साः शूरसेनाः समाथुराः ।
धर्मारण्या ज्यौतिषिका गौरग्रीवा गजांशकाः ॥
वैदेहकाः सपाञ्चालाः साकेताः कङ्कमारुताः ।
कालकोट्यः सपाखण्डाः पारियात्रनिवासिनः ॥

---

* पाण्डुगुडाश्वत्थ—इति अ. ।

कापिष्ठलाः कुकुराद्यास्तथैवोदुम्बरा जनाः ।
गजाह्वयाश्च कूर्मस्य जलमध्यनिवासिनः ॥

वराहसंहितायाम् ।

भद्रारिमेदमाण्डव्यशाल्वनीपोज्जिहानसंख्याताः ।
मरुवत्सघोषयामुनसारस्वतमत्स्यमाध्यमिकाः ॥
माथुरकोपज्यौतिषधर्मारण्यानि शूरसेनाश्च ।
गौरग्रीवोद्देहिकपाण्डुगुडाश्वत्थपाञ्चालाः ॥
साकेतकङ्कमरुकालकोटिकुकुराह्वपारियात्रनगाः ।
औदुम्बरकापिष्ठलगजाह्वयाश्चेति मध्यमिदम् ॥

वटकणिकायां तु ।

मध्यमुदक्पाञ्चाला गङ्गाया उत्तरं कुरुक्षेत्रम् ।
उदगपि च पारियात्रं मरुमथुरायोध्यमत्स्याश्च ॥
सारस्वतयामुनवत्सघोषसंस्थाननीपमाण्डव्याः ।
भद्रारिमेदनैमिषशाल्वोपज्यौतिषाश्वत्थाः ॥
औदुम्बरकुकुराह्वोज्जिहानगजशाल्वपाञ्चालाः ।
माध्यमिकोद्देहिककालकोटिकापिष्ठलं मध्ये ॥

अथ पूर्वदिग्देशाः । तत्र काश्यपः ।

पूर्वे मालवका भद्रा मिथिला पौण्ड्रवर्धनम् ।
काशिकोशलसूक्ष्माश्च मागधा मेकलास्तथा ॥
व्याघ्रवक्त्राः सूर्पकर्णा लौहित्यः शोण एव च ।
प्राग्ज्यौतिषमहेन्द्रादिकिराताः क्षीरवासिनः ॥

पराशरस्तु ।

अथ पूर्वस्यां च मालवशिविराञ्जनपद्मवृषभध्वजोदयशिखरिदन्तुरकाः काशिकोशलमगधमिथिलामेकलोत्कलपुण्ड्रककर्वटसम-

तटोड्रगौडकभद्रद्रविडसुह्मताम्रलिप्तप्राग्ज्यौतिषवर्धमानवाजिमुखा-म्बष्ठपुरुषादसूर्पकर्णिकोष्ठाधिश्रोत्रव्याघ्रमुखलौहित्यार्णवक्षीरोदार्ण-वमीनाशनकिरातसौवीरमहीधरा विवासिनैकपादोदयनिवासिनश्च ।

मार्कण्डेयपुराणे तु ।

वृषध्वजोऽञ्जनश्चैव पद्माख्यो मलयाचलः ।
सूर्पकर्णव्याघ्रमुखौ गुर्वर्कः कर्पटाशनः ॥
तथा चन्द्रपुराश्चैव खशाः समगधास्तथा ।
शिवयो मिथिला औड्रास्तथा वदनदन्तुराः ॥
प्राग्ज्यौतिषाश्च लौहित्याः सामुद्राः पुरुषादकाः ।

वराहसंहितायां तु ।

अथ पूर्वस्यामञ्जनवृषभध्वजपद्ममाल्यवद्गिरयः ।
व्याघ्रमुखसुह्मकघटचान्द्रपुराः सूर्पकर्णाश्च ॥
खशमगधशिविरगिरिमिथिलसमतटोड्राश्ववदनदन्तुरकाः ।
प्राग्ज्यौतिषलौहित्यक्षीरोदसमुद्रपुरुषादाः ॥
उदयगिरिभद्रगौडकपौण्ड्रोत्कलकाशिमेकलाम्बष्ठाः ।
एकपदताम्रलिप्तककोशलका वर्धमानाश्च ॥

अत्र प्रधानदेशा वटकणिकायाम् ।

आर्द्रादिकाशिकोशलमिथिलोत्कलवर्धमानपौण्ड्रोड्राः ।
लौहित्यमगधसमतटमेकलखशताम्रलिप्ताश्च ॥

अथाग्नेयीदिग्देशाः । तत्र काश्यपः ।

आग्नेय्याशास्थिता ये च विन्ध्यं मलयपर्वतम् ।
विदिशाश्च दिशार्णश्च बङ्गा अङ्गाः कलिङ्गकाः ॥
किष्किन्धाः शूकराः पुण्ड्राः पाठराश्च विदेहकाः ।
क्षत्रियाः शवरा नग्ना नालिकेरार्णवाश्रिताः ॥

पराशरस्तु ।

अथ प्राग्दक्षिणस्यां विन्ध्यातटवासिनश्चेदिवसतिदशार्णा-ङ्गबङ्गोपबङ्गकलिङ्गजठरपुण्ड्रकशूलिकविदर्भनग्नपर्णकशबरकाश्च । क्षत्रपुरपूरिककण्टस्थलवृषद्वीपकोशलोर्ध्वकर्णोड्रचार्मत्वग्लूतकाक-चारुहेमकूटव्यालग्रीवमहाग्रीवश्मश्रुधरनालिकेरद्वीपकिष्किन्धाधि-वासिनः ।

मार्कण्डेयपुराणे तु ।

कलिङ्गबङ्गजठराः कोशलाः शूलिकास्तथा ।
चेदयश्चोर्ध्वकर्णाश्च मत्स्यान्ध्रा विन्ध्यवासिनः ॥
विदर्भनालिकेराश्च चर्मद्वीपास्तथाऽलिकाः ।
व्याघ्रग्रीवा महाग्रीवास्त्रैपुराश्मश्रुधारिणः ॥
किष्किन्ध्यहिमकूटाश्च निषधाः कण्टकस्थलाः ।
दशार्णा हरिका नग्ना निषदाः काकुलालकाः ॥
तथैव पर्णाः शवराः पादे वै पूर्वदक्षिणे ।

वराहसंहितायां तु ।

आग्नेयां दिशि कोशलकलिङ्गबङ्गोपबङ्गजठराङ्गाः ।
मैथिलविदर्भमत्स्यान्ध्रवैदिकाश्चोर्ध्वकर्णाश्च* ॥
वृषनालिकेरचर्मद्वीपा विन्ध्यान्तवासिनस्त्रिपुरी ।
श्मश्रुधरहेमकूट†व्यालग्रीवा महाग्रीवाः ॥
किष्किन्ध्यकण्टकस्थलनिषादराष्ट्राणि पुरिकदाशार्णाः ।
सह नग्नपर्णशवरैराश्लेषाद्ये त्रिके देशाः ॥

अथ प्रधानदेशा वट्टकणिकायाम् ।

आश्लेषाद्ये त्रैपुरनिषादराष्ट्राणि चेदिदाशार्णाः ।
पूरिका विन्ध्यान्तस्था वत्सान्ध्रविदर्भकालिङ्गाः ॥

* ध्वंकण्ठाश्च इति अ. । † हेमकुड्य—इति अ. ।

अथ दक्षिणदिग्देशाः । तत्र काश्यपः ।

याम्ये माहेन्द्रमलयविन्ध्यं च कुसुमाकरम् ।
स्रमालिनी स्त्रीराष्ट्रं च धान्यं दशपुरन्दरा ॥
अवन्ती दर्पणं चैव कर्कोटकवनं तथा ।
कौन्तमार्गणकोपारा दण्डकारण्यमेव च ॥
प्रवालं मौक्तिकं शङ्खं वैडूर्यं ताम्रधातवः ।

प्रवालादि तस्योत्पत्तिस्थानमिति

ऋष्यमूकगिरी रम्यं ापशाश्रममेव च ।
कोङ्कणं चित्रकूटं च भरुचीपट्टनं तथा ॥
पट्टनं बलदेवस्य कार्मणेयकमेव च ।
नासिका चैव गोनर्दकर्णाटद्रविडानि च ॥
ककुलाङ्गालकोटिश्च निद्रा पाश्वनदाश्रिताः ।
वैखण्डं कालेयं मालं सूर्पावर्त्तं कुजावहम् ॥
तथा भोगवती चेति विख्याता दक्षिणादिशि ।

पराशरस्तु ।

अथ दक्षिणस्यां विन्ध्यकुसुमापीडदर्दुरमहेन्द्रसूर्पावर्त्तमलयमालवावन्तिशावरत्रिदशपुरैककर्णभवकच्छर्दिकपवनवासोपगिरिनगरदण्डकगणराष्ट्रस्त्रीराज्यकर्कोटकवनतिमिङ्गिलसमहर–ऋष्यमूकतापसाश्रमचम्पाशङ्खमुक्ताप्रवालवैडूर्याकरोडूत्रिवारिचरविरिञ्चिदक्षिणार्णवचोलककौवेरकावेरीपिशिकधर्मपट्टनपट्टिकासिकृष्णवर्णताम्रपर्णनर्मदाकाञ्चीपट्टनकलिकटिसेनाकीर्णहरिणकारवेणीतटतुम्बवनवैखण्डकालाजिनद्वीपिकर्णिकारशिविकोङ्कणचित्रकूटकार्णाटहारिकान्ध्रकोलगिरिनासिक्यर्क्षकार्मणेयकविघातकचोचिलकबलदेवपट्टनक्रौञ्चद्वीपसिंहलाः । परमगोवर्धनमलयमरुचित्रकूट-

कर्कोटवनवासी*शिविकामणिकारकोङ्कणाभीराः ।
आकरवेणावर्त्तकदशपुरगोनर्दकेरलकाः ॥
कर्णाटमहाटविचित्रकूटनासिक्यकोलगिरिचोलाः ।
क्रौञ्चद्वीपजटाधरकावेर्यो ऋष्यमूकश्च ॥
वैडूर्यशङ्खमुक्तात्रिवारिचरधर्मपट्टनद्वीपाः ।
गणराष्ट्रकृष्णवेल्लूरपिशिकसूर्पाद्रिकुसुमनगाः ॥
तुम्बवनकार्मणेयकयाम्योदधितापसाश्रमा ऋषिकाः ।
काञ्चीमरुचीपट्टनचेर्यार्यकसिंहला ऋषभाः ॥
बलदेवपट्टनं दण्डकावनं तिमिङ्गिलाशना भद्राः ।
कच्छोदकन्दरदरीसताम्रपर्णीति विज्ञेयाः ॥

अथ प्रधानदेशा वटकणिकायाम् ।

आर्यम्णार्ये चोलिक†कोङ्कणवनवासिकोर्ण‡गिरिमलयाः ।
उज्जयिनीभरुकच्छा दिशा च याम्याऽर्णवं यावत् ॥

अथ नैर्ऋतीदिग्देशाः । तत्र काश्यपः ।

नैर्ऋत्यां दिश्यमी देशाः सिन्धुपह्लवकच्छपाः ।
आभीराः शूद्रसौवीरा रैवताः क्रीतभीषणम् ॥
कालेयाः फलगिरयो वर्वराः खण्डमुञ्जकाः ।
यवना मार्गणानर्त्ताः कर्णप्राचेयकास्तथा ॥
किराता द्रविडाः सिन्धुस्त्रीमुखाः कपिलास्तथा ।
प्रभावमङ्गसंदेशं महासागर एव च ॥

पराशरस्तु ।

अथ प्रत्यग्दक्षिणस्यां महाराष्ट्रसिन्धुसुराष्ट्रसौवीरशूद्राभीरद्रविडकेतकसिन्धुकोलकहेमगिरिरैवतकानर्त्तकवाह्लीकयवनप-

* कङ्कटकङ्कणवनवासि-इति अ. । † चैदिक-इति अ. । ‡ कोल्ल-इति ।

ह्लवर्वरधूम्राम्बष्ठकर्णप्रवरकशिरोवासिनोऽतः परं महार्णवो यत्रौर्वकोषजोऽग्निर्वडवामुखः—इति ।

मार्कण्डेयपुराणे तु ।

काम्बोजाः पह्लवाश्चैव तथै वडवामुखाः ।
तथैव सिन्धुसौवीराः सानर्त्ता वनितामुखाः ॥
यवना मार्गणाः शूद्राः कर्णप्रावेयवर्वराः ।
किराताः पारताः पाण्ड्यस्तथा पारशवाः कुलाः ॥
प्रचुका हेमगिरिकाः सिन्धुकालकरैवताः ।
सौराष्ट्रवादराश्चैव द्रविडाश्च महार्णवाः ॥
एते जनपदाः पादे स्थिता वै दक्षिणापरे ।

वराहसंहितायां तु ।

नैर्ऋत्यां दिशि देशाः पह्लवकाम्बोजसिन्धुसौवीराः ।
वडवामुखारवाम्बष्ठकपिलनारीमुखानर्त्ताः ॥
फेणगिरिपवनमार्गणकर्णप्रावेयपारशवशूद्राः ।
वर्वरकिरातषण्ढक्रव्यादाभीरचञ्चुमुखाः* ॥
हेमगिरिसिन्धुकालकरैवतकसुराष्ट्रवादरद्रविडाः ।
स्वात्याद्ये भत्रितये जेयश्च महार्णवोऽत्रैव ॥

अथ प्रधानदेशा वटकणिकायाम् ।

स्वात्याद्ये सिन्धुसौवीरकपिलवनितास्यमार्गणानर्त्ताः ।
वर्वरमगधसुराष्ट्राः काम्बोजद्रविडरैवतकाः ॥

अथ पश्चिमदिग्देशाः । तत्र काश्यपः ।

पश्चिमेऽस्तगिरेः शृङ्गे महेन्द्रो नाम पर्वतः ।
महोपलो महाहेमशृङ्गः शानुभिराकुलः ॥

---

* चञ्चूकाः इति अ. ।

वामनः शृङ्गका वैश्या तारक्षुरकशकास्तथा ।
केशान्तिका हैहयाश्च निर्मर्यादाश्च ये नराः ॥

पराशरस्तु ।

अथ पश्चिमायां मणिमतृक्षुरार्पणमेघवद्वनौघचक्रवदस्तगिरि-प्रशस्ताद्रिमण्डिताः पञ्चनदकाशिब्रह्मवसतितारक्षितिपारतशान्ति-कशिविरमहाशृङ्गिवायव्यगुडवासिजहैहयसत्कङ्कताजिकहूणपार्श्व-वैकतकवोक्काणाः । अन्ये च गिरिवासिनस्त्यक्तधर्ममर्यादा म्लेच्छ-जातयः ।

मार्कण्डेयपुराणे ।

मणिमेघः क्षुराद्रिश्च खञ्जनोऽस्तगिरिस्तथा ।
अपरान्तिका हैहयाश्च शान्तिकादिप्रशस्तिकाः ॥
वोक्काणाः पञ्चनदका वामनाः पारतास्तथा ।
तार्क्ष्या ऋक्षाङ्गलकाः शर्कराः शाल्मवैश्यकाः ॥
गुरुपर्वाः फाल्गुनका वेणुमत्यां च ये जनाः ।
एकेक्षणाः शशरुहा दीर्घग्रीवास्तु सैनिकाः ॥
अश्वकेशास्तथा पुच्छे जनाः कूर्मस्य संस्थिताः ।

वराह संहितायां तु ।

अपरस्यां मणिमान् मेघवान् वनौघः क्षुरार्पणोऽस्तगिरिः ।
अपरान्तिकशान्तिकहैहयप्रशस्ताद्रिवोक्काणाः ॥
पञ्चनदरमठपारततारक्षुभितं स*वैश्यकनकशकाः ।
निर्मर्यादा म्लेच्छा ये पश्चिमदिक्स्थितास्ते च ॥

अथ प्रधानदेशा वटकणिकायाम् ।

ज्येष्ठादितोऽपरान्तिकशकहैहयभङ्गपाञ्चनदकतकाः ।
निर्मर्यादा म्लेच्छाः शान्तिकवोक्काणवैश्याश्च ॥

---

* तारक्षितिजृङ्ग इति अ. ।

अथ वायव्यदिग्देशाः । तत्र पराशरः ।

अथ पश्चिमोत्तरस्यां दिशि गिरिमतिवेणुमतिरलमतिफाल्गुनकमाण्डव्यैकनेत्रमरुकुत्सतुषारताल*फलमद्रहलहंसवलाहानलानदीर्घकेशग्रीवाठ्यङ्गाचर्मबङ्गखगशूलिगुरुहकुलाताः परमतः स्त्रीराष्ट्रम्-इति ।

मार्कण्डेयपुराणे तु ।

माण्डव्याश्च तुषाराश्च अश्वफाललतास्तथा ।
कुलूतालद्रुमाश्चैव स्त्रीराष्ट्रलोहिकास्तथा ॥
नृसिंहा वेणुमत्याश्च वनावस्थास्तथा परे ।
चर्मबङ्गास्तथा लूकास्तन्त्रकूर्चास्तथा जनाः ॥
तथा फाल्गुनका घोरा गुरुहा शूलिकास्तथा ।
एकेक्षणा वाजिकेशा दीर्घग्रीवास्तथैव च ॥
वामपादे जनाश्चैते स्थिताः कूर्मस्य भागुरः ।

वराहसंहितायां तु ।

दिशि पश्चिमस्योत्तरस्यां माण्डव्यतुषारतालहलमद्राः ।
अश्मककुलूतहलडाः स्त्रीराष्ट्रनृसिंहवनखस्थाः ॥
वेणुमती फल्गुलुका गुलुहा मरुकुत्स चर्मरङ्गाख्याः ।
एकविलोचनशूलिकदीर्घग्रीवास्यकेशाश्च ॥

अत्र प्रधानदेशा वटकणिकायाम् ।

विश्वेश्वरादिशूलिकतालतुषारैकनेत्रमाण्डव्याः ।
स्त्रीराज्यचर्मरङ्गाश्महलारुहक फल्गुलुकाः ॥

अथोत्तरदिग्देशाः । तत्र काश्यपः ।

उत्तरस्यां तु कैलासं मरुमुत्तरजान् कुरून् ।

---

* तालमल्लहलडहलातवर्दिलीनवीलन-इति अ. । † कुञ्च-इति अ.

त्रिशातयः क्षुद्रपीनाः क्रौञ्चोऽथ हिमवान् गिरिः ॥
कैकया यमुनाश्चैव भोगप्रस्थाः क्षुरा नगाः ।
आदर्शाश्च त्रिगर्त्ताश्च उत्तराः केशधारिणः ॥
तक्षशिलाः पिङ्गलकाः कण्ठधाराश्च मानवाः ।
पुष्करावतकैराताश्चिपिटानासिकाश्च ये ॥
मालवाः पिङ्गलाधर्मा यौधेया दासमेयकाः ।
हूणा हयमुखाश्चैव गान्धारा हेममालकाः ॥
राजन्याः खचरा गव्याः श्यामकाः क्षेमधूर्त्तकाः ।

पराशरस्तु ।

अथोत्तरस्यां हिमवत्क्रौञ्चमधुमत्कैलाशवसुवन्मेरुनगोत्तरोत्तरमद्रपौरवयौधेयमालवशूरसेनराजन्यार्जुनायनत्रिगर्त्तकैकयक्षुद्रमालवकमत्स्यवसातिदर्भफलाफलाग्निस्थलपुस्थलशाकलक्षेमधूर्त्तदासमेयानहव्यमुरदण्डगव्यनव्यजनधानादाशेरकवाटधानान्तर्द्वीपगान्धारवन्दिसुरास्तुततक्षशिलालवणत्रिपुष्करावर्त्तयशोवतिमणिवतिश्यामकशवरकोहलकनगरशरभूतिपरकैरातकदशान्तदशपिङ्गलयामुनेयमणिफलद्दुणहेमतालाश्वमुखाः । हिवद्धसुमत्कैलाशक्रौञ्चत्पपरमभिजना—इति ।

मार्कण्डेयपुराणे तु ।

कैलासो हिमवाँश्चैव धनुष्मान् दर्दुरस्तथा ।
क्रौञ्चः कुरवकाश्चैव क्षुद्रमीनाश्च ये जनाः ॥
वशाभयः सकेकया भोगप्रस्थाः सयावनाः ।
अन्तर्द्वीपास्त्रिगर्त्ताश्च अग्निक्षामार्जुनायनाः ॥
तथैवाश्वमखाः प्रान्ताश्चिपिटाः केशधारिणः ।

दासेरका वाटधानाः शरधानास्तथैव च ॥
पुष्करावर्त्तकैरातास्तथा तक्षशिलाश्रयाः ।
असुरा मालवा मुण्डाः कैशिकाः शरदण्डकाः ॥
पिङ्गला माणहलका हूणाः कोहलकास्तथा ।
मण्डव्या भूतिपुलकाः शातका हेमतालकाः ॥
यशोमत्स्याः सगान्धाराः खचराः सव्यवामकाः ।
यौधेया दासमेयाश्च राजन्याः श्यामकास्तथा ॥
क्षेमधूर्त्ताश्च कूर्मस्य वामकुक्षिमुपाश्रिताः ।

वराहसंहितायां तु ।

उत्तरतः कैलासो हिमवान् कुसुमान् गिरिधनुष्मांश्च ।
क्रौञ्चो मेरुः कुरवस्तथोत्तराः क्षुद्रमीनाश्च ॥
कैकेयवसातियामुनभोगप्रस्थार्जुनायनाम्बष्ठाः ।
आदर्शान्तर्द्वीपत्रिगर्त्ततुरगाननाः श्वमुखाः ॥
केशधरचिपिटनासिकदासेरकवाटधानशरधानाः ।
तक्षशिलपुष्कलावतकैरातककण्टधानाश्च ॥
अम्बरमद्रकमालवपौरवकच्छारदण्डपिङ्गलकाः ।
माणहलहूणकोहलशीतकमाण्डव्यभूतपुराः ॥
गान्धारयशोवतिहेमतालराजन्यखचरगव्याख्याः ।
यौधेयदासमेयाः श्यामाकाः क्षेमधूर्त्ताश्च ॥

अथ प्रधानदिग्देशा वटकणिकायाम् ।

शतभिषगाद्ये कैकयगान्धारा दर्शयामुनाश्चीनाः* ।
दासेयचिपिटनासार्जुनायना दण्डपिङ्गलकाः ॥

* श्रीन्ध्राः इति अ. ।

अथैशानीदिग्देशाः। तत्र काश्यपः।

ऐशान्यां दिशि काश्मीरं दरदश्च सतङ्गणाः।
अभिसारकुलूता ये सौहृद्यं नष्टराज्यकम्॥
चीनाः किरातकाम्बोजाः कौलिन्दा वनराज्यकाः।
ब्रह्मपुरदीर्घलोलं पह्लवा एकपादकाः॥
सुवर्णं भूरत्नं विश्वावसु धनं च जटाधरः।
दिविष्ठाश्च धरा ये च कुलटाः कुन्तिकारिणः॥
पौरवाश्चीनवसनास्त्रिनेत्राः पुञ्जगा नगाः।
पशुपालगणाध्यक्षाः कनकाचलवासिनः॥
गान्धर्वाः कीरदेशाख्यदासमेया जनास्तथा।
एते कूर्मविभागेन विषया भारते स्थिताः॥

पराशरस्तु।

अथ प्रागुत्तरस्यां कौलूतपुरब्रह्मपुरकुलिन्ददिनपारतनष्टराज्यनवराष्ट्रवैमकेणभल्लसिंहपुरचामरतङ्गणसार्यकमाषकपार्वतकाश्मीरदरददार्वाभिसारजटाधरलोलसैरिन्ध्रिककारकौन्तलकिरातपशुपालचीनस्वर्णभूमिदेवस्थलदेवोद्यानानि।

मार्कण्डेयपुराणे तु।

मेरुकं नष्टराज्यं च पशुपालं सचोलकम्।
काश्मीरं च तथा राष्ट्रमभिसारजनस्तथा॥
दरदास्तङ्गणाश्चैव कुलटा वनराष्ट्रकाः।
गिरिष्ठा ब्रह्मपुरकास्तथैव वनराज्यकाः॥
किराताश्चीनकालिन्दा जनाः पह्लवलोलजाः।
दीर्घा डामरकाश्चैव कुलटाश्चानुदीनकाः॥
एकपादाः खशा घोषाः स्वर्णभौमाः सविश्वकाः।

तथा वसुवनादिस्थाश्चीनप्रावरणाश्च ये ॥
त्रिनेत्राः पौरवाश्चैव गन्धर्वाश्च द्विजोत्तम ।
पूर्वोत्तरं तु कूर्मस्य पादमेते समाश्रिताः ॥

वराहसंहितायां तु ।

ऐशान्यां मेरुकनष्टराज्यपशुपालकीरकाश्मीराः ।
अभिसारदरदतङ्गणकुलूतसैरिन्ध्रवदनराष्ट्राः ॥
ब्रह्मपुरदीर्घडामरवनराज्यकिरातचीनकौलिन्दाः ।
पह्लवलोलजटाधरकुलटाः खशघोषकुशिकाख्याः* ॥
एकचरणान्ध्रविश्वाः† सुवर्णभूर्वसुधनं दिविष्ठाश्च ।
पौरवचीरविवसनास्त्रिनेत्रमुञ्जाद्रिगान्धर्वाः ॥

अत्र प्रधानदेशा वटकणिकायाम् ।

पौष्णाद्ये काश्मीरार्णवश्च‡ दरदाभिसारचीनखशाः ।
तङ्गणकीरकुलूताः§ ब्रह्मपुरजटासुराश्चेति ॥

राशेस्तदधिपस्य पीडायामपि राशिदेशानां पीडा भवति ।
तथा च मार्कण्डेयपुराणे ।

कूर्मे देशास्तथार्क्षाणि देशेष्वेतेषु वै द्विज ।
राशयश्च तथार्क्षेषु ग्रहराशिष्ववस्थिताः ॥
तस्माद्ग्रहर्क्षपीडासु देशपीडां विनिर्दिशेत् ।
यस्यर्क्षस्य पतिर्यो हि ग्रहस्तद्धानितो भयम् ॥
तद्देशस्य मुनिश्रेष्ठ तथोत्कर्षे शुभागमे ।
मेषादयस्तयोर्मध्ये मुखे द्वौ मिथुनादिकौ ॥
प्राग्दक्षिणे तथा पादे कर्किसिंहौ व्यवस्थितौ ।

---

* भल्लाः पटोलजटासुरकुनटखसघोषकुचिकाख्याः इति अ. ।
† एकचरणानुविद्धाः इति अ. । ‡ काश्मीरत्रिगर्त्त-इति अ. ।
§ तङ्गणकिरातकीरा इति अ. ।

सिंहः कन्या तुलश्चैव कुक्षौ राशित्रयं स्मृतम् ॥
तुला च वृश्चिकश्चोभौ पादे दक्षिणपश्चिमे ।
पृष्ठे च वृश्चिकश्चैव सहधन्वी व्यवस्थितः ॥
वायव्ये चास्य वै पादे धनुर्ग्राहादिकं त्रयम ।
कुम्भमीनौ तथैवास्य उत्तरं कुक्षिमाश्रितौ ॥
मीनमेषौ द्विजश्रेष्ठ पदे पूर्वोत्तरे स्थितौ ।
तस्माद्विज्ञाय देशर्क्षग्रहपीडां तथाऽऽत्मनः ॥
कुर्वीत शान्तिं मेधावी लोकवादांश्च सत्तम ।
आकाशाद्देवतानां च देशादीनां च दौर्हृदाः ॥
पृथिव्यां पतिता लोके लोकवादा इति स्मृताः ।
तांस्तथैव बुधः कुर्याल्लोकवादान् न हापयेत् ॥
तेषां तु करणान्नृणामुक्तो दृष्ट्वाऽऽगमक्षयः ।
तस्माच्छान्तिपरः प्राज्ञो लोकवादरतस्तथा ॥
लोकवादांश्च शान्तिं च ग्रहपीडासु कारयेत् ।
भूद्रोहानुपवासांश्च शस्त्रचैत्यादिवन्दनम् ॥
जपं होमं तथा दानं स्नानं क्रोधादिवर्जनम् ।

दानं प्रभूतकनकादीनाम् ।

अक्रोधं सर्वभूतेषु मैत्रं कुर्यात् तु पण्डितः ।
वर्जयेदसतीं वाचमभिवादांस्तथैव च ॥
ग्रहपूजां च कुर्वीत सर्वपीडासु मानवः ।
एवं शमन्त्यशेषाणि घोराणि द्विजसत्तम ॥
प्रयतानां मनुष्याणां ग्रहर्क्षोत्थान्यसंशयम् ।

अथ कृत्तिकादीनामष्टमासिकः प्राकावर्त्तोक्तः फलपाकसमयः । राशेस्तु सामान्योक्तः संवत्सरः ।

अथ नाडीनक्षत्रपीडाफलम् । तत्र पराशरः ।

ग्रहैरुपहतं यस्य नक्षत्रमिह दृश्यते ।
विद्यात् पराभवं तस्य कर्म चास्य विपद्यते ॥
चतुर्थं जन्मनक्षत्रं यस्मात् तन्मानसं भवेत् ।
सांघातिकं षोडशकं यदृक्षं प्रसवर्क्षतः ॥
यन्मानसर्क्षादेकोनविंशं सामुदयं स्मृतम् ।
दशमं जन्मनक्षत्रान्नक्षत्रं कर्मसंज्ञितम् ॥
वैनाशिकं तु नक्षत्रं कर्मर्क्षाद्यच्चतुर्दशम् ।

विष्णुधर्मोत्तरे ।

यस्मिन् भे जननं यस्य जन्मर्क्षं तस्य तत् स्मृतम् ।
चतुर्थं जन्मनक्षत्रं यस्मात् तन्मानसं भवेत् ॥
दशमं जन्मनक्षत्रान्नक्षत्रं कर्मसंज्ञितम् ।
सांघातिकं षोडशं स्यान्नक्षत्रं प्रसवर्क्षतः ॥
यन्मानसर्क्षादेकोनविंशं सामुदयं स्मृतम् ।
वैनाशिकं तु नक्षत्रं कर्मर्क्षाद्यच्चतुर्दशम् ॥
यन्नक्षत्रस्तु पुरुषः सर्वप्रोक्तो महीयते ।
राजा तु नवनक्षत्रान्नक्षत्रत्रितयं शृणु ॥
नित्यमभ्यधिकं षड्भ्यः पार्थिवस्य नृपोत्तम ।
देशाभिषेकनक्षत्रे जातिनक्षत्रमेव च ॥
जात्याश्रितानि वक्ष्यामि नक्षत्राणि तवानघ ।
पूर्वात्रयं तथाऽग्नेयं ब्राह्मणानां प्रकीर्त्तितम् ॥
आदित्यमाश्विनं हस्तं शूद्राणामभिजित् तथा ।
सार्पं विशाखा याम्यं च वैष्णवं च नराधिप ॥

प्रतिलोमभवानां तु सर्वेषां परिकीर्त्तितम् ।

योगयात्रायां वराहः ।

जन्मर्क्षमाद्यं दशमं च कर्म सांघातिकं षोडशमृक्षमाद्यात् ।
अष्टादशं स्यात् समुदायसंज्ञं वैनाशिकं विंशतिभिस्त्रिभिश्च ॥
यत् पञ्चविंशं खलु मानसं च यद्भक्ष एवं पुरुषस्तु सर्वः ।
राज्ञो नवर्क्षाणि विदन्ति जातिदेशाभिषेकैः सहितानि तानि ॥
कूर्मोपदेशादिह देशभानि राज्ञोऽभिषेकेऽहनि चाभिषेकम् ।
"पूर्वात्रयं सानलमग्रजानां राज्ञां तु पुष्येण सहोत्तराणि ॥
सपौष्णमैत्रं पितृदैवतं च प्रजापतेर्भं च कृषीवलानाम् ।
आदित्यहस्ताभिजिदाश्विनानि वणिग्जनानां प्रभवन्ति तानि ॥
मूलत्रिनेत्रानिलवारुणानि भान्युग्रजातेः प्रभविष्णुतायाः ।
सौम्यं तु चित्रावसुदैवतानि सेवाजनस्वाम्यमुपागतानि ॥
सार्पं विशाखाश्रवणा भरण्यश्चाण्डालजातेरभिनिर्दिशन्ति"* ।

बृहद्यात्रायां च वराहः ।

जन्माद्यं कर्म ततो दशमं सांघातिकं च षोडशभम् ।
समुदयमष्टादशभं विनाशसंज्ञं त्रयोविंशम् ॥
नामानुरूपमेषां सदसत्फलमिष्टपापगुणदोषात् ।

ज्योतिःपराशरविष्णुधर्मोत्तरयोः ।

इह देहार्थहानिः स्याज्जन्मर्क्ष उपतापिते ।
कर्मर्क्षे कर्मणां हानिः पीडा मनसि मानसे ॥
मूर्त्तिद्रविणबन्धूनां हानिः सांघातिके हते ।
संतप्ते सामुदयिके मित्रभृत्यार्थसंचयः ॥
वैनाशिके विनाशः स्याद्देहद्रविणसम्पदाम् ।

---

* "इदं श्लोकत्रयं बृहत्संहितायामप्युपलभ्यते तदर्थं द्रष्टव्यम्" अ. पुस्तकस्य पृ. ३०४ ।

पराशरस्तु ।

एतेष्वनुपतप्तेषु मानवो नोपतप्यते ।
ऋक्षेषु षट्सु युगपत् संतप्तेष्वाशु नश्यति ॥

विष्णुधर्मोत्तरे तु ।

पीडिते चाभिषेकर्क्षे राष्ट्रभ्रंशं विनिर्दिशेत् ।
देशर्क्षे पीडिते पीडां देशस्य च पुरस्य च ॥
पीडिते जातिनक्षत्रे राज्ञां व्याधिं विनिर्दिशेत् ।

वराहसंहितायां तु ।

रोगाभ्यागमवित्तनाशकलहाः संपीडिते जन्मभे
सिद्धिं कर्म न याति कर्मणि हते भेदस्तु सांघातिके ।
वित्तस्योपचितस्य सामुदयिके संपीडिते संक्षये
वैनाशे तु भवन्ति कायविपदश्चिन्तासुखं मानसे ॥
निरुपद्रुतभो निरामयः सुखभुङ्नष्टरिपुर्धनान्वितः ।
षडुपद्रुतभो विनश्यति त्रिभिरन्यैश्च सहावनीश्वरः ॥

योगयात्रायां वराहः ।

न भवति शरीरपीडा यस्य विना शान्तिभिः पीडा ।
तस्य शरीरविपत्तिं पाकान्ते देवलः प्राह ॥

अथ शान्तिमाह पराशरः ।

तत्र जन्मर्क्षोपतापे श्वेतवृषभस्य शकृन्मूत्रं तद्वर्णायाश्च गोः पयः कुशाँश्चोदकुम्भे निधायाभिषेचनं कुर्यात् ।

काश्यपश्च ।

श्वेतदन्तिशकृन्मूत्रैः श्वेतगोपयसा कुशैः ।
कलशैरभिषेक्तव्यो जन्मर्क्षं यस्य पीडितम् ॥

विष्णुधर्मोत्तरे तु

शकृन्मूत्रे च संगृह्य श्वेतस्य वृषभस्य तु ।
श्वेतगोपयसा सार्धं स्नातव्यं शुभवारिणा ॥

वराहसंहितायां तु।

सितगोक्षीरवृषभशकृन्मूत्रैः सह पूर्णकलशाद्यैः।
स्नानं जन्मनि दुष्टेष्वाचारवतां हरति पापम्॥

कर्मर्क्षपीडायां शान्तिमाह। पराशरः।

कर्मर्क्षे गौरसर्षपप्रियङ्गुशतपुष्पीशतावरीभिरभिषिक्तो मधुघृतमिश्रमग्नौ हुत्वा दशरात्रं ब्रह्मचारी मांसक्षारक्षौद्रमद्यानि वर्जयेत्।

काश्यपस्तु।

शतावर्या प्रियङ्ग्वा च गौरवर्णैश्च सर्षपैः।
शतपुष्प्याऽभिषेक्तव्यं कर्मर्क्षं यस्य पीडितम्॥
जुहुयान्मधुसर्पिर्भ्यामयुतं तु जितेन्द्रियः।
मधुमांसं न भुञ्जीत कट्वाम्ललवणानि च॥

विष्णुधर्मोत्तरे।

सिद्धार्थकान् प्रियङ्गुं च शतपुष्पां शतावरीम्।
स्नातव्यमम्भसि क्षिप्त्वा कर्मर्क्षे तूपपीडिते॥

वराहसंहितायां तु।

कर्मणि मधुघृतहोमो दशाहमक्षारमद्यमांसादः।
दूर्वाप्रियङ्गुसर्षपशतपुष्पशतावरीस्नानम्॥

अथ सांघातिकनक्षत्रपीडायां शान्तिमाह पराशरः।

सांघातिके प्रियङ्गुविल्वसितसर्षपशरलपिप्पलशतावरीचन्दनोदकैरभिषेकं कुर्यात्।

काश्यपः।

प्रियङ्ग्वा सर्षपैर्विल्वैः पिप्पलैः शरलैर्यवैः।
चन्दनेन शतावर्या स्नानं सांघातिके हते॥

विष्णुधर्मोत्तरे।

प्रियङ्गुविल्वसिद्धार्थयवाश्वत्थासुरप्रियाः।

चन्दनोदकसंयुक्ताः स्नानं सांघातिके हते ॥

वराहसंहितायां तु ।

सांघातिके तु तप्ते मांसमधुक्षौद्रमन्मथाँस्त्यक्त्वा ।
दान्तो दूर्वां जुहुयाद्दानं दद्याद्यथाशक्ति ॥

अथ सामुदायिकनक्षत्रपीडायां शान्तिमाह पराशरः ।

सामुदयिके सर्वगन्धसर्षपाक्षतैस्त्र्यहं स्नानं सुमनोभिरभिनवैः कुसुमैश्च द्विजानर्च्चयेत् ।

काश्यपस्तु ।

अक्षतैः सर्षपैः पुष्पैः सर्वगन्धसमन्वितैः ।
त्रिरात्रं स्नपनं कुर्यात् सामुदये हतेऽशुभैः ॥

गन्धशास्त्रे ।

अगरुं कुङ्कुमं चन्द्रं चन्दनं च चतुःसमम् ।
सर्वगन्धमिति प्राहुः समस्तसुरवल्लभम् ॥

वराहसंहितायां तु ।

सामुदायिके तु दद्यात् काञ्चनरजतान्युपद्रुते धिष्ण्ये ।

अथ वैनाशिकनक्षत्रपीडायां शान्तिमाह पराशरः ।

वैनाशिके वृषशृङ्गोद्धृतमृद्बिल्वोत्पलसोमशतपुष्प्यम्भसाऽभिषेकं कुर्यात् ।

काश्यपः ।

वैनाशिके वृषशृङ्गमृत्तिकोत्पलसंयुजा ।
शतपुष्प्या पूर्णकुम्भैः स्नानं दुरितनाशनम् ॥

विष्णुधर्मोत्तरे तु ।

सर्वगन्धोदकैः स्नानं तथा सिद्धार्थकैः शुभैः ।
शतपुष्प्या ससोमाख्यैः स्नानं वैनाशिके भवेत् ॥

वराहसंहितायां तु ।

वैनाशिकेऽन्नपानं वसुधां तु गुणान्वितां दद्यात् ।

अथ मानसनक्षत्रपीडायां शान्तिमाह पराशरः।

मानसेऽश्वत्थसितचन्दनशिरीषकुञ्जरमदाम्भसा सुस्नातस्तो
यभवैः कुसुमैः सोममभ्यर्चयेत्। व्रतं चान्द्रायणमाचरेत्।

काश्यपश्च।

शिरोषं चन्दनं शुक्लं वारणस्य मदोदकम्।
नीरजैः फुल्लकह्लारैरुदकुम्भाभिषेचनम्॥
व्रतं चान्द्रायणं कुर्यान्मानसे ह्युपतापिते।

विष्णुधर्मोत्तरे तु।

शिरीषचन्दनाश्वत्थगजदानाम्बुभिर्नरः।
स्नातस्तु मानसे तप्ते तस्माद्दोषाद्विमुच्यते॥

वराहसंहितायां तु।

मानसतापे होमः सरोरुहैः पायसैर्द्विजा भोज्याः।
गजमदशिरीषचन्दनबलातिबलवारिणा स्नानम्॥

अथाभिषेकदेशजातिनक्षत्रपीडायां शान्तिर्विष्णुधर्मोत्तरे।

पोडिते चाभिषकर्क्षे सर्वरत्नोदकैस्तथा।
पीडिते देशनक्षत्रे मृद्भिः स्नानं विधीयते॥
मृत्तिकाश्च प्रवक्ष्यामि गदतः शृणु मे नृप।
नदीकूलद्वयान्नद्योः सङ्गमात् सरसस्तटात्॥
अश्वस्थानाद्गजस्थानाद्गोस्थानाद्गिरिमस्तकात्।
शक्रस्थानात् सवल्मीकाद्राजस्थानाद्वनालयात्॥
गजशृङ्गोद्धृता चैव वृषशृङ्गोद्धृता तथा।
सर्वबीजोदकस्नातो जातिनक्षत्रपीडनात्॥
मुच्यते किल्बिषाद्राजन् नात्र कार्या विचारणा।

देवीपुराणे सर्वबीजानि।

यवगोधूममुद्गानि शालिः षष्टिक आढकी।

तिलमाषाः प्रशान्ती च श्यामाकाशरराल्कः ॥

आढकी तु रविप्रसारिनीवारः । रालकः कङ्गुः ।

विष्णुधर्मोत्तरे स्नानमन्त्रः ।

इदमापः प्रवहतः स्नानमन्त्रः प्रकीर्त्तितः ।

स्नानं तथैवं नृपचन्द्र पश्चात् स्नानं प्रकुर्याद्गृहसंप्रविष्टम् ।

पीडाकरस्याथ ततस्तु कार्यं नक्षत्रपीडाभिहितं यथावत् ॥

पीडाकरस्याथ ततस्तु कार्या पूजा ग्रहेन्द्रस्य नरेन्द्रचन्द्र ।

संपूजयेच्चाप्यथ चन्द्रयुक्तं ततः स दोषान् सकलान् जहाति ॥

अथैकदैव पीडितषड्नक्षत्रपीडायां शान्तिः । तत्र काश्यपः ।

उदुम्बरफलैर्बिल्वैः शतावर्या प्रियङ्गुभिः ।

अथर्वशिरसा जप्तैस्तोयैः सर्वाभिषेचनम् ॥

वराहसंहितायां तु ।

सर्वेषां पीडायां दिनमेकमुपोषितोऽनलं जुहुयात् ।

सावित्र्या क्षीरितरोः समिद्भिरमरद्विजानुरतः ॥

पराशरः ।

यथानक्षत्रपूजां बल्युपहारमग्निहोमं च कुर्यात् ।

अथ दिनरात्र्योस्तारकदर्शनादर्शनफलं बार्हस्पत्ये ।

निर्निमित्तं ज्योतिषां चेद्दिवासंदर्शनं भवेत् ।

रात्रावनभ्रे यदि वाऽदर्शनं तद्विगर्हितम् ॥

वराहसंहितायाम् ।

व्यभ्रे निश्युडुनाशो दर्शनमपि वाऽह्नि दोषकरम् ।

मत्स्यपुराणे तु ।

रात्रावनभ्रगगने भयं स्यादृक्षवर्जिते ।

दिवा सतारे गगने तथैव भयमादिशेत् ॥

अरण्यकाण्डे खरवधनिमित्तम् ।

उदभासद्दिवा चन्द्रस्तारागणसमन्वितः* ।

---

* उत्पेतुश्च विना रात्रिं ताराः खद्योतसप्रभाः—इति वाल्मीकीये उक्तस्थले उपलभ्यते ।

गार्गीये ।

यस्मिन् देशे दिवा तारा दृश्यते दिवि कर्हि चित् ।
तस्य देशस्य यो राजा सराष्ट्रः स विनश्यति ॥

वराहसंहितायाम् ।

त्रिदशगुरौ नृपतिवधो दिवा दृष्टे········ ।

पराशरस्तु ।

कदा चिद्दृश्यते यत्र दिवा देवपुरोहितः ।
राजा च म्रियते तत्र सर्वदेशो विनश्यति ॥

जन्मनक्षत्रादिस्थे बृहस्पतौ दिवा दृष्टे नृपवधः । अन्यत्र तु देशनाशः—इति ।

विष्णुधर्मोत्तरे ।

अकस्माद्यत्र दृश्येत दिवा देवपुरोहितः ।
राजा वा म्रियते तत्र सर्वदेशो विनश्यति ॥

पराशरः ।

अहः सर्वं यदा शुक्रो दृश्यते तु महाग्रहः ।
तदा चागन्तुभिर्ग्रामा बध्यन्ते नगराणि च ॥

अहः सर्वमिति शौक्रं सकलसावनमित्यर्थः । सकलसौरसावनदिने भार्गवदर्शनासम्भवात् ।

वराह संहितायाम् ।

दृष्टो मस्तगतोऽर्को भयकृत् क्षुद्रोगकृत् समस्तगतः ।
अर्धदिवसे तु सेन्दुर्नृपपुरबलभेदकृच्छुक्रः ॥

मस्तगत इति पञ्चमुहूर्त्तोनप्रहरत्रयं यावत् । तत्रैव मस्तकस्थापयित्वादर्कस्य समस्तमहरिति प्रागेव व्याख्यातं तदयुक्तम् । अनस्तमितेऽपि सूर्ये सदैव पुष्टो भार्गवो दृश्यत एव यतः । अतो मस्तगत इत्येष एव पाठः ।

वटकणिकायाम् ।

यमारयोः पवनहुताशजं भयं ह्यदृष्टयोरसहितयोश्च सद्ग्रहैः ।

तारकाणां दिवा दर्शने रात्रावदर्शने च मत्स्यपुराणविष्णुधर्मोत्तरवराहसंहितोक्ताग्निवैकृतशान्तिः कर्त्तव्या । तां चान्यद्भुतावर्त्ते लिखिष्यामः ।

अथ राश्यद्भुतानि । तत्र काश्यपः ।

चतुःपञ्चद्विसप्तस्थो नवदिग्रुद्रगो गुरुः ।
यस्य राशेस्तदुक्तानां द्रव्याणां वृद्धिकृत् स्मृतः ॥
द्व्येकादशदशार्थाष्टसंस्थितः शशिजः शुभः ।
शुक्रः सप्तरिपुस्थो वा हानिकृद्वृद्धिगोऽन्यगः ॥
पापास्तूपचयस्थाश्च वृद्धिं कुर्वन्ति नान्यगाः ।

वराहसंहितयोः ।

राशेश्चतुर्दशार्थायसप्तनवपञ्चमस्थितो जीवः ।
द्व्येकादशपञ्चाष्टमसंस्थः शशिजश्च वृद्धिकरः ॥
षट्सप्तमगो हानिं वृद्धिं शुक्रः करोति शेषेषु ।
उपचयसंस्थाः क्रूराः शुभदाः शेषेषु हानिकराः ॥

काश्यपः ।

इष्टस्थाने स्थिताः सौम्या बलिनो येषु राशिषु ।
भवन्ति तद्भवानां तु द्रव्याणां शुभदाः स्मृताः ॥

वराहसंहितायां तु ।

इष्टस्थाने सौम्या बलिनो येषां भवन्ति राशीनाम् ।
तद्द्रव्याणां वृद्धिः सामर्घ्यं सुलभताऽत्रैव ॥

काश्यपः ।

राशेरनिष्टस्थानेषु पापाश्च सबलाः स्थिताः ।
तद्द्रव्याणां नाशकरा दुर्लभास्ते भवन्ति च ॥

वराहसंहितायां तु ।

राशेर्यस्य क्रूराः पीडास्थानेषु संस्थिता बलिनः ।
तत्प्रोक्तद्रव्याणां महार्घता दुर्लभत्वं च ॥

अथ मेषादिराशीनां द्रव्याणि । तत्र काश्यपः ।

मेषे सुवर्णस्थलजगोधूमाजाविकास्तथा ।

वराहसंहितयोस्तु ।

वस्त्राविककुतुपानां मसूरगोधूमरालकयवानाम् ।
स्थलसम्भवौषधीनां कनकस्य च कीर्त्तितो मेषः ॥

यवनेश्वरस्तु ।

भूमेः कृषेः शस्यसुवर्णताम्रधात्वग्निजन्याहवसंश्रमाणाम् ।
गजाश्वबालव्यजनातपत्रशक्तिध्वजस्तेनचमूपतीनाम् ॥
अजाविकातीक्ष्णकरद्रुमादित्वक्पत्रदग्धप्रहतक्षतानाम् ।
मनःशिलागैरिकरक्तयुक्तिद्रव्याधिकारो विहितोऽजराशिः ॥

काश्यपः ।

वृषे महिषगोवस्त्रशालयः पुष्पसम्भवः ।

वराहसंहितायां तु ।

गवि वस्त्रकुसुमगोधूमशालियवमहिषसुरभितनयाः स्युः ।

यवनेश्वरस्तु ।

क्रीडाविहारस्त्रगपत्यनारीविद्यारतोद्यानसभाप्रपानाम् ।
सर्पिर्दधिक्षीररसस्य पुष्पमन्थानगोलाङ्गुलकर्षकाणाम् ॥
युगाक्षशय्याशकटाक्षचक्रगन्धाक्षताम्भोमहिषर्षभाणाम् ।
सौभाग्यरत्नाम्बरदण्डकानां प्रभुर्वृषः कोषगृहाश्रमाणाम् ॥

काश्यपः ।

मिथुने शारदं धान्यं वल्लीकार्पासशालुकाः ।

वराहसंहितायां तु ।

मिथुनेऽपि धान्यशारदवल्लीशालूककार्पासाः ।

यवनेश्वरस्तु ।

पुंस्त्रीरतिद्यूतविहारशिल्पगन्धर्वगीतस्मितवादितानि ।
व्यायामचित्रायुधलेख्यपांशुसंवादसंमश्रितपुस्तकानि ॥

द्वन्द्वार्थयोगो मिथुनौषधादिज्ञानोपदेशव्यवहारधीराः ।
नैपुण्यवैकारिकदम्भजीवा राशेस्तृतीयस्य नटाः सधूर्त्ताः ॥

काश्यपः ।

कर्कटे फलदूर्वादि कोद्रवः कदली तथा ।

वराहसंहितायां तु ।

कर्किणि कोद्रवकदलीदूर्वाफलकन्दपत्रचोचानि ।

यवनेश्वरस्तु ।

नारीतरस्विश्रुतवृद्धिविप्राः सरांसि वाप्यः कुमुदोत्पलानि ।
द्रव्याणि शीतानि मृदुद्रवाणि स्वादूनि संजीवनहर्षणानि ॥
नक्राः समण्डूककुलीरकूर्माः शाकानि पुष्पाणि च वारिजानि ।
फेनाः सकुन्ता जलजीविनश्च राशेश्चतुर्थस्य परिग्रहाः स्युः ॥

काश्यपः ।

सिंहे धान्यं सर्वरसाः सिंहादीनां त्वचो गुडः ।

वराहसंहितयोस्तु ।

सिंहे तुषधान्यरसाः सिंहादीनां त्वचः सगुडाः ।

यवनेश्वरस्तु ।

शैलाटवीशृङ्गविषास्थिकाष्ठत्वग्मांसरोमाजिनतान्तवानाम् ।
आरण्यजानां नखदन्तिशृङ्गिकुरुङ्गरूक्षोक्षुरसौषधीनाम् ॥
व्याधेष्टकृद्द्विप्रनृमुख्यभूभृन्मूर्छाग्निशौण्डिककाञ्चनानाम् ।
ऋत्विग्भिषग्मन्त्रभृदुद्धतानां सिंहो निरुक्तो विभुरोजसां च ॥

काश्यपः ।

कन्या कुलत्थमुद्गानां नीवाराणां कलायकम्* ।

वराहसंहितयोस्तु ।

षष्ठेऽतसीकलायाः कुलत्थगोधूमनिष्पावाः ।

---

* कन्यायां मुद्गनीवारकुलत्थाः सकला यवाः इति अ. ।

यवनेश्वरस्तु ।

कन्यारतिप्रायिकसङ्गताग्निवनप्रलम्बिद्रवभूमिभूपाः ।
मुखेषु रागाञ्जनगात्रभूषाः स्त्रीक्रीडनादर्शसमुद्भवानि ॥
प्रदीपिकानौगिरिकोत्तरीयस्त्रोशिल्पकाव्यश्रुतिपार्थलेख्याः ।
विरागवासोमणिगन्धधूपाः संस्थानगोतादिकलाश्च षष्ठे ॥

काश्यपः ।

तुले तु यवगोधूममाषाः सिद्धार्थकास्तथा ।

वराहसंहितायाम् ।

सप्तमराशौ माषा यवगोधूमाश्च सर्षपाश्चैव ।

यवनेश्वरस्तु ।

तुलादिमानापणपाथवीथीहिरण्यरत्नाम्बरमौक्तिकानाम् ।
उद्घोषकोद्देशिकसार्थमुख्यहारादिनैर्याणिकसूतिकानाम् ॥
विवादधूर्त्तानृतदम्भजीवपौण्याध्वकर्त्तृश्रुतिपण्डितानाम् ।
षाड्गुण्यसेवादिकन्नातुराणां तुलाधरः संपठितोऽधिकारे ॥

काश्यपः ।

वृश्चिकेक्षुरसं* सैक्यमाजं लोहं सकांस्यकम् ।

वराहसंहितायां तु ।

अष्टमराशाविक्षुः सैक्यं लोहाद्यजाविकं चापि ।

यवनेश्वरस्तु ।

श्वित्राग्निवल्मीकविषाग्निशास्त्रप्रणष्टदष्टक्षतजाहतानि ।
सरीसृपावृश्चिकचक्रगोधासर्पादयो नक्तविहारिणोऽन्ये ॥
विहारिपापौपहतप्रदुष्टदीनार्त्तभग्नास्त्रविगर्हितानि ।
मांसोत्करावस्थितगुह्यभाण्डसाङ्गायुधास्त्रादि च वृश्चिके तु ॥

काश्यपः ।

धान्यं धनुषि वस्त्राणि लवणास्तुरगास्तथा ।

---

* अलिनीक्षुरसम् इति अ. ।

वराहसंहितायां तु ।

नवमे तु तुरगलवणाम्बरास्त्रतिलधान्यमूलानि ।

यवनेश्वरस्तु ।

हयद्विपाः शाकुनचक्रवाकवर्मास्त्रयोधायुधयज्ञशाणाः ।
वेदाङ्गमन्त्रक्रतुहव्यभाण्डवेदान्तिकाचार्यमुनिक्रियाश्च ॥
ज्ञानोपदेशागमवाग्वरिष्ठकाव्यस्मृतिव्याकृतिमङ्गलार्थाः ।
राष्ट्राण्यमात्यापुरमन्त्रिपौराः सुगन्धिनो यच्च सुगन्धि सत्त्वम् ॥

काश्यपः ।

मकरे शस्यसीसे च सुवर्णगुडधातवः ।

वराहसंहितायां तु ।

मकरे तरुगुल्माद्यं सैक्ययक्षुसुवर्णकृष्णलोहानि ।

यवनेश्वरस्तु ।

वन्या मृगा मन्त्रबलेक्षुपादानलद्विजाश्च क्रिमिशैवलाद्याः ।
दंष्ट्राविशिष्टा मकरादयोऽन्ये ससीसलोहायसधातुधान्याः ॥
कुशस्यधान्यानि सकाञ्चनानि वल्लीद्रुमादीनि च सैकजानि ।
वैराणि जीवा मृगपक्षिनिघ्ना मृगाश्रये यच्च जलाधिवासे ॥

काश्यपः ।

कुम्भे कुसुमचित्राणि हंसाश्च जलदोद्भवाः ।

वराहसंहितायां तु ।

कुम्भे सलिलजफलकुसुमरत्नचित्राणि हंसाश्च* ।

यवनेश्वरः ।

तडागकूपप्रतिरोधबन्धसंप्रेक्ष्यचीनश्लथलोहिताङ्गाः ।
कुशस्यलोहायसकृष्णमांसश्वपाकचौरान्तरबद्धवृद्धाः ॥
नपुंसकानौकृतिका जलोत्था विचित्रपुष्पाणि फलानि हंसाः ।
सुरासवाद्यम्बुचरा वकाद्या वटादयः कुम्भभृदाश्रयाः स्युः ॥

* रूपाणि इति अ. ।

काश्यपः ।

पद्ममुक्ताफलादीनां द्रव्याणां मीन ईश्वरः ।

वराहसंहितयोस्तु ।

मीने कपालसम्भवरत्न्यान्यम्बूद्भवानि चित्राणि* ।

स्नेहाश्च नैकरूपा व्याख्याता मत्स्यजातं च ॥

यवनेश्वरस्तु ।

गम्भीरतोयोदधितीर्थतीरनौपोतवाहास्तिमिमीनशङ्खाः ।

नारी सरोगा जलजोपजीवी स्नानाम्बरस्नेहसदर्पणानि ॥

यज्ञा द्विजेष्टा मणिशुक्तिरत्नप्रवालहेमादिविभूषणानि ।

पुराणवेदव्रतनीतिधर्मद्रव्याणि मीनद्वयसंश्रयाणि ॥

द्रव्याण्यनेकाकृतिलक्षणानि ग्राह्याणि राशिप्रभवैर्विकारैः ।

अत्रानुक्तविशेषशान्तिषु राशेस्तदधिपस्योत्पातकर्त्तुश्च ग्रहस्य पूजाजपहोमादिका शान्तिः कर्त्तव्या ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-ऽद्भुतसागरे ऋक्षाद्यद्भुतावर्त्तः ।

दिव्याश्रयः परिपूर्णः ।

---

* वज्राणि इति अ. ।

अथ

# अन्तरिक्षाश्रये प्रतिसूर्याद्भुतावर्त्तः ।

तत्र शुभसूचकप्रतिसूर्यलक्षणं घटकणिकायाम् ।

प्रतिसूर्यकः प्रशस्तो दिवसकृदनुवर्णमुप्रभास्निग्धः ।
वैडूर्यनिभः स्वच्छः क्षेमसुभिक्षाय शुक्लश्च ।

अथ रवेरुदगादिषु प्रतिसूर्यफलं वराहसंहितायाम् ।

दिवसकृतः प्रतिसूर्यो जलकृदुगदक्षिणे स्थितोऽनिलकृत् ।
उभयस्थः सलिलभयं नृपमुपरि निहन्त्यधो जनहा ॥

विष्णुधर्मोत्तरे तु ।

प्रतिसूर्यस्तदग्जलकृत दक्षिणेनान्ताद्वातकृत् । उभयस्थितो महावर्षाय । उपरि राजमृत्यवे । अधस्ताज्जनविनाशाय । उभयतो महाभयाय । सर्वतस्त्रिभुवनपीडावहो भवति ।

पराशरस्तु ।

तथा प्रतिसूर्यकेषु रवेः पूर्वतो युवराजस्य राज्ञो वधाय । दक्षिणपूर्वतोऽग्निवृद्धये । दक्षिणतो विग्रहाय । प्रत्यग्दक्षिणतो दस्युविनाशाय । प्रत्यग्वर्षदः । पश्चिमोत्तरतो वातवृष्टिदः । उत्तरतोऽतिवृष्टिकरः पूर्वोत्तरतश्च । सन्ध्यायां बहवश्च दृश्येरन् क्रमाद्दिक्षु सकलनृपतिविनाशं कुमारवधं मरकभयं दस्युशस्यपीडामन्नक्षयं व्याधिशास्त्रकोपयजमानयाजकभयम् । पाखण्डिपीडां सप्रभे प्रतिसूर्ये । निष्प्रभे रवौ राष्ट्रवधं विद्यात् ।

वराहसंहितायाम् ।

उभयपार्श्वगतौ परिधी रवेः प्रचुरतोयकरौ वपुषाऽन्वितौ ।
अथ समस्तककुप्परिचारिणः परिधयस्तु कणोऽपि न वारिणः ॥

परिधिः प्रतिसूर्यः ।

तथा च वराहसंहितायाम् ।

परिधेस्तु प्रतिसूर्यः—इति प्रतिसूर्यानुवृत्तौ ।

पराशरस्तु ।

परिधी उभयपार्श्वतः स्निग्धौ वर्षकरौ रूक्षौ विनाशनौ पृष्ठतो वा संग्रामाय । परिमण्डलाः कुम्भकुण्डाकृतयः प्रशस्ताः । विपरीता अन्ये शङ्खवैडूर्यपरिग्रहाः । स्निग्धाः प्रशस्ताः सन्निकृष्टाः प्रजाहिताय वर्षाय च पीते व्याधिभयं विद्यात् । ताम्रे शस्त्रकोपो भवति ।

दीप्ताग्निवर्णः कनकप्रभो वा सन्ध्यासु चेद्भास्करमावृणोति ।
कम्पे तु भूः खात् प्रपतेन्महोल्का राजा विनश्येत् सहितः प्रजाभिः॥

दीप्ताग्निवर्णः कनकप्रभो वा प्रतिसूर्यो भास्करमावृणोति तिरस्कुरुत इत्यर्थः ।

वटकणिकायाम् ।

पीतो व्याधिं जनयत्यशोकरूपश्च शस्त्रकोपाय ।
प्रतिसूर्याणां माला दस्युभयातङ्कतो नृपतिहन्त्री ॥

पराशरस्तु ।

सन्ध्यासमीपे यदि भास्करस्य दृश्येत माला प्रतिसूर्यकाणाम् ।
सूर्ये भवेयुः प्रचुराश्च वैरा रोगाश्च घोरा विविधप्रकाराः ॥

अत्रानुक्तविशेषाशान्तिषु प्रतिसूर्योत्पातेषु सावित्रीमन्त्रकलशदशलक्षहोमादिका शान्तिरभयाख्या वा महाशान्तिरौत्पातिफललगुरुलाघवमवगम्य कर्त्तव्या ।

मयूरचित्रे ।

उदीयमाने सूर्ये च दृश्यते च प्रतिसूर्यकः ।
त्रीण्यब्दानि भवेत् त्रासो मासार्धेन न संशयः ॥
अत्र साधारणी शान्तिः कर्त्तव्या भतिमिच्छता ।

अनुक्तफलपाकसमयविशेषाणामन्तरिक्षाद्भुतानां षाण्मासिकः फलपाकः पराशरेणोक्तः ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-ऽद्भुतसागरे प्रतिसूर्याद्भुतावर्त्तः ।

## अथ परिवेषाद्भुतावर्त्तः ।

तत्र परिवेषस्वरूपमाह पराशरः ।

अथ परिवेषा वाताभ्ररश्मिविकारसमुत्थानन्तं चन्द्रे सूर्ये वा सद्यः फलमादिशेदतः सप्तरात्राद्वा यावद्दर्शने भेदे ।

वराहसंहितायां तु ।

सम्मूर्छिता रवीन्द्वोः किरणाः पवनेन मण्डलीभूताः ।
नानावर्णाकृतयस्तन्वभ्रे व्योम्नि परिवेषः ॥

अत्र रवीन्द्वोरित्युपलक्षणम् । ग्रहाणां नक्षत्राणां चेति बोद्धव्यम् ।

तदुक्तं भार्गवीये ।

गृहीत्वा भूरजः सूक्ष्मवर्णं पांशुं नियम्य च ।
पीडामहनि योगेन मरुता मण्डलीकृतात् ॥
हिताहितार्थंलोकानां ज्योतींष्युपरुणद्धि वै ।
नक्षत्रग्रहताराणां शशिनो दिनपस्य च ॥
निविष्टो भाव आगन्तुः परिवेष इति स्मृतः ।

रक्तवर्णादयः परिवेषा नव इन्द्रादिदिक्पालकृताः ।

तथा च वराहसंहितायाम् ।

ते रक्तनीलपाण्डुरकापोताभ्राभशवलहरितशुक्लाः ।
इन्द्रयमवरुणनैर्ऋतिश्वसनेशपितामहाग्निकृताः ॥
धनदः करोति मेचकमन्योन्यगुणाश्रयेण चाप्यन्ये ।

भार्गवीये ।

अतः परं प्रवक्ष्यामि नक्षत्रेषु ग्रहेषु च ।
परिवेषान् बहुविधान् नानाविधफलोदयान् ॥
ऐन्द्रवारुणकौवेरान् रक्तपाण्डुरमेचकान् ।
पाण्डून् बभ्रूँश्च नीलाँश्चानलानिलयमात्मकान् ॥
प्राजापत्याँश्च रौद्राँश्च नैर्ऋत्याँश्चैव भार्गवान् ।
हरिच्छवलकापोतान् परिवेषानुवाच ह ॥
नवैते परिवेषाणां वर्णा दैवतयोनयः ।
बहुत्वमेते गच्छन्ति अन्योन्यगुणसंश्रयात् ॥

एवं ते सर्वं एव स्निग्धाः शुभावहा भवन्ति ।

तथा च काश्यपः ।

सितपीतेन्द्रनीलाभा रक्ताः कापोतबभ्रवः ।
शबलाग्निमेचकाः स्निग्धा विज्ञेयास्ते शुभवहाः ॥

अथापरोऽपि वायुकृतः परिवेषो वराहसंहितायामुक्तो यथा ।

प्रविलीयते मुहुर्मुहुरल्पफलः सोऽपि वायुकृतः ।

भार्गवीये तु ।

धूमकर्पूरमाञ्जिष्ठरक्तपीतासिताकृतिः ।
भवत्येकतरे पार्श्वे रूपेणाविलमण्डलः ॥
तनुना वाऽभ्रजालेन समन्तात् परिवारितः ।
मुहुर्मुहुश्च विलयं सन्धानं वाऽपि गच्छति ॥
सोऽपि वायुकृतो ज्ञेयो मृदुमन्ददिवाकरः ।
परिवेषोऽल्पफलदो वातवृष्ट्युपबृंहितः ॥
अथ चेद्वातवृष्टिस्तु त्रिरात्रान्नोपजायते ।
ज्वलज्ज्वलनचौराणां प्रादुर्भावः प्रजायते ॥

अथ वर्णफलं वटकणिकायाम् ।

स्निग्धो मधुघृतशिखिचाषपत्रनीलाब्जरत्ननिभः ।
क्षेमसुभिक्षाय भवेत् परिवेषोऽर्कस्य शशिनो वा ॥

वराहसंहितायां च ।

वर्णेनैकेन यदा वहलः स्निग्धः क्षुराभ्रसंकीर्णः ।
स्वर्त्तौ सद्यो वर्षं करोति पीतश्च दीप्तार्कः ॥

क्षुरः कोकिलाक्षपुष्पं तद्वर्णमभ्रं क्षुराभ्रम् । मध्यदिने तु शस्त्रोत्पाताय वर्षाय वा ।

भार्गवीये ।

मयूरगलशङ्खेन्दुमुक्तागोक्षुरपाण्डुराः ।
मधूकघृतमण्डाभा दूर्वाश्यामाश्च वृष्टये ॥

पराशरः ।

अखण्डा विकृता सद्योजाः श्वेताः स्निग्धाश्च नताः परिवेषाः सद्यो वर्षाय वा ।

वराहसंहितायां तु ।

शिखिगलसमेऽतिवर्षं बहुवर्णे नृपवधो भयं धूम्रे ।
हरिचाषनिभे युद्धान्यशोककुसुमप्रभे वाऽपि ॥

विष्णुधर्मोत्तरे ।

बहुवर्णे परिवेषे प्रजापीडा स्यात् । विवर्णा एवार्धचन्द्राकृतयो वहिर्ज्योतिष्मत्यः सेनावधाय ।

भार्गवीये ।

रक्ते पीते सिते ताम्रे कृष्णेऽथ हरितेऽरुणे ॥
क्षुच्छस्त्रव्याधिवर्षाग्निमृत्युशस्त्रानिलाय च ।
वर्णानां तु भयं ज्ञेयं यथावर्णपरिग्रहः ॥
कपोतः सबलश्चापि तिर्यग्योनौ व्यवस्थितौ ।

मौशले वृष्णिवंशक्षयनिमित्तम् ।

“परिवेषाश्च दृश्यन्ते दारुणाश्चन्द्रसूर्ययोः ।

त्रिवर्णाः श्यामरूक्षान्तास्तथा भस्मारुणप्रभाः"* ॥

पराशरस्तु ।

धूम्रवर्णोऽग्निवर्णो वाऽग्निभयाय । अतिमात्रं रक्तः शस्त्राय पीतो व्याधये । कृष्णो विरुद्धानामन्योन्यवधाय वर्षाय च । परुषोऽन्योन्यवधायैव । नील उपायतो बलस्यैकदेशोपघाताय । लोहितश्चौराणाम् । कपिलो ब्राह्मणानाम् । पीतवर्णः संधानाय । पाण्डुरो निःश्रेयसे । समवायेषु तु द्वादशसु कालकालपरुषपरुषहरितहरितनीलनीलताम्रताम्रकपिलकपिलारुणारुणरक्तरक्तशुक्लशुक्लपीतपीतपाण्डुकृष्णेषु द्वयोर्वर्णयोः पूर्वः पूर्वो वर्णो गरीयान् । अभ्यन्तरोऽभ्यन्तराणां बहिर्बाह्यानां त्रीणि चेन्मण्डलानि स्युरन्तर्लोहितं मध्ये पीतं बहिः श्वेतं स्यात् बाह्यस्य राज्ञो जयाय अभ्यन्तरस्य च वधाय विपर्यये विपरीतम् । अभ्यन्तरतः कुलीनमेवाभिषिञ्चति । अन्तः पीतके रक्तमध्ये बहिःश्वेते--इति ।

भार्गवीये ।

यायिनां स्थावराणां च तथैवाक्रन्दसारिणाम् ।
परिवेषाद्विजानीयाद्बाह्याभ्यन्तरमध्यतः ॥

वराहसंहितायां च ।

नागरकाणामभ्यन्तरस्थितानां यायिनां च बाह्यस्थाः ।
परिवेषमध्यरेखा विज्ञेयाऽऽक्रन्दसाराणाम् ॥
रक्तः श्यामो रूक्षश्च भवति येषां पराजयस्तेषाम् ।
स्निग्धः श्वेतो द्युतिमान् येषां भागो जयस्तेषाम् ।

भार्गवीये तु ।

सरक्तः श्यामकलुषो येषां भागो हतप्रभः ।

---

* १ अ. ५२ श्लो. ।

तेषां पराजयं विद्यात् स्निग्धे तेषां च वै जयः ॥
येन येनात्र वर्णेन यो यो भागोऽनुरज्यते ।
तत्र तेषां फलं विन्द्याद्भक्त्यादिषु प्रकीर्त्तितम् ॥

अथ शुभसूचकपरिवेषलक्षणम् ।

वराहसंहितायाम् ।

चाषशिखिरजततैलक्षीरजलाभः स्वकालसम्भूतः ।
अविकलवृत्तः स्निग्धः परिवेषः शिवसुभिक्षकरः ॥

अथाशुभपरिवेषलक्षणं । भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

"परिवेषस्तथा घोरः चन्द्रभास्करयोरभूत् ।
वेदयानो भयं घोरः राज्ञां देहावकर्त्तनम्"* ॥

घोरो भयानकः पापफल इत्यर्थः ।

तथा च वराहसंहितायाम् ।

सकलगगनानुचारो नैकाभः क्षतजसन्निभो रूक्षः ।
असकलशकटशरासनशृङ्गाटकवत् स्थितः पापः ॥

वटकणिकायाम् ।

शृङ्गाटकचापोरगशकटनिभः परुषमूर्त्तिरतिबहुलः ।
सकलगगनानुचारी बहुवर्णश्चानुबन्धी च ॥
द्वित्रिगुणः खण्डो वा त्रिसन्ध्यमभ्युच्छ्रितो ग्रहच्छादी ।
परिवेषः पापफलो ग्रहरोधी हन्ति तद्भक्तान् ॥

भार्गवीये ।

तापतीक्ष्णार्ककिरणे प्रसन्नाम्बरमण्डले ।
लोहिताख्ये क्षुरभ्रान्ते सरश्मौ पीतमण्डले ॥
अप्रकाशाद्दिनपतेरानक्षत्रानुगामिनि ।
सान्द्राभतारस्तनिते परिवेषे प्रकाशिनि ॥

---

* ११२ अ. १० श्लो. ।

अनृतावपि जानीयान्महद्भयमुपस्थितम् ।

अपिशब्दः समुच्चये ।

कृष्णनीहारतिमिरैः संप्रत्याक्रान्तमण्डले ।
विकारैर्नाभसैः कीर्णैः स्फुलिङ्गोपचितेऽशुभे ॥
विषमे विगतस्नेहे विध्वस्तकलुषाद्भुते ।
त्रिषु सन्धिषु भूयिष्ठे दर्शनं चोपगच्छति ॥
द्वित्रिनक्षत्रगे वाऽपि नक्षत्रार्धगतेऽपि च ।
प्रदीप्तैर्वा रसद्भिश्च वीक्षमाणैर्मृगद्विजैः ॥
परिवेषं विजानीयान्नृपोत्थानमुपस्थितम् ।
सप्तरात्राद्भयं घोरं चौरशस्त्राग्निमृत्युभिः ॥

अरण्यकाण्डे खरवधनिमित्तम् ।

"श्यामं च रक्तपर्यन्तं बभूव परिवेषणम् ।
अलातचक्रप्रतिमं परिगृह्य दिवाकरम्'*' ॥

हरिवंशमत्स्यपुराणपद्मपुराणेषु हिरण्यकशिपुवधनिमित्तम् । सूर्यं इत्यनुवृत्तौ ।

"गगनस्थश्च भगवान् सततं परिविष्यते"† ।

गगनस्थो दशमस्थो मध्याह्न इत्यर्थः ।

वराहसंहितायाम् ।

प्रतिदिवसमहिमकिरणः परिवेषी सन्ध्ययोर्द्वयोरथ वा ।
रक्तोऽस्तमेति रक्तोदितश्च भयः करोत्यन्नम् ॥

विष्णुधर्मोत्तरे ।

उदयास्तमने भानोः चन्द्रस्य च यदा भवेत् ।
परिवेषस्तदा राजा क्षिप्रमेव विनश्यति ॥

वराहसंहितायाम् ।

प्रतिदिनमर्कहिमांश्वोरहर्निशं रक्तयोर्नरेन्द्रवधः ।

---

* २३ अ. ३ श्लो. ।

† ४६ अ. १० श्लो. हरिवंशे । परिविष्यते इत्यत्र परितप्यते इति पाठः ।

परिविष्टयोरभीक्ष्णं लग्नास्तमयोर्भयं*तद्वत् ॥

गर्गः ।

उदयेऽस्तमये मध्ये सूर्याचन्द्रमसोर्दिवि ।
परिवेषः प्रदृश्येत तद्राष्ट्रमवसीदति ॥

वराहसंहितायाम् ।

दीप्तमृगविहङ्गमरुतः कलुषः सन्ध्यात्रयोत्थितोऽतिमहान् ।
भयकृत् तडिदुल्काद्यैर्हतो नृपं हन्ति शस्त्रेण ॥

गर्गः ।

दिवा सूर्ये परीवेषो रात्रौ चन्द्रे यदा भवेत् ।
एकस्मिँस्तदहोरात्रे तदा नश्यति पार्थिवः ॥

विष्णुधर्मोत्तरे ।

सकलं यदहः सूर्यो रात्रिं चेत् सकलां शशी ।
परिवेषो भवेद्राजा तत्रापि वधमृच्छति ॥

पराशरस्तु ।

सोमसूर्ययोः सकलाहोरात्रपरिवेषणं क्षुद्व्याधिभयैः प्रजानाशाय—इति ।

मयूरचित्रे ।

विक्षिप्तमण्डले रूक्षे परिवेषेऽर्कचन्द्रयोः ।
वृष्टिं तत्र विजानीयाद्विपर्यासे विपर्ययः ॥
रक्ताभे परिवेषे च रवेः स्याद्भूपतेः क्षयः ।
चन्द्रस्य तु चमूनां तु सम्प्रभस्याप्रभस्य च ॥

गर्गः ।

द्विमण्डलपरीवेषः सेनापतिवधङ्करः ।
युद्धं सुदारुणं कुर्यात् दृश्यते मण्डलैस्त्रिभिः ॥

भार्गवीये ।

द्वाभ्यां सेनापतिभयं युवराजभयं त्रिभिः ।

---

* लग्नास्तमयस्थयोस्तद्वत्, लग्नास्तनभःस्थयोस्तद्वत् इति च अ. ।

मण्डलैः पुररोधः स्यात् त्रिभिरभ्यधिकं ध्रुवम् ॥

पराशरस्तु ।

सन्ध्ययोश्चेत् सप्तमण्डलानि सूर्येऽभीक्ष्णं दृश्येरन् उपतापस्तस्य देशस्यमरकः स्यात् क्षुच्छस्त्रकोपाभ्यामन्योन्यविरोधाच्च ।

अथ नक्षत्रग्रहावरोधकं चन्द्रपरिवेषफलम् । तत्र पराशरः ।

यत्र त्रीण्यवरुध्येरँश्चन्द्रमाः सनक्षत्रो ग्रहस्त्र्यहाद्देवो वर्षति मासाद्वा भयं ब्रूयात् ।

गर्गश्च ।

त्रयो यत्रावरुध्येरन् नक्षत्रं चन्द्रमा ग्रहः ।
त्र्यहाद्वर्षं समाचष्टे मासाद्वा विग्रहं महत् ॥

वराहसंहितायां च ।

वृष्टिस्त्र्यहेण मासेन विग्रहो वा ग्रहेन्दुभनिरोधे ।
होराजन्माधिपयोर्जन्मर्क्षे वाऽशुभो राज्ञः ॥

वेति व्यवस्थितविकल्पः । आत्मनः शत्रोर्वा जन्माधिपे लग्नाधिपे जन्मनक्षत्रे च परिवेषाभ्यन्तरे मासेन विग्रहो भवति । अन्यथा वृष्टिः । विग्रहे सति यस्य जन्माधिपादयः परिवेषावरुद्धास्तस्य राज्ञः पराजयोऽन्यस्य जय इति बोद्धव्यम् ।

सूर्यपरिवेषे तत्फलं गणितेनानुमाय वक्तव्यम् । अत एव बृहद्यात्रायां वराहः ।

परिवेषोऽर्कशशिनोः शत्रुपक्षग्रहैः सह ।
स्निग्धोऽखण्डश्च जयदः पापदो भयमण्डलः ॥

शत्रुपक्षा ग्रहाः शत्रोर्जन्माधिपहोराधिपराज्याधिपवर्त्तमानदशाधिपाः । अत्र शत्रुपक्षग्रहैरित्युपलक्षणम् । शत्रुपक्षीयजन्मादिनग्नक्षत्रैरवबोद्धव्यमिति ।

अथ रविचन्द्रपरिवेषाभ्यान्तरस्थभौमादिग्रहफलं वटकणिकायाम् ।

बलपपुरोहितनरपतिकृषिकृत्पीडा क्रमेण परिविष्टैः ।
कुजगुरुसितार्कपुत्रैः सौम्येन तु मन्त्रिपरिवृद्धिः ॥
केतोः शस्त्रोद्योगो राहोः परिवेषणेन रोगभयम् ।

पराशरः ।

राज्ञः शस्त्रेण निधनं पिनद्धे दैत्यमन्त्रिणि ।
सौरे स्यादम्भसा पीडा जीवे राज्ञः पुरोधसाम् ॥
बुधे ज्ञानिवधो भौमे दस्युशस्त्राग्निसम्भवः ।

भार्गवीये तु ।

सेनापतिकुमारणां सेनायाश्चापि विद्रवः ।
लोहिताङ्गपरीवेषे शस्त्राग्न्युत्पात एव च ॥
मन्त्रिणो लेखकाश्चापि वर्धन्ते स्थावराणि च ।
वृष्टिं चापि विजानीयात् परिविष्टे बुधे ग्रहे ॥
पुरोहितामात्यनृपा हन्युरन्योन्यमेव च ।
पररोधं विजानीयात् परिविष्टे बृहस्पतौ ॥
यायिनः क्षत्रियाँश्चापि नृपयत्नोश्च पीडयेत् ।
धान्यार्घं पृथु कुर्याच्च परिविष्टे भृगोः सुते ॥
स्थावरान् कर्षकाँश्चापि क्षुद्रधान्यं च पीडयेत् ।
वातवृष्टिं च जनयेत् परिविष्टः शनैश्चरः ॥
बाह्यमेवहि गर्भाँश्च राहुः पीडयते ध्रुवम् ।
व्याधीँश्चैव हि जनयेत् परिविष्टः सचन्द्रमाः ॥
क्षुच्छस्त्राग्निभयं घोरं राजतो मृत्युतस्तथा ।
परिविष्टश्च केतुः शिखिनश्च हिनस्ति सः ॥

वराहसंहितायां तु ।

भौमे कुमारवलपतिसैन्यानां विद्रवोऽग्निशस्त्रभयम् ।
मन्त्रिस्थावरलेखकपरिवृद्धिश्चन्द्रजे सुवृष्टिश्च ॥
जीवे परिवेषगते पुरोहितामात्यनृपपीडा ।
शुक्रे यायिक्षत्रियराज्ञीपीडा प्रियं चान्नम् ॥

परिवेषमण्डलगतो रवितनयः क्षुद्रधान्यनाशकरः ।
परिविष्टे गर्भभयं राहौ व्याधिर्नृपभयं च ॥
क्षुदनलमृत्युनराधिपशस्त्रेभ्यो जायते भयं केतौ ।

रविचन्द्रपरिवेषाभ्यन्तरभृग्वादिग्रहफलं वटकणिकायाम् ।

युद्धं क्षुद्भयनृपनाशमृत्यवो व्याधिभिः क्रमशः ।

भार्गवीये तु ।

द्वयोः संग्राममाचष्टे ग्रहयोः परिविष्टयोः ।
क्षुद्भयं त्रिषु विज्ञेयं वर्षनिग्रह एव च ॥
चतुर्भिर्म्रियते राजा सामात्यः सपुरोहितः ।
युगान्त इति जानीयात् परिवेष्टेषु पञ्चसु ॥

वराहसंहितायां च ।

युद्धानि विजानीयात् परिवेषाभ्यन्तरे द्वयोर्ग्रहयोः ।
दिवसकृतः शशिनो वा क्षुदवृष्टिभयं त्रिषु प्रोक्तम् ॥
याति चतुर्षु नरेन्द्रः सामात्यपुरोहितो वशं मृत्योः ।
प्रलयमिव भवति जगतः पञ्चादिषु मण्डलस्थेषु ॥

रविचन्द्रपरिवेषाभ्यन्तरस्थौ यदि द्वौ ग्रहौ यायिनागरौ भवतस्तदाऽतिदारुणं युद्धं शीघ्रं भवति ।

तथा च काश्यपः ।

परिवेषाभ्यन्तरस्थौ द्वौ ग्रहौ यायिनागरौ ।
युद्धं तत्र भवेत् क्षिप्रं घोररूपं सुदारुणम् ॥
अनावृष्टिः क्षुद्भयं च परिवेषगतैस्त्रिभिः ।
चतुर्णां परिविष्टानां राज्ञां च मरणं भवेत् ॥
मण्डलान्तर्गताः पञ्च पृथिव्यां भयदाः स्मृताः ।

अथ पृथक् ताराग्रहाणां नक्षत्राणां च परिवेषफलम् । तत्र पराशरः ।

ग्रहाणां परिवेषो यथास्वं पीडयति नक्षत्राणां च—इति ।

यथास्वं यथास्ववर्गमित्यर्थः ।
भार्गवीये ।

ताराग्रहपरीवेषो नक्षत्राणां च केवलम् ।
महाग्रहोदयं कुर्यान्मरणं वा महीपतेः ॥

महाग्रहः केतुः ।

पृथक् ताराग्रहस्यैव नक्षत्राणामथापि वा ।
परिवेषो यदा दृश्यस्तदा नरपतेर्वधः ॥
यदि केतूदयो न स्यादन्यथा तद्भवेत् फलम् ।

वराहसंहितायां तु ।

ताराग्रहस्य कुर्यात् पृथगेव समुत्थयोर्नरेन्द्रवधः ।
नक्षत्राणामथ वा यदि केतोर्नोदयो भवति ॥

अथ प्रतिपदादितिथिषु फलं भार्गवीये ।

ब्रह्मक्षत्रियविट्शूद्रान् हन्यात् प्रतिपदादिषु ।
ग्रामान् पुरं च कोषं च पञ्चम्यादिषु तु त्रिषु ॥
अष्टम्यां युवराजं च चमूपालान् हिनस्ति वै ।
नवम्यां च दशम्यां च एकादश्यां च पार्थिवान् ॥
त्रयोदश्यां बलक्षोभो द्वादश्यां रुध्यते प्रजा ।
राज्ञीपीडा चतुर्दश्यां पञ्चदश्यां नृपस्य च ॥

वराहसंहितायाम् ।

ब्रह्मक्षत्रियविट्शूद्रहा भवेत् प्रतिपदादिषु क्रमशः ।
श्रेणीपुरकोषाणां पञ्चम्यादिष्वशुभकारी ॥
युवराजस्याष्टम्यां परतस्त्रिषु पार्थिवस्य दोषकरः ।
पुररोधी द्वादश्यां सैन्यक्षोभस्त्रयोदश्याम् ॥
नरपतिपत्नीपीडां परिवेषोऽभ्युत्थितश्चतुर्दश्याम् ।
कुर्यात् तु पञ्चदश्यां पीडां मनुजाधिपस्यैव ॥

पराशरः ।

परिवेषमण्डलं यस्यां दिशि भिद्येत दारुणम् ।
तस्यां दिशि विशेषेण विद्यात् तीव्रतरं फलम् ॥

भार्गवीये ।

छिद्राण्येव त्रीणि च स्युर्महान्ति विमलानि च ।
तैर्द्वारैः पार्थिवो यायात् प्रच्छन्नास्तु विशङ्कटाः ॥

प्रच्छन्ना या दिशस्ता विशङ्कटा दुर्ग्राह्याः ।

विष्णुधर्मोत्तरे तु ।

यतः खण्डपरीवेषस्तां दिशं नृपतिर्यायात् ।

भार्गवीये तु ।

कालाम्बुदपरिस्रावग्रहोदयनिमित्तजम् ।
इत्येवं जन्म सर्वेषां शेषमुत्पातलक्षणम् ॥

पराशरः ।

सर्व एव सन्ध्ययोर्दृश्यमाना वर्षासु वर्षकाः स्युरन्यत्रौ भयाय ।

अत्रानुक्तविशेषशान्तिषु परिवेषोत्पातेषु परिविष्टग्रहनक्षत्रदेवतापूजापूर्विका सावित्रीमन्त्रकदशलक्षहोमादिका शान्तिरभयाख्या वा महाशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

मत्स्यपुराणे ।

परिवेषेऽपि वृष्टिविकारविहिता शान्तिः कर्त्तव्या—इत्युक्तम् । तां च वृष्ट्यद्भुतावर्त्ते लिखिष्यामः ।

अथ विहितविशेषशान्तयः परिवेषोत्पाता मयूरचित्रे ।

परिवेषे समुत्पन्ने शुक्रादौ ब्राह्मणादयः ।
हतप्रभा वा जायन्ते तथा शक्रधनुर्निभे ॥
औदुम्बराणां पञ्चैव सहस्राणि समाहितः ।
अष्टोत्तरं घृताक्तानां शतमष्टोत्तरं तथा ॥
पायसं भोजयेद्विद्वान् दधिक्षीरगुडोदनैः ।

सुवर्णरजतं दद्यादद्भुतान्ते भूरिदक्षिणाम् ॥

इति षोडशी शान्तिः ।

सप्तहात् परिवेषफलपाक इति वराहेणोक्तम् ।

गार्गीये ।

ग्रहाणां परिवेषेषु त्रिरात्रात् फलमादिशेत् ।

इति श्रीमहाराजाधिराजनिश्शङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे परिवेषाद्भुतावर्त्तः ।

---

## अथेन्द्रधनुरद्भुतावर्त्तः ।

तत्रेन्द्रधनुःस्वरूपं वराहसंहितायाम् ।

सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे ।
वियति धनुःसंस्थाना ये दृश्यन्ते तदिन्द्रधनुः ॥

विन्ध्यवासिन* इयमार्या वराहेण लिखिता ।

वराहसंहितायां तु ।

केचिदनन्तकुलोद्भवनिश्वासोद्भूतमाहुराचार्याः ।

तथा च काश्यपः ।

अनन्तकुलजाता ये पन्नगाः कामरूपिणः ।
तेषां निश्वाससम्भूतं शक्रचापं प्रचक्षते ॥

अथ शुभसूचकेन्द्रधनुर्लक्षणम् । तत्र काश्यपः ।

स्निग्धवर्णं घनश्यामं सर्वत्र दिशि दृश्यते ।
बहूदकं सुभिक्षं च शिवं शस्यप्रदं भवेत् ॥

वराहसंहितायाम् ।

चापमैन्द्रमनुलोममखण्डं प्रोज्ज्वलं बहलमातपमिष्टम्† ।

तथा च ।

---

* कश्चिद्विन्ध्यवासी आचार्य इत्यनुमीयतेऽतोऽग्रेऽपि तद्वचनस्योपलब्धेः ।

† नेदम् अ. पुस्तके उपलभ्यते ।

अच्छिन्नमत्र निगाढं द्युतिमत् स्निग्धं घनं विविधवर्णम्।
द्विरुदितमनुलोमं च प्रशस्तमम्भः प्रयच्छति च ॥

अनुलोममिति यात्रासमये बोद्धव्यम्। यात्रायामेव बहुभिरेवम्भूतस्य धनुषः प्राशस्त्याभिधानात्।

तथा च ऋषिपुत्रः।

द्विरुद्गतमविच्छिन्नं स्निग्धमिन्द्रायुधं महत्।
पृष्ठतो विजयाय स्याद्विच्छिन्नं परुषं न तु ॥

तथा च नन्दी।

बहुवर्णमविच्छिन्नं द्विरुद्गतं स्निग्धममरपतिचापम्।
पश्चात् पार्श्वे चापि प्रयाणकाले रिपुवधाय ॥

बृहस्पतिः।

नीलताम्रमविच्छिन्नं द्विगुणं स्निग्धमायतम्।
पृष्ठतः पार्श्वयोर्वाऽपि जयायेन्द्रधनुर्भवेत् ॥

मयूरचित्रे।

सन्नाहकाले सैन्यानां *वक्रमिन्द्रायुधं यदि।
पक्षयोरुभयोर्मृत्युस्तदेत्याहुर्मनीषिणः ॥

पराशरः।

अविच्छिन्ने बहुरागे स्निग्धवातानुबन्धे सद्यो वर्षं तथा कृष्णे स्निग्धे नीलाभ्रवृक्षत्रयस्थे सूर्येऽप्येवम्।

अथाशुभसूचकेन्द्रधनुर्लक्षणमाह पराशरः।

स्निग्धे समद्रद्विनगे वा वर्षमनृतौ भयं च।

अथ वर्णफलं वराहसंहितयोः।

पाटलपीतकनीलैः शस्त्राग्निक्षुत्कृता दोषाः।

पराशरस्तु।

रक्तमाञ्जिष्ठे श्यामारुणनीलपीतके भयम्। परुषे राजमृत्युं सर्वस्मिन्नेव च।

---

* नक्रमिति च.। रक्तमिति घ.।

अथ दिक्फलं काश्यपः ।

अनावृष्ट्यां भवेद्वर्षमैन्द्र्यां वर्षत्यवर्षणम् ।
पश्चिमायां भवेद्वर्षं सदा कार्मुकसंस्थितौ ॥

विन्ध्यवासी च ।

कुरुते वृष्टौ वृष्टिं निहन्ति तामेव शक्रदिशि ।
कथयति सदैव वृष्टिं धनुरैन्द्रं पश्चिमाशायाम् ॥

वराहसंहितायां च ।

वृष्टिं करोत्यवृष्ट्यां वृष्टिं वृष्ट्यां निवारयत्यैन्द्र्याम् ।
पश्चात् सदैव वृष्टिं कुलिशभृतश्चापमाचष्टे ॥

पराशरस्तु ।

पश्चिमश्चेति सूर्ये तिष्ठत्यनुदेशं पुरस्ताद्दृश्येत क्षेमाय स्यात् तनुवर्षाय विपरीतं वर्षविघाताय ।

सन्ध्याकाले निवृत्ते तु पुनर्वर्षाय वर्षति ।
विपरीतमवर्षाय वर्षायैव तु पश्चिमम् ॥

वराहसंहितयोः ।

विदिगुद्भूतं दिक्स्वामिनाशनम् ......... ।

पराशरः ।

प्रागुत्तरस्यां दिशि श्वेतवर्णचापदर्शनं दुर्भिक्षाय ।

अथ स्थानफलं वराहसंहितयोः ।

जलमध्येऽनावृष्टिर्भुवि शस्यवधस्तरुस्थिते व्याधिः ।
वल्मीके शस्त्रभयम् .......................—इति ॥

अथावष्टब्धादित्येन्द्रधनुःफलं वराहसंहितायाम् ।

सुरचापपाटिततनुर्नृपतिविरोधप्रदः सहस्रांशुः ।

पराशरः ।

सूर्यं भूमिं चेद्विष्टभ्यति तदा पुरोहितवधः । सन्ध्ययोश्च सूर्याचन्द्रमसौ परिरभ्य विन्द्यान्मन्त्रिसेनानायकानामनामयम्—इति ।

शत्रुभिरुपरुद्धे पुरे यदि सपरिषात् सूर्यात् सादितमिन्द्रधनुर्भवति तदा पुरमोक्षदं भवति न नृपतिविरोधप्रदम्।

यदुक्तं मयूरचित्रे।

उपरुद्धं दिवानाथं शक्रचापं रुणद्धि चेत्।
त्वरितं पुरमोक्षः स्यादिति गर्गेण भाषितम्॥

अथ समयफलं पराशरः।

अनृतौ संस्थानकाले चेद्गर्भसामर्थ्यकरमिन्द्रधनुः शेषकाले तु भयदम्-इति।

संस्थानकाले मेघगर्भाधानकाले।

अत्रानुक्तविशेषशान्तिष्विन्द्रधनुरुत्पातेषु सावित्रीमन्त्रकदशलक्षहोमादिका शान्तिरभयाख्या वा महाशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या।

चन्द्रादित्यावरोधके त्विन्द्रधनुषि तत्पूजापूर्विका प्रभूतकनकान्नगोमहीदानादिका शान्तिः कर्त्तव्या।

अथ साधारण्यपि शान्तिर्मयूरचित्रे विहिता। तां शान्त्यद्भुतावर्त्ते लिखिष्यामः।

अथ रात्राविन्द्रधनुरद्भुतानि। तत्र वर्णफलमौशनसे।

श्वेतमिन्द्रायुधं विप्रान् रक्तं क्षत्रविनाशम्।
वैश्यानां पीतकं रात्रौ कृष्णं शूद्रविनाशनम्॥

पराशरस्तु।

रात्रौ श्वेते ब्राह्मणानाम्। रक्ते क्षत्रियाणां च। पीते विशाम्। कृष्णे शूद्राणाम्। यथाष्टदिक्षु चैषामयनं ब्रूयात्। सर्वासु दिक्षु तु रूक्षे विच्छिन्ने गणानाम्।

वराहसंहितायाम्।

निशि सुरचापं सितवर्णाद्यं जनयति पीडां द्विजपूर्वाणाम्।
भवति च यस्यां दिशि तद्देश्यं नरपतिमुख्यानचिराद्धन्यात्॥

काश्यपस्तु ।

रात्रौ चेद्दृश्यते चापं भयं भवति दारुणम् ।

मयूरचित्रे ।

निशायामिन्द्रचापस्य दर्शने नृपतेर्वधः ।
परचक्रागमश्चैव यथा गर्गेण भाषितम् ॥

वराहसंहितयोः ।

निशि सचिववधाय धनुरैन्द्रम्—इति ।

एतत् तु सामान्यमुक्तमिन्द्रधनुषः फलम् ।

विशेषफलं त्रिवर्णत्रिरेखेऽवगन्तव्यम् । यथोक्तं बार्हस्पत्ये ।

यदा त्रिवर्णः सुमहाँस्त्रिरेखो महेन्द्रचापः समुदेति रात्रौ ।
तदा भयं पार्थिवमण्डलानां वदन्ति शास्त्रार्थविदो द्विजेन्द्राः ॥

मण्डलानां माण्डलिकानाम् ।

मयूरचित्रे ।

त्रिवर्णश्च त्रिरेखश्च शक्रचापो यदा निशि ।
राज्ञां माण्डलिकानां च भयं भवति दारुणम् ॥

पूर्वस्यां दिशि राज्ञां याम्यां दिशि माण्डलिकानां मण्डलेश्वरसचिवानां सेनाप्रभृतीनामित्यर्थः ।

तथा वराहसंहितयोः ।

चापं मघोनः कुरुते निशायामाखण्डलायां दिशि भूपपीडाम् ।
याम्यापरोदक्प्रभवं निहन्यात् सेनापतिं नायकमन्त्रिणौ वा ॥

नायकः प्रधानपात्रम् ।

काश्यपः ।

ऐन्द्र्यां दिशि यदा रात्रौ दृष्टं भूपवधो भवेत् ।
याम्यां सेनापतिस्तस्य विनाशमधिगच्छति ॥
पश्चिमस्यां तु संदृष्टं प्रधानं नाशमृच्छति ।
उत्तरस्यां यदा दृष्टं रात्रौ मन्त्रिविनाशनम् ॥

निशि परिविष्टे चन्द्रमसीन्द्रधनुःफलं मयूरचित्रे ।

उपरुद्धे निशानाथे रात्राविन्द्रधनुर्यदि ।
तदा क्षोभः पुरस्य स्यात् परचक्रागमस्तथा ॥

अथेन्द्रधनुःफलं विष्णुधर्मोत्तरे ।

रात्राविन्द्रधनुश्चेद्व्यभ्रे महाभयाय च ।

वटकणिकायां च वराहः ।

व्यभ्रजं मरककारि............ ।

वराहसंहितायां च ।

व्यभ्रे नभसि सुरधनुर्दिवा यदा दृश्यतेऽथ वा रात्रौ ।
प्राच्यामपरस्यां वा तदा भवेत् क्षुद्भयं सुमहत्* ॥

मत्स्यपुराणे ।

निरभ्रे वा तथा रात्रौ श्वेतं याम्योत्तरेण तु ।
इन्द्रायुधं ततो दृष्ट्वा उल्कापातं तथैव च ॥
परचक्रागमं ब्रूयाद्देशोपद्रवमेव च ।

बार्हस्पत्ये ।

निरभ्रे वा तथा रात्रौ श्वेतमिन्द्रायुधं यदि ।
पूर्वपश्चादुत्तरासु भवेद्दुर्भिक्षतो भयम् ॥

औशनसे तु ।

प्राच्यादिचतुरो वर्णान् हन्यादिन्द्रायुधं क्रमात् ।
रात्रौ श्वेतं तथा रक्तं पीतं कृष्णं च सर्वतः ॥

नारदः ।

रात्रौ चेन्द्रधनुर्यत्र दृश्यते यदि सत्तम ।
अद्भुतं तत्र विज्ञेयं शान्तिं चेमां समारभेत् ॥
औदुम्बर्याः सहस्राणि अष्टौ च जुहुयाद्द्विजः ।

---

* नेदं पद्यम् अ. पुस्तके उपलभ्यते ।

मध्वक्तानि घृताक्तानि जातवेदांसि मन्त्रवित् ॥
विप्राय दक्षिणां दद्याद्धेनुं च वृषभं तथा।
एकरात्रोषितो भूत्वा ततः संपद्यते शुभम् ॥

मत्स्यपुराणविष्णुधर्मोत्तरवराहसंहितासु वृष्टिविकारविहिता शान्तिरत्र कर्त्तव्येत्युक्तम्। तां च वृष्ट्यद्भुतावर्त्ते लिखिष्यामः।

अथ वर्णाद्भुते तु।

इन्द्रायुधसवर्णानि वस्त्राण्याभरणानि च।
दद्याद्गाश्च हिरण्यं च तदा तच्छमयेद्भयम् ॥

पराशरः।

अथेन्द्रधनुषः सद्यः फलं सप्तरात्राद्वा—इति।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे इन्द्रधनुरद्भुतावर्त्तः।

---

## अथ रश्मिदण्डाद्भुतावर्त्तः।

वराहसंहितायाम्।

रविकिरणजालमरुतां सङ्घातो दण्डवत् स्थितो दण्डः।
स विदिङ्मुखो नृपाणामशुभो दिक्षु द्विजातीनाम् ॥
शस्त्रभयातङ्ककरो दृष्टः प्राङ्मध्यसन्धिषु दिनस्य।
शुक्लाद्यो विप्रादीन् यदभिमुखं तां च हन्ति दिशम् ॥

पराशरस्तु।

अथ दण्डा धनुर्भिः समानरूपफलाः। विशेषतस्तूभयतो विच्छिन्नो दण्डोऽमूलवान् स्यात्। अपरं धनुरदृश्यात्मत्। दृश्यन्तश्च रश्मयस्तीक्ष्णाग्राश्चन्द्रसूर्ययोः। अन्तस्त्र्यहात् फलं तेषु त्रिषु विद्यात्। घनाः स्निग्धा दीर्घाः परिपूर्णा रक्तनीलाः श्वेतानुगामिनो योग-

क्षेमाय। रक्ता रूक्षा ह्रस्वा नीचास्तु वर्षाय। काला दुर्भिक्षाय। धूम्रलोहितास्तनवः शस्यस्यापदे। अत्यन्तमानीलकृष्णाः पाण्डुराः पारावतमयूरचित्रवर्णा वा वर्षाय। बहवश्च स्निग्धा द्वौ नीलौ रक्तौ परुषौ वा परचक्रभयाय। तथा च रक्तपरुष एकच्छिद्रो विच्छिन्नो दुर्जातो राजमृत्यवे। विपरीतो राजजन्मने। पुण्डरीकाकार उल्कापाताय। रक्तकपिलौ पीतरक्तौ वाऽत्यन्तगौररूक्षौ राजनिर्याणाय। त्रिवर्णो राजक्षयाय। स्थूलकारोऽञ्जनवर्णो वर्षसम्पत्तये। अस्तमितमात्रे रश्मिदर्शनं मुख्यामात्यविनाशाय।

अत्र सामान्या शान्तिः कर्त्तव्या।

इति श्रीमहाराजाधिराजनिश्शङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे रश्मिदण्डाद्भुतावर्त्तः।

---

## अथ गन्धर्वनगराद्भुतावर्त्तः।

तत्र काश्यपः।

बहुवर्णपताकाढ्यं गन्धर्वनगरं महत्।
दृष्टं प्रजाक्षयकरं संग्रामे लोमहर्षणे॥

वराहसंहितयोस्तु।

अनेकवर्णाकृति खे प्रकाशते पुरं पताकाध्वजतोरणान्वितम्।
यदा तदा नागमनुष्यवाजिनां पिबत्यसृक् भूरि रणे वसुन्धरा॥

अथ वर्णफलं वराहसंहितयोः।

गन्धर्वनगरमुत्थितमापाण्डुरमशनिपातवातकरम्।
दीप्ते नरेन्द्रमृत्युर्वामोऽरिभयं जयः सव्ये॥
चौराटविकान् हन्याद्धूमानलशक्रचापाभम्।
सितरक्तपीतकृष्णं विप्रादीनामभावाय॥

पराशरस्तु।

उपस्थितायां चेत् सन्ध्यायां दृश्येत कुमारवधम्। अतीतायां वृद्धस्य राज्ञः। गन्धर्वनगरेण सहैवोदितः सूर्यः परचक्रागमनं कुर्यात्।

वराहसंहितायाम्।

सितखपुरेऽर्कक्रान्ते पुरलाभो भेदने नाशः।

नगरसदृशं सन्ध्याकाले यदा प्रतिदृश्यते
परमधिकृतं गन्धर्वाणां शतघ्निसमाकुलम्।
नरपतिभयं देशे तस्मिँस्तदा परचक्रतो
रुधिकलिलः संग्रामो भवत्यतिदारुणः* ॥

अथ दिक्फलं वराहसंहितायाम्।

शान्तायां दिशि दृष्टं सतोरणं नृपतिविजयाय।

पराशरः।

दीप्तायां दिशि विच्छन्नरूपं वृक्षाग्रेषु दृश्यते महाभयम्। ऐशान्यां दिशि अभियोक्तृवधाय। वारुण्यामभियुक्तस्य। एभ्यस्त्वन्यानि दिशान्ते स्निग्धरूपाण्यविच्छिन्नानि शुभानि विन्द्यात्।

बृहद्यात्रायां च वराहः।

सिताद्यं ब्राह्मणादीँस्तु विदिग्वर्णस्तु सङ्करान्।
प्रदक्षिणं च यात्रायां जयदं नेष्टमन्यथा ॥

ब्राह्मणादीन् हन्तीति सम्बन्धः। विदिक्षु विवर्णं चेति विदिग्वर्णम्।

तथा च बार्हस्पत्ये।

विदिक्ष्वेकं विवर्णं च पीडा ज्ञेया विवर्णिनाम्।
आशाधिकारिणां चैव पीडा ज्ञेया यथाविधि ॥

बार्हस्पत्ये।

प्राग्याम्यापरसौम्यानां गन्धर्वनगरं तथा।
राज्ञः सेनापतेश्चैव युवराजपुरोधसाम् ॥

---

* इदं पद्यम्-अ. पुस्तके नोपलभ्यते प्रायो धट्टवणिकायां स्यात्।

व्यसनं मरणं चापि विज्ञेयमनुपूर्वशः ।

बृहद्यात्रायां वराहः ।

गन्धर्वनगरं हन्ति प्राक्प्रभृत्यवनीश्वरम् ।
बलेशं युवराजं च पुरोहितमिति क्रमात् ॥

वराहसंहितयोः ।

उदगादितः पुरोहितनृपबलपतियुवराजदोषदं खपुरम् ।
नागरनृपविजयावहमुदग्विदिक्स्थं विवर्णनाशाय ॥

पराशरस्तु ।

अथ गन्धर्वनगराणि प्राच्याद्यष्टासु दिक्षु प्रादुर्भूतानि क्रमात् फलमावेदयन्ति । क्षुत्पीडामग्निप्रकोपं युवराजवधं तस्करोपद्रवं राजपीडां तपस्विनां भयं भूतागमनं वर्षम्-इति ।

मयूरचित्रे तु ।

पूर्वस्यां दिशि विस्पष्टगन्धर्वनगरोदये ।
पश्चिमस्यां दिशि राज्ञो भयमापद्यते महत् ॥
सर्वास्त्वन्यासु दिक्ष्वेवं विपर्यासात् फलं विदुः ।

बार्हस्पत्ये ।

सततं दृश्यमानं च राज्ञो राष्ट्रभयावहम् ।

वराहसंहितयोः ।

सर्वदिगुत्थं सततोदितं च भयदं नरेन्द्राणाम् ।

अत्रानुक्तविशेषशान्तिषु गन्धर्वनगरोत्पातेषु सावित्रीमन्त्रकदशलक्षहोमादिका शान्तिरभयाख्या महाशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

गन्धर्वनगरफलपाको मासत्रयेऽेति पराशरादिभिरुक्तम् ।

वराहसंहितायाम् ।

गन्धर्वपुरं मासात्-इति ।

इति श्रीमहाराजाधिराजनिश्शङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे गन्धर्वनगराद्भुतावर्त्तः ।

आप्रहरांशेऽजाविकमुपहन्याच्छूद्रपौराँश्च ॥
आमध्याह्नाद्राजोपजीविनो ब्राह्मणाँश्च पीडयति ।
वैश्यजलदाँस्तृतीये चौरान् प्रहरे चतुर्थे च ॥

गर्गश्च ।

नीचानन्याँश्च हन्यात् तु सोऽस्तमेति दिवाकरे ।
प्रथमे प्रहरे शस्यानर्धरात्रे तु राक्षसान् ॥
रात्रित्रिभागे वैश्याँस्तु प्रत्यूषे शूद्रदस्यवः ।

वराहसंहितायां तु ।

अस्तं याते नीचान् प्रथमे यामे निहन्ति शस्यानि ।
रात्रेर्द्वितीययामे पिशाचसङ्घान् निपीडयति ॥
तुरगकरिणस्तृतीये विनिहन्यायायिनश्चतुर्थे च ।

अथ तिथिफलं पराशरः ।

प्रतिपदष्टमीचतुर्दशीषु प्रादुर्भूतो मृदुरितरास्वितरः—इति ।

मृदुर्मृदुफलः । इतरस्तीव्रफल इत्यर्थः ।

अथ नक्षत्रफलं पराशरः ।

यत्र नक्षत्रे वर्षणं प्रदुष्यात् तस्मिन् वर्षणं विन्द्यात् ।

बार्हस्पत्ये ।

अनभ्रे वाऽपि निर्घातः पतितो राजमृत्यवे ।

पराशरः ।

महास्वनश्च समग्रफलो भवति ।

बार्हस्पत्ये ।

अत्र रौद्रीं प्रकुर्वीत सुभयां वा भयप्रदाम् ।

बीजवापपरिशिष्टे तु ।

निर्घातस्य प्रपतने शान्तिं कुर्वीत वैष्णवीम् ।
विष्णुं संपूजयेत् सम्यग्ब्राह्मणाँश्चापि भोजयेत् ॥

अथ फलपाकसमयमाह पराशरः ।

निर्घातस्तु त्रिभिर्मासैः–इति ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-

ऽद्भुतसागरे निर्घाताद्भुतावर्त्तः ।

---

## अथ सन्ध्याद्भुतावर्त्तः ।

---

तत्र सन्ध्यासमयो वराहसंहितायाम् ।

अर्धास्तमयात् सूर्यात् संदृष्टास्तारका यावत् ।

तेजःपरिहानिमुखाद्भानो रुद्धोदयो यावत्* ॥

अथ शुभसूचकलक्षणं वराहसंहितायाम् ।

शस्ता शान्तद्विजमृगघुष्टा सन्ध्या स्निग्धा मृदुपवना च ।

पराशरस्तु ।

निर्वातनिर्मलस्निग्धायां शान्तमृगद्विजायां प्रसन्नायामनुपहतायां योगक्षेमं विन्द्यात् ।

वराहसंहितायां तु ।

मन्दपवनावघट्टितचलितपलाशद्रुमा विपवना वा ।

मधुरस्वरशान्तविहङ्गमृगरुता पूजिता सन्ध्या ॥

वटकणिकायाम् ।

स्निग्धा प्रशान्तशकुना मृदुमारुता च

सन्ध्या सहस्रकिरणानुसमानवर्णा ।

शस्ता पयोदसमये कुरुतेऽतिवर्षं

वृष्टिं रुणद्ध्यशुभदा च विपर्ययेण ॥

अथाशुभसूचकसन्ध्यालक्षणं बार्हस्पत्ये ।

तमोधूमरजस्काभ्रदीप्तद्विजमृगावृताः ।

---

* अ. पुस्तकेऽन्यथा पाठदर्शनाद्वटकणिकाया इदं पद्यमित्यनुमीयते ।

प्रदीप्तलक्षणाः सन्ध्याः सर्वा एवाहितावहाः ॥
भृशमुद्घातिनी सन्ध्या कुरुते विग्रहागमम् ।

तथा ।

प्रातः प्रदोषाद्रजसा निरुद्धा* अनभ्रवत्योऽपि घनानुरूपाः ।
क्रूराश्च सन्ध्या रुधिरप्रकाशा भयानि राज्ञः प्रतिवेदयन्ति ॥

वराहसंहितायां तु ।

पांशुध्वस्ता जनपदनाशं धत्ते रूक्षा रुधिरनिभा वा ।

तथा ।

गृहतरुतोरणमथने सपांशुलोष्टोत्करेऽनिले प्रबले ।
भैरवरावे रूक्षे खगपातिनि चाशुभा सन्ध्या ॥
दीप्तविहङ्गशिवामृगघुष्टा दण्डरजःपरिघादियुता च ।
प्रत्यहमर्कविकारयुता वा देशनरेशक्षुभिक्षवधाय ॥
अशुभाकृतिघनगन्धर्वनगरनीहारपांशुधूमवृता ।
वृष्टिं करोत्यवग्रहमन्यर्त्तौ शस्त्रकोपकरी ॥
दीप्तमृगाण्डजविरुता प्राक्सन्ध्या देशनाशमाख्याति ।
दक्षिणदिक्स्थैर्विरुताद्ग्रहणाय पुरस्य दीप्तास्यैः ॥

हरिवंशे कंसवधनिमित्तम् ।

"प्राक्सन्ध्या परिघग्रस्ता भाभिर्बाधति भास्करम्"† ।

भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

"उभे सन्ध्ये प्रकाशेते दिशो दाहसमन्विते"‡ ।

अथ वर्णफलं वराहसंहितायाम् ।

शिशिरादिषु वर्णाः शोणपीतसितचित्रपद्मरुधिरनिभाः ।
प्रकृतिभवाः सन्ध्यायां स्वर्त्तौ सान्ध्या विकृतिरन्या ॥

---

* वातप्रकोपाद्रजसानिरुद्धा इति क्वचित् पाठः ।

† २३ अ. २८ श्लो. । ‡ २ अ. ३० श्लो. ।

पराशरः ।

स्निग्धा गौरी योगक्षेमाय भवति श्वेतायां वस्त्रवृद्धिः ।

बार्हस्पत्ये तु ।

सन्ध्याः कमलकिञ्जल्कतडित्कल्पाः शुभावहाः ।

वराहसंहितायां तु ।

कुवलयवैदूर्याम्बुजकिञ्जल्काभा प्रभञ्जनोन्मुक्ताः ।
सन्ध्या करोति वृष्टिं रविकिरणोद्भासिता सद्यः ॥

आषाढीयोगे पराशरः ।

वैदूर्यरजतहेमप्रभा सन्ध्या प्रावृड्वृद्धये ।

मयूरचित्रे ।

मनःशिला प्रियङ्ग्वाभा हरितालनिभा तथा ।
सद्यो वर्षाय सन्ध्या या हरिद्राभाऽरुणा मनाक् ॥

हरिवंशेऽर्जुनपराजयनिमित्तम् ।

"सन्ध्यारागो जपावर्णः"* ।

लङ्काकाण्डे रावणवधनिमित्तम् ।

सन्ध्यया चावृता लङ्का जपापुष्पनिकाशया ।
"दृश्यते संप्रदीप्तेव दिवसेऽपि प्रवृद्धया"† ॥

पराशरस्तु ।

परिमण्डलायां रक्तायां भयम् । हरितायां शस्त्रभयम् । माञ्जिष्ठामग्निम् । पीतायां चतुष्पद्रोगम् । श्यामायां चौरतो भयम् । नीलपीतायामीतिभयम् । हरितालवर्णायां प्रथमामात्यस्य शस्त्रेण वधम् । आम्रकोरकवर्णायां वर्षम् । नीलरक्तायामवग्रहम् । कृष्णायामवर्षम् । त्र्यहं चेत् श्यामा रक्ता गौरी वा स्यात् पशुघातं विन्द्यात् । वातकपिलायामस्तमितमात्रे सूर्ये याऽतिमात्रप्रकाशा स्यात् प्रभा सा नामासौ तस्यां वर्षं विन्द्यात् । प्रत्यूषसि तद्रूपायामेव राज्ञः सेनापतेर्वा वधम् ।

* ११२-अ. ४ श्लो. । † १०६ अ. २३ श्लो. । तत्र प्रवृद्धयेत्यत्र वसुन्धरेति पाठः ।

तथा महावर्षं रूप्यवर्णायां नीलायां वा कृष्णायामनृतौ वर्षणमृतावग्रहाय। तथा च नीलमाञ्जिष्ठायामग्निजीविनां वधाय स्यात्। लोहितश्यामायां चौरवृद्धये। एवमेव चतूरागा पञ्चरागा वा।

अत्रानुक्तविशेषशान्तिषु सन्ध्योत्पातेषु सावित्रीमन्त्रकरशलक्षहोमादिका शान्तिरभयाख्या महाशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या।

अथ विहितविशेषशान्तयः सन्ध्योत्पाता मयूरचित्रे।

गोमूत्राभाऽऽज्यभाण्डाभा स्निग्धा हिङ्गुलसन्निभा।
लाक्षा विद्रुमकान्तिश्च सन्ध्या वृष्ट्यै रणाय च॥
तमोयुक्ता रजोयुक्ता सन्ध्या राष्ट्रनृपान्तकृत्।
ऋतुस्वभावजा सा तु सुभिक्षक्षेमकारिणी॥
अत्र साधारणी शान्तिः कर्त्तव्या गर्गभाषिता।

तत्रैव।

निष्प्रभा वा यदा सन्ध्या रूक्षा भस्मरजःसमा।
तदा पित्तज्वरोद्भूतैः पीड्यन्ते व्याधिभिर्जनाः॥
शान्तिश्चतुर्दशी कार्या सन्ध्योल्कापातचोदिता।
'सप्ताहात् सन्ध्ययोः फलपाकः—इति पाकावर्त्ते वक्ष्यामः।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचितेऽद्भुतसागरे सन्ध्याद्भुतावर्त्तः।

---

## अथ सन्ध्याकालिकरविकिरणाद्भुतावर्त्तः।

पराशरः।

स्निग्धाः परिपूर्णाः शुक्ला माञ्जिष्ठवर्णाः पीता अभ्यन्तरगामिनो रश्मयः शस्यन्ते।

वराहसंहितायां तु ।

उद्द्योतिनः प्रसन्ना ऋजवो दीर्घाः प्रदक्षिणावर्त्ताः ।
किरणाः शिवाय जगतो वितमस्के नभसि भानुमतः ॥
शुक्लाः करा दिनकृतो दिवादिमध्यान्तगामिनः स्निग्धाः ।
अव्युच्छिन्ना ऋजवो वृष्टिकरास्ते त्वमोघाख्याः ॥

पराशरः ।

रूक्षा विच्छिन्नास्तनवो ह्रस्वा धूमाभा लोहिता विवर्णा गर्हिताः ।

वराहसंहितायाम् ।

विच्छिन्नविषमविध्वस्तविकृतकुटिलापसव्यपरिवृत्ताः ।
तनुह्रस्वविकलकलुषाश्च विग्रहावृष्टिदाः किरणाः ॥
कल्माषबभ्रुकपिला विचित्रमाञ्जिष्ठहरितशवलाभाः* ।
त्रिदिनानुबन्धिनो वृष्ट्येऽल्पभयदास्तु सप्ताहात् ॥
ताम्रा बलपतिमृत्युं पीतारुणसन्निभाश्च रुग्व्यसनम्† ।
हरिताः पशुशस्यवधं धूमसवर्णा गवां नाशम् ॥
मञ्जिष्ठाभाः शस्त्राग्निसंभ्रमं बभ्रवः पवनवृष्टिम् ।
भस्मसदृशास्त्ववृष्टिं तनुभावं शवलकल्माषाः ॥

पराशरः ।

बन्धुजीवनिकाशेन तपनीयनिभेन वा ।
उदये रजसा सूर्यः संवृतः शस्त्रमावहेत् ॥

वराहसंहितायां तु ।

बन्धूकपुष्पाञ्जनचूर्णसन्निभं सान्ध्यं रजोऽभ्येति यदा दिवाकरम् ।
लोकस्तदा रोगशतैर्निपीड्यते शुक्लं रजो लोकविवृद्धिशान्तये ॥

तथा च पराशरः ।

शङ्खचूर्णनिकाशेन रजसा संवृतो रविः ।

---

* शवला वा इति वा. पा. । † तद्व्यसनम्–इति भ. ।

राज्ञो विजयमाख्याति वृद्धिं जनपदस्य च ॥

अत्रानुक्तविशेषशान्तिषु सन्ध्याकालिकरविकिरणाद्भुतेषु सावित्रीमन्त्रकदशलक्षहोमादिका शान्तिरभयाख्या वा महाशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या।

सूर्यरश्मीनां शिराश्राभ्यन्तरे फलपाक इति रश्मिदण्डाद्भुतावर्त्ते* उक्तम्।

इति श्रीमहाराजाधिराजनिश्शङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे सन्ध्याकालिकरविकिरणाद्भुतावर्त्तः।

---

## अथ दिग्दाहाद्भुतावर्त्तः।

तत्र दिग्दाहस्वरूपं बार्हस्पत्ये।

सदाऽस्तमित आदित्ये वह्निज्वाला प्रदृश्यते।
दिशां दाहं तु तं विन्द्याद्भार्गवस्य वचो यथा ॥

शुभसूचकदिग्दाहलक्षणं वराहसंहितायाम्।

नभः प्रसन्नं विमलानि भानि प्रदक्षिणं वाति सदागतिश्च।
दिशां च दाहः कनकावदातो हिताय लोकस्य सपार्थिवस्य ॥

अथ वर्णफलं वराहसंहितयोः।

दाहो दिशां राजभयाय पीतो देशस्य नाशाय हुताशवर्णः।
यश्चारुणः स्यादपसव्यवायुः स शस्यनाशं प्रकरोति दृष्टः ॥

बार्हस्पत्ये तु।

श्वेताः पीताश्च रक्ताश्च दाहाः कृष्णाश्च वर्णतः।
ब्रह्मक्षत्रियविट्शूद्रविनाशाय प्रकीर्त्तिताः ॥
रक्ताः शस्त्रभयं कुर्युः पीता व्याधिप्रकोपनाः।
अग्निवर्णास्तथा कुर्युरग्निशस्त्रभयं महत् ॥

---

* एतेन ३०३ पृ. उक्तरश्मिदण्डाद्भुतावर्त्ते का चित् त्रुटिस्तदर्थमशुद्धिपत्रमवलोक्यम्।

नेष्टाः क्षतजमाञ्जिष्ठबन्धुयावकवर्णकाः ।
सुपीतिपरुषश्याममेघवारणसन्निभाः ॥
सर्वा एव क्षुधारोगमृत्युशस्त्राग्निकोपनाः ।
ऋतौ तु वर्षं तीव्रं स्यात् सैन्यविद्रव एव वा ॥

अथ छायाव्यञ्जकदिग्दाहफलं वराहसंहितायाम् ।

याऽतीव दीप्त्या कुरुते प्रकाशं छायामपि व्यञ्जयतेऽर्कवद्यः
राज्ञो महद्वेदयते भयं स शस्त्रप्रकोपं क्षतजानुरूपः ॥

विष्णुधर्मोत्तरे ।

अतिदीप्तच्छायाव्यञ्जके राजमरणं विन्द्यात् ।

अथ दिक्फलं बार्हस्पत्ये ।

दिक्षु चौरैः* प्रपीड्यन्ते यथादिग्देशभक्तयः ।
शकुनज्ञाननिर्दिष्टा ये च तत्राधिकारिणः ॥

दिगधिकारिकान् सर्वान् शाकुनाद्भुतावर्त्ते वक्ष्यामः ।

वराहसंहितायाम् ।

प्राक् क्षत्रियाणां सनरेश्वराणां प्राग्दक्षिणे शिल्पिकुमारपीडा ।
याम्ये सहोग्रैः पुरुषैश्च वैश्या दूताः पुनर्भूप्रमदाश्च कोणे ॥
पश्चात् तु शूद्राः कृषिजीविनश्च चौरास्तुरङ्गैः सह वायुदिक्स्थे।
पीडां व्रजन्त्युत्तरतश्च विप्राः पाखण्डिनः स्युर्वणिजश्च शार्व्याम् ॥

पराशरस्तु ।

अथ दिग्दाहेषु प्राच्यादिष्वष्टासु दिक्षु दह्यमानासु विद्यात् तत्रैव देशे । अष्टमासान्तरादनावृष्टिभयं त्रिमासाद्रोगं महोत्पातं च नवमासादग्निप्रकोपं दशमासाद्बलक्षयं मासाद्राज्ञः शस्त्रेण भयम् । अष्टाभ्यः सर्वतो भयं सप्तभ्यो युवराजभयं षड्भ्यः कन्यानां भयम् । सप्ताहात् सर्वासु चावर्षम् ।

---

* त्रासु इति क. ।

बार्हस्पत्ये ।

दिशः सर्वाः प्रदह्यन्ते अक्षेमाय भयाय च ।

हिरण्यकशिपोर्वधाय सकलाकाशव्यापी दिग्दाहोऽभूत् ।

तथा च हरिवंशे ।

"सग्रहं सहनक्षत्रं प्रजज्वाल नभो निशि"* ।

मयूरचित्रे तु ।

विदिक्षु च दिशां दाहस्त्रिरात्रं यदि दृश्यते ।

शस्त्रसंपातमाचष्टे दुर्भिक्षमरकं तथा ॥

बार्हस्पत्ये ।

यथोक्तं तु महाशान्तिर्यथोक्तविधिना कृता ।

सर्वं दिग्दाहजं घोरं शमयेत् सा सदक्षिणा ॥

यथोक्तेति । अन्तरिक्षोत्पातविहिताऽभयाख्या वा महाशान्तिरित्यर्थः ।

मयूरचित्रे ।

गगने मेघसंछन्ने दिग्दाहश्चेन्महोदयः ।

दिवा वा यदि वा रात्रौ जायते नृपतेर्वधः ॥ ॥

द्वितीया शान्तिरुक्ता या सा च दिव्यप्रचोदिता ।

वर्षारात्रौ च दिग्दाहे दुर्दिने नृपतेर्वधः ॥

वर्षारात्रेषु निर्ह्रादे दिशां दाहो महान् भवेत् ।

क्षिप्रं च भयमाख्याति देशस्य च नृपस्य च ॥

अत्र साधारणी शान्तिः कर्त्तव्या गर्गभाषिता ।

'षण्मासा दिग्दाहफलम्'—इति पाकावर्त्ते वक्ष्यामः ।

इति महाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे दिग्दाहाद्भुतावर्त्तः ।

---

* भविष्यपर्वणि ४६ अ, ८ श्लो. ।

## अथ छायाद्भुतावर्त्तः ।

मत्स्यपुराणे ।

त्रिरजस्के रवौ व्यभ्रे यदा छाया न दृश्यते ।
दृश्यते तु प्रतीपा वा तदा देशभयं भवेत् ॥

आथर्वणाद्भुते च ।

यदा वाऽनभ्रविमले सूर्ये छाया न दृश्यते ।
दृश्यते सा प्रतीपा वा तदा देशभयं भवेत् ॥

वाराहसंहितायां च ।

यद्यमलेऽर्कच्छाया न दृश्यते वा प्रतीपा वा ।
देशस्य तस्य सुमहद्भयमायातं विनिर्देश्यम् ॥

पराशरस्तु ।

दिवा व्यभ्रे विरजसि वा रवौ छायादर्शनं तत्प्रातिलोम्यदर्शनं वा जनमारभयम् ।

मत्स्यपुराणे हिरण्यकशिपुवधनिमित्तम् ।

"यदा च सर्वभूतानां छाया न परिवर्त्तते ।
अपराह्णगते सूर्ये लोकानां युगसंक्षये"* ॥

मत्स्यपुराणाद्युक्ता सूर्येन्दुपर्यन्यसमीरणयोगात्मिका वृष्ट्यद्भुतावर्त्ते लिखिता शान्तिरत्र कर्त्तव्या ।

मयूरचित्रे तु ।

छाया वै यत्र भूतानां परिवृत्तिं न गच्छति ।
अपराह्णगते सूर्ये न च छायाऽवलम्बते ॥
अमात्यसार्थवाहानां श्रेष्ठानां च वदेद्वधम् ।
प्राजापत्या ततः शान्तिरभीक्ष्णकलहोदिता ॥

छायाद्भुतानामनुक्तफलपाकसमयविशेषत्वात् षाण्मासिकः फलपाको बोद्धव्यः ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचितेऽद्भुतसागरे छायाद्भुतावर्त्तः ।

---

* १६३ अ. ५० श्लो. ।

## अथ तमोधूमरजोनिहाराद्भुतावर्त्तः ।

तत्र पराशरः ।

अथ तमांसि स्थानदिग्वर्णविशेषैः शुभाशुभं दर्शयति प्रजानाम् । स्थानफलमाह भूम्याश्रिते तमसि वर्षं विन्द्यात् । नभसि-महावर्षम् ।

मत्स्यपुराणपद्मपुराणहरिवंशेषु तारकामययुद्धे देवानां पराजयनिमित्तम् ।

"विवेश रूपिणी काली कालमेघावगुण्ठिता ।
द्यौर्न भात्यभिभूतार्का घोरेण तमसाऽऽवृता"* ॥

पराशरः ।

शरदन्नप्राचुर्यमुदकचराणां च प्राणिनामुपद्रवम् । पर्वतौषधीनामभावं ग्रामनगरजनपदपीडाम् ।

आरण्यककाण्डे जनस्थाननिवासिनां वधनिमित्तम् ।

"तमसा चैव घोरेण समुद्भूतेन सर्वतः ।
प्रच्छादितं जनस्थानं नीचाकाशे समन्ततः"† ॥

मत्स्यपुराणे च ।

अनैशानि तमांसि स्युर्यत्र तच्चाशु नश्यति ।

अथ दिक्फलं पराशरः ।

दिक्षु जनपदपीडनम् ।

आदिकाण्डेषु परशुरामपराजयनिमित्तम् ।

"दिशः सतिमिराश्चासन् न तताप दिवाकरः"‡ ।

मत्स्यपुराणपद्मपुराणहरिवंशेषु तारकामययुद्धे देवानां पराजयनिमित्तम् ।

"तिमिरौघपरिक्षिप्ता न राजन्ते दिशो दश"§ ।

---

* मत्स्यपुराणे १७२ अ, ११ श्लो. ।
† नेदं पद्यं वाल्मीकीये यथोक्तस्थाने उपलभ्यते ।
‡ नेदं पद्यं वाल्मीकीये उक्ते उपलभ्यते । § मत्स्यपुराणे १७२ अ, १८ श्लो. ।

गदापर्वणि दुर्योधनवधनिमित्तम् ।

"बभूवुश्च दिशः सर्वास्तिमिरेण समावृताः"* ।

अथ वर्णफलं पराशरः ।

पांशुरजोऽरुणप्रभेषु वृष्टिं श्वेते ब्राह्मणपीडामितरवर्णवृद्धिं लोहिते शस्त्रकोपं नीले शस्त्रक्षयं वर्षणं च प्रदोषे महाभयम् ।

मत्स्यपुराणे ।

रजसा वाऽपि धूमैर्वा दिशो यत्र समाकुलाः ।
आदित्यचन्द्रताराश्च विवर्णा भयवृद्धये ॥

द्रोणपर्वणि द्रोणवधनिमित्तम् ।

"ततस्तुमुलमाकाशमावृणोत् सदिवाकरम् ।
वातोद्धतं रजस्तीव्रं कौशेयनिकरोपमम्"† ॥

मत्स्यपुराणपद्मपुराणयोर्हिरण्यकशिपुवधनिमित्तम् ।

"न प्रकाशन्ति दिशो रक्तरेणुसमाकुलाः"‡ ।

आग्नेयपुराणेऽप्येवम् ।

हरिवंशे कंसवधनिमित्तम् ।

"अपराह्णगते सूर्ये लोकानां क्षयकारिणि ।
न प्रकाशन्ते च दिशो रक्तरेणुसमाकुलाः"§ ॥

आदिकाण्डे परशुरामपराजयनिमित्तम् ।

"रजसा च जगत् कृष्णं भस्मनेवावकीर्यते"¶ ।

भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

"विष्वग्वाताश्च वान्त्युग्रा रजो नाप्युपशाम्यति**"—इति

अत्र तमोधूमाद्युत्पातेषु सावित्रीमन्त्रदशकलक्षहोमादिका शान्तिरभयाख्या वा महाशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

---

* ५६ अ, ८ श्लो. । † नेदं पद्यमुक्तस्थले उपलभ्यते । ‡ मत्स्यपुराणे १६३ अ, ४८ श्लो. ।
§ भविष्यपर्वणि हिरण्यकशिपुवधनिमित्तम् ४६ अ, २६ श्लो. ।
¶ नेदं पद्यार्थं वाल्मीकीये यथोक्तस्थाने उपलभ्यते । ** ३ अ, ११ श्लो. ।

वराहेण त्वग्निविकृतप्रकरणमध्ये ।

धूमोऽग्निसमुत्थो रजस्तमश्चाग्निजं महाभयदम् ।

इति वाक्यं लिखित्वा 'मन्त्रैराग्नेयाद्यैः'-इत्यादिभिराग्नेयी शान्तिर्विहिता । तां चाग्न्यद्भुतावर्त्ते लिखिष्यामः-इति ।

अत्रानुक्तफलपाकसमयविशेषयोस्तमोनीहारयोरान्तरिक्षत्वात् षाण्मासिकः फलपाकः ।

धूमरजसोस्तु फलपाकसमयो गार्गीये ।

धूमिकापांशुवर्षेषु फलं मासाद्विपच्यते ।

वराहसंहितायामप्येवम् ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-ऽद्भुतसागरे तमोधूमरजोनिहाराद्भुतावर्त्तः ।

---

## अथोल्काद्भुतावर्त्तः ।

तत्रोल्कास्वरूपमाह गर्गः ।

अस्त्राणि विसृजन्त्येते शुभाशुभनिवेदकाः ।
लोकपाला महात्मानो लोकानां ज्वलितानि तु ॥

वटकणिकायां तु वराहः ।

अस्त्राणि लोकपाला लोकाभावाय यानि विसृजन्ति ।
तान्युल्काः केषां चित् पुण्यकृतस्ते च्युताः स्वर्गात् ॥

वराहसंहितायां च ।

दिवि भुक्तशुभफलानां पततां रूपाणि यानि तान्युल्काः ।

बार्हस्पत्ये ।

अप्रधृष्याणि यानि स्यू शरीराणीन्द्रियैर्दृढैः ।
क्षमावन्ति विशुद्धानि सत्यव्रतरतानि च ॥
तान्येतानि प्रकाशन्ते भाभिर्वितिमिरं नभः ।
समन्ताद्दलयन्तीह यस्मादंशुकरं तपः ॥

तानि भाग्यक्षयाद्भूयः प्रच्युतानि नभस्तलात्।
क्षितौ सलक्षणान्येव निपतन्तीह भार्गव॥
तेषां निपतनं विप्र यत्र यत्रेह जायते।
तत्र तत्रैव विविधं प्रजानां जायते भयम्॥

तत्र सामान्येन पतता ज्योतिर्विशेषेणैवोल्केति संज्ञा प्रतिपादिता। पञ्चविधा चोल्का भवति।

तथा च वराहसंहितायाम्।

धिष्ण्योल्काशनिविद्युत्तारा इति पञ्चधा भिन्नाः।

वटकणिकायां च।

उल्काऽथ पञ्चरूपा धिष्ण्योल्काविद्युतोऽशनिस्तारा।

बार्हस्पत्ये।

तारा धिष्ण्यास्तथोल्काश्च विद्युतोऽशनयस्तथा।
विकल्पाः पञ्चधा चैषां परस्परबलोत्तराः॥

तारालक्षणमाह काश्यपः।

पद्मताम्राकृतिस्तारा हस्तमात्रायता मता।

वटकणिकायाम्।

तारा तु हस्तमात्रा यात्यूर्ध्वमधश्च श्वेतताम्राः।

वराहसंहितायां च।

तारा तु हस्तदीर्घा शुक्ला ताम्राब्जतन्तुरूपा च।
तिर्यगधश्चोर्ध्वं वा याति वियत्युह्यमाने च॥

बार्हस्पत्ये तु।

यस्तु शुक्लेन वर्णेन वपुषा पेशलेन च।
पद्मतन्तुनिकाशेन धूमराजीनिभेन वा॥
उल्काविकारः सोऽप्युक्तस्तारका नाम नामतः।

अथ धिष्ण्यालक्षणम्। तत्र काश्यपः।

धनूंषि दश दृश्येत धिष्ण्या सूक्ष्मा च विच्युता।

ज्वलिताङ्गारवर्णाभा द्वौ हस्तौ दृश्यते नभे* ॥

वटकणिकायाम्।

धिष्ण्या सिता द्विहस्ता धनूंषि दश याति कृतदेहा।

बृहत्संहितायाम्।

धिष्ण्या कृशाऽल्पपुच्छा दश धनुषो दृश्यतेऽन्तराभ्यधिका।
ज्वलिताङ्गारनिकाशा द्वौ हस्तौ सा प्रमाणेन ॥

बार्हस्पत्ये तु।

ज्वलिताङ्गारसंकाशा जिह्मगा त्वथ शीघ्रगा।
विना पुच्छावकाशेन द्विहस्ताऽतिकृशेन वा ॥
दशान्तराणि धनुषः पञ्च वाऽपि प्रदृश्यते।
उल्काविकारो बोद्धव्यो धिष्ण्या इत्यभिधीयते ॥

अथ विद्युल्लक्षणम्। तत्र काश्यपः।

विद्युत् त्रासकरी भीमा शब्दायन्ती चटाचटा।

वटकणिकायां वराहः।

विद्युत् तटतटाशब्दा ज्वालामालाकुला पतति।

वराहसंहितायां च।

विद्युत् सत्त्वत्रासं जनयन्ती तटतटस्वना सहसा।
कुटिलविशाला निपतति जीवेन्धनराशिषु ज्वलिता ॥

बार्हस्पत्ये तु।

तत्र शब्देन महता भृशं तटतटायिना।
सत्त्ववित्रासनात्यर्थं शब्देनोद्देशकारिणा ॥
ज्वालामालाविसर्पिण्यः प्रकृत्याऽत्युग्रदर्शनाः।
विद्युतो निपतन्त्याशु जीवत्सु वनराजिषु ॥

अथाशनिलक्षणं वटकणिकायाम्।

अशनिः प्राणिषु निपतति दारयति धरातलं बृहच्छब्दा।

---

* नभसि—इह नभे इत्यार्षः।

बृहत्संहितायां च ।

अशनिः स्वनेन महता नृगजाश्वमृगाश्मवेश्मतरुपशुषु ।
निपतति विदारयन्ती धरातलं चक्रसंस्थाना ॥

काश्यपस्तु ।

नरेभतुरगाश्वाश्मवृक्षेषु पतते सदा ।
ज्वलन्ती चक्रवत् पश्येदशनीमभ्रसंस्थिताम् ॥

बार्हस्पत्ये तु ।

तत्र शब्देन महता विवरेण विकर्षिणा ।
महाचक्रमिवागच्छेदायताङ्गा नभस्तलात् ॥
मनुष्यमृगहस्त्यश्ववृक्षाश्मपथि वेश्मसु ।
पतन्त्यशनयो दीप्ताः स्फोटयन्त्यो धरातलम् ॥

अथोल्कालक्षणम् । तत्र काश्यपः ।

बृहच्छिरास्तु सूक्ष्माङ्गा नतमानशिखोज्ज्वला ।
पौरुषी तु प्रमाणेन उल्का नानाविधा भवेत् ॥

षट्कणिकायाम् ।

उल्काऽग्रतो विशाला बहुप्रकारा पुरुषमात्रा ।

बृहत्संहितायाम् ।

उल्का शिरसि विशाला निपतन्ती वर्धते प्रतनुपुच्छा ।
दीर्घा च भवति पुरुषं भेदा बहवो भवन्त्यस्याः ॥

बार्हस्पत्ये तु ।

सूक्ष्माऽमूला विशालाग्रा पतन्ती वाऽपि वर्धते ।
कृशा नारीव दीप्तास्या सविषाङ्गारवर्षिणी ॥
उद्योतयन्ती गगनं काञ्चनेनैव कर्मणा ।
पीतेन चापि वर्णेन धूमधूम्राऽरुणेन वा ॥
नरप्रमाणा विज्ञेया उल्का बहुविधा तु सा ।

एवं पञ्चविधा ह्येताः शौनकेन प्रकीर्त्तिताः ॥
स्वर्गच्युतानां पततां लक्षणं पुण्यकर्मणाम् ।
प्रकृत्या पौरुषी योल्का तस्या भेदान् निबोधत ॥
पद्मशङ्खादिसंस्थानाः काश्चिदुल्का भवन्ति हि ।
वंशगुल्मनिभाः काश्चित् काश्चिदिन्द्रध्वजोपमाः ॥
काश्चिदन्द्रायुधप्रख्याः काश्चिन्मण्डलसन्निभाः ।
छत्रवच्चापि दृश्यन्ते चक्रवन्निपतन्ति च ॥
दण्डवच्चापि तिष्ठन्ति प्रभावन्ति च सर्पवत् ।
प्रकीर्णेन कलापेन खे गच्छेन्तीव बर्हिणः ॥
खण्डखण्डं गताः काश्चिदम्बरे स्तम्भिता यदा ।
काश्चित् प्रतीपगा वायोः काश्चिदम्बरमागताः ॥
तन्तुनैव हि सम्बद्धा धूयमानेन वायुना ।
पतन्ती दृश्यते का च्चित् का च्चिद्भ्रमति चाम्बरे ॥
उल्कासङ्घैः परिवृता पतेत् का च्चिन्नभस्तलात् ।
तेजांसि विकिरन्त्यन्याः प्रधावन्ति च गोलवत् ॥
प्रनृत्यत्प्रेतमार्जारवराहानुगतास्तथा ।
सस्वना विस्वनाश्चापि तथा चायुधसन्निभाः ॥
एताश्चान्याश्च विविधाः पतन्ति च नभस्तलात् ।
एतासां फलमुक्तानां प्रवक्ष्यामि पृथक् पृथक् ॥
पद्मशङ्खेन्दुवज्राहिमत्स्यध्वजनिभाः शुभाः ।
श्रीवृक्षस्वस्तिकावर्त्तहंसद्विरदवत् तथा ॥

वराहसंहितायाम् ।

ध्वजझषगिरिकरिकमलेन्दुतुरगसन्तप्तरजतहंसाभाः ।

श्रीवृक्षवज्रशङ्खस्वस्तिकरूपाः शिवसुभिक्षाः ॥

एता एव यदा भ्रमन्तः पतन्ति तदा दोषावहा भवन्ति ।
यदुक्तं गार्गीये ।

छत्रध्वजझषाकारा भ्रमन्ती निपतेद्यदि ।
महोल्का सप्तरात्रेण सा निहन्यान्नृपोत्तमम् ॥

मयूरचित्रे ।

इन्द्रध्वजरथाकारा भ्रमन्ती निपतेद्यदि ।
महोल्का सप्तरात्रेण सामात्यं हन्ति पार्थिवम् ॥
नागाश्वरथरूपाश्च ससैन्यं हन्ति पार्थिवम् ।
महीधरनिभास्तास्तु घ्नन्ति देशं सराजकम् ॥

वराहसंहितायाम् ।

सुरपतिचापप्रतिमा राष्ट्रं नभसि विलीना जलदान् हन्ति ।
पवनविलोमा कुटिलं याता न भवति शस्ता विनिवृत्ता वा ॥

बार्हस्पत्ये तु ।

राष्ट्रमिन्द्रायुधप्रख्या मन्त्रिणं चक्रसन्निभा ।
विलीयमाना नभसि हिनस्त्युल्का पयोधरान् ॥
प्रजावैकल्यकारिण्यो वायोश्च प्रतिलोमगाः ।
नभोमध्यं च या यान्ति याश्च कुर्युर्गतागतम् ॥

वराहसंहितायाम् ।

वर्हिपुच्छरूपिणी लोकसंक्षयावहा ।
सर्पवत् प्रसर्पिणी योषितामनिष्टदा ॥

बार्हस्पत्ये तु ।

मयूरपिच्छानुगता कुर्यादुल्का जनक्षयम् ।
स्त्रीणामनिष्टदा ज्ञेया या च सर्पति सर्पवत् ॥
उल्कासङ्घैः परिवृता याः पतन्ति नभस्तलात् ।
अनुसारिण्य उल्कास्ता राजराष्ट्रभयावहाः ॥

नभस्तलादाकाशमध्यात्।
वराहसंहितायाम्।

अम्बरमध्यात् पूर्वाह्णे निपतन्त्यो राजराष्ट्रनाशाय।

आकाशमध्यादन्यत्र राजभयमात्रम्।
यथाऽऽह पराशरः।

युगपदर्चिस्तनयित्नुमत्यो निपतेयुः पार्थिवाभावाय।

वराहसंहितायाम्।

बम्भ्रमती गगनोपरि संभ्रममाख्याति लोकस्य।

बार्हस्पत्ये च।

लोकविभ्रममत्यर्थं भ्रमन्ती गगनोपरि।

करोतीति सम्बन्धः।
वराहसंहितायाम्।

यस्याश्चिरं तिष्ठति खेऽनुषङ्गो दण्डाकृतिः स्यान्नृपतेर्भयाय।
या वीक्ष्यते तन्तुघृतेव खस्था या वा महेन्द्रध्वजतुल्यरूपा॥

बार्हस्पत्ये च।

या चाकाशे चिरं तिष्ठेद्दण्डवद्भूपभीतिदा।
तथा तन्तुवृता हन्ति नृपमिन्द्रध्वजोपमा॥

वराहसंहितायाम्।

हन्ति मण्डला पुरं छत्रवत् पुरोहितम्।
वंशगुल्मसंस्थिता राष्ट्रदोषकारिणी॥

बार्हस्पत्ये।

पुरं मण्डलसंस्थाना छत्राकारा पुरोधसम्।
वंशगुल्मनिभा राष्ट्रं हन्यादुल्का नभःस्थिता॥
गोलवद्याः प्रधावन्ति तासु राष्ट्रभयं वदेत्।

मयूरचित्रे।

रथकूवरसंस्थाना हन्यान्नृपतिवाहनम्।
असिपट्टिशसंस्थाना हन्याद्राष्ट्रं सराजकम्॥

गार्गीये तु ।

रथकूवरसंस्थाना हन्याद्भूपं सवाहनम् ।
शूलपट्टिशसंस्थाना देशं हन्ति सराजकम् ॥
उल्का लाङ्गलसंस्थाना कर्षकाँश्चैव घातयेत् ।

मयूरचित्रे ।

लाङ्गलाकृतयस्ताश्च शिखिकण्ठसमत्विषः ।
अमात्यान् नैगमाँश्चैव घ्नन्ति वै कर्षकाँस्तथा ॥

पराशरः ।

श्वमयूरशूकररक्षःप्रविकीर्णकेशनिकाशाभिः प्रवरनरपतिविनाशः स्यात् ।

बार्हस्पत्ये ।

वराहप्रेतशार्दूलसिंहमार्जारवानरैः ।
तुल्या भयावहा उल्काऽतिकृष्णाऽशनिभा च या ॥
शूलपट्टिशशक्त्यृष्टिपरश्वधसमुद्गरैः ।
अस्त्रावरणतुल्याश्च वृषभाश्च न पूजिताः ॥

वराहसंहितायाम् ।

प्रेतप्रहरणखरकरभनक्रकपिदंष्ट्रिलाङ्गुलमृगाभाः ।
गोधाहिधूमरूपा पापा या चोभयशिरस्का च ॥

एवंविधा यदा विस्तीर्णा भवन्ति तदा मध्यफला बोद्धव्याः ।

यथाऽऽह काश्यपः ।

आयुधप्रेतसदृशी जम्बुकोष्ट्रखराकृतिः ।
धूमरूपा च यो सोल्का विस्तीर्णा सा तु मध्यमा ॥

वराहसंहितायाम् ।

व्यालशूकरोपमा विस्फुलिङ्गमालिनी ।
खण्डशोऽथ वा गता सस्वना च पापदा ॥

पराशरः ।

पतन्त्येव चेत् खण्डशो विशीर्येत सन्निपातं राज्ञामितरेतरभेदं च।

बार्हस्पत्ये ।

प्रनृत्यत्प्रेतमार्जारवराहानुगताश्च याः ।
क्रव्यादव्यालरूपाश्च जलसंक्षयकारिकाः ॥
स्फुलिङ्गान् विसृजन्त्यो यास्ताश्च वह्निभयप्रदाः ।
खण्डखण्डगता नेष्टाः सस्वनाश्चातिदारुणाः ॥
क्ष्वेडितास्फोटिताक्रुष्टा गीतवादित्रनिस्वनाः ।
उल्काः पातेषु बोद्धव्या राजराष्ट्रभयावहाः ॥

वराहसंहितायां च ।

स्वेदास्फोटितवादितगीतोत्क्रुष्टस्वना भवन्ति यदा ।
उल्का निपातसमये भयाय राष्ट्रस्य सनृपस्य ॥

मयूरचित्रे ।

सद्यो या रक्तवर्णा च ज्ञेया शस्यविघातिनी ।
महाशब्दं च कुर्वाणा यदोल्का निपतन्ति च ॥
विपत्तिविषयं याति सदारो नृपतिस्तदा ।

पद्मपुराणाग्नेयपुराणयोर्हिरण्यकशिपुवधनिमित्तम् ।

अपतन्नगरादुल्का विद्युद्रूपाः सशब्दिताः ।
दिवा रात्रौ पतन्ति स्म हसन्त्यो रविमण्डलम् ॥

गार्गीये ।

अग्निवर्णा सनिर्घाता उल्का तु निपतेद्यदि ।
तदा हि योधलक्षस्य मही पिबति शोणितम् ॥

गदापर्वणि पाण्डवशिविरक्षयनिमित्तम् ।

"महास्वना पुनर्दीप्ता सनिर्घाता भयङ्करी ।
पापात चोल्का महती पतिते पृथिवीपतौ"* ॥

* ५८ अ. ५०–५१ श्लो. ।

वटकणिकायाम्।

क्रूरग्रहर्क्षलग्नक्षणतिथिकरणप्रभञ्जनैर्दीप्ता।
दीप्ताण्डजमृगविरुतैर्निर्घातैः क्षितिविकम्पैश्च॥

क्रूरग्रहर्क्षलग्नादिभिर्दीप्ता भवति अनिष्टफलदा भवतीत्यर्थः।

अयोध्याकाण्डे।

"सनिर्घाता महोल्काश्च पतन्ति हि महास्वनाः।
प्रायेण हि निमित्तानामीदृशानां समुद्भवे॥
राजा वा नाशमाप्नोति राष्ट्रं वा नाशमृच्छति"*।

द्रोणपर्वणि द्रोणवधनिमित्तम्।

"अपतद्दीप्यमाना च सनिर्घाता सकम्पना।
उल्का ज्वलन्ती संग्रामे पुच्छेनावृत्य सर्वशः"†॥

भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम्।

"पतन्त्युल्काः सनिर्घाताः शक्राशनिसमप्रभाः।
अद्य चैव निशां व्युष्टामनयं समवाप्स्यथ॥
विनिःसृत्य महोल्काभिस्तिमिरं सर्वतो दिशम्।
अन्योन्यमुपतिष्ठद्भिस्तत्र चोक्तं महर्षिभिः।
भूमिपालसहस्राणां भूमिं पास्यति शोणितम्"‡॥

सनिर्घाता विद्युतोऽशनयश्च दोषाहा भवन्ति।

तथा च द्रणपर्वणि द्रोणवधनिमित्तम्।

"शक्राशन्यश्च निष्पेतुः संनिर्घाताश्च विद्युतः"§।

सभापर्वणि कुरुपुरविनाशनिमित्तम्।

"उल्का चाप्यपसव्येन पुरं कृत्वा व्यशीर्यत"¶।

गार्गीये।

उल्का ज्वलन्ती निपतेद्यदा वै धूमान्विता तालसमानमात्रा।

---

* वाल्मीकीये ८१ सर्गे १७-१९ तत्रान्यथा क्वचित् पाठः। † ७ अ. ३८-३९ श्लो.।
‡ ३ अ. ३५-३७ श्लो.। § उक्तस्थले नोपलभ्यते। ¶ ८० अ. २९ श्लो.।

सव्यापसव्यं विहितान्तनादा सा हन्ति दीप्ताकुलजाबलाङ्गलान् ॥

मयूरचित्रे ।

उल्का ज्वलन्ती यदि रेणुरूपा सधूम्रदण्डा पृथुतालमात्रा ।
सव्यापसव्यं विकृता सधूमा निहन्ति दस्यून् कुनृपाननेकान् ॥

पराशरः ।

सधूमा खरनिर्ह्रादिनी व्यभ्रेऽतिचण्डनिर्घाता नैर्ऋतीं दिशमभिपतेत् ज्वलन्ती तालमात्रा सधूमदण्डा हन्याद्रक्षःपिशाचदस्यून् कुराज्ञश्च ।

गार्गीये ।

पूर्वरात्रे तथोल्का चेदादित्यपथमाश्रिता ।
पश्चिमाऽभिमुखी याति मध्ये गत्वा विशीर्यते ॥
तदा शस्येषु नष्टेषु दुर्भिक्षमचिराद्भवेत् ।

मयूरचित्रे तु ।

पूर्वरात्रे तु सम्भूता आदित्यपथमाश्रिता ॥
पश्चिमाभिमुखी याति मध्ये चैव विशीर्यते ।
निष्पन्नेष्वपि शस्येषु तदा दुर्भिक्षमादिशेत् ॥
मानुषाश्च विपद्यन्ते समृद्धाश्च कुटुम्बिनः ।

पराशरः ।

यत्रातिमात्रज्वालाङ्गारकणानि चोद्गमन्ती भृशं स्तनयित्नुमत्यभिपतेत् तत्राचिरात् परचक्रम् ।

मयूरचित्रे ।

यदा महोल्का निपतेत् सधूमा घोरेण रूपेण च सस्फुलिङ्गा ।
अङ्गारवर्षं विपुलं सृजन्ती भयाय सा शंसति पार्थिवानाम् ॥
अभीक्ष्णमुल्का निपतन्ति यत्र स्फुलिङ्गयुक्ताश्च नभःस्थलान्ताः ।
विनाशमाहुर्नृपतेस्तदानीं यथाऽऽह गर्गो हरभाषितानि ॥

तथा ।

उल्कावर्षो यदि भवेच्छिलावर्षसमन्वितः ।
योधमुख्यसहस्राणां भूमिः पास्यति शोणितम् ॥

आदिपर्वणि गरुडेन गजकच्छपभक्षणनिमित्तम् ।

"..................पेतुरुल्काः सहस्रशः"* ।

मौशले वृष्णिवंशक्षयनिमित्तम् ।

"उल्काश्चाङ्गारवर्षिण्यः प्रपेतुर्गगनाद्भुवि"† ।

पराशरः ।

या चावनिमभिपत्याशु पुरुषमात्रमभिज्वलेत् सा पञ्चमासाभ्यन्तरादन्यभूपतिकारिणी स्यात् । या च निपत्याङ्गारमिवाभासेन्मुहुरन्तर्दशरात्रीः साऽन्यमवनिपतिमधिकुर्यात् ।

पद्मपुराणे तारकामययुद्धे देवानां पराजयनिमित्तम् ।

पेतुरुल्काः सहस्राणि निपेतुः खचराणि च ।

पराशरः ।

तथा सुमहती सधूमज्वाला तारागणानुसृता यमभिप्रायात् तमपसव्यतः प्रतिलोमं वाऽऽगच्छेत् तं हन्यात् ।

अथोल्काया अधोमुखादिपतनफलं बार्हस्पत्ये ।

अधोमुखो नृपं हन्याद्ब्राह्मणानूर्ध्वगामिनी ।
तिर्यगाराजपत्नीश्च श्रेष्ठिनः प्रतिलोमिनी ॥

वराहसंहितायाम् ।

हन्त्यधोमुखी नृपान् ब्राह्मणाँस्तथोर्ध्वगा ।
तिर्यगानृपाङ्गनाः श्रेष्ठिनः प्रतीपगा ॥

अथ वर्णफलं गार्गीये ।

यदा विनिपतन्त्युल्काः कुन्देन्दुरजतप्रभाः ।
राजा विजयमाप्नोति सुभिक्षक्षेम एव च ॥

---

* ३० अ, ३५ श्लो. ।    † १ अ, ३ श्लो. ।

मयूरचित्रे ।

यदा विनिपतन्त्युल्काः कुन्देन्दुरजतप्रभाः ।
राज्ञो विजयमाचष्टे सुभिक्षक्षेमकारिका ॥
दधिकाञ्चनवैदुर्यचन्द्रस्फटिकसन्निभाः ।
उल्कारजतसंकाशाः क्षेममाहुर्महीपतेः ॥
अग्निवर्णाश्च सुस्निग्धा रूप्यस्फटिकसन्निभाः ।
पतन्ति वर्षमाख्यान्ति महोल्काः सद्य एव तु ॥
वैदूर्यवर्णस्फटिकप्रकाशाः सुवर्णवर्णा रजतप्रभाश्च ।
याश्चन्द्रवर्णादधिकप्रकाशास्ताः क्षेममाहुर्विजयं च राज्ञः ॥
वैदूर्यवर्णासु वदन्ति कृत्स्नं क्षेमं सुभिक्षं स्फटिकप्रभासु ।
अग्निप्रकोपं कनकप्रभासु रक्तासु संग्राममुदाहरन्ति ॥
श्यामा रूक्षा च विध्वस्ता शस्यपीडावहा मता ।
चन्द्रमण्डलवर्णा या पावकार्चिःप्रभाऽथ वा ॥
उल्का विनिपतेद्यत्र युवराजवधं वदेत् ।

वराहसंहितायाम् ।

श्यामारुणनीलाऽसृग्दहनासितसन्निभा रूक्षा ।
सन्ध्यादिनजा वक्रा दलिता च परागमभयाय ॥
शुक्ला रक्ता पीता कृष्णा चोल्का द्विजादिवर्णघ्नी ।
क्रमशश्चैतान् हन्युर्मूर्धोरःपार्श्वपुच्छस्थाः ॥

एताः शुक्लादिवर्णा उल्का यथाक्रमं कूर्मविभागोक्तक्रमेण मूर्धोरःपार्श्वपुच्छस्थान् जनपदान् हन्युः ।

बार्हस्पत्ये ।

हिनस्ति शुक्ला शीर्षस्था मध्यस्थान् क्षतजप्रभान् ।
पीता वैश्योपघाताय शूद्रान् हन्यात् सितेतरा ॥

स्फुलिङ्गाद्यशुभलक्षणयुक्तोल्का शुक्लादिवर्णा विप्रादिनाशिनी बोद्धव्या ।

यदुक्तं गार्गीये ।

श्वेता च सस्फुलिङ्गोल्का ब्राह्मणानां भयावहा ।
क्षत्रियाणां तु संरक्ता वैश्यानां पीतवर्णिका ॥
कृष्णा सधूमा शूद्राणां भयमाख्याति दारुणम् ।

मयूरचित्रे तु ।

रजउल्कापातविद्युद्दिग्दाहाः प्रभवन्ति चेत् ।
श्वेताः पीतास्तथा रक्ताः कृष्णा विप्रादिनाशनाः ॥
अनुवर्णं क्रमेणोक्ता यथा गर्गेण भाषितम् ।

अथ दिक्फलं वराहसंहितायाम् ।

उत्तरदिगादिपतिता विप्रादीनामनिष्टदा रूक्षा ।
स्निग्धा खण्डा ऋज्वी नीचोपगता च तद्वृद्ध्यै ॥

वटकणिकायां तु ।

उदगादिषु विप्रादीन् सितरक्तसुवर्णकृष्णवर्णाश्च ।

घ्नन्तीति सम्बन्धः ।

पराशरास्तु ।

श्वेतरक्तपीतकृष्णवर्णाः सौम्यादिदिगनुगामिन्यो ब्राह्मणादिवर्णघातायान्यवर्णाऽन्यदिशमभिपतन्त्युभयवर्णमभिहन्यात् ।

आदित्यचन्द्राभिमुखाद्युल्कापातफलं गार्गीये ।

आदित्याभिमुखी या च उल्का पतति दारुणा ।

पराशरस्तु ।

महती चोज्ज्वलन्ती तिर्यक् सूर्यमभिद्रवेद्वधाय राज्ञः ।

मयूरचित्रे ।

आदित्याभिमुखी चोल्का पतन्ती दारुणा मता ।
शशाङ्काभिमुखी यत्र पतत्युल्का सुदारुणा ॥
करोति द्विजपीडाश्च परोहितवधं तथा ।

विष्णुधर्मोत्तरे।

दिवोल्का चन्द्रार्कविनिर्गता उद्योतिनी अतिस्थूला सस्फुलिङ्गा तथोर्ध्वगा राजमृत्यवे स्यात्।

अथ ग्रहनक्षत्रपीडाकृदुल्काफलं मयूरचित्रे।

ग्रहर्क्षसोमसूर्येषु पतन्त्युल्का भयावहाः।

काश्यपः।

नक्षत्राणि ग्रहाश्चैव उल्कया ध्वस्तधूपिताः।
तद्देशनाथनाशाय लोकानां संक्षयाय च॥

पराशरस्तु।

सूर्यमेव चेदभिहत्योल्का याम्यां दिशमभिपतेद्राज्ञो वधाय।

पराशरः।

या चार्कचन्द्रयोरग्रतो निपतेन्नृपतिजयमविजयं च पृष्ठतः।

वराहसंहितायाम्।

पौरेतरघ्नमुल्काऽपसव्यकरणं दिवाकरहिमांश्वोः।
उल्का शुभदा पुरतो दिवाकरविनिःसृता यातुः॥

आदित्यमण्डलादुल्कपातोऽतीव भयावहः।

तथा च भीष्मपर्वणि कुरुक्षयनिमित्तम्।

"पपात महती चोल्का मध्येनादित्यमण्डलात्"*।

द्रोणपर्वणि द्रोणवधनिमित्तम्।

"पपात महती चोल्का आदित्यान्निःस्वनत्युत"†॥

स्कन्दपुराणे लोकोद्वेगनिमित्तम्।

दिवाकरात् कबन्धाङ्कात् पेतुरुल्काः समन्ततः।

चन्द्रविम्बविनिःसृताऽपि दोषावहा भवति।

वराहसंहितायाम्।

संस्पृशती चन्द्रार्कौ तद्बिम्बविनिःसृता सभूकम्पा।

---

* ११२ अ, ११ श्लो.। † ११२ अ, १८ श्लो, तत्र 'निश्चरन्त्युत' इति पाठः।

परचक्रागमनृपभयदुर्भिक्षावृष्टिभयजननी ।

हरिवंशे बाणपराजयनिमित्तम् ।

"सूर्यं भित्त्वा महोल्का च पपात धरणीतले"* ।

आश्वमेधिके सैन्धवपराजयनिमित्तम् ।

"उल्काश्च जघ्निरे सूर्यं विकीर्यन्त्यः समन्ततः"† ।

शल्यपर्वणि कौरवक्षयनिमित्तम् ।

"सदण्डाः सोल्मुका राजन् कीर्यमाणाः समन्ततः ।
उल्काः पेतुर्दिवो भूमावाहत्य रविमण्डलम्"‡ ॥

भीष्मपर्वणि कुरुक्षयनिमित्तम् ।

"पपात महती चोल्का प्राङ्मुखी भरतर्षभ ।
उद्यन्तं सूर्यमाहत्य व्यशीर्यत महास्वना"§ ॥

पराशरः ।

उदयेऽस्तमये भानुमुल्काऽऽहत्य समुच्छ्रिता ।
प्रज्वलन्ती तदा राजा क्षिप्रं शस्त्रेण हन्यते ॥

वराहसंहितायाम् ।

दिवसकरमुदयसंस्थितमुल्काशनिविद्युतो यदा हन्युः ।
नरपतिमरणं विद्यात् तदाऽन्यराष्ट्रप्रतिष्ठां च ॥

अथ चन्द्रपीडाकृदुल्काफलम् । पद्मपुराणमत्स्यपुराणयोर्हिरण्यकशिपुवधनिमित्तम् ।

उल्काः प्रज्वलिताश्चन्द्रे विचरन्ति यथासुखम् ।

गार्गीये ।

चन्द्रमण्डलगा या च पावकार्चिःप्रभाऽथ वा ।
उल्का विनिपतेत् तत्र युवराजवधं वदेत् ॥

---

* ११६ अ. २१ श्लो. । † ७७ अ. १६ श्लो. । ‡ ११ अ. १५ श्लो. । तत्र
'सदण्डशूला दीप्ताग्रा दीर्यमाणाः समन्ततः ।
उल्का भूमिं दिवः पेतुराहत्य रविमण्डलम्' एवमुपलभ्यते ।

§ १० अ. ३८ श्लो. ।

पराशरः।

चन्द्रमसमभिहन्यादभियोक्तुर्वधाय च। सूर्ये नागराणां तयोरेवान्तरा चेद्रजेच्यायिनागरसंधानय–इति।

वराहसंहितायां तु।

उल्कया यदा शशी ग्रस्त एव हन्यते।

हन्यते तदा नृपो यस्य जन्मनि स्थितः॥

जन्मनि जन्मराशावित्यर्थः।

पराशरः।

उपरक्तं चन्द्रमसमभिदध्यादभियोक्तुर्वधाय।

मत्स्यपुराणे हिरण्यकशिपुवधनिमित्तम्।

"गृहीतो राहुणा चन्द्र उल्काभिरभिहन्यते"*।

पराशरः।

पीताऽरुणनीलासितरक्ता वा सस्फुलिङ्गाङ्गारार्चिर्वाऽर्कमिन्दुमुद्यान्तमभिघ्नती प्रवरनरपतिविनाशिनी स्यात्।

वराहसंहितायाम्।

उदये घ्नती रवीन्दू पौरेतरमृत्यवेऽस्ते वा।

बृहद्यात्रायाम्।

लग्नेऽर्केन्दू निघ्नती शास्ति पौरान् उल्का हन्याद्या तु पौरग्रहांश्च।

यातुः शस्ता समृता वा ध्रुवर्क्षे नेष्टाऽनोऽन्या धूमिनी या च रूक्षा॥

भौमघातफलं गार्गीये।

यदा तु निपतन्त्युल्का हन्यादङ्गारकं ग्रहम्।

तदा सेनापतिवधं शस्त्रकोपं च निर्दिशेत्॥

मयूरचित्रे।

निपतन्ती यदा चोल्का निहन्त्यङ्गारकं ग्रहम्।

सेनापतिवधं ब्रूयाच्छस्त्राग्निभयमेव च॥

बुधघातफलं गार्गीये।

यदा बुधं तापयन्ती उल्काज्वलनसन्निभा।

---

१६३ अ. ४२ श्लो.।

तदा कुमारमरणं ज्ञेयं देशस्य पीडनम् ॥

मयूरचित्रे ।

बुधं सन्तापयत्युल्का ज्वालामालासमाकुला ।
कुमारमरणं ब्रूयाद्भूपपीडा च सम्भवेत् ॥

बृहस्पतिघातफलं गार्गीयमयूरचित्रयोः ।

बृहस्पतिं देवगुरुं यद्युल्का परितापयेत् ।
पुरोहितवधं ब्रूयात् पीड्यन्ते च द्विजातयः ॥

भार्गवघातफलं गार्गीये ।

भार्गवं तापयन्ती सा तत्र राजवधं वदेत् ।

मयूरचित्रे ।

भार्गवं तापयन्ती सा महाराजभयावहा ।

शनैश्चरघातफलं मयूरचित्रे ।

निपतन्ती यदा चोल्का दीप्ता हन्ति शनैश्चरम् ।
तदा नायकमुख्यानां गार्गीया ब्रुवते फलम् ॥

गार्गीये ।

यदा रविसुतं दीप्ता उल्का हन्ति शनैश्चरम् ।
तदा नायकमुख्यांश्च बलाध्यक्षांश्च पातयेत् ॥

अथ नक्षत्रघातफलं वराहसंहितायाम् ।

भाग्यादित्यधनिष्ठामूलेषूल्काहतेषु युवतीनाम् ।
उग्रक्षत्रिय*पीडा पुष्यानिलविश्वदेवेषु ॥
ध्रुवसौम्येषु नृपाणामुग्रेषु सवारुणेषु चौराणाम् ।
क्षिप्रेषु कलाविदुषां पीडा साधारणे च हते ॥

जन्मनक्षत्रघातफलं गार्गीये ।

यस्य राज्ञस्तु नक्षत्रमुल्कया प्रतिहन्यते ।
स राजा नश्यति क्षिप्रं यदि शान्तिं न कारयेत् ॥

---

* विप्रक्षत्रिय-इति अ. ।

मयूरचित्रे ।

यस्य वै जन्मनक्षत्रमुल्कया प्रतिहन्यते ।
क्षिप्रं स हीयते राजा यदि शान्तिं न कारयेत् ॥

पराशरस्तु ।

असिमुशलभिन्दिपालोरुभुजगाकृतिश्च निर्घाताङ्गारधूमार्च्चिष्मती या वा महती यस्यर्क्षमवनिपतेरभिहन्यात् स हन्यते सराष्ट्रम् ।

मयूरचित्रे ।

त्रिशङ्कुं ब्रह्मराशिं च चित्रां स्वातीमरुन्धतीम् ।
मृगव्याधमगस्त्यं च ब्रह्मणो हृदयं तथा ॥
अरुणं शिशुमारं च सप्तर्षीन् ध्रुवमेव च ।
एतानभिहतान् दृष्ट्वा उल्कादिभिर्महद्भयम् ॥

गार्गीये तु ।

त्रिशङ्कुं ब्रह्मराशिं च चित्रां स्वातीमरुन्धतीम् ।
मृगव्याधमगस्त्यं च ब्रह्मणो हृदयं तथा ॥
अरुणं शिशुमारं च ध्रुवं सप्तर्षिमण्डलम् ।
एतान् यदि निहन्त्युल्का तदा विद्यान्महाभयम् ॥
विलुप्यन्ते च भूतानि दस्युभिर्मरकेण वा ।

बार्हस्पत्ये ।

आशाग्रहोपघातेषु तद्दिश्यानां भयं वदेत् ।

वाराहसंहितायाम् ।

आशाग्रहोपघाते तद्देश्यानाम्......इति ।

पीडां करोतीति सम्बन्धः ।

तथा ।

नक्षत्रग्रहघातैस्तद्भक्तीनां क्षयाय निर्दिष्टा ।

वटकणिकायां च ।

उल्काग्रहर्क्षपाते तद्भक्तीनां च नाशाय ।

बार्हस्पत्ये तु ।

ग्रहेषु राज्ञां जानीयाद्भेषु तद्भक्तिजं भयम् ।

गार्गीये ।

यदि नक्षत्रमाश्रित्य द्विधा भूत्वा विशीर्यते ।

ज्ञेया प्रतिहता सोल्का न तत्र फलमादिशेत् ॥

अथोल्काविद्युदशनीनामाश्रयविशेषेषु पातफलं गार्गीये ।

ग्रहर्क्षसोमसूर्येषु निपतेत् तोरणे ध्वजे ।

गृहे च निपतेद्यत्र तत्रापि भयमादिशेत् ॥

मयूरचित्रे ।

तोरणध्वजगेहेषु स्वामिनां वधमादिशेत् ।

वराहसंहितायां तु ।

कुर्वन्त्येताः पतिता देवप्रतिमासु राष्ट्रभयम् ।

शक्रोपरि नृपतीनां गृहेषु तत्स्वामिनां पीडाम् ॥

बार्हस्पत्ये ।

देवतार्चासु पतनाद्राजराष्ट्रभयं भवेत् ।

एतास्वामिन्द्रशिरसि पतने नृपतेर्भयम् ॥

द्वारि वा पुःक्षयं विन्द्याद्गृहे तत्स्वामिनो भयम् ।

वराहसंहितायाम् ।

चैत्यतरौ संपतिता सत्कृतपीडां करोत्युल्का ।

द्वारि पुरस्य पुरक्षयमथेन्द्रकीले जनक्षयोऽभिहितः ॥

बार्हस्पत्ये च ।

चैत्यवृक्षादिपातेषु सत्कृतानां महद्भयम् ।

पुरद्वारि पुरक्षोभमिन्द्रकीले जनक्षयः ॥

वराहसंहितायाम् ।

ब्राह्मायतने विप्रान् विनिहन्याद्गोमिनो गोष्ठे ।

बार्हस्पत्ये च ।

ब्राह्मायतनपातेषु ब्राह्मणानामुपद्रवः ।
गोष्ठेषु गोमिनां विन्द्यात् कर्षकाणां खलेषु च ॥

वराहसंहितायाम् ।

.........खले कृषिकराणाम्—इति ।

मयूरचित्रे ।

वराहे वा मृगे वाऽपि वानरे वा पतेद्यदि ।
राक्षसाश्च पिशाचाश्च घ्नन्ति देशं सराजकम् ॥
निर्मले यत्र नभसि विद्युत्पातः प्रवर्त्तते ।
नित्यं भयमिहाख्याति देशस्य च कुलस्य च ॥

बार्हस्पत्ये तु ।

स्वभावान्निपतन्त्यन्या मारुतप्रतिलोमगाः ।
स्तृता न निद्युतो नेष्टा इष्टास्ताः पुनरन्यथा ॥

अत्रानुक्तविशेषशान्तिषूल्कापातेषु सावित्रीमन्त्रकदशलक्षहोमादिका शान्तिरभयाख्या वा महाशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

मयूरचित्रे तु ।

अत्र साधारणो शान्तिः कर्त्तव्या—इत्युक्तम् ।

मत्स्यपुराणविष्णुधर्मोत्तरयोस्तु वृष्टिविकारोक्तशान्तिर्विहिता । तां च वृष्ट्यद्भुतावर्त्ते लिखिष्यामः—इति ।

अथ विहितविशेषशान्तय उल्काद्युत्पाताः । तत्र दिवोल्कायाः पातफलं विष्णुधर्मोत्तरे ।

दिवोल्का राजमृत्यवे इति। यदा तु दिवा महत्युल्का पतति तदा राजानं हत्वा तद्राष्ट्रेऽन्यनृपतिं कुर्यात् ।

तथा च पराशरः ।

दिवा पतन्त्यतिमात्रमन्यनृपतिकारिणी स्यात् ।

आथर्वणाद्भुते ।

दिवा पतति योल्का सा हन्याद्देशं सभूपतिम् ।
महाशान्तिं तत्र कुर्यादमृतां विश्वभेषजीम् ॥

एतद्दिवा दिवापतितमहोल्कापरम् ।

तत्रैव ।

दिवोल्कायां नृपो ज्ञात्वा वरेद्विप्रं सुशिक्षितः* ।
दत्वा ग्रामवरं चास्मै शान्तिकर्म प्रवर्त्तयेत् ॥
वृतः स गत्वाऽरण्यार्धे दीक्षामादित्यदैवताम् ।
गृहीत्वा नवरात्रं तु तपेन्मूलाशनो यतः ॥
फलाशनो वा शाकाशो पिबेद्दुग्धं पयोऽथ वा ।
नवाहान्ते त्रिरात्रं तु सलिलेनैव वर्त्तयेत् ॥
प्रागुदक्प्रवणे देशे रमणीयेऽथ वा पुनः ।
आरण्यमुपयुञ्जानश्चरेद्दीक्षां समाहितः ॥
महीक्षितश्चरेन्नित्यं बलिं द्वादशरात्रिकम् ।
समन्ताद्यो विपक्षश्च विदूरश्च महासुरः ॥
तथा समरसश्चैव एतेषां निर्दिशेद्बलिम् ।
आपूपं भक्तसहितं शूर्पे सचरुमेव† च ॥
रक्षोभ्यो रुधिरं दद्यादुद्धुद्धमृतकाश्च ये ।
सप्तधेन्वादिकानेतान् सम्भारानुपकल्पयेत् ॥
श्वेतां धेनुं लोहितां च कृष्णां च कपिलां तथा ।
वह्निस्वरूपां च तथा बहुरूपां च सप्तमोम् ॥
सुवर्णनाभं कुर्वीत ताम्रपात्रं सुविस्तरम् ।
ताम्रस्त्रुवं शुक्लकृष्णा व्रीहीश्चैवोपकल्पयेत् ॥

---

* भृग्वङ्गिरोविदम् । इति त, पु. पा. । † घृतमक्षतमेव इति क. ।

तासां च सप्तधेनूनां क्षीरं संपाद्य यत्नतः ।
सद्योजातं दधि ततो मन्थानेनाभिमन्थयेत् ॥
इच्छन्ति केचिन्मन्थानं दक्षिणेनैव पाणिना ।
असद्योजातमपि वा केचिन्मध्यं जगुर्दधि ॥
तदुक्तं नवनीतं तु दिनान्येकादशैव हि ।
रक्षेत् पिपिलीकादिभ्यः सुगुप्तं तु निधापयेत् ॥
द्वादशेऽहनि संप्राप्ते यत्रोल्का पतिता भवेत् ।
तस्य देशमभिव्रज्य हेमपुङ्खशरेण तु ॥
प्रतिविध्य परं मृत्यो इति मन्त्रेण मन्त्रवित् ।
शान्तिवृक्षमयेनाथ संदंशेन तु मृत्तिकाम् ॥
गृहीत्वाऽनवेक्षमाणो गत्वा दक्षिणतः क्षिपेत् ।
द्वेष्यदेससमीपे वा तां मृदं प्रक्षिपेद्बुधः ॥
अनवेक्षमाणः प्रत्येत्य अष्टौ दिश्याः प्रकल्पयेत् ।
वेदोर्मध्ये वेदीमेकां सप्तविध्यादिसंभृतः ॥
क्षीरोदनं मध्यमेऽग्नौ श्रपयित्वा यथाविधि ।
कामयुक्तेन जुहुयादुपस्ताराभिघारितम् ॥
संपातानानयेच्छेषे ततः पूर्वादिवह्निषु ।
होमः प्रदक्षिणं कार्यः संपातांश्चैव पातयेत् ॥
होमः क्षीरोदनैश्चैव यामाहुस्तारकामिति ।
ततः क्षीरोदनात् तस्मात् सार्धपिण्डद्वयं ततः ॥
उल्कापातसमीपस्थैः प्राश्नीयात् तु वरैः सह ।
सर्वे च ते वरान् दद्युः प्राश्यकर्मोपकल्पकाः ॥
तामेवोपाचरेयुस्ते सर्वे च द्वादशीं निशाम् ।

यथोक्तमालभेनात्र पशुमादित्यदैवतम् ॥
यद्दैवतां चरेद्दीक्षां हविस्तद्दैवतं भवेत् ।
यथोक्तेन विधानेन वर्षाहोमादिकं चरेत् ॥
सावित्रीशान्तिसश्राद्धैर्विश्वकर्माभिरेव च ।
आदित्यनैर्ऋतैर्होमैः राष्ट्रं हुत्वा यथाविधि ॥
महाशान्तिं ततः कुर्याद्धोत्रे ग्रामस्वदक्षिणाम् ।

गार्गीये ।

यस्मिन् देशे पतन्त्युल्का भास्करे गगनस्थिते ।
सदेशो राजभृत्यश्च राजा चैव विनश्यति ॥

गगनस्थिते मध्याह्ने स्थित इत्यर्थः ।

यथाऽऽह नारदः ।

उल्का वा पतते विप्र मध्याह्ने चार्धरात्रतः ।
उदये प्रातः सन्ध्यायामपराह्ले विशेषतः ॥
तद्देशे म्रियते राजा दुर्भिक्षं च भवेत् ततः ।
देशस्तत्र विनश्येत षड्भिर्मासैर्न संशयः ॥

अर्धरात्र एव तु यदा उत्तरस्यां दिशि पतति तदा महावर्षं करोति न राजरमणादिकम् ।

तथा च पराशरः ।

सौम्यां दिशमर्धरात्रेऽभिपतति महावर्षमिति । मध्याह्ने तु यदा सधूमोल्कापातो भवति तदा सप्ताहाभ्यन्तरे फलं भवति ।

तथा च मयूरचित्रे ।

मध्याह्ने चेत् पतेदुल्का ज्वालाधूमसमाकुला ।
ससैन्यं सप्तरात्रेण नृपव्यूहं च नाशयेत् ॥

ज्वालासमाकुला ससैन्यं नृपं हन्ति । धूमसमाकुला व्यूहमिति ।

यदुक्तं भार्गवीये ।

मध्याह्ने चेत् पतेदुल्का ज्वलन्ती चाग्निसन्निभा ।

सर्सैन्यं सप्तरात्रेण सा हन्यान्मेदिनीपतिम् ॥

उदये सस्फुलिङ्गसधूमोल्कापाते नृपमरणमन्यथा दुर्भिक्षादिकमवगन्तव्यम् ।

तथा च मयूरचित्रे ।

उदये सस्फुलिङ्गा सा सधूमा राजमृत्यवे ।

प्रातः सधूमे ज्वालोल्कापाते फलं स्वल्पम् ।

मयूरचित्रे ।

प्राक्सन्ध्यायां पतेदुल्का ज्वलन्ती धूमसंकुला ।
नगरं मुच्यते राज्ञा सकोषबलवाहनम् ॥

विधूमाऽत्र ज्वलन्ती पौरे नृपतिं हन्ति ।

तथा च गार्गीये ।

पूर्वसन्धौ पतत्युल्का ज्वलन्ती वह्निसन्निभा ।
नागरं हन्ति राजानं सकोषबलवाहनम् ॥

अथ सन्ध्योल्कापातेऽपरमपि फलं मयूरचित्रे ।

पौराणां पूर्वसन्ध्यासु यायिनामपरासु च ।
एवं पश्चिमसन्ध्यासु यज्विनां भयमादिशेत् ॥

अपरासु मध्याह्नसन्ध्यासु च ।

यदुक्तं गार्गीये ।

प्राक्सन्ध्यायां नागराणां मध्याह्ने यायिनां तथा ।
ततः पश्चिमसन्ध्यायां यज्विनां भयमादिशेत् ॥

सन्ध्यादिषूल्कापाते शान्तिमाह नारदः ।

अत्र शान्तिं प्रवक्ष्यामि येन संपद्यते शुभम् ।
दधिमधुसमायुक्तं सिद्धान्नं घृतमिश्रितम् ॥
चरुं चाथ स्वदैवत्यं कृत्वा चैवं विधानतः ।
जुहुयात् पञ्चसाहस्रं जातवेदसि मन्त्रवित् ॥

स्वदैवत्यमग्निदैवतमित्यर्थः ।

धेनुं च दक्षिणां दद्यात् सुवर्णं धान्यमेव च ।

अस्मिन् नाशकृते शान्तिर्ग्रामस्य च शुभं भवेत् ॥

मयूरचित्रे ।

उदयेऽस्तमये वज्रपातो राज्ञां वधाय तु ।

तथा ।

प्रासादे भवने क्षेत्रे ग्राममध्ये तथा गिरौ ।
निर्घातश्चाशनिश्चैव पतिता यदि कर्हिचित् ॥
भयं तत्र विजानीयाच्छान्तिः साधारणी त्विह ।

तथा ।

यत्र वातो महावेगो महोल्कावज्रमुल्बणम् ।
तत्र वै षोडशो शान्तिर्या वाच्या परिवेषणे ॥

तथा ।

प्रतोल्यां नगरद्वारे तोरणे राजवेश्मनि ।
गजगोवाजिशालासु पार्थिवानां गृहेषु च ॥
शान्तिगृहे देवगृहे राजमार्गे चतुष्पथे ।
उल्का वा यदि वा वज्रं पततश्चेत् कथञ्चन ॥
मासस्याभ्यन्तरे चैव तत्र विन्द्यान्महद्भयम् ।
राजा जनपदः पौरो भवेद्यश्च पुरोहितः ॥
द्वितीया शान्तिरत्रोक्ता विशेषस्त्वेष केवलः ।
त्रिषु स्थानेषु जायन्ते महोत्पाताश्च तेष्विमाम् ॥
शान्तिं कुर्याच्चरुं चास्य प्राशनं दक्षिणामपि ।

तथा ।

प्राकारे नगरद्वारे तोरणे राजवेश्मनि ।
गजशालाश्वशालायां विद्युत्प्रपतने सति ॥
विनश्यति बलाध्यक्षः प्रथमा शान्तिरत्र तु ।

तथा ।

सन्ध्ययोरुभयोरुल्कापातश्चैवाशनिध्वनिः ।

भयं ब्रूयाच्च भूपानां कोशशस्त्राग्निजं तथा ॥
तत्राग्निब्राह्मणानां च पूजां कृत्वा महीपतिः ।
हेमवाहनरत्नाद्यैर्महीं दद्याद्द्विजन्मने ॥
चरुः कार्योऽशनं तस्य भोज्या विप्राः सदक्षिणाः ।

इति चतुर्दशी शान्तिः ।

तथा ।

ज्वलत्युल्का पतेद्गेहेऽसुनाशार्थेन तद्भवेत् ।
शान्तिहोमं ततः कुर्याद्दद्याद्गां चैव दक्षिणाम् ॥

तथा ।

वज्रमुल्काऽशनिर्वाऽपि गृहादौ निपतेद्यदि ।
वर्षस्याभ्यन्तरे चैव भयं विन्द्याज्जनक्षयम् ॥
राजामात्यविनाशः स्याच्छान्तिरत्राग्निचोदिता ।
त्रिरात्रोपोषितो भूत्वा हविष्याशी पुरोहितः ॥
अपामार्गस्य समिधं सहस्रं जुहुयाद्बुधः ।
अष्टोत्तरं ततो विप्रान् भोजयेत् पायसेन तु ॥
रक्ताशोकसवर्णानां गवां क्षीरं समाहरेत् ।
हुत्वा हुतिशतं विप्रो मन्त्रेणैन्द्रेण मन्त्रवित् ॥
सुवर्णं रजतं कांस्यं हुत्यन्ते भूरिदक्षिणाम् ।

इति सप्तदशी शान्तिः ।

नारदः ।

गृहे वज्रं पतेद्यत्र तत्र दोषं विनिर्दिशेत् ।
धनं पुत्राश्च नश्यन्ति स्वयं नश्यति वा प्रभुः ॥
ईशारुद्रेति मन्त्रेण होम एव विधीयते ।
विप्राय दापयेत् तत्र तिलपात्रं सकाञ्चनम् ॥
धेनुं च वृषभं चैव ततः संपद्यते शुभम् ।

तथा ।

यत्र देव कुले वज्रं पतेद्भ्रोऽपि वा पुनः ।
ईशानो भिद्यते यत्र वज्रेणैवाहतः क्वचित् ॥
ग्रामोत्सादो भवेत् तत्र स्वामिनो मरणं दिशेत् ।
राज्ञो वा मरणं राष्ट्रं धनं धान्यं च नश्यति ॥
अत्र शान्तिं प्रवक्ष्यामि येन संपद्यते शुभम् ।
रत्निमात्रमतः खात्वा अधस्ताद्द्वादशाङ्गुलम् ॥
कुण्डं कृत्वा विधानेन ततो होमं समाचरेत् ।
शुचिश्च प्रयतो भूत्वा अग्निः स्थाप्यो विधानतः ॥
चरुं च यमदैवत्यं स्थापयित्वा विधानतः ।
परिधाप्याहतं वासः शोभनं द्विजसत्तम ॥
ससुवर्णेन हस्तेन ततः कर्म समाचरेत् ।
अष्टोत्तरशतं हुत्वा घृताक्तं समिधां ततः ॥
माषैर्मुद्गैस्तिलैश्चैव तण्डुलैश्च सितैस्तथा ।
घृतेन मधुना चैव नैवेद्यानि तु कारयेत् ॥
संपूर्णानां शरावाणां कुण्डे कुर्यान्निधापनम् ।
तिलधान्यैर्यवैश्चैव घृतेन मधुना सह ॥
एभिः पञ्चसहस्राणि शक्तिबीजेन होमयेत् ।
होमान्ते तर्पयेद्विप्रान् दक्षिणाभोजनादिभिः ॥
भूमिं धेनुमनड्वाहं स्वर्णं धान्यं च दक्षिणाम् ।
पञ्चगव्यं ततः कृत्वा स्नायाद्देवालयं द्विजः ॥
कलशेन पुनः स्नायाद्देवं संपूज्य यत्नतः ।

स्नायात् स्नापयेदित्यर्थः ।

बलिं दत्वा विधानज्ञः कृशरैः पायसैस्तथा ।

विद्युदहोभिः षड्भिस्तद्वत् तारा विपाचयति ॥
अभिभवति यतः पुरं बलं वा भवति भयं तत एव पार्थिवस्य ।
निपतन्ति च यया दिशा प्रदीप्ता जयति रिपूनचिरात् तु तत्र तत्र ॥

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे उल्काद्भुतावर्त्तः ।

---

अथ विद्युदद्भुतावर्त्तः ।

---

तत्र शुभसूचकविद्युल्लक्षणं मयूरचित्रे ।

मुक्तावलीनिभां स्निग्धां विद्युतं रजतप्रभाम् ।
मेघमध्यगतां दृष्ट्वा सुभिक्षं क्षेममादिशेत् ॥

बृहद्यात्रायां वराहः ।

तन्वी प्रलम्बा विजयाय दीर्घा तडिद्घनस्फूर्जितवर्जिता च ।

पराशरः ।

अथ विद्युदूर्ध्वाधस्तिर्यग्गतित्वात् पिण्डितत्वाच्च ज्वालावर्णवातविशेषान् दृष्ट्वा तत्फलं ब्रूयात् सद्यो जलधरो वर्षेत् । तत्र पूर्वा सूर्यकान्ता दक्षिणा शतह्रदा पश्चिमा तडित् उत्तरा सौदामिनी शेषा दिग्देवताविख्याताः । तासां सूर्यकान्ता सौदामिन्यैशानी वार्षिक्या । सूर्यकान्ता तु कृष्णा कृष्णमेघस्था अवर्षाय । श्वेता च वर्षाय च । वृषशिरसि स्थिता ग्रहयोर्वा मध्ये वातवर्षाय । आग्नेयी नैर्ऋती च वार्षिक्यौ । हरिताबभासा तु नैर्ऋती महावर्षायेति ।

मयूरचित्रे तु ।

उदक्पश्चिमपूर्वासु दिक्ष्वैशान्यां च विद्युतिः ।
वृष्टिर्वायव्यभागे तु विज्ञेयः पवनोद्गमः ॥
रक्तमानीलपर्यन्ता यदा विद्युत् प्रकाशते ।

आग्नेयेऽथ दिशो भागे स्वल्पं वर्षति वासवः ।
शस्त्रसंपातभूयिष्ठं याम्ये तु भयमादिशेत् ॥

पराशरस्तु ।

स्निग्धा हरितावभासा सरश्मिः शतह्रदा मेदोवर्णा च महावर्षाय–इति ।

मयूरचित्रे ।

समन्ताद्यदि दृश्येरन् दिक्षु सर्वासु विद्युतः ।
सप्तरात्रं महावर्षं घोरं चैव विनिर्दिशेत् ॥

पराशरस्तु ।

सर्वाश्चेत् प्रदक्षिणमभिवृत्योदयन्त्यः सुर्महावर्षाय । विपर्यये विपरीताः । तासु बलवती चाशुगतिः पाण्डुनाम्ना बहूदका । सर्वा एव वाताय कपिलिकाः । आतपाय लोहिताः । सर्वोर्ध्वगतयो रश्मिवत्योऽन्तःपरिवेषगताः । स्निग्धा नीलाश्चेतरेतरं विशेयुस्ताडयेयुरुल्लिखेयुर्वायोश्चादित्यं विशेयुः श्वेतमण्डलाकाराः सोमान्निष्क्रम्य सूर्यं विशन्त्यो वर्षाय । सूर्यान्निष्क्रम्य नीलश्वेतारुणावभासाः सोमं विशन्त्यो भयाय वर्षाय वा । दक्षिणमार्गे सर्वाः स्युरवर्षाय । त्रिषु चेन्मार्गेषु मध्यमोत्तमयोश्चरन्ती वर्षायैव । अजवीथ्यादिषु या नीलाभ्रस्था तिर्यगूर्ध्वचारिणी श्वेता या चाभ्रं चन्द्रं च युगपदेव संस्पृशेन्महावर्षाय । श्वेता त्र्यहमेव । इन्द्रपथेऽन्तः सप्ताहादशनिपाताय । अन्या भयाय स्युः । सर्वाः सन्ध्ययोर्दिवा च प्रादुर्भूता अवर्षिण्योऽपि महावर्षाय । श्वेतारुणैका विरश्मिर्नभोमध्यचारिणो सद्योवर्षा । सूर्यकान्ताऽघोरा कपिलाभ्रे चाग्नेयी पोता । रक्ताभ्रे शतह्रदा ताम्रचूर्णैर्ऋतो तडित्सौदामिन्यौ चास्निग्धकपिलमेघेषु शस्त्रपाताय-इति।

तथाऽऽषाढशुक्लचतुर्थ्यां पञ्चम्यां वा विद्युत्स्फुरणवाताभ्यां सांवत्सरिकशुभाशुभनिरूपणं भार्गवीये ।

आषाढशुक्ले नियतं विद्युल्लक्षणमद्भुतम् ।
वर्णरूपविकारांश्च दिशो भागान् शुभाशुभान् ॥
चतुर्थीं पञ्चमीं चैव परीक्षेत प्रयत्नतः ।
अतिवृष्टिमनावृष्टिं भावाभावौ तथैव च ॥
सर्वशस्येषु निष्पत्तिं विद्युतो दर्शयन्ति हि ।
ऐन्द्रयां चेत् स्फुरते विद्युदैन्द्रश्चापि हि मारुतः ॥
सुभिक्षं क्षेममारोग्यं निवृत्तिं च विनिर्दिशेत् ।
आग्नेय्यां चेदुभौ स्यातां भयं तत्र महद्भवेत् ॥
अनावृष्टिश्च लोकस्य शस्त्राग्निभयमेव च ।
याम्यायां स्फुरते विद्युद्याम्यश्चापि हि मारुतः ॥
विषमां तु समां विन्द्याद्व्याधिमृत्युभयाकुलाम् ।

समा संवत्सरम् ।

कनीयसी तु नैर्ऋत्यां तथा वह्नीतिका समा ।
मध्यमा शस्यसम्पत् स्याद्वारुण्यां व्याधिसंकुला ॥
पतङ्गदंशमशका वायव्यां मध्यशस्यदाः ।
अतिचारिभयं विद्यात् सौम्यायां भूरिसम्पदम् ॥
निवृत्तिः शस्यसम्पत्तिः प्रधानैशानगोचरे ।
प्रतिलोमेषु वातेषु ईतिबाहुल्यमादिशेत् ।
शुभायां स्पन्दमानायामनिष्टा स्पन्दते यदि ॥
सम्पद्यते महाशस्यं महांश्च स्यादुपद्रवः ।
अशुभा स्पन्दते पूर्वा यदा पश्चाच्च शोभना ॥
सुवृष्टिमेव तत्राहुर्न च शस्यं समृद्ध्यति ।
यदा च सर्वाः स्पन्दन्ते विषमां वृष्टिमादिशेत् ॥

अत्रानुक्तविशेषशान्तिषु विद्युदुत्पातेषु सावित्रीमन्त्रकदशलक्षहोमादिका शान्तिरभयाख्या वा महाशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

मयूरचित्रे तु साधारणी शान्तिः कर्त्तव्येत्युक्तम् ।

मत्स्यपुराणविष्णुधर्मोत्तरयोस्तु वृष्टिविकारोक्ता शान्तिर्विहिता तां च वृष्ट्यद्भुतावर्त्ते लिखिष्यामः ।

विद्युतामान्तरिक्षत्वात् षाण्मासिकः फलपाकः ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचितेऽद्भुतसागरे विद्युदद्भुतावर्त्तः ।

---

## अथ वाताद्भुतावर्त्तः ।

तत्र शुभसूचकवातलक्षणमाह पराशरः ।

इह खलु वायवोऽष्टासु दिक्षु भवन्ति तेषां सुरभिरनुकूलो मृदुः सम इति सर्वदा शस्यते ।

मत्स्यपुराणे ।

अनुकूलो मृदुः स्निग्धः सुखस्पर्शः सुखावहः ।

अथाशुभसूचकवातलक्षणं मत्स्यपुराणे ।

वायुः सशर्करो रूक्षः सर्वविघ्नसमन्वितः ।
प्रतिलोमस्तथाऽतीव विज्ञेयो भयकृद्‌द्विज ॥

भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

"विष्वग्वाताश्च वान्त्युग्रा रजो नाप्युपशाम्यति"* ।

तथा ।

"वृक्षानुन्मूल्य वान्त्युग्रा वाताः शर्करकर्षिणः"† ।

मौशले वृष्णिक्षयनिमित्तम् ।

---

* ३ अ. ११ श्लो. ।

† भीष्मपर्वणि ३ अ. ३१ श्लो. । तत्र वृक्षानुन्मूल्येत्यत्र वृक्षानुन्मथ्येति पाठः ।

"ववुर्वाताः सनिर्घाता रूक्षाः शर्करकर्षिणः"* ।

भागवते वासुदेवोत्क्रान्तिनिमित्तम् ।

"वायुर्वाति खरस्पर्शो रजसा विसृजन् नभः"† ।

बहुदिनानुबन्धिवात परमेतत् फलगौरवात् ।

तथा च मौशले वृष्णिक्षयनिमित्तम् ।

"उत्पेदिरे महावाता दारुणाश्च दिने दिने"‡ ।

बार्हस्पत्ये तु ।

वाति चाकालजो वायुर्घोरः शर्करकर्षणः ।
पातयन् वृक्षवेश्मादि गर्जयन्निव भीषणम् ॥
सप्ताहमथ वा पक्षमनुबध्नाति दारुणम् ।
ततो यदि न वर्षेत घोरं शस्त्रभयं भवेत् ॥

आदिकाण्डे परशुरामपराजयनिमित्तम् ।

"तयोः समुद्यतोरेव वायुः प्रादुरभून्महान् ।
प्रचण्डः शर्कराकर्षी कम्पयन्निव मेदिनीम् ॥

उत्तरकाण्डे कार्त्तवीर्याद्रावणपराजयनिमित्तम् ।

चण्डः प्रवाति पवनः सनादः सरजास्तथा ।
सकूर्चो वैकृतारावः संवर्त्तः क्षुभितो घनैः"§ ॥

वनपर्वणि सौगन्धिकाहरणे भीमपराजयनिमित्तम् ।

"ततो वायुर्महान् शीघ्रो नीचैः शर्करकर्षणः ।
प्रादुरासीत् खरस्पर्शः संग्राममभिचोदयन्"¶ ॥

उत्तरकाण्डे जगदुद्वेजकरावणोत्पत्तौ ।

"………ववुर्वाताः सुदारुणाः"** ।

---

* १ अ, २ श्लो. । † नेदमुक्तस्थले श्रीमद्भागवते उपलभ्यते । ‡ २ अ, ४ श्लो. ।

§ नैवं पद्यद्वयं वाल्मीकीये उक्तस्थले उपलभ्यते ।

¶ १५५ अ, २ श्लो. । ** १ सर्गे ३२ श्लो. ।

भागवते हिरण्यकशिपूत्पत्तौ ।

"ववौ वायुः सुदुःस्पर्शः फूत्कारानीरयन् मुहुः ।
उन्मूलयन् नगपतीन् वात्यानीको रजोद्धतः"* ॥

अथ दिक्फलं गार्गीये ।

पूर्वोऽभ्रजननो वायुरितरोऽभ्रविनाशनः ।
उदग्जनयते वृष्टिं वर्षत्येव च दक्षिणः ॥

उदग्जनयते वृष्टिमिति हिमसमयव्यतिरेकेण ।

पराशरः ।

तत्र पूर्वो मेघानां संजननः । पश्चिमो विनाशनोऽन्यत्र नभोनभस्ययोः । नित्यं वर्षायोत्तरः । दक्षिणोऽभ्रसंप्लवकरो मन्दवर्षाणि यच्छत्यपि वाऽन्यवातजं वर्षम् । नैर्ऋतो वायव्यश्चाभ्रवान् महावर्षाय । ऐशान्यो मृदुरपि वर्षाय । नानावातसंपातो महावर्षाय । सर्वेषां चान्यवातंकृतानामभ्राणामुपसृष्टवर्षाणां तत्प्रतिलोमो विनाशाय । अनुपसृष्टवर्षाणां तु महावर्षाय । पूर्वश्चेन्महाशब्दो नीचैर्वलाहकानामाकर्षी महावर्षायैव स्यात् । यस्यां च दिशि पूतिगन्धिनो निमित्तमागच्छेयुस्तस्यां दिशि शस्त्रकोपजननं विन्द्यात् ।

उद्योगपर्वणि हस्तिनापुरोत्सादनिमित्तम् ।

"प्रामथ्नाद्धस्तिनपुरं वातो दक्षिणपश्चिमः ।
अरुजन् गणशो वृक्षान् परुषोऽशनिनिःस्वनः"‡ ॥

अत्र समयफलम् । तत्र पराशरः ।

ग्रीष्महेमन्तयोश्चेन्नाभिवर्षेद्वर्षाणां सम्पदं कुर्यात् । आधानकाले शर्कराकर्षिणो नीचैः स्वराः खरवपुषश्च शस्यन्ते ।

आदिपर्वणि जतुगृहदाहानन्तरं पाण्डवानां वनप्रवेशे कौरववधनिमित्तम् ।

"अप्रकाशा दिशः सर्वा वातैरासन्ननार्त्तवैः"† ।

---

* नेदं श्रीमद्भागवते उक्तस्थले उपलभ्यते । † ८४ अ. १० श्लो. । ‡ १५१ अ. १ श्लो. ।

पूर्वादिदिग्वातफलमभिधाय पराशरः ।

सर्वेष्वेवातिमात्रेष्वनवरतेषु शीघ्रेषु सप्तरात्रपरेषु भयं महावर्षं वा विन्द्यात् । द्वादशरात्रपरेषु महावर्षं राजमृत्युं वा । पक्षपरेषु भयमेव च । तत्र क्षुद्भयमैन्द्रे । आग्नेये क्षुच्छस्त्रभयं दस्युतो राजदेशविनाशयोरन्यतरम् । याम्ये मूलफलपुष्पघातमुत्पातातङ्कपिटकभयम् । नैर्ऋते कृमिपतङ्गदंशमशककक्लेशशस्त्रप्रादुर्भावमीतिं चाधिकाम् वारुणे फलपुष्पदमारोग्यं वा । वायव्ये क्षुच्छस्त्रभये राजदेशविनाशयोरेकतरम् । सौम्ये क्षेमसुभिक्षम् । ईशाने शस्यसम्पदम् । सर्वतो दिग्भ्यस्तु युगपन्महाराजभयं सर्वदा ।

आषाढपौर्णमास्यां तु विशेषमाह पराशरः ।

अतोऽनन्तरमाषाढीसंयुक्ते शशिनि सुरभिरनुकूलः स्पर्शवान् मारुतः । पूर्वः पूर्वोत्तर उत्तरो वर्षशस्यातिवर्षकरो नैर्ऋताग्नेययाम्यवारुणवायव्यो मध्यशस्यवर्षकरः । विपर्ययो विपरीतेषु । आधानविसर्गान्तभागे निमित्तानि प्रावृषामाद्यन्तेषु मध्येषु फलम्—इति ।

आन्तरिक्षत्वादन्यत्र षाण्मासिकः फलपाकः ।

वातोत्पातशान्तिर्मत्स्यपुराणे ।

त्र्यहातिरिक्ते पवने रूक्षे सर्वदिगुत्थिते ।
वैकृते वातजे वाऽपि वायव्या शान्तिरिष्यते ॥

वायोश्च पूजा द्विजशक्तुभिश्च हुत्वा तदुक्तांश्च जपेच्च मन्त्रान् ।
दद्यात् प्रभूतं परमान्नमत्र सदक्षिणं तेन समोऽस्य भूपः ॥

वराहसंहितायाम् ।

वायव्येष्वेषु नृपतिर्वायुं शक्तुभिरर्चयेत् ।
अवायोरिति पञ्चर्चा जप्याश्च प्रयतैर्द्विजैः ॥
ब्राह्मणान् परमान्नेन दक्षिणाभिश्च तर्पयेत् ।

बह्वन्नदक्षिणाहोमाः कर्त्तव्याश्च प्रयत्नतः ॥

बार्हस्पत्ये तु ।

वायव्येष्वेषु नृपतिर्वायुं शक्तुभिरर्च्चयेत् ।
द्वाविमौ वाताविति च जप्तव्यं प्रयतैर्द्विजः ॥
बह्वन्नदक्षिणाहोमा कर्त्तव्याश्च प्रयत्नतः ।
वाग्रव्यामेव शान्तौ च वायोः सवितुरीरयेत् ॥
आदावन्ते च मध्ये च तथैव मनुजो जपेत् ।
गुरवे दक्षिणां दद्याद्वायवीं शान्तिमद्भुताम् ॥

मयूरचित्रे तु ।

वहन्ति वाताः प्रखरं निरभ्राः स्तनितस्वनाः ।
भयं तत्र विजानीयाच्छान्तिः साधारणो त्विह ॥

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे वाताद्भुतावर्त्तः ।

---

## अथ मेघाद्भुतावर्त्तः ।

---

तत्राषाढे स्वातिसंयुक्ते चन्द्रमसि शुभाशुभमेघलक्षणमाह पराशरः ।

स्वातिसंयुक्ते चन्द्रमसि घनस्निग्धस्तनयित्नुविद्युन्मण्डलनिरम्भोदैर्नभसोऽवच्छादनं सुभिक्षक्षेमाय । वातप्रादुर्भावोल्कानिर्घातकम्पोपघातैश्च तद्विपर्ययः ।

आषाढ[illegible]रोहिणीयोगे तु वराहसंहितायाम् ।

रूक्षैरल्पैर्मारुताक्षिप्तदेहैरुष्ट्रध्वाङ्क्षप्रेतशाखामृगाभैः ।
अन्येषां वा निन्दितानां सरूपैर्मूकैः शब्दैर्नो शिवं नापि वृष्टिः॥

बृहद्यात्रायां वराहः ।

ध्वजातपत्रपर्वतद्विपाश्वरूपधारिणः ।

जयाय सन्ध्ययोर्घना रणाय रक्तसन्निभाः ॥
पलालधूमसंचयस्थितोपमा वलाहकाः ।
बलाल्परूक्षमूर्त्तयो विवर्धयन्ति भूभृतः ॥
निन्दितसत्त्वपिशाचविचित्राः पिशितभुगाकृतयः परुषाश्च ।
वज्रमुचः क्षतजास्त्रमुचो वाऽनलभयमाशु घनाः कथयन्ति ॥

हरिवंशमत्स्यपुराणपद्मपुराणेषु तारकामययुद्धे देवानां पराजयनिमित्तम् ।

"एतस्मिन्नन्तरे मेघा निर्वाणाङ्गारवर्चसः ।
साकचन्द्रग्रहगणं छादयामासुरम्बरम् ॥
वेणुविद्युद्गणोपेता घोरनिर्ह्लादकारिणः"* ।

अथ गर्जनफलम् । बृहद्यात्रायां वराहः ।

स्फूर्जितं सलिलकुम्भनिषेकज्यौतिषार्णवमयं विजयाय ।

अथ वर्णफलं भार्गवीये ।

श्वेतः श्यामो हरित् कृष्ण इति वर्णा व्यवस्थिताः ।
प्रोक्ता मेघेषु चत्वारो व्यक्ताः स्निग्धाश्च पूजिताः ॥
स्निग्धेषु व्यक्तवर्णेषु चतुर्ष्वेतेषु नारद ।
सन्ध्योपमाभ्रवर्णेषु वर्षं तेष्वतिनिर्दिशेत् ॥
रूपेषु चम्पकाभेषु मेघेष्वपि च वर्षति ।
एभ्यश्च विपरीता ये ते वृष्टिभयदा घनाः ॥
मयूरगलपद्मेन्दुकांस्यनीलीनिभानि तु ।
सन्ध्यास्वभ्राणि दृश्यन्ते तीव्रं वर्षमुपस्थितम् ॥

वराहसंहितायाम् ।

पीतच्छुरिताश्च घना घनमूला भूरिवृष्टिकराः ।

मयूरचित्रे ।

पद्मिनीपत्रसंकाशा घना मत्स्यसमत्विषः ।

---

* मात्स्ये ७२ अ. १३-१४ श्लो. ।

चन्द्रार्कावुपगूहन्ते घना यच्छन्ति भूर्यपः ॥

भार्गवीये ।

काञ्चनाभे जनारिष्टं सर्पिः सर्पनिभेषु च ।
हेमपावकवर्णेषु विपुलेषु जनक्षयः ॥

अथ दिक्फलं मयूरचित्रे ।

आषाढ्यामैन्द्रदिग्भागे मेघस्तनितवायुषु ।
समग्रांश्चतुरो मासान् सम्यग्वर्षति वासवः ॥

आषाढे रोहिणीयुक्ते चन्द्रे विशेषो वराहसंहितायाम् ।

पूर्वोद्भूतैः शस्यनिष्पत्तिरब्दैराग्नेयाशासम्भवैरग्निकोपः ।
याम्ये शस्यं क्षीयते नैर्ऋतेऽर्धं पश्चाज्जातैः शोभना वृष्टिरब्दैः ॥
वायव्योत्थैर्वातवृष्टिः क्व चित् तु पुष्टा वृष्टिः सौम्यकाष्ठासमुत्थैः।
पुष्टं शस्यं स्थाणुदिक्संप्रवृद्धिर्वायुश्चैवं दिक्षु धत्ते फलानि ॥

आषाढशुक्लचतुर्थीपञ्चम्योर्विशेषो भार्गवीये ।

चतुर्थी पञ्चमी चैव प्रतीक्षेत तदा शुचिः ।
आषाढशुक्ले नियतं विद्युद्दर्शनमद्भुतम् ॥
सविद्युतः सस्तनिता दर्शयन्ति यदा शुभम् ।
पूर्वोत्तरां दिशं मेघाः सुवृष्टिं तां विजानते ॥
पूर्वतः पूर्ववृष्टेषु दृश्यन्ते यदि तोयदाः ।
दक्षिणावर्त्तशुभदाः सुवृष्टिमिति निर्दिशेत् ॥
आग्नेयेष्वतिवृष्टिः स्याच्छस्यं चापि विपद्यते ।
याम्येषु विषमा वृष्टिर्व्याधिं मृत्युं च निर्दिशेत् ॥
वर्धयित्वा नैर्ऋतेषु सामान्यफलदायिनी ।
वारुणेषु पयोदेषु मध्यमं शस्यमादिशेत् ॥
वायव्यां प्रथमं वर्षं यत्र वर्षति वासवः ।

तत्रातिवृष्टिर्भवति स्वल्पं बीजानि वापयेत् ॥
वर्णस्नेहोपपन्नास्तु पूर्ववृष्टाः पयोधराः ।
सौम्या यत्र प्रवर्षेयुस्तत्र सर्वगुणाः स्मृताः ॥

अथ संस्थानि वराहसंहितायाम् ।

विलम्बिनो द्रुमोपमाः खवारुणप्रकाशिनः ।
घनाः शिवाय सन्ध्ययोः पुरोपमाः शुभावहाः ॥

विष्णुधर्मोत्तरे ।

..................मेघैश्चायुधसन्निभैः ।
उदयास्तमये छन्नः पार्थिवानां न शस्यते ॥

वृद्धगर्गः ।

उद्यत्यर्के धनूरूपै रुध्यमाने च तोयदैः ।
परचक्रागमो वाच्यः प्रजानाशस्तथैव च ॥

वराहसंहितायाम् ।

आयुधभं नररूपं छिन्नाभ्रं परभयाय रविगामी ।

भार्गवीये ।

अश्वस्था वारणस्थाश्च रथस्थाश्च यदा नराः ।
मेघेषु संप्रदृश्यन्ते सयोधाः सकुलध्वजाः ॥
तथा सवारणाश्चैव निघ्नन्तश्च परस्परम् ।
क्रव्याद्भिर्भक्ष्यमाणाश्च गृध्रगोमायुवायसैः ॥
उद्योतन्ते यदा युक्ता राज्ञां संशयकारकाः ।

अथाभ्रवृक्षादिफलम् । तत्र पराशरः ।

अथाभ्रविकारेषु वृक्षपरिघस्तनितसंचयात्मकेषु सद्यः फलमादिशेत् । अत्र सप्तरात्राद्वा षण्मासात् तु गर्भकालजं वर्षम् । तत्र वृक्षेष्वेव तावद्यदि सन्ध्यायां पीतमाञ्जिष्ठो दृश्येताभ्रवृक्षः । शान्तायां दिशि राज्ञो विनाशाय स्यात् । स एव दीप्तायां दक्षिणतो वाऽर्कस्य

हस्त्यश्वयोधानामन्यतमश्रेष्ठविनाशाय । कपिलः कृष्णो वा तथा भाग एव राज्ञो भयाय स्यात् । श्वेतो विजयाय । सन्ध्याकृतिश्चेत् पीतमाञ्जिष्ठनीलो वा हन्याद्राजानम् । पीतवर्णोऽर्कस्य पच्यमानः सद्यो बलकोपाय । पीताग्रश्चेद्घनः सन्ध्यायां प्रकाशेताहितक्षयाय। बहुकपिलस्तु ब्राह्मणानां पीडायै । लोहितः क्षत्रियाणाम् । हरितो वैश्यानाम् । कृष्णः शूद्राणाम् । चित्रो गणकानाम् । बहवश्चेद्गर्दभरूपिणोऽरुणवर्णा विलापिनः परुषाः सर्ववर्णोपतापाय । धूम्रश्चेद्दृश्यमान आदित्यमियादभ्रवृक्षाकारोऽपि महते भयाय स्यात् । अच्छिन्नश्वेताग्रेण नभसो मध्यस्पृक् सद्यो वर्षाय । तथैव सूर्यमावृत्य तिष्ठन् नीलश्वेताग्रो यदि वा वंशवीरणगुल्माभ्रवृक्षादुदीयादस्तमियाद्वाऽर्कः । एवमेव विरूपेषु मूलवत्सु विशालेषु स्तनयित्नुनिर्घोषः सतडित्कलापस्तमधिसत्ताभिहन्याच्छादयँस्तामभियुञ्जीत राजा ।

सन्ध्यालक्षणे एव वराहसंहितायाम् ।

दधिसदृशाभ्रो नीलो भानुच्छादी खमध्यगोऽभ्रतरुः ।
पीतच्छुरिताश्च घना घनमूला*स्ते भवन्ति वृष्टिकराः ॥

पराशरः ।

आषाढीसंयुक्ते शशिनि स्निग्धाभ्रवृक्षप्रादुर्भावः प्रावृड्वृद्धये ।

सन्ध्यालक्षणे वराहसंहितायाम् ।

अनुलोमगेऽभ्रवृक्षे समुद्गते यायिनो नृपस्य वधः ।
बालतरुप्रतिरूपे युवराजामात्ययोर्मृत्युः ॥

पराशरः ।

अथाभ्रपरिघस्त्रिवर्णो भानुमावृत्य तिष्ठन्महते जनक्षयाय स्यात् । कपिलो वातहर्षाय । रक्तः शस्त्रकोपाय । माञ्जिष्ठोऽग्निभयाय ।

---

* भूरिवृष्टिकरा इति अ. ।

अरुणो वाताय। पीताभः क्षयाय द्विपदानां रोगाय च। कृष्णच्छिद्रः सद्यो वर्षाय। ताम्रः शस्त्रसमुत्पाताय पशूनां च हरणाय। श्यामो गन्धर्वपीडायै चौरवृद्धये वा। स्निग्धनीलो महावर्षाय। श्वेतः सुभिक्षाय।

बृहद्यात्रायां वराहः।

नृपविपत्तिकरः परिघः सितः क्षतजतुल्यवपुर्बलकोपकः।
कनकरूपधरो बलवृद्धिदः सवितुरुद्गमकालसमुत्थितः* ॥

स्कन्दपुराणे तारकवधनिमित्तम्।

रक्तनीलाश्च परिघास्तिष्ठन्त्यावृत्य भास्करम्।

हरिवंशे तु बाणपराजयनिमित्तम्।

"त्रिवर्णपरिघो भानुः सन्ध्यारागमथावृणोत्"†।

भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम्।

"श्वेतलोहितपर्यन्ता कृष्णग्रीवाः सविद्युतः।
त्रिवर्णा परिघाः सन्धौ भानुमावारयन्त्युत"‡ ॥

भार्गवः।

नीललोहितपर्यन्तं कृष्णग्रीवं सविद्युतम्।
त्रिवर्णं परिघं दृष्ट्वा विन्द्यादुदकवाहकम् ॥

भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम्।

"सकबन्धश्च परिघो भानुमावृत्य तिष्ठति"§।

द्रोणपर्वणि द्रोणवधनिमित्तम्।

"सकबन्धस्तथाऽदित्ये परिघः समदृश्यत"¶।

पराशरः।

अथान्तःसूक्ष्मा रक्ताः परुषा नैरृत्यां दिशि प्रपद्यमाना राजवधाय स्युः। शेषा रश्मिभिः समानफलाः। अथाभ्राणि सञ्चितानि

---

* बृहत्संहितायामपीदमुपलभ्यते। तदर्थं द्रष्टव्यम् अ. पु. ४३४ पृ.।
† ११६ अ. ६५ श्लो.। ‡ २ अ. २१ श्लो.। तत्र भानुमन्तमवारयन् इति पाठः।
§ ११२ अ. १ श्लो.। ¶ ७७ अ. ३ श्लो.।

सेनानगरकबन्धरूपाणि संग्रामाय। तत्र दिक्षु वर्णेषु यथास्वं जयपराजयं विन्द्यात् । विमूढानि घनानि महान्ति प्राकारशिखररूपाणि महावर्षाय पारावतमयूरवर्णानि च । तथा नृपजलचरामोदाय घटरूपाण्युपरिमण्डलवाद्याकृतीनि काञ्चनाञ्जनरूपशङ्खमणिमुक्ताप्रवालकाण्डधौतकृष्णायःप्रसन्नानि । तथा विद्युत्स्तनयित्नुमन्ति सुजातानि सूर्यस्य पुरस्तात् तान्यर्यमनाम्नः प्रदक्षिणपरिवर्त्तीनि। मध्याह्नरात्र्योश्च वायुस्तनयित्नुमन्त्यभिवर्षाय। पीतलोहितापीतनीलातिमात्रसञ्चयान्यनृत्तौ शस्त्राय वर्षाय च। सूक्ष्माणि स्वव्यक्तरागाणि विच्छिन्नमूलान्यनर्थायातिवातवेगाय वा । तथा वराहाश्वखरदंष्ट्रिरूपाणि शीघ्रनिपातीनि शस्योपरोधायावग्रहाय वा ।

अत्रानुक्तविशेषशान्तिषु मेघोत्पातेषु सावित्रीमन्त्रकदशलक्षहोमादिका शान्तिरभयाख्या वा महाशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

अथ विहितविशेषशान्तयो मेघोत्पाता भार्गवीये ।

गर्दभैर्महिषैरुष्ट्रैर्वृकैर्वा शूकरैः खगैः ।
समानाकृतयः कुर्युः सन्ध्यायां जलदा भयम् ॥
यत् तु क्रोडादिमकरा घना यच्छन्ति भूर्यपः ।

इति मयूरचित्रवचनं तद्वार्षिकमेघपरम् ।

बार्हस्पत्यमयूरचित्रयोः ।

नानापक्षिमृगाकाराः शृगालोष्ट्राश्वसन्निभाः ।
उदयास्तमये मेघाः कुर्वन्ति जगतो भयम् ॥

वराहसंहितायां तु ।

प्रहरणरूपैर्जलदैः स्थगितः सन्ध्याद्वयेऽपि रणकारी ।
मृगमहिषविहङ्गखरकरभसदृशरूपैश्च रणकारी ॥

रविरिति सम्बन्धः ।

मयूरचित्रे ।

अत्र साधारणी शान्तिः कर्त्तव्या गर्गभाषिता ।

तत्रैव ।

प्रावृट्काले च मेघेषु दण्डशूलोर्मिभेषु च ।
दस्युस्तेयक्षयो युद्धं भयं चैव महद्भवेत् ॥
अविच्छिन्ना यदा व्यक्ता गदायाः सदृशास्तथा ।
कपालसदृशाकरा मेघा दस्युभयावहाः ॥
वज्रपरिघतुल्येषु युद्धं मेघेषु जायते ।
एषूत्पातेषु दिव्योक्ता प्रथमो शान्तिरिष्यते ॥
रथाङ्गसदृशाकारा मेघाः प्रासादसन्निभाः ।
कबन्धशिरःसंकाशा नृणामाहुर्महद्भयम् ॥
द्वितीया शान्तिरेतेषु कर्त्तव्या दिव्यचोदिता ।
पताकाध्वजसंकाशाश्चक्रवर्त्तिवधं घनाः ॥
ब्रुवते दस्युसम्भूतिं शस्यनाशं रणं तथा ।
प्रथमां वा द्वितीयां वा दिव्यकाण्डप्रचोदिताम् ॥

शान्तिं कुर्यादिति सम्बन्धः ।

अत्रानुक्तफलपाकसमयविशेषाणामान्तरिक्षत्वात् षाण्मासिकः फलपाकः ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे मेघाद्भुतावर्त्तः ।

---

## अथ मेघानां गर्भाद्भुतावर्त्तः ।

---

तत्र वराहसंहितायाम् ।

अन्नं जगतः प्राणाः प्रावृट्कालस्य चान्नमायात्तम् ।

यस्मादतः परीक्ष्यः प्रावृट्कालः प्रयत्नेन ॥
केचिद्वदन्ति कार्त्तिकशुक्लान्तमतीत्य गर्भदिवसाः ।
न तु तन्मतं बहूनां गर्गादीनां मतं वक्ष्ये ॥
मार्गशिरःसितपक्षप्रतिपत्प्रभृतिक्षपाकरेऽषाढाम् ।
पूर्वां वा समुपगते गर्भाणां लक्षणं ज्ञेयम् ॥
मृगशीर्षाद्या गर्भा मन्दफलाः पौषशुक्लजाताश्च ।

पराशरः ।

माघेन श्रावणं विन्द्यान्नभस्यं फाल्गुनेन तु ।
चैत्रेणाश्वयुजं प्राहुर्वैशाखेन तु कार्त्तिकम् ॥
शुक्लपक्षेण कृष्णं तु कृष्णपक्षेण चेतरम् ।
रात्र्यह्नोश्च विपर्यासं गर्भकालविनिश्चयम् ॥

वटकणिकायाम् ।

पौषासितपक्षाद्यैः श्रावणशुक्लादयो विनिर्देश्याः ।
कृष्णेन शुक्लपक्षः सितेन कृष्णो निशा दिनोत्थेन ॥
रात्र्याहः सन्ध्यायां सन्ध्यादिग्व्यत्ययाज्जलदाः ।

बृहत्संहितायां तु ।

पौषस्य कृष्णपक्षेण निर्दिशेच्छ्रावणस्य सितम् ।
माघसितोत्था गर्भाः श्रावणकृष्णे प्रसूतिमायान्ति ॥
माघस्य कृष्णपक्षेण विनिर्दिशेद्भाद्रपदशुक्लम् ।
फाल्गुनशुक्लसमुत्था भाद्रपदस्यासिते विनिर्देश्याः ॥
तस्यैव शुक्लपक्षोद्भवाश्च ये तेऽश्वयुक्शुक्ले ।
चैत्रसितपक्षजाताः कृष्णेऽश्वयुजश्च वारिदा गर्भाः ॥
चैत्रासितसम्भूताः कार्त्तिकशुक्लेऽभिवर्षन्ति ।
सितपक्षभवाः कृष्णे शुक्ले कृष्णा द्युसम्भवा रात्रौ ॥

नक्तम्प्रभावाश्चाहनि सन्ध्याजाताश्च सन्ध्यायाम् ।
पूर्वोद्भूताः पश्चादपरोत्थाः प्राग्भवन्ति जीमूताः ॥
शेषास्वपि दिक्ष्वेवं विपर्ययो भवति वायोश्च ।

वटकणिकायाम् ।

सार्धैः षड्भिर्मासैर्गर्भनिषेकः स्वनक्षत्रे* ।

बृहत्संहितायां च ।

यन्नक्षत्रमुपगते गर्भश्चन्द्रे भवेत् स चन्द्रवशात् ।
पञ्चनवते दिनशते तत्रैव प्रसवमायति ॥

पराशरः ।

वायुभ्रविद्युत्स्तनयित्नुवर्षाणि गर्भाः । तान् लक्षयेत् प्रशस्तानप्रशस्तांश्च । प्रशस्तता च यदा सूर्येन्दुनक्षत्रान्तरिक्षाश्रयाणां वर्षालिङ्गानां प्रादुर्भावरूपता गर्भाणां धारणमासे त्वसूतिः । विपर्यये त्वशस्तता ।

वटकणिकायाम् ।

पञ्चनिमित्तैः शतयोजनं तदर्धार्धमेकहान्याऽतः ।
वर्षति पञ्चनिमित्ताद्रूपेणैकेन यो गर्भः ॥
वर्षा पञ्चनिमित्तो द्रोणो वृष्ट्याढकास्त्रयो मरुता ।
षड्विद्युता नवाभ्रैः स्तनितेन द्वादश प्रसवे† ॥
शस्तानि मार्गशीर्षाच्छीतहिममेघवातरसितानि ।
स्तनिततडिज्जलमारुतघनतापान्यतिशयं तु वैशाखे ॥
पृथुला बहुला जलदास्त्वतिपृथुलजलचारिसत्त्वनिभाः ।
स्निग्धसितबहुलपरिवेषपरिवृतौ हिमकरोष्णकरौ ॥

---

* गर्भविपाकः स नक्षत्रे इति अ. ।

† इदं श्लोकद्वयं बृहत्संहितायामप्युपलभ्यते ।

नृखगमृगा मुदिता निरूपहतास्तरवः ।
वियदमलं च यदा भवति तदा सुसमा ॥
स्निग्धतडित्प्रतिसूर्यकमत्स्याः शक्रधनुः प्रथमापरसन्ध्ये ।
शान्तरवा मृगपक्षिमनुष्याः शक्रशशीश्वरदिक्मरुतश्च ॥

बृहत्संहितायाम् ।

ह्लादिमृदूदक्शिवशक्रदिग्भवो मारुतो वियद्विमलम् ।
स्निग्धसितबहुलपरिवेषपरिवृतौ हिममयूखार्कौ ॥
पृथुबहुलस्निग्धघनं घनसूचीक्षुरकलोहिताभ्रयुतम् ।
काकाण्डमेचकाभं वियद्विशुद्धेन्दुनक्षत्रम् ॥
सुरचापमन्द्रगर्जितविद्युत्प्रतिसूर्यका शुभा सन्ध्या ।
शशिशिवशक्राशास्थाः शान्तरवाः पक्षिमृगसङ्घाः ॥
विपुलाः प्रदक्षिणचराः स्निग्धमयूखा ग्रहा निरुपसर्गाः ।
तरवश्च निरुपसृष्टाङ्कुरा नरचतुष्पदा हृष्टाः ॥
गर्भाणां पुष्टिकराः सर्वेषामेव योऽत्र तु विशेषः ।
स्वर्त्तुस्वभावजनितो गर्भविवृद्ध्यै तमभिधास्ये ॥
पौषे समार्गशीर्षे सन्ध्यारागोऽम्बुदाः सपरिवेषाः ।
नात्यर्थं मृगशीर्षे शीतं पौषेऽतिहिमपातः ॥
माघे प्रबलो वायुस्तुषारकलुषद्युती रविशशाङ्कौ ।
अतिशीतं सघनस्य च भानोरस्तोदयौ शस्तौ ॥
फाल्गुनमासे रूक्षश्चण्डः प्रबलोऽभ्रसंप्लवाः स्निग्धाः ।
परिवेषाश्चासकलाः कपिलस्ताम्रो रविश्च शुभः ॥
पवनघनवृष्टियुक्ताश्चैत्रे गर्भाः शुभाः सपरिवेषाः ।
घनपवनसलिलविद्युत्स्तनितैश्च हिताय वैशाखे ॥

मुक्तारजतनिकाशास्तमालनीलोत्पलाञ्जनाभासाः ।
जलचरमत्स्याकारा गर्भेषु घनाः प्रभूतजलाः ॥
तीव्रदिवाकरकिरणाभितापिता मन्दमारुता जलदाः ।
रुषिता इव धाराभिर्विसृजन्त्यम्भः प्रसवकाले ॥

वटकणिकाबृहत्संहितयोः ।

पवनसलिलविद्युद्गर्जिताभ्रान्वितो यः
स भवति बहुतोयः पञ्चरूपाभ्युपेतः ।
विसृजति यदि तोयं गर्भकालेऽतिभूरि-
प्रसवसमयमित्वा शीकराम्भः करोति ॥

वटकणिकायाम् ।

गर्भोपघातलिङ्गान्युल्काशनिभूमिकम्पनिर्घाताः ।
ग्रहयुद्धराहुशिखिनो भङ्गं खपुरं रजो वाऽपि ॥

बृहद्यात्रायाम् ।

गर्भोपघातलिङ्गान्युल्काशनिपांशुपातदिग्दाहाः ।
क्षितिकम्पखपुरकीलककेतुग्रहयुद्धनिर्घाताः ॥
रुधिरादिवृष्टिवैकृतपरिवेषेन्द्रधनूंषि दर्शनं राहोः ।
इत्युत्पातैरेतैस्त्रिविधैश्चान्यैर्हतो गर्भः ॥
स्वर्त्तुस्वभावजनितैः सामान्यैर्यैश्च लक्षणैर्वृद्धिः ।
गर्भाणां विपरीतैस्तैरेव विपर्ययो भवति ॥
भाद्रपदाद्वयविश्वाम्बुदेवपैतामहेष्वथर्क्षेषु ।
सर्वेष्वृतुषु विवृद्धो गर्भो बहुतोयदो भवति* ॥

वटकणिकाबृहत्संहितयोः ।

शतभिषगाश्लेषार्द्रास्वातिमघासंयुतो गर्भः ।

---

* एते श्लोका बृहत्संहितायामप्युपलभ्यन्ते ।

पुष्णाति बहून् दिवसान् हन्त्युत्पातैर्हतस्त्रिविधैः ॥

हत इति आधाननक्षत्रहननेन हत इत्यर्थः।

तथा च पराशरः।

येषु येषु नक्षत्रेषु गर्भस्थितिः स्यात् तेषु तेषु ग्रहाणामुदयास्तमयोल्कानिर्घाताशनिनिपातगन्धर्वनगरदिग्दाहार्करश्मिविकारभूचलनप्रादुर्भावो वर्षास्ववर्षाय।

पुष्णाति बहून् दिवसानित्यत्र विशेषो बृहत्संहितायाम्।

मार्गशिरादिष्वष्टौ षट् षोडशविंशतिश्चतुर्युक्ता।
विंशतिरथ दिवशात्रयमेकतमर्क्षेण पञ्चभ्यः ॥
क्रूरग्रहसंयुक्ते करकाशनिमत्स्यवर्षदा गर्भाः।
शशिनि रवौ वा शुभसंयुतेक्षिते भूरिवृष्टिकराः ॥
गर्भसमयेऽतिवृष्टिर्गर्भाभावाय निर्निमित्तकृता।
द्रोणाष्टांशेऽभ्यधिके वृष्टेर्गर्भः स्रुतो भवति ॥
गर्भः पुष्टः प्रसवे ग्रहोपघातादिभिर्यदि न वृष्टः।
आत्मीयगर्भसमये करकामिश्रं ददात्यम्भः ॥
काठिन्यं याति यथा चिरकालधृतं पयः पयस्विन्याः।
कालातीतं तद्वत्सलिलं काठिन्यमुपयाति ॥

वराहसंहितायाम्।

ज्येष्ठसितेऽष्टम्याद्याश्चत्वारो वायुधारणा दिवसाः।
मृदुशुभपवनाः शस्ताः स्निग्धघनस्थगितगगनाश्च ॥

वायोः संपर्कान्मेघैर्गर्भा धृयन्ते येषु ते वायुधारणा मृदुपवनादिमन्तः शुभा भवन्ति।

काश्यपस्तु।

ज्येष्ठस्य शुक्लाष्टम्यां तु नक्षत्रे भगदैवते।
चत्वारो धारणाः प्रोक्ता मृदुवातसमीरिताः ॥

नीलाञ्जनसमैर्मेघैर्विद्युत्स्तनितमारुतैः ।
विस्फुलिङ्गरजोधूमैश्छन्नौ शशिदिवाकरौ ॥
एकरूपाः शुभा ज्ञेया अशुभाः सान्तराः स्मृताः ।
अनार्यैस्तस्करैर्घोरैः पीडा चैव सरीसृपैः ॥

बराहसंहितायाम् ।

यदि ताः स्युरेकरूपाः शुभास्ततः सान्तरास्तु न शिवाय।
तस्करभयदाः प्रोक्ताः श्लोकाश्चाप्यत्र वाशिष्ठाः ॥
सविद्युतः सपृषतः सपांशूत्करमारुताः ।
सार्कचन्द्रपरिच्छन्ना धारणाः शुभधारणाः ॥
यदा वा विद्युतः श्रेष्ठाः शुभाशाः प्रत्युपस्थिताः ।
तदाऽपि सर्वशस्यानां वृद्धिं ब्रूयाद्विचक्षणः ॥
सपांशुवर्षा सापश्च शुभा बालक्रिया अपि ।
पक्षिणां सुस्वरा वाचः क्रीडा पांशुजलादिषु ॥
रविचन्द्रपरीवेषाः स्निग्धा नात्यन्तदूषिताः ।
वृष्टिस्तदाऽपि विज्ञेया सर्वशस्याभिवृद्धये ॥
मेघाः स्निग्धाः संहताश्च प्रदक्षिणगतिक्रियाः ।
तदा स्यान्महती वृष्टिः सर्वशस्यार्थसाधिका—इति ॥

पराशरः ।

विशेषतो ज्येष्ठबहुलपक्षद्वादश्यादिदिनचतुष्टयं धारणं गर्भाणाम् । क्रमात् सप्ताहोरात्रस्रावो मासविघाताय ।

बराहसंहितायाम् ।

तत्रैव स्वात्याद्ये वृष्टे भचतुष्टये क्रमान्मासाः ।
श्रावणपूर्वा ज्ञेयाः परिस्रुताः धारणास्ताः स्युः ॥

ज्ञेया इत्यनावृष्टिमन्तो ज्ञेया इत्यर्थः । अत्र हेतुः परिस्रुता इति ।

यवार वटकणिकायाम् ।

ज्येष्ठसितस्वात्याद्यैः श्रावणपूर्वं चतुष्टयं ज्ञेयम् ।
वृष्टेस्तत्रावृष्टिः समरूपा धारणाः शुभदाः ॥

काश्यपश्च ।

स्वातौ तु श्रावणं हन्याद्वृष्टेरेवाग्निदैवतम् ।
भाद्रपदे त्ववृष्टिः स्यान्मैत्रे चाश्वयुजे स्मृताः ॥
ऐन्द्रे तु कार्त्तिके त्वेवं वृष्टे वृष्टिं निहन्ति च ।
एतेषु यदि नो वृष्टस्तदा सौभिक्षलक्षणम् ॥

वराहसंहितायाम् ।

दैवविदविहितचित्तो द्युनिशं यो गर्भलक्षणे भवति ।
तस्य मुनेरिव वाणी न भवति मिथ्याऽम्बुनिर्देशः ॥

अत्रानुक्तविशेषशान्तिषु गर्भाद्भुतेषु सावित्रीमन्त्रकदशलक्षहोमादिका शान्तिरभयाख्या वा महाशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे मेघानां गर्भाद्भुतावर्त्तः ।

## अथ प्रवर्षणाद्भुतावर्त्तः ।

तत्र वराहसंहितायाम् ।

ज्यैष्ठ्यां समतीतायां पूर्वाषाढादिसम्प्रवृष्टेन ।
शुभमशुभं वा वाच्यं परिमाणं वाऽम्भसस्तज्ज्ञैः ॥

शुभमशुभमिति । सम्प्रष्टेन शुभमर्थादसम्प्रवृष्टेनाशुभम् । शुभमशुभं च शस्यनिष्पत्त्युचितानुचितवृष्टिरूपो गर्भधारणोक्तवृष्ट्यपवादोऽयम् । परिमाणं चेति । वृष्टौ सत्यां परिमाणं ज्ञातव्यमिति ।

येन धरित्री मुद्रा जनिता वा विन्दवस्तृणाग्रेषु ।
वृष्टेन तेन वाच्यं परिमाणं वारिणः प्रथमम् ॥

पूर्वाषाढादौ नक्षत्रे एवम्भूतायां वृष्टौ वक्ष्यमाणं प्रसवकालेऽपि पूर्वाषाढादौ नक्षत्रे वृष्टिपरिमाणं वाच्यमित्यर्थः ।

वृष्टपरिमाणमेवम् ।

हस्ताप्यसौम्यचित्रापौष्णधनिष्ठासु षोडश द्रोणाः ।
शतभिषगैन्द्रस्वातिषु चत्वारः कृत्तिकासु दश ॥
श्रवणे मघानुराधाभरणीमूलेषु दश चतुर्युक्ताः ।
फाल्गुन्यां पञ्चकृतिः पुनर्वसौ विंशतिर्द्रोणाः ॥
ऐन्द्राग्न्याख्ये वैश्वे च विंशतिः सार्पभे दश त्र्यधिकाः ।
आहिर्बुध्न्यार्यम्णप्राजापत्येषु पञ्चकृतिः ॥
पञ्चदशाजे पुष्ये च कीर्त्तिता वाजिभे दश द्वौ च ।
रौद्रेऽष्टादश कथिता द्रोणा निरुपद्रुतेष्वेते ॥

वटकणिकायां च ।

*द्वादश शक्रा आशास्तत्त्वानि नृपा धृतिर्नखास्तिथयः ।
विश्वे मनवोऽसुकरा†शस्तत्त्वानि नृपा नृपा वेदाः ॥
विंशतिरिन्द्रा वेदाः शक्रा क्षितिपा नखाश्चतुर्दश तु ।
भूपा वेदास्तिथयस्तत्त्वानि नृपाः क्रमाद्द्रोणाः ॥
अश्विनिपूर्वेष्वेते ज्ञेया निरुपद्रवेषु पूर्णफलाः ।
पापग्रहाभिभूतेषु वृष्टिरोगातिभयजनकाः ॥

बृहत्संहितायां तु ।

रविसुतकेतुपीडिते भे
क्षितितनयत्रिविधाद्भुताहते च ।

---

* अत्र बृहत्संहितायां भट्टोत्पलेनान्यथा समाससंहिताया वचनान्युक्तानि तदर्थे द्रष्टव्यम् अ = पुस्तके ३७६ पृ. ।  † असुकराः-२५ ।

भवति न हि शुभं न चापि वृष्टिः
शुभसहिते निरुपद्रवं शिवं च ॥

प्रसवकाले यत्र नक्षत्रे यावन्मात्रे वा देशे वृष्टिर्भवति तदुक्तं वराहसंहितायाम् ।

के चिद्यथाऽभिवृष्टं दशयोजनमण्डलं वदन्त्यन्ये ।
गर्गवशिष्ठपराशरमतमेतद्द्वादशान्न परम् ॥

के चिद्यथाऽभिवृष्टमिति । प्रवर्षणकाले यत्र देशे वृष्टिः प्रसवकालेऽपि तत्रैव वर्षतीत्याहुः ।

तथा च काश्यपः ।

यत्र प्रवर्षणे वृष्टौ वासवस्तत्र वर्षति ।
वर्षाकालं समासाद्य यद्युत्पातो न दृश्यते ॥

दशयोजनमण्डलं वदन्त्यन्ये इति । प्रवर्षणकाले यत्र देशे वृष्टिस्ततो दशयोजनान्तराले वर्षतीत्यन्ये वदन्ति ।

तथा च देवलः ।

प्रवर्षणे यदा वृष्टो वर्षमाणः शतक्रतुः ।
वर्षाकालं समासाद्य वर्षते दशयोजनम् ॥

गर्गस्तु ।

आषाढादिषु वृष्टेषु वर्षाकाले विनिर्दिशेत् ।
योजनानि दश द्वे च वर्षते पाकशासनः ॥

वराहसंहितायाम् ।

येषु च भेष्वतिवृष्टिर्भूयस्तेष्वेव वर्षति प्रायः ।
यदि नाप्यादिषु वृष्टं सर्वेषु तदा त्वनावृष्टिः ॥

वटकणिकायाम् ।

युग्माजगोमत्स्यगते शशाङ्के रविर्यदा कर्कटकं प्रयाति ।
जलं शतार्द्धे हरिकार्मुकेऽर्धमुक्तं च कन्यामृगयोरशीतिः ॥
कुलीरकुम्भालितुलाभिधाने संवृद्धियुक्ता नवतिः समन्तात् ।

पुनर्वसुप्रभृतिनक्षत्रयुक्तशुक्लप्रतिपत्सु प्रवर्षणजलपरिमाणमाह पराशरः ।

इह खलु शुक्लप्रतिपत्प्रभृतिवर्षं दशाकुलमाचक्षते। तस्यां यावदभिवृष्टे देशे वर्षतोऽपां प्रमाणमन्नशस्यप्रजाक्षेमाक्षेमलक्षणं वार्षिकमुपदेश्यामः। तत्रादित्ये विंशतिद्रोणाभिवर्षा सर्वशस्यक्षेमारोग्याय। पुष्येऽष्टादश द्रोणान् पश्चादभिवृद्धवर्षाय जघन्यशस्यसम्पदे। आश्लेषायां वर्षबीजक्षेमसाधुजनविघाताय त्रयोदशवृष्टये। पित्र्ये शस्योदकविघातकरपर्वतीयनृपतिवृद्धिं चतुर्दशद्रोणाभिवर्षणं च विन्द्यात्। भाग्ये चतुःषष्टिमाढकाणां वर्षत्यपि च शस्यरोगवृद्धये। शतमाढकानामार्यम्णेऽभिवृष्टो जनानभिनन्दयति। हस्ते पञ्चदशद्रोणान् क्षेमशस्यसम्पदं विन्द्यात्। पञ्चषष्टिद्रोणाभिवर्षी त्वाष्ट्रे सर्वजनवृद्धये। चतुरः स्वातौ शस्यविघातमक्षेमं चादिशेत्। ऐन्द्राग्ने विंशतिद्रोणाभिवर्षी राज्ञां विरोधकृद्भवति। मैत्रे द्विसप्तकद्रोणाभिवृष्टे नरेन्द्रोद्योगवणिग्बीजक्षीररोगवृष्टिं विन्द्यात्। ऐन्द्रे चतुर्द्रोणाभिवर्षी बीजान्युच्छेदयति। तच्चतुर्गुणो मूले सर्वशस्याभावो न क्षेमाय। आप्ये म्लेच्छसर्वशस्यव्याधिप्राबल्यम्। अष्टादशग्रहावसाने द्रोणान् षोडश वर्षति। हेमन्ते वा वैश्वदेवे शस्यवृद्धिः क्षेमायाभीक्ष्णविंशतिपर्यन्तं द्रोणवर्षाय। श्रवणे मुखरोगातीसारज्वरशस्यप्राबल्यं वृष्टिद्रोणाश्चात्र षोडशैव। वासवे शीर्षरोगप्राबल्यं च। वारुणे तच्चतुर्भागमपि च शस्त्रं दुर्भिक्षजननं च विन्द्यात्। आजेऽष्टादशद्रोणप्रततवर्षाप्रधानभूपतिविरोधाय। आहिर्बुध्न्ये चतुर्दशाढकवर्षा कुक्षिरोगशस्यदम्। अश्विन्यां द्वादशद्रोणान् पश्चादभिवृष्ट एकदेशे निम्नेषु शस्यं निष्पादयति। भरण्यां पञ्चदशद्रोणाभिवर्षा भवत्यग्निचौरक्षुद्व्याधिकरः। आग्नेये अग्निदंष्ट्रिशस्त्रभयाय षोडशद्रोणवर्षाय च। रोहिण्यामाढकशतवर्षा सर्वजगदामोदाय।

सौम्ये विप्रशस्यऽत्याधिवृद्धये षोडशद्रोणवर्षाय । आर्द्रायामष्टादशाढकवर्षा बीजशस्यभयाय ।

अपि च ।

आढकाँश्चतुरोद्रोणानपां विन्द्यात् प्रमाणतः ।
धनुः प्रमाणं मेदिन्यां विन्द्याद्द्रोणाभिवर्षणम् ॥
चतुर्विंशाङ्गुलानाहे द्विचतुष्काङ्गुलोच्छ्रिते ।
भाण्डे वर्षाम्बुसंपूर्णे ज्ञेयमाढकवर्षणम् ॥

वराहसंहितायां तु ।

हस्तविशालं कुण्डकमधिकृत्वाऽम्बुप्रमाणनिर्देशः ।
पञ्चाशत्पलमाढकमनेन मिनुयाज्जलं पतितम् ॥

तत्र कुण्डे पञ्चाशत् पलानि पतितानि तदा जलाढकवृष्टिर्भूतेति जानीयादित्यर्थः

अत्र प्रवर्षणोत्पातेषु वृष्टिविकारविहिता शान्तिः कर्त्तव्या ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे प्रवर्षणाद्भुतावर्त्तः ।

---

## अथातिवृष्ट्याद्यद्भुतावर्त्तः ।

---

तत्र पराशरः ।

अतिवर्षमवर्षणं दुर्भिक्षाय ।

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

अतिवृष्टिरनावृष्टिर्दुर्भिक्षादिभयं महत् ।

आदिशब्देन शत्रुभयस्य ग्रहणम् ।

तथा च वराहसंहितायाम् ।

दुर्भिक्षमनावृष्ट्यामतिवृष्टौ क्षुद्भयं परभयं च ।

बार्हस्पत्ये च ।

अतिवृष्टिरनावृष्टिर्दुर्भिक्षाच्च भयं भवेत् ।

अकालवर्षा रोगाय.................. ॥

इति त्रिदिनातिरिक्तवृष्टिपरम् ।

तथा च मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

अनृत्तौ त्रिदिनातिरिक्ता वृष्टिर्ज्ञेया भयाय तु ।

भयाय रोगभयाय ।

अतिवृष्टौ तु विशेषमाह पराशरः ।

त्र्यहादूर्ध्वं यदा वर्षेत् प्रवृद्धः पाकशासनः ।
अनृतौ तस्य देशस्य स्यात् प्रधानवधो ध्रुवम् ॥

औशनसे च ।

यत्रानृतौ प्रवर्षेण त्र्यहादूर्ध्वं प्रवर्षति ।
यस्मिन् देशे प्रधानस्य पुरुषस्य वधो भवेत् ॥

बृहद्यात्रायां वराहः ।

सप्ताहं सततोऽन्यर्त्तौ वृष्टिर्हन्यान्नराधिपम् ।

अतिवृष्टिविशेषो बार्हस्पत्ये ।

सप्तरात्रं यदा वर्षेत् प्रवृद्धः पाकशासनः ।
अनृतौ तस्य देशस्य प्रधानानां वधो ध्रुवम् ॥

तत्रैव ।

अनृतौ वर्षतेऽभीक्ष्णं ऋतुष्वेव न वर्षति ।
अनारोग्यं भयं चैव प्रजानां चैव निर्दिशेत् ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

अनभ्रे विकृता चैव विज्ञेया राजमृत्यवे ।

बार्हस्पत्ये तु ।

अनभ्रे वर्षतेऽकस्मात् पतिते गर्जितेऽपि वा ।
अनभ्रे वाऽपि निर्घातः पतितो राजमृत्यवे ॥

उद्योगपर्वणि भगवद्याने कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

"अन्वेगेव च पर्जन्यः प्रावर्षद्विघने भृशम्"* ।

---

* ८४ अ. ५ श्लो. ।

बृहद्यात्रायां वराहः ।

समाहान्तर्बलभयकरो वृष्टिरन्यर्त्तुजाता
केचिद्यात्रामसितजलदैः प्रोज्झितां पूजयन्ति ।
चित्राद्यायां बलपतिवधो रूक्षपीडाम्बुदायां
क्षुज्ज्येष्ठायां भवति नचिराद्ध्यम्बुदायां च नाशः ॥

वाहनानि सव्यगा हन्ति योषितोऽन्यथा ।
पञ्जराकृतिस्थिता सर्वतो वलेश्वरम् ॥

अथ करकावृष्टिर्मयूरचित्रे ।

शालिखर्जूरसिकताभाः करका वदरोपमाः ।
शीतजातीफलाकाराः पतन्त्यः क्षेमकारणाः ॥
इन्द्रध्वजरथाकारैश्चक्रस्वस्तिकसन्निभैः ।
शङ्खपद्मनिभै राज्ञः करकैर्जयमादिशेत् ॥
मत्स्यकच्छपमण्डूकशूक्तिशम्बूकसन्निभाः ।
वदन्त्युपलकास्तापं दीयमानं घनैर्धनम् ॥
विल्वोदुम्बरतालाभाः कपित्थाम्रशिरःसमाः ।
गदामुशलसंकाशाः करका घ्नन्ति भूनृपौ ॥
अत्र साधारणी शान्तिः कर्त्तव्या गर्गचोदिता ।

अथ शोणितादिवृष्टिः । तत्र पराशरः ।

शोणिताभिवर्षणं परचक्रागमाय ।

आरण्यकाण्डे पञ्चवट्यां खरदूषणाद्यागमननिमित्तकथने रामवाक्यम् ।

"इमे रुधिरधाराभिर्वर्षन्तोऽतिखरस्वनाः ।
व्योम्नि मेघा विवर्त्तन्ते परुषा गर्दभारुणाः"* ॥

बार्हस्पत्ये तु ।

शोणितं वर्षते यत्र तत्र देशे भयं भवेत् ।

---

* वाल्मीकीयेऽन्यथा पाठः । तदर्थं द्रष्टव्य उक्तकाण्डस्य २३ सर्गः ।

भयं शस्त्रभयम् ।

तथा च मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

शोणितं वर्षते यत्र तत्र शस्त्रभयं वदेत् ।

स्कन्दपुराणे तु प्रह्लादपराजयनिमित्तम् ।

प्रस्रुताः क्षतजं मेघाः.................. ।

तत्रैव देवासुरयुद्धे देवानां पराजयनिमित्तम् ।

अनभ्रे भयदं वर्षमपतद्रुधिरं बहु ।

हरिवंशे बाणपराजयनिमित्तम् ।

"देवानामपि यो देवः सोऽभ्यवर्षत वासवः ।
शोणितं शोणितपुरे सर्वतः पुरमन्तिकात्"* ॥

भागवते विष्णोरुत्क्रान्तिनिमित्तम् ।

"असृग्वर्षन्ति जलदाः..............."† ।

आदिपर्वणि गजकच्छपभक्षणनिमित्तम् ।

"उत्पातमेघा रौद्राँश्च ववृषुः शोणितं बहु"‡ ।

आग्नेयपुराणहरिवंशमत्स्यपुराणेषु हिरण्यकशिपुवधनिमित्तम् ।

"देवानामपि यो देवः सोऽभ्यवर्षत शोणितम्"§ ।

मयूरचित्रे ।

रक्तवर्षे तथाऽऽकाशशब्दे नरपतेर्वधः ।

हरिवंशे कंसवधनिमित्तम् ।

"प्रस्रवन्ति घना रक्तं साशनिस्तनयित्नवः"¶ ।

स्कन्दपुराणे तारकवधनिमित्तम् ।

रूक्षा रूक्षाशनिरवाडम्बरोल्मुकसन्निभाः ।
ववर्षुर्जलदास्तोयं रुधिराग्निविमिश्रितम् ॥

---

* ११६ अ. ६० श्लो. । तत्र 'सर्वतः परमं ततः' इति पाठः ।

† नोक्तस्थले उपलभ्यते ।

‡ ३० अ. ३७ श्लो. ।

§ हरिवंशे भविष्यपर्वणि ४६ अ. १६ श्लो. । मत्स्यपुराणे १६३ अ. ४४ श्लो. ।

¶ २३ अ. ३२ श्लो. ।

लङ्काकाण्डे प्रहस्तवधनिमित्तम्।

"व्यभ्रमाकाशमाविश्य घोररूपः खरस्वनः।
ववर्ष रुधिरं देवः प्रहस्तस्य रथोपरि"* ॥

उत्तरकाण्डे माल्यवदादिराक्षसवधनिमित्तम्।

"अस्थीनि मेघा ववृषुरुष्णं शोणितमेव च"† ।

तत्रैव जगदुद्वेजकरावणोत्पत्तौ।

"ववर्ष रुधिरं देवो मेघाश्च खरनिस्वनाः"‡ ।

उद्योगपर्वणि भीष्मसेनापत्यकरणे भीष्मवधनिमित्तम्।

"प्रादुरासीदनभ्रे च वर्षं रुधिरकर्दमम्"§ ।

आश्वमेधिके सैन्धवपराजयनिमित्तम्।

"रासभारुणसंकाशा धनुष्मन्तः सविद्युतः।
आवृत्य गगनं मेघा मुमुचुर्मांसशोणितम्"¶ ॥

गदापर्वणि पाण्डवशिविरविनाशनिमित्तकथने धृतराष्ट्रे सञ्जयवाक्यम्।

"तथा शोणितवर्षं च पांशुवर्षं च भारत।
ववर्ष मघवाँस्तत्र तव पुत्रे निपातिते"** ॥

"पर्जन्यः पांशुवर्षी च मांसवर्षी च भारत"†† ।

स्कन्दपुराणे दैत्यपराजयनिमित्तम्।

पपात नभसो रेणुः कपोतोदरधूसरः।

मयूरचित्रे।

पांशुतैलवसामांसवृष्टौ माण्डलिनां वधः।

बार्हस्पत्यमत्स्यपुराणविष्णुधर्मोत्तरेषु।

अङ्गारपांशुवर्षे तु नगरं तद्विनश्यति।
मज्जास्थिस्नेहमांसानां जनमारभयं वदेत्॥

---

* वाल्मीकीयेऽन्यथा पाठः। द्रष्टव्याः ५७ सर्गे ३४–३७ श्लोकाः।

† वाल्मीकीये ६ सर्गे ५४ श्लो.।

‡ वाल्मीकीये ९ सर्गे ३१ श्लो.।

§ १५६ अ. २८ श्लो.।

¶ ७७ अ. ११ श्लो.।

** ५८ अ. ५१–५२ श्लो.।

†† नेदं पद्यार्धमुक्तस्थले उपलभ्यते।

पराशरः ।

अङ्गारसिकतापांशुप्रवर्षणं पुरविनाशाय । तथा मज्जासृक्स्नेहमांसास्थिवर्षणं जनमारभयाय ।

वराहसंहितायां च ।

अङ्गारपांशुवर्षे विनाशमुपयाति तन्नगरम् ।

औशनसे तु ।

अङ्गारवालुकाधान्यं यत्र देवः प्रवर्षति ।
क्षिप्रं तत्र भयं घोरं प्रवर्त्तेत चतुर्विधम् ॥
मांसवर्षं च मघवा यत्र देशेषु वर्षति ।
अस्थीनि रुधिरं मज्जां वसां चैतेषु वै ध्रुवम् ॥
परचक्रागमः शीघ्रं विज्ञेयं सुमहद्भयम् ।
अहिताश्चात्र जायन्ते विपुला विकृतात्मकाः ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

फलपुष्पशमीधान्यं हिरण्यं वा भयावहम् ।

वृष्टिमिति सम्बन्धः ।

वराहसंहितायां च ।

धान्यहिरण्यत्वक्फलकुसुमाद्यैर्वर्षिते भयं विन्द्यात् ।

मत्स्यपुराणे ।

पांशुजन्तूपलानां तु वर्षणे रोगजं भयम् ।

पराशरः ।

लोमोपलासवक्षीरदधिमधुघृततैलमत्स्यभेकपक्षिशस्यवर्षणं दुर्भिक्षाय ।

औशनसे तु ।

सर्पान् मत्स्यान् पक्षिणो वा यत्र देवः प्रवर्षति ।
तत्र शस्त्रोपघातः स्याद्भयं चातिप्रवर्त्तते ॥
सुरासवं तथा क्षौद्रं सर्पिस्तैलं पयो दधि ।
यत्र वर्षति पर्जन्यः क्षुद्रोगस्तत्र जायते ॥

बृहद्यात्रायां वराहः ।

धान्यरसमद्यभोजनफलपुष्पस्नेहमांसवस्त्राणाम् ।
सिकतारजोवसामृतशर्करकाङ्गारवर्षेषु ॥
सुतपत्नीक्षुद्रोगा नृपवेशन्त्रमरणसंक्लेशैः ।
भेदोपजापमन्त्रिव्याधिभयविनाशभयशोकाः ॥

बार्हस्पत्ये ।

वृष्टिर्यदा वर्षति रेणुवर्षं तस्योपरिष्टाद्धरितालवर्षम् ।
अदृष्टपूर्वं च यदा प्रवर्षेत् तदा बलं नश्यति पार्थिवस्य ॥

अत्र शान्तिर्मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

सूर्येन्दुपर्जन्यसमीरणानां यागः स्मृतो वृष्टिविकारकाले ।
धान्यं च गोकाञ्चनदक्षिणाश्च देयास्ततो नाशमुपैति पापम् ॥

बार्हस्पत्ये तु ।

सूर्येन्दुवायुपर्जन्या यष्टव्या वर्षवैकृते ।
अन्नानि सहिरण्यानि धान्यं गावश्च दक्षिणाः ॥
वैश्वदेवाश्च होतव्याः सर्वाद्भुतविनाशनाः ।
चतुर्णामपि वर्णानामभयं विद्यते ततः ॥
गुरवे च हयः श्वेतः सर्वलक्षणलक्षितः ।
शतनिष्काश्च दातव्या अलाभे तु गवां शतम् ॥

मयूरचित्रे ।

हेमरक्ताभ्रपाषाणबालमुरपांशुकर्दमैः ।
पुष्पायस्ताम्रकेशैश्च वृष्टौ सौर्या चरुक्रिया ॥
दिव्ये सूर्याय स्वाहेति प्रभृत्युक्ताऽतिदिश्यते ।

तत्रैव ।

प्रावृट्काले यदा मेघः पांशुवृष्टिं विमुञ्चति ।
चक्रवर्त्तिवधः प्रोक्तस्तदा गर्गेण भागुरे ॥

द्वितीया शान्तिरेतेषु कर्त्तव्या दिव्यचोदिता ।

फलपाकसमयो गार्गीये ।

घृततैलवसावर्षे सद्यः फलमुदाहृतम् ।
व्यभ्रवृष्टिर्भवेन्मासात्.........इति ॥

अन्यासां त्वान्तरिक्षत्वात् षाण्मासिकः फलपाकः ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरेऽतिवृष्ट्याद्यद्भुतावर्त्तः ।

---

## अथ कबन्धाद्भुतावर्त्तः ।

---

लङ्काकाण्डे धूम्राक्षनिर्याणे धूम्राक्षवधनिमित्तम् ।

"रुधिरार्द्रो महाश्वेतः कबन्धो निपपात ह"* ।

गदापर्वणि पाण्डवशिविरवधनिमित्तम् ।

"बहुपादैर्बहुभुजैः कबन्धैर्घोरदर्शनैः ।
नृत्यद्भिर्भयदैर्व्याप्ता दिशस्तत्राभवन्नृप"† ॥

अत्रापि सावित्रीमन्त्रदशलक्षहोमादिका शान्तिरभयाख्या वा महाशान्तिः कर्त्तव्या ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे कबन्धाद्भुतावर्त्तः ।

अन्तरिक्षाश्रयः पूर्णः ।

---

* वाल्मीकीये ५१ सर्गे ३२ श्लो. । † ५८ अ. ५६-५७ श्लो. ।

अथ

# भूम्याश्रये भूमिकम्पाद्भुतावर्त्तः ।

तत्रादावेव भूकम्पोत्पत्तिकारणमुच्यते विष्णुपुराणे ।

यदा विजृम्भतेऽनन्तो मुदा घूर्णितलोचनः ।
तदा चलति भूरेखा साद्रिद्वीपाब्धिकानना ॥

तत्र यथाक्रमं काश्यपगर्गवशिष्ठवृद्धगर्गाणां मतं वराहसंहितायाम् ।

क्षितिकम्पमाहुरेके महा*न्तर्जलनिवासिसत्त्वकृतम् ।
भूभारखिन्नदिग्गजनिःश्वाससमुद्भवं चान्ये ॥
अनिलोऽनिलेन निहितः क्षितौ पतन् सस्वनं करोत्यन्ये ।
केचित्त्वदृष्टकारितमिदमन्ये प्राहुराचार्याः ॥

इदमन्ये प्राहुराचार्या इत्यस्य 'गिरिभिः पुरा सपक्षैः-'इत्यादिना वक्ष्यमाणेन सम्बन्धः । तत्र चानिलादिकृतो भूकम्प इति वक्तव्यम् ।

तथा च काश्यपः ।

अर्णवस्योपरि पृथ्वी सशैलवनकानना ।
स्थिता तन्मध्यगाः सत्त्वाः†संक्षोभाच्चालयन्ति ताम् ॥

गर्गस्तु ।

चत्वारः पृथिवीं नागा धारयन्ति चतुर्दिशम् ।
वर्धमानः सुवृद्धश्च अतिवृद्धः पृथुश्रवाः ॥
वर्धमानो दिशं पूर्वां सुवृद्धो दक्षिणां दिशम् ।
पश्चिमामतिवृद्धश्च सौम्याशां तु पृथुश्रवाः ॥
नियोगाद्ब्रह्मणो ह्येते धारयन्त्यम्बुसंस्थिताः ।
ते वसन्ति सदा श्रान्ताः स वायुं श्वसते महान् ॥
वेगान्महीं चालयते भावाभावनिदर्शकः ।

---

* बृहद्दन्ता-इति अ. ।    † जलजसत्त्वाश्च इति अ. ।

वशिष्ठस्तु ।

यदाऽतिबलवान् वायुरन्तरीक्षानिलाहतः ।
पतत्याशु स निर्घातो भवते वायुसम्भवः ॥
तस्य योगान्निपततश्चलत्यद्भुथो हता क्षितिः ।
सोऽभिघातसमुत्थः स्यात् सनिर्घातमहीचलः ॥

वृद्धगर्गस्तु ।

प्रजा धर्मरता यत्र तत्र कम्पः शुभो भवेत् ।
जनानां श्रेयसे नित्यं विसृजन्ति सुरोत्तमाः ॥
विपरीतस्थिता यत्र जनास्तत्राशुभं वदेत् ।
विसृजन्ति प्रजानां तु दुःखशोकविवृद्धये ॥

पराशरस्तु ।

प्राक् खलु भगवन्तममरवरगुरुं गुरुं समुपसृत्य गौरवावनतशिरसः पराशरमुत्तरे हिमवतः पार्श्वेऽभितप्यमानतपसं प्रतपन्तमिवोदयगिरिशिखराधिरूढमर्कमृषिगणमध्यस्थं जगन्मध्यस्थमन्तेवासिन ऊचुः। नह्यवनिचलनमल्पकारणं नः प्रतिभाति। तत् किं नु खलु भगवन्नकस्मात् किमधर्मगौरवादवनिधरस्कन्धप्रचलनप्रतिचलनमिति तद्वाञ्छन्ति तत् किमदृष्टकारितमुतार्णशयविचेष्टितमिति शिष्यवचनमथ निशम्य नेत्युवाच भगवान्। पुराऽतिवीर्यप्रवृद्धप्रभवाः पक्षिणः पवनपथचारिणोऽचलाः पतन्तः शतशोऽवनिमसकृदतिकम्पयाम्बभूवुः।तदाऽखिलजगदहितमवनिचलनमभिसमीक्ष्य सुरपतिरविहतगतिमुपरि कुलिशमुत्क्षिप्य क्षितिधरपक्षान् क्षणान्निपात्यावनिमुवाचाद्रिजमतः परं भयमपनयाम्यनिलानलबलभिदम्बुपत्यभिविसृष्टाः। कम्पाः कदाचिज्जगतो हिताहितवादिनो भविष्यन्ति—इति।

तथा चौशनसे ।

चत्वारीमानि भूतानि कम्पयन्ति वसुन्धराम् ।
आपः शचीपतिश्चैव हव्यवाहः प्रभञ्जनः ॥
पूर्वां सहस्रनयनो दक्षिणां हव्यवाहनः ।
आपः पश्चादुदीचीं च स चचाल प्रभञ्जनः ॥

वराहसंहितायां च ।

गिरिभिः पुरा सपक्षैर्वसुधा प्रपतद्भिरुत्पतद्भिश्च ।
आकम्पिता पितामहमाहामरसदसि सव्रीडम् ॥
भगवन् नाम ममैतत् त्वया कृतं यदचलेति तन्न तथा ।
क्रियतेऽचलैश्चलद्भिः शक्ताऽहं नास्य खेदस्य ॥
तस्याः सगद्गदगिरं किञ्चित्स्फुरिताधरं विनतमीषत् ।
साश्रुविलोचनमाननमवलोक्य पितामहः प्राह ॥
मन्युं हरेन्द्र धात्र्याः क्षिप कुलिशं शैलपक्षभङ्गाय ।
शक्रः कृतमित्युक्त्वा माभैषीर्वसुमतीमाह ॥
किन्त्वनिलदहनसुरपतिवरुणाः सदसत्फलाववबोधार्थम् ।
प्राग्द्वित्रिचतुर्भागेषु दिननिशोः कम्पयिष्यन्ति ॥

आथर्वणाद्भुतमयूरचित्रयोः ।

प्राग्द्वित्रिचतुर्भागेषु दिनरात्र्योर्यथाक्रमम् ।
अनिलाग्नीन्द्रवरुणाः कम्पयन्ति वसुन्धराम् ॥

पराशरः ।

तत्र चतुर्षु चतुर्भागेषु दिवानक्तमनिलानलेन्द्रवरुणजं कम्पक्रमं विन्द्यात्—इति ।

अहोरात्रस्य चतुर्षु प्रहरयुगलेषु क्रमेण वायव्यादयश्चत्वारो मण्डला भवन्तीति गार्ग्यादिवचनदर्शनादेकं व्याख्यानम् ।

तथा च गर्गः ।

कृत्वा चतुर्धाऽहोरात्रं द्विधाऽह्नोऽथ द्विधा निशाम् ।
देवताश्रययोगाच्च चतुर्धा भगणं तथा ॥
पूर्वे दिनार्धे वायव्य आग्नेयोऽर्धेऽथ पश्चिमे ।
ऐन्द्रः पूर्वेऽथ रात्र्यर्धे पश्चिमार्धे तु वारुणः ॥
चत्वार एवमेते स्युरहोरात्रविकल्पजाः ।
निमित्तभूता लोकानामुल्कानिर्घातभूचलाः ॥

बृहस्पतिः ।

अह्नो यामद्वये पूर्वे शेषे चैव निशि क्रमात् ।
वायव्यादिषु विज्ञेया वेलामण्डलसंज्ञकाः ॥

दिनस्य चतुर्षु यामेषु रात्रेश्च वायव्यादयश्चत्वारो मण्डला भवन्तीति भार्गवीयमत्स्यपुराणविष्णुधर्मोत्तरादिवचनसंदर्शनादपरं व्याख्यानम् ।

तथा च भार्गवीये ।

पवनाग्नीन्द्रवरुणाः कम्पयन्ति वसुन्धराम् ।
शुभाशुभार्थं लोकानां रात्रावहनि च क्रमात् ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोश्च ।

प्रथमे दिनयामे च रात्रौ च मनुजोत्तम ।

इत्यादिप्रतिमण्डलं लिखिष्याम इति दिवा चतुर्षु यामेषु क्रमेण वायुवरुणदहनसुरपतयो मण्डलपतयो रात्रौ तु सुरपतिदहनवरुणवायवश्चेत्युशनसः स्वरसः ।

तदुक्तमाथर्वणाद्भुते ।

आद्यद्वित्रिचतुर्थे दिनयामे तद्विलोमतो रात्रौ ।
अनिलवरुणाग्नीन्द्रजमण्डलचक्रं वदत्युशना ॥

तथा चोशना ।

उदीच्यां यदि कम्पेत वायव्ये सप्तके गणे ।
दिनाद्ययामरात्र्यन्ते वायव्यः कम्प उच्यते ॥
वायुना ध्वस्तवेश्मानो नराः कलहसंकुलाः ।

परस्परविरोधेन परस्परवधनेन च ॥
ईतयश्चापि जायन्ते वायुदोषसमुद्भवाः—इत्यादि ।

अयं चोशसो वेलामण्डलक्रमो न बहुसम्मत इति ।

अथ नक्षत्रमण्डलानि । तत्र वायव्यमण्डलमाह पराशरः ।

वायव्याभिजिद्वासवाश्विनार्यम्णहस्तत्वाष्ट्रेष्वनिलो भूमिं कम्पयन् परुषपवनविघातैस्तरुकुसुमशस्यानुच्छेदयत्युन्मादश्वासश्वपथुविषज्वरातङ्ककृत् । विशेषतो भिषग्वणिक्पण्यस्त्रीशिल्पिशूरचित्रकरविद्याविवादशीलधूर्त्तकुरुयवनदण्डकमत्स्यमगधशाल्वसौवर्धनपुलिन्दविदेहसुराष्ट्रनलदरदशार्णाङ्गवङ्गावन्तिमालवसारवत्त्रिगर्त्तसौवीरयौधेयक्षुद्रकशिविकवसातीनभिहन्ति ।

बार्हस्पत्ये तु । धनिष्ठानक्षत्रस्थाने मृगशीर्षमुक्तम् ।

तद्यथा ।

हस्ताश्विनौ तथा चित्रा ऋक्षमर्यमदैवतम् ।
ब्राह्मं मृगशिरः स्वाती वायव्यं मण्डलं स्मृतम् ॥
यद्यत्र चलतेऽभूमिर्निर्घातोऽर्क्के तथैव च ।
अशरीराश्च नर्दन्ते कम्पन्ते दैवतानि च ॥
आदित्यो वा विगृह्येत सोमो वाऽप्युपरज्यते ।
वायव्यं तद्विजानीयदक्षेमं चात्र निर्दिशेत् ॥
पांशुवर्षं तथा घोरं क्षीरे सर्पिर्न जायते ।
प्रासादतोरणादीनि प्रपतन्ति महीतले ॥
मद्रका यवनाश्चैव शकाः काम्बोजवाह्लिकाः ।
गान्धाराश्चैव नश्यन्ति एतैः सार्धं तथा किल ॥
गजवाजिन उष्ट्राश्च वृका नकुलवेष्टकाः ।
पीड्यन्ते व्याधिताः सर्वे ये च शस्त्रोपजीविनः ॥

पुरे श्रेष्ठा विनश्यन्ति गणेषु गणसम्मिताः ।
गृहाणि रमणीयानि विशीर्यन्ते च सर्वशः ॥
आयासश्चोल्वणस्तत्र शस्त्रत्रासं समन्ततः ।
एतै रूपैश्च विज्ञेयं वायव्ये चलदर्शनम् ॥

गर्गकाश्यपमत्स्यपुराणविष्णुधर्मोत्तरमयूरचित्राथर्वणाद्भुतेषु धनिष्ठानक्षत्रस्थाने मृगशीर्षमभिजिन्नक्षत्रस्थाने पुनर्वसुनक्षत्रं चोक्तम् ।

तथा च मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

प्रथमे दिनयामे च रात्रौ च मनुजोत्तम ।
हस्ते स्वातौ च चित्रायामादित्ये चाश्विने तथा ॥
आर्यम्णे सोमदैवत्ये वायवी शान्तिरद्भुते ।

गर्गस्तु ।

सौम्यादित्यार्यम्णहस्तचित्रस्वात्यश्विनीषु वा ।
कम्पो वायुकृतश्चण्डो वायुनाऽपि विधूननः ॥
रूक्षारुणत्वं च दिशां रूक्षश्चण्डानिलस्तथा ।
शस्यमल्पतरं विन्द्याद्वृष्टिर्बध्येत वायुना ॥
सप्तमेऽहनि कम्पश्च महान् स्याद्वायुसम्भवः ।

काश्यपः ।

उत्तराफाल्गुनीहस्तं चित्रास्वातिपुनर्वसु ।
अश्विनी सोमदैवत्यं वायव्यं मण्डलं स्मृतम् ॥
अत्र वाता महाघोराः सशर्कररजोत्कराः ।
गर्भस्थाश्च निपात्यन्ते रोगक्षुद्भयपीडिताः ॥
कलिङ्गाः शबरा म्लेच्छास्तद्गणाः क्षितिवासिनः ।
शान्तिं सामीरणीं कुर्यादुत्पातो यदि दृश्यते ॥

आथर्वणाद्भुतावर्त्ते ।

हस्तचित्राश्विनीस्वातिमृगशीर्षपुनर्वसु ।

उत्तराश्चैव फाल्गुन्य एतद्वायव्यमण्डलम् ॥
वायव्ये शस्त्रकोपः स्यात् क्षीरे सर्पिर्न जायते ।
पांशुवृष्टिर्महाघोरा स्यादायासस्तथोल्वणः ॥
प्राकारतोरणारामाः प्रपतन्ति महीतले ।
पक्षिणो भूतलं यान्ति वायुवेगसमाहताः ॥
मद्रकाः यवनाश्चैव काम्बोजा वाह्लिकास्तथा ।
गान्धाराश्च विरुध्यन्ते विनश्यन्ति पुराणि च ॥

मयूरचित्रे तु ।

स्वातिहस्ताश्विनीचित्रामृगशीर्षपुनर्वसु ।
उत्तराफाल्गुनी चेति वदन्त्येतं तु मारुतम् ॥
अस्त्रवर्षं महाघोरं ज्वरदाहः प्रवर्त्तते ।
प्रासादतोरणं वेश्म प्रपतन्ति महीतले ॥
चैत्यवृक्षास्तथा हर्म्यं तथा देवकुलानि च ।
भूमौ प्रणिपतन्त्याशु वायुवेगसमीरिताः ॥
वारुणा वाह्लिका मत्स्या हूणाः पारसिकास्तथा ।
परस्परं विरुद्धाः स्युर्व्याधयः प्रभवन्ति च ॥
न च वर्षति पर्जन्यो नष्टशस्या वसुन्धरा ।
सधूमाश्च दिशः सर्वाः शुष्यन्ति सलिलाशयाः ॥

वराहसंहितायाम् ।

चत्वार्यार्यम्णद्यान्यादित्यं मृगशिरोऽश्वयुक् चेति ।
मण्डलमेतद्वायव्यमस्य रूपाणि सप्ताहात् ॥
वायव्ये भूकम्पे शस्याम्बुवनौषधीक्षयोऽभिहितः ।
श्वयथुश्वासोन्मादज्वरकाशभवो वणिक्पीडा ॥
रूपायुधभृद्वैद्यस्त्रीकविगान्धर्वशिल्पिपुण्यजनाः ।

पीड्यन्ते सौराष्ट्रककुरुमगधदशार्णमत्स्याश्च ॥

यदि नक्षत्रसन्धौ वा वेलासन्धौ मुनिमतभेदाद्वा मण्डलसंशयो भवति तदैतदु-कफललक्षणद्वारेण वायुमण्डलनिर्णयं कृत्वा प्रतिविधानमाचरणीयम् ।

तथा च बार्हस्पत्ये ।

प्रकम्पितायां भूमौ चेत् सप्ताहाभ्यन्तरेण तु ।
अतिप्रचण्डो विपुलो वायुर्वहति दारुणः ॥
शर्करोत्कर्षणश्चापि दिक्षु चैव विदिक्षु च ।
तदैतल्लक्षणोपेते विद्याद्वायुप्रकम्पितम् ॥
तस्मिन् भवति निर्दिशः शौनकस्य वचो यथा ।
शस्त्रैरावरणं कुर्यात् प्राकारं परिखास्तथा ॥
न तथा प्रविशेद्राजा जात्वात्मानं च गोपयेत् ।
संग्रामाश्चात्र विद्यन्ते मरणानि भवन्ति च ॥
राजपुत्रसहस्राणां भूमिं पिबति शोणितम् ।
मासं विंशतिरात्रं वा देवस्तत्र न वर्षति ॥
अश्वारूढैः सुसन्नद्धैर्वारणैश्च निरुत्तरम् ।
मासं विंशतिरात्रं वा संग्रामस्तुमुलो भवेत् ॥
द्वाभ्यां गताभ्यां मासाभ्यां परं स्याद्बहुलं जलम् ।
उष्णं दूषयते धान्यं क्षेत्रबन्धं यथाऽधिकम् ॥
सर्वेषामेव कम्पानां गर्हितं वायुकम्पितम् ।

भार्गवीये च ।

निष्प्रकाशमिवाकाशं भास्करो नातिभास्करः ।
दिशश्च न प्रकाशन्ते दुःखार्त्ता इव योषितः ॥
सद्यो वा मारुता रूक्षा वान्ति शर्करकर्षिणः ।
सप्ताहाभ्यन्तरे कम्पे मारुतेऽतिभयावहे ॥

फलपाकस्त्वस्य मासद्वयेन ।
तथा च वटकणिकायाम् ।

आर्य्यम्णपूर्वं भचतुष्टयं च शाशाङ्कमादित्यमथाश्विनेयम् ।
वायव्यमेतत् पवनः प्रचण्डो मासद्वयेनाशुभदः प्रजानाम् ॥

अत्र मयूरचित्रोक्ता त्रयोदशी शान्तिर्लिख्यते ।

शान्तिमत्र प्रवक्ष्यामि सर्वोपद्रवनाशिनीम् ।
पूजयेत् तत्र वायुं च चरुं कुर्यात् तथाऽऽशनम् ॥
आवायो वृयेत्यनेन मन्त्रेणाष्टोत्तरं तथा ।
सहस्राणि तु पञ्चैव जुहुयात् समिधं शुचिः ॥
औदुम्बरीघृतेनाक्तां वाञ्छयन् शान्तिमुत्तमाम् ।
पायसं मधुसंयुक्तं दधिक्षीरगुडोदनम् ॥
ब्राह्मणान् भोजयेच्चैव हुतान्ते भूरि दक्षिणाम् ।
सुवर्णं रजतं कांस्यं गृहं दासीसमन्वितम् ॥
अनड्वाहं च धेनुं च ब्राह्मणेभ्यो निवेदयेत् ।

इति त्रयोदशी शान्तिः ।
अथाग्नेयमण्डलमौशनसे ।

दक्षिणेन चलेद्भूमिराग्नेये सप्तके गणे ।
द्वितीययामे मध्याह्ने चाग्नेयः कम्प उच्यते ॥
तत्र बीजानि दह्यन्ते शुष्यन्ते चैव सागराः ।
दुर्भिक्षभयचौराद्यौ स्तस्मिन् कम्पे विनिर्दिशेत् ॥

द्वितीययामे रात्रेर्द्वितीयप्रहरे मध्याह्ने दिनस्य द्वितीयप्रहरे इत्यर्थः ।
तथा च मत्स्यपुराणे ।

द्वितीये दिनयामे च रात्रौ च रविनन्दन ।
पुष्याग्नेयविशाखासु पित्र्याजभरणीषु च ॥
उत्पाता ये तथा भाग्य आग्नेयीं तेषु कारयेत् ।

विष्णुधर्मोत्तरेऽप्येवम् ।

पराशरस्तु ।

अग्नीन्द्राग्न्यजयमगुरुभगपितृदेवतेष्वनलोऽभिकम्पयन् वर्षसरित्सरःस्रोतसामपः क्षपयन् मुखाक्षिरुगरोचकपिटकपाण्डुरोगज्वरकिटिभदद्रुदाहकृद्द्विशेषाद्दारुपावकाग्निदिक्पुलिन्दयवनवाह्लीकवङ्गोष्ट्रावन्त्यश्मकेक्ष्वाकुकुलूततुषारशिविकत्रिगर्त्तवैदेहद्रविडसुराष्ट्रमध्यदेशदशार्णांश्च हिनस्ति ।

काश्यपः ।

कृत्तिकापित्र्यपुष्याश्चविशाखाभरणीभगाः ।
पूर्वभाद्रं तथाऽऽग्नेयं मण्डलं भयकारकम् ॥
अनिलानिलसंयोगान्महावह्निः समुत्थितः ।
ग्रामाश्च तेन दह्यन्ते काननानि वनानि च ॥
मध्यदेशकुरुक्षेत्रं द्विजा यज्ञसमन्विताः ।
आभीराः सिन्धुगान्धारा विरुध्यन्ते परस्परम् ॥
नद्यः शोषं प्रयास्यन्ति गवां क्षीरं न जायते ।
स्नेहान्नरसहानिश्च शान्तिमग्नेस्तु कारयेत् ॥

आथर्वणाद्भुते ।

विशाखाकृत्तिकापुष्याः पूर्वा प्रोष्ठपदा तथा ।
भरणीपूर्वफाल्गुन्यावेतदाग्नेयमण्डलम् ॥
उल्काभूकम्पनिर्घातदिग्दाहेष्वग्निमण्डले ।
अदेहानां नर्दने च देवताकम्पने तथा ॥
चन्द्रार्कौ वा विगृह्येते दुर्भिक्षमरकामयाः ।
गावोऽल्पपयसो वह्निदाहपित्तज्वरोऽक्षिरुक् ॥
परचक्रागमः श्वासो नदीशोषोऽल्पशस्यता ।
अवृष्टिर्निष्फलत्वं च पादपानां च सर्वशः ॥

मयूरचित्रे ।

कृत्तिकाभरणीपुष्या अजेन्द्राग्निमघास्तथा ।
प्राक्फाल्गुनीति चाग्नेयं चलत्यस्मिन् मही यदि ॥
उल्का वा यदि वा वज्रं निर्घातो यदि चापतेत् ।
देहिनां देहनाशः स्याद्गावोऽल्पपयसस्तथा ॥
व्याधिभिर्द्विजपीडा च पित्तज्वरसमुत्थितैः ।
गूढगर्भाः स्त्रियश्च स्युर्वह्निदाहश्च सर्वशः ॥
ईतिर्भवति शस्यानां प्रीतिश्चापि न विद्यते ।
दह्यते च तथा भूमिर्न च वर्षति वासवः ॥

वराहसंहितायाम् ।

पुष्याग्नेयविशाखाभरणीपित्र्याजभाग्यसंज्ञानि ।
वर्गो हौतभुजोऽयं करोति रूपाण्यथैतानि ॥
तारोल्कापाताद्भुतमादीप्तमिवाम्बरं सदिग्दाहम् ।
विचरति मरुत्सहायः सप्तार्च्चिः सप्तदिवसान्तः ॥
आग्नेयेऽम्बुदनाशः सलिलाशयसंक्षयो नृपतिवैरम् ।
दद्रूविचर्च्चिकाज्वरविसर्पिकाः पाण्डुरोगाश्च ॥
दीप्तौजसः प्रचण्डाः पीड्यन्ते चाश्मकाङ्गवाह्लीकाः ।
तङ्गणकलिङ्गवङ्गद्रविडाः शवराश्च नैकविधाः* ॥

यदि नक्षत्रसन्धौ वेलासन्धौ वा मुनिमतभेदाद्वा मण्डलसंशयो भवति तदेतदुक्त-लक्षणद्वारेणाग्निमण्डलनिर्णयं कृत्वा प्रतिविधानमाचरणीयम् ।

भार्गवीये ।

तारापातैर्दिशां दाहैरुल्कापातैश्च सस्वनैः ।
हाहाकृतमिवाभाति प्रदीपितपथं नभः ॥
समाहाभ्यन्तरे चापि क्षितौ वह्निः प्रकुप्यति ।

स आग्नेयो भवेत् कम्पो राजराज्यभयावहः ॥

बार्हस्पत्ये ।

प्रकम्पितायां भूमौ चेत् सप्ताहाभ्यन्तरेण तु ।
यमजिह्वोपमा भीमा उल्का भवति भासुरा ॥
ताम्रः सूर्यश्च चन्द्रश्च दीप्ताश्च मृगपक्षिणः ।
दिशः सर्वा भवेयुश्च सूर्योदयसमप्रभाः ॥
तदेतल्लक्षणोपेतं विद्यादग्निप्रकम्पितम् ।
तस्मिन् भवति निर्देशः शौनकस्य वचो यथा ॥
हिरण्यं च सुवर्णं च यच्चान्यद्विद्यते गृहे ।
सर्वमेतत् परित्यज्य कर्त्तव्यो धान्यसंग्रहः ॥
राष्ट्राणि संदहेदग्निर्ग्रामाँश्च नगराणि च ।
संग्रामाश्चात्र वर्त्तन्ते मांसशोणितकर्दमाः ॥
राजानश्च विरुध्यन्ते देवश्चात्र न वर्षति ।
एवमेतत् तु कम्पानां गर्हितं ह्यग्निकम्पितम् ॥

अस्य तु फलपाकः सार्धमासेन ।

यदुक्तं वटकणिकायाम् ।

अजैकपादं बहुला भरण्यो भाग्यं विशाखा गुरुभं मघा च ।
क्षुदग्निशस्त्रामयकोपकारि पक्षैस्त्रिभिर्मण्डलमग्निसंज्ञम् ॥

अत्र मयूरचित्रोक्ता द्वादशी शान्तिर्लिख्यते ।

अत्राग्नेयं चरुं कृत्वा पूजा चाग्नेस्तथैव च ।
वैश्वानरेत्याद्युभयमन्त्रेण जुहुयादति ॥
अष्टोत्तरसहस्रं च विल्वस्य समिधां शुचिः ।
पायसं मधुसंयुक्तं प्राशयित्वा द्विजोत्तमम् ॥
सुवर्णरजतं दद्याद्धुतान्ते भूरिदक्षिणाम् ।

अथेन्द्रमण्डलमौशनसे।

यदा चलति पूर्वेण ऐन्द्राद्ये सप्तके गणे।
चतुर्थयामे प्रदोषे ऐन्द्रः कम्पः स उच्यते॥
तत्र बीजानि वर्धन्ते सुभिक्षं चैव जायते।
स्वधर्मस्था हि राजानः सुक्षेमं शान्तिरेव च॥

चतुर्थयामे दिनचतुर्थयामे। प्रदोषे रात्रिप्रथमयामे इति।

पराशरः।

ऐन्द्रवैष्णववैश्वदेवप्राजापत्यसौम्यादित्यमैत्रेषु सुरपतिरवनिं चालयति। प्रावृडाम्भोदयज्ञधर्मान्नपानोत्सवोऽन्यत्र—इति।

बार्हस्पत्ये। मृगशिरोनक्षत्रस्थाने धनिष्ठानक्षत्रमुक्तम्।

तद्यथा।

ज्येष्ठानुराधाश्रवणाधनिष्ठाश्च पुनर्वसु।
प्राजापत्योत्तराषाढे माहेन्द्रं मण्डलं स्मृतम्॥
यद्यत्र चलते भूमिर्निर्घातोल्के तथैव च।
अशरीराश्च नर्दन्ते कम्पन्ते दैवतानि च॥
आदित्यो वा निगृह्येत सोमो वाऽप्युपरज्यते।
माहेन्द्रं तद्विजानीयात् सुक्षेमं चात्र निर्दिशेत्॥
गावः समग्रवत्साश्च स्त्रियः पुत्रसन्विताः।
कीटव्याला म्रियन्ते च ये चान्ये स्वेन्दजन्तवः॥
वेदाध्ययनयज्ञेषु ब्राह्मणा निरताः सदा।
विट्क्षत्रियाः स्वकर्माणः शूद्राः शुश्रूषवस्तथा॥

काश्यपाथर्वमुनिमयूरचित्रमत्स्यपुराणविष्णुधर्मोत्तरवराहसंहिताद्ययवचनेषु मृगशिरोनक्षत्रस्थाने धनिष्ठानक्षत्रं पुनर्वसुनक्षत्रस्थानेऽभिजिन्नक्षत्रं चोक्तम्।

तथा च काश्यपः।

धनिष्ठा श्रवणं ज्येष्ठा तथाऽऽषाढोत्तराऽभिजित्।

अनुराधा रोहिणी च माहेन्द्रं मण्डलं स्मृतम् ॥
ऐन्द्र्या श्रियाऽभिशंसन्ति पृथिव्यां पार्थिवर्षभाः ।
प्रजासु क्षेममारोग्यं सर्वशस्यसमन्वितम् ॥

आथर्वणाद्भुते ।

ज्येष्ठानुराधा श्रवणा धनिष्ठा चाभिजिन्मघा ।
रोहिण्यश्चोत्तराषाढा एतन्माहेन्द्रमण्डलम् ॥
ऐन्द्रे बहुफला वृक्षा गावोऽतिपयसस्तथा ।
सर्वशस्यवती पृथ्वी क्षेमारोग्यसुवृद्धयः ॥
वेदाध्ययनसम्पन्नाः स्वकर्मनिरता द्विजाः ।

मयूरचित्रेऽपि ।

ज्येष्ठानुराधारोहिण्यः श्रवणा चाभिजित् तथा ।
वैश्वदेवं धनिष्ठा च माहेन्द्रमिदमुच्यते ॥
दिग्दाहोल्कामहोकम्पैः गावोऽतिपयसस्तथा ।
सर्वशस्यवती पृथ्वी क्षेमारोग्यसुवृद्धयः ॥
बहुपुष्पफला वृक्षा उल्कापाते विशेषतः ।

वराहसंहितायाम् ।

अभिजिच्छ्रवणधनिष्ठाप्राजापत्यैन्द्रवैश्वमैत्राणि ।
सुरपतिमण्डलमेतद्भवन्ति चाप्यत्र रूपाणि ॥
चलिताचलवर्ष्माणो गम्भीरविराविणस्तडित्वन्तः ।
गवलालिकुलाहिनिभा विसृजन्ति पयः पयोवाहाः ॥

गवलं माहिषशृङ्गमिति ।

यदि नक्षत्रसन्धौ वेलासन्धौ वा मुनिमतभेदाद्वा मण्डलसंशयो भवति तदैतदुक्तलक्षणद्वारेणैन्द्रमण्डलनिर्णयं कृत्वा प्रतिविधानमाचरणीयम् ।

तथा च भार्गवीये ।

सप्ताहाभ्यन्तरे कम्पे भवेद्वज्रधरात्मके ।

सस्वनैर्व्याप्तमत्यर्थं स्वस्तिवाक्यैर्घनैर्नभः ॥
नभसोऽन्ते च चारिण्यो विद्युतश्चार्कसन्निभाः ।
प्रान्तेष्वसंवृताश्चापि शीतशीताश्च मारुताः ॥

बार्हस्पत्ये तु ।

प्रकम्पितायां भूमौ चेत् सप्ताहाभ्यन्तरेण तु ।
गम्भीरगर्जमानश्च मेघ आयाति पार्थिव ॥
स्निग्धो ह्यञ्जनसंकाशः सुमहातोयदोपमः ।
वित्रासयन् दिशाः सर्वा द्रुतं चापि प्रवर्षति ॥
इन्द्रायुधं भवेच्चात्र विद्युत्स्तनितमेव च ।
सुवृष्टिः क्षेममारोग्यं सुभिक्षं परमं पदम् ॥
यज्ञोत्सवैश्च मोदन्ते आनन्दैर्मुदिताः प्रजाः ।
एतेषां भूमिकम्पानां प्रशस्तं हीन्द्रकम्पितम् ॥
जानीयाल्लक्षणैरेतैः सर्वमेव शुभाशुभम् ।

नन्वेतन्मण्डलस्य शोभनफलमुक्तं कथं शुभाशुभमिति । ऐन्द्रमण्डलमपि केषांचिदशोभनम् ।

तथा च काश्यपः ।

काशीकुशीति राजा च काश्मीरद्रविडान्धकाः ।
एते देशाः प्रपीडयन्ते शान्तिरत्र पुरन्दरी ॥

पराशरश्च ।

प्रथितकुलाधिपतिसुराष्ट्रचीनकाश्मीराभिसारप्राच्यशककिरातपौरवाच्युकरार्णवमालवपह्लवदण्डककाशिकार्षककैलासमल्लहह्लवहलानामुपतापाय—इति ।

वराहसंहितातायाम् ।

ऐन्द्रं स्तुतकुलजातिख्यातावनिपालगणपविध्वंसि ।
अतिसारगलग्रहवदनरोगकृच्छर्दिकोपाय ॥

काशियुगन्धरपौरवकिरातकीराभिसारहलमद्राः ।
अर्बुदसुराष्ट्रमालवपीडाकरमिष्टवृद्धिकरम् ॥

इष्टवृद्धिकरं सज्ञानवृद्धिकरमिति । अत एवास्मिन् मण्डले विष्णुधर्मोत्तरादौ शान्तिरुक्ता ।

विष्णुधर्मोत्तरे ।

तृतीये दिनयामे च रात्रेश्च भृगुनन्दन ।
रोहिण्यां वैष्णवे ब्राह्मे वासवे वैश्वदैवते ॥
ज्येष्ठायां च तथा मैत्रे ये भवन्त्यद्भुताः क्वचित् ।
ऐन्द्री तेषु तु कर्त्तव्या शान्तिर्भृगुकुलोद्वह ॥

अत्र शान्तिशब्देन महाशान्तिर्बोद्धव्या ।

तदुक्तं मत्स्यपुराणे ।

तृतीये दिनयामे च रात्रौ च रविनन्दन ।
रौहिण्यां वैष्णवे ब्राह्मे वासवे वैश्वदैवते ॥
ज्येष्ठायां च तथा मैत्रे ये भवन्त्यद्भुतास्तथा ।
ऐन्द्री तेषु प्रकर्त्तव्या महाशान्तिः कुलोद्वह ॥

फलपाकस्त्वस्य सप्तरात्राभ्यन्तरे ।

तथा च वटकणिकायाम् ।

प्राजापत्यं वैष्णवं मैत्रमैन्द्रं विश्वेशं स्याद्वासवं चाभिजिच्च ।
ऐन्द्रं ह्येतन्मण्डलं सप्तरात्रात् कुर्यात् तोयं संप्रहृष्टाः प्रजाश्च* ॥

अथ वारुणमण्डलमौशनसे ।

प्रतीच्यां यदि कम्पेत वारुणे सप्तके गणे ।
द्वितीययामे रात्रौ तु तृतीये वारुणं स्मृतम् ॥
अत्र वृष्टिश्च महती शस्यवृद्धिस्तथैव च ।
प्रजा धर्मरताश्चैव भयरोगविवर्जिताः ॥

पराशरः ।

वारुणाहिर्बुध्न्यपूषारुद्रभुजगनैर्ऋत्यदैवतेषु कम्पोऽम्बुपतिकृ-

---

* इष्टलोकं प्रशान्तम् इति अ. ।

तः । सततजलधरधाराप्रभिन्नकेदारपुरनगरप्रवृद्धतरतरुणक्षुपशस्य-
वृत्त--इति ।

काश्यपश्च ।

मूलर्क्षं प्रागषाढा च तथा भाद्रपदोत्तरा ।
रेवती वारुणं चार्द्राऽऽश्लेषा तद्वारुणं स्मृतम् ॥
माञ्जिष्ठकापोतनिभैर्नीलाञ्जनचयप्रभैः ।
पद्मिनीपत्रसंकाशैर्घनैर्वर्षति वासवः ॥
शालिषष्टिकगोधूमयवकार्पासकोद्रवैः ।
शोभिता गोकुलवती वरसहस्ता रवेर्मही ॥

आथर्वणाद्भुते ।

मूलोत्तरे प्रौष्ठपदा पूर्वाषाढा च रेवती ।
आर्द्राश्लेषाशतभिषाश्चैतद्वारुणमण्डलम् ॥
वारुणेऽप्येवमेव स्यान्माहेन्द्रे यादृशं फलम् ।

मयूरचित्रे ।

शततारमहिर्बुध्न्यं पूर्वाषाढा चरेवती ।
आर्द्रा मूलं तथाऽऽश्लेषा वारुणं त्विदमुच्यते ॥
उल्काभूकम्पदिग्दाहसम्भवः शस्यवृद्धये ।
क्षेमारोग्यसुभिक्षाय वृष्ट्यै च सुखाय च ॥

बार्हस्पत्ये च ।

आर्द्राऽऽश्लेषा तथा मूलं पूर्वाषाढा तथैव च ।
वारुणं रेवती चैव तथाऽहिर्बुध्न्यमेव च ॥
वारुणं तद्विजानीयात् सुभिक्षं चात्र निर्दिशेत् ।
अशरीराश्च नर्दन्ते कम्पन्ते दैवतानि च ॥
आदित्यो वा विगृह्येत सोमो वाऽप्युपरज्यते ।

बहुक्षीरास्तथा गावो नागाश्च फणिनस्तथा ॥
शान्तारयः प्रजाः सर्वा गोमिो जाङ्गलं ययुः ।
जलोपजीविनः सर्वे प्राप्नुवन्त्वृद्धिमुत्तमाम् ॥
खचराश्चात्र दृश्यन्ते स्निग्धवर्णाः समन्ततः ।
अस्त्रशस्त्राश्च राजानो ब्रह्मक्षेत्रं च वर्धते ॥
एतै रूपेश्च विज्ञेयं वारुणं चलदर्शनम् ।

वराहसंहितायाम् ।

पौष्णाप्याद्राश्लेषामूलाहिर्बुध्न्यवरुणदेवानि ।
मण्डलमेतद्वारुणमस्यापि भवन्ति रूपाणि ॥
नीलोत्पलालिभिन्नाञ्जनत्विषो मधुररावि‌णो बहुलाः ।
तडिदुद्भासितदेहा धाराङ्कुरवर्षिणो जलदाः ॥
वारुणमर्णवसरिदाश्रितघ्नमतिवृष्टिदं विगतवैरम् ।
गोनर्दचेदिकुकुरान् किरातवैदेहकान् हन्ति ॥

तथा च भार्गवीये ।

पाशोर्मिमकराकारैर्नगनागनिभैस्तथा ।
धाराङ्कुरपरिस्रावैर्नीलोत्पलदलप्रभैः ॥
स्तनद्भिश्छाद्यते व्योम कम्पयन् वरुणः स्वयम् ।

बार्हस्पत्ये तु ।

प्रकम्पितायां भूमौ चेत् सप्ताहाभ्यन्तरेण तु ।
वर्षन्तस्तु समायान्ति महामेघाः समन्ततः ॥
नक्राश्च शिशुमाराश्च कूर्ममकरसंस्थिताः ।
अभ्राकृतेषु दृश्यन्ते प्रसन्तश्चन्द्रभास्करौ ॥
तदेल्लक्षणोपेतं विद्यादम्बुप्रकम्पितम् ।
तस्मिन् भवति निर्देशः शौनकस्य वचो यथा ॥

पर्वतेषु च यद्वीजमूषरे जाङ्गले तथा ।
तत्रोप्तमुप्यते बीजमन्यत्र तु विनश्यति ॥
औद्भिजानि च पुष्पाणि मूलानि च फलानि च ।
गच्छन्ति तत्र वृद्धिं हि सत्त्वाभ्युदयकानि च ॥
क्षेमं सुभिक्षमारोग्यं सुवृष्टिं चात्र निर्दिशेत् ।
एवमेवं तु कम्पानां सामान्यं त्वम्बुकम्पितम् ॥

इदं तु मण्डलं केषां चिदशोभनं च ।

तथा च पराशरः ।

अतीसारहिक्काक्षिरोगकृदपि वा विशेषतस्तु किरातकाश्मीरपारतावन्तकौकुरेयशौर्यारकचेदिवत्ससैन्धवोदकपात्रकोदधिनदनदीसंश्रितांश्च देशानुपहन्ति ।

वराहसंहितायाम् ।

वारुणमर्णवसरिदाश्रितघ्नमतिवृष्टिदं विगतवैरम् ।
गोनर्दचेदिकुकुरान् किरातवैदेहकान् हन्ति ॥

काश्यपस्तु ।

अभ्रकाः सकरूषाश्च सिंहला जलजीविनः ।
नश्यन्ति विषयाश्चैव शान्तिं कुर्वीत वारुणीम् ॥

अत एवास्मिन् मण्डले मत्स्यपुराणविष्णुधर्मोत्तरयोर्वारुणी शान्तिरुक्ता ।

तथा च मत्स्यपुराणे ।

चतुर्थदिनयामे च रात्रौ च रविनन्दन ।
सार्पे पौष्णे तथाऽऽर्द्रायामहिर्बुध्न्ये च वारुणे ॥
मूले वरुणदैवत्ये ये भवन्त्यद्भुतास्तथा ।
वारुणी तेषु कर्त्तव्या महाशान्तिर्महीक्षिता ॥

वरुणदैवत्यं जलम् । तस्मिन् पूर्वाषाढायाम् । विष्णुधर्मोत्तरेऽप्येवम् । अस्य फलपाकः सद्य एव ।

तदुक्तं वटकणिकायाम् ।

आहिर्बुध्न्यं वारुणं मूलमाप्यं पौष्णं सार्पं मन्मथारीश्वरं च ।
सद्यः पाकं वारुणं नाम शस्तं तोयप्रायं हृष्टलोकं प्रशान्तम् ॥

ऐन्द्रादिकफलसंक्षेपो भार्गवीये ।

सुभिक्षक्षेमदौ कम्पौ विज्ञेयाविन्द्रवारुणौ ।
आग्नेयवायुजौ कम्पौ राजराष्ट्रभयावहौ ॥

येषामद्भुतानां फलपाको नोक्तस्तेषामयं फलपाककालो बोद्धव्यः ।
तथा च वराहसंहितायाम् ।

पक्षैश्चतुर्भिरनिलस्त्रिभिरग्निर्देवराट् च सप्ताहात् ।
सद्यः फलति च वरुणो येषु न पाकोऽद्भुतेषूक्तः ॥

भूमिकम्पस्य तु पाककाल उक्तो वराहसंहितायाम् ।

षड्भिर्मासैः कम्पो द्वाभ्यां पाकं च याति निर्घातः ।

बार्हस्पत्ये तु चतुर्षु मण्डलेषु भूमिकम्पस्य फलपाको विशेषेण कथितः ।
तद्यथा ।

आग्नेयो भूमिकम्पो यः सार्धमासाद्विपच्यते ।
वारुणस्य फलं सद्यो वायव्यस्य त्रिमासिकः ॥
माहेन्द्रस्य फलं विद्यान्मासमर्धं तथैव च ।

वायव्याग्नेयवारुणमण्डलेषु भूमिकम्पशान्तिर्बार्हस्पत्ये ।

एतेषु त्रिषु कम्पेषु आथर्वः शास्त्रकोविदः ।
माहेन्द्रीममृतां वाऽपि कुर्याच्छान्तिं सदक्षिणाम् ॥

ऐन्द्रमण्डले च भूमिकम्पशान्तिः ।

ऐन्द्रकम्पे तु विधिवदैन्द्रमन्त्रैर्विधानवित् ।
तत्फलस्य प्रवृद्ध्यर्थं जुहुयाच्च जपेत् तथा ॥

पराशरः* ।

योऽन्यस्मिन् नक्षत्रे भागे वाऽन्यत्र भूचलो भवति ।

* इतः प्रभृतिषु सप्तसु स्थानेषु पराशर इत्यत्र पराशरतन्त्रं बोध्यम् । तदर्थं द्रष्टव्यम् अ. पुस्तके ४५३ पृ. ।

स भवेद्व्यामिश्रफलस्तन्मे गदतो निबोधध्वम् ॥

अथैन्द्रवारुणमण्डलसंयोगफलम् । तत्र काश्यपः ।

माहेन्द्रवारुणौ चोभौ वेलानक्षत्रयोगजौ ।
सुभिक्षक्षेमनैरुज्यसत्यधर्मप्रवर्त्तकौ ॥

वराहसंहितायाम् ।

वारुणपौरन्दरयोः सुभिक्षशिववृष्टिहार्दयो लोके ।
गावोऽतिभूरिपयसो निवृत्तवैराश्च भूपालाः ॥

पराशरस्तु ।

काशाभिसारकाच्युतकच्छद्वीपार्यदेशजाः पुरुषाः ।
गणपूजिताः कुलाढ्या नृपाश्च वरुणेन्द्रवध्याः स्युः ॥

अथ वायव्याग्नेयसंयोगफलम् । तत्र काश्यपः ।

वायुरग्निर्विमिश्रस्तु वेलामण्डलयोगतः ।
दुर्भिक्षावृष्टिरोगैश्च पीडयन्ते तत्र वै जनाः ॥

वराहसंहितायाम् ।

प्रथितनरेश्वरमरणव्यसनान्याग्नेयवायुमण्डलयोः ।
क्षुद्भयमरकावृष्टिभिरुपताप्यन्ते जनाश्चापि ॥

पराशरस्तु ।

कुरुशाल्वमत्स्यनैषधपुण्ड्रान्धकलिङ्गविन्ध्यपादस्थान् ।
वायव्याग्नेयः कम्पोऽनिलाग्निजीवान् रुजति मत्स्यान् ॥

अथ वारुणवायुसंयोगफलम् । तत्र पराशरः ।

आवन्तकाः पुलिन्दा विदेहकाश्मीरदरदवासान्ताः ।
ऐन्द्र्याश्रिताश्च वायव्यवारुणे प्राप्नुयुः पीडाम् ॥

अथैन्द्र्याग्नेयमण्डसंयोगफलम् । तत्र पराशरः ।

ऐक्ष्वाकुवेश्मरथ्यान् पटच्चराभीरचीनमरुकच्छान् ।
ऐन्द्र्याग्नेयः कम्पो हिनस्ति राज्ञश्च समुदीर्णान् ॥

अथैन्द्रवायव्यसंयोगफलमाह पराशरः ।

प्राच्यशकचीनपह्लवयौधेयकपार्दयज्ञवद्गोमान्* ।
शरदण्डमगधबन्धकिविनाशनः शक्रवायव्यः ॥

अथ वारुणाग्नेयमण्डलसंयोगफलमाह पराशरः ।

ससरित्सरःसमुद्राश्रिताँश्च गोनर्दमङ्गनाराज्यम् ।
क्षत्रियगणाँश्च हन्यात् कम्पो वरुणाग्निदैवत्यः ॥

ऐन्द्रवायव्यसंयोगस्य वारुणाग्नेयसंयोगस्य च निष्फलत्वमाथर्वणाद्भुते कथितम् । तद्यथा ।

परस्परं विघातः स्यादैन्द्रवायव्ययोर्द्वयोः ।
वारुणाग्नेययोश्चैव वेलानक्षत्रभेदतः ॥

वराहसंहितायाम् ।

हन्त्यैन्द्रो वायव्यं वायुश्चाप्यैन्द्रमेवमन्योन्यम् ।
वारुणहौतभुजावपि वेलानक्षजाः कम्पाः ॥

निष्फलश्च भूकम्पो जलनिवासिसत्त्वादिकृतः । शुभाशुभसूचकोऽनिलादिकृतो बोद्धव्यः ।

अथ मण्डलफलम् ।

मघापुष्यकृत्तिकाविशाखाभरणीपूर्वफाल्गुन्यः—
इत्याग्नेयमण्डलम् ।
उत्तरफाल्गुनीहस्तचित्रास्वातीपुनर्वसुमृगशिराऽश्विन्यः—
इति वायव्यमण्डलम् ।
रेवत्युत्तराभाद्रपदपूर्वाषाढशतभिषाऽऽर्द्राऽऽश्लेषा मूलम्—
इति वारुणमण्डलम् ।
अभिजिच्छ्रवणाज्येष्ठोत्तराषाढाधनिष्ठारोहिण्यनुराधाः—
इति माहेन्द्रमण्डलम् ।

आग्नेये ऋक्षयोगे यदि चलति मही चन्द्रसूर्यग्रहौ वा
निर्घातोल्काऽशनीनां कथमपि पतनं दर्शनं धूमकेतोः ।

---

* यौधेयकयवनपथ्यवद्गोमान् इति छ, ज, ।

दह्यन्ते काननानि प्रवरपुरगृहास्तीव्रतेजाः पतङ्गो
रोगैः पित्तज्वराद्यैः सततमनुगतैः पीड्यते जीवलोकः ॥
इत्याग्नेयमण्डलम् ।
प्राकाराट्टालचैत्याः पृथुगृहतरवो गोपुरा भूधराश्च
मूलाद्वै शीर्यमाणाः पवनरयवशाद्यान्ति भूतागमाँश्च ।
नारीगोगर्भघातस्तदनु च नियतं स्वल्पशस्या धरित्री
दुर्भिक्षं चातिकष्टं प्रभवति च महाव्याधिपीडा जनानाम् ॥
इति वायव्यमण्डलम् ।
गर्जन्ते वारिवाहा जलधरनमिताः पूर्यमाणाः क्षणेन
क्रीडन्ते मीनहंसा पयसि जनपदा हर्षिणः कामभाजः ।
वृक्षाः पुष्पैः समेताः फलभरनमिताः पुत्रवत्यश्च गावः
शस्यैः पूर्णा धरित्री सुखभरनमिता जन्तवः सर्वदैव ॥
इति वारुणमण्डलफलम् ।
लोको नित्यप्रमोदो विनययुतमना नष्टरोगावकाशो
दाने भोगे च शक्तः सकलभयकृतैर्दुःखसङ्घैर्विमुक्तः ।
कीर्त्तिं विस्तीर्य रम्यां त्रिभुवनफलके वर्धयेद्धर्मवृद्धिं
कोषैः पूर्णो नरेन्द्रो जनपदसहितो वर्धते श्रीसमेतः ॥
इति माहेन्द्रमण्डलफलम् ।
अथ मण्डलद्वयशान्तिर्मत्स्यपुराणविष्णुधर्मोत्तरयोः ।
भिन्नमण्डलवेलासु ये भवन्त्यद्भुताः क्वचित् ।
तेषु शान्तिद्वयं कार्यं निमित्ते सति नान्यथा ॥
निमित्तायं कृता शान्तिर्निर्निमित्ताय जायते ।
निमित्तायेति । अशुभसूचकनिमित्तायेत्यर्थः । एतैर्मण्डलैरन्येऽप्युत्पाताश्चिन्तनीयाः ।
वराहसंहितायाम् ।
अन्यानप्युत्पातान् जगुरन्ये मण्डलैरेतैः—इति ।

तथा च गर्गः ।

निर्घातोल्कामहीकम्पाः स्निग्धगम्भीरनिःस्वनाः ।
मेघस्तनितशब्दाश्च सूर्येन्दुग्रहणं तथा ॥
मण्डलैरेव बोद्धव्याः शुभाशुभफलप्रदाः ।

षट्कणिकायां च ।

उल्का हरिश्चन्द्रपुरं रजश्च निर्घातभूकम्पककुप्प्रदाहाः ।
वातोऽतिचण्डो ग्रसनं रवीन्द्वोर्नक्षत्रताराग्रहवैकृतानि ॥
व्यभ्रे वृष्टिवैकृतं चातिवृष्टिर्धूमोऽनग्नौ विस्फुलिङ्गार्चिषो वा।
वन्यं सत्त्वं ग्राममध्ये विशेद्वा रात्रावैन्द्रं कार्मुकं दृश्यते वा ॥
सन्ध्याविकारः परिवेषदण्डा नद्यः प्रतीपा दिवि तूर्यनादः ।
अन्यच्च यत् स्यात् प्रकृतेः प्रतीपं तन्मण्डलैरेव विचिन्तनीयम् ॥

अथ शुभसूचकभूकम्पलक्षणम् । तत्र पराशरः ।

स्निग्धस्वनाः प्रदक्षिणानुयायिनोऽम्बुधरधाराभिषिक्ताः पर्वसु च सर्व एव प्रशस्यन्ते ।

अथाशुभसूचकभूकम्पलक्षणम् । तत्र हरिवंशे कंसवधनिमित्तम् ।

"चलत्यपर्वणि मही गिरीणां शिखराणि च"* ।

पराशरः ।

अवनेर्विदरणमतिमात्रचलनं महाभयाय—इति ।

द्रोणपर्वणि द्रोणवधनिमित्तम् ।

"चचाल चापि पृथिवी सशैलवनकानना"† ।

गदापर्वणि पाण्डवशिविरपराजयनिमित्तम् ।

"चचाल पृथिवी चापि सवृक्षक्षुपपर्वता‡ ।

स्कन्दपुराणे प्रह्लादपराजयनिमित्तम् ।

चचाल सकला तुर्वी धराधरसमन्विता ।

---

* २३ अ. ३० श्लो. । † ७७ अ. ४ श्लो. । ‡ ५८ अ. ४१ श्लो. ।

गदापर्वणि दुर्योधनवधनिमित्तम् ।

"चचाल च महाकम्पं पृथिवी सवनद्रुमा:"* ।

विष्णुधर्मोत्तरे ।

सनिर्घाते दीर्घभूमिचाले राजमरणं स्यात् ।

उद्योगपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

"रसते कम्पते भूमिर्व्यथतीव च सर्वशः"† ।

शल्यपर्वणि शल्यवधनिमित्तम् ।

"चचाल शब्दं कुर्वाणा सपर्वतवना मही"‡ ।

गदापर्वणि पाण्डवशिविरक्षयनिमित्तम् ।

"ससागरवना घोरा पृथिवी सचराचरा ।
चचालाशनिनिर्ह्रादा दिशश्चैवा विला भवन्"§ ॥

भार्गवीये ।

यस्यां यस्यां दिशि धरा विरौति विकृतस्वरा ।
तस्यां तस्यां दिशि भयं सार्धं स्यादधिकारिभिः ॥

अथ सन्ध्याकालिकभूमिकम्पफलं मयूरचित्रे ।

सन्ध्ययोरुभयोर्भूतो भूकम्पो यदि जायते ।
सन्ध्योल्कापातवत् कार्या दिव्या शान्तिश्चतुर्दशी ॥
यदि वा षोडशी दिव्या पूर्वा साधरणी शुभा ।

अपरमपि मयूरचित्रे ।

सन्ध्ययोर्भूमिकम्पे तु नृपस्यादिवधः स्मृतः ।
प्रजापत्या ततः शान्तिः कृता चेच्छं भविष्यति ॥

औशनसे ।

यदा कम्पेत वसुधा सर्वेषु दिवसेषु च ।

---

* ५६ अ, १० श्लो. । तत्र 'चतम्पे च'-इति पाठः । † नोक्तस्थले उपलभ्यते

‡ ११ अ, १४ श्लो. । तत्र 'मही चापि सपर्वता'-इति पाठः

§ ६४ अ, ४१-४२ श्लो. । तत्र 'चचालाथ सनिर्ह्रादा'-इति पाठः । अविला-अभवन्नित्यत्र अविला भवन्नित्यार्षः ।

शान्त्यर्थं योजयेद्विप्रान् प्रतिपूज्याश्च देवताः ॥

देवतास्ता एव मण्डलदेवता इत्यर्थः ।

पराशरः ।

अभीक्ष्णा बहवोऽवनिपतिविग्रहाय भयाय च—इति ।

भूकम्पदिवसात् तृतीये चतुर्थे सप्तमे वा पक्षे मासे सार्धमासे वा भूकम्पफलमाह काश्यपः ।

अर्धमासे चतुर्थेऽह्नि मासे सार्धे हि सप्तमे ।
कम्पते धरणी चेत् स्यान्नृपतेः श्रेयसः क्षयः ॥

श्रेष्ठनृपतिविनाश इत्यर्थः ।

पराशरः ।

त्रिचतुःसप्तरात्रे पक्षमासत्रिपक्षान्तरे प्रततानुभूकम्पिनः प्रवरनृपतिविनाशाय ।

वराहसंहितायां च ।

त्रिचतुर्थे सप्तमदिने पक्षे मासेऽथ वा त्रिपक्षे च ।
यदि भवति भूमिकम्पः प्रधाननृपनाशनो ज्ञेयः ॥

सकलभूकम्पादिदोषशान्तिमाह पराशरः ।

शमयान्त्यासप्ताहात् कम्पादिकृतं निमित्तमाश्वेव ।
अभिवर्षणोपवासव्रतदीक्षाजप्यहवनानि ॥

अथ मण्डलानां भूकम्पयोजननिर्णयो भार्गवीये ।

वायव्यं विंशतिशतमाग्नेयं नवतिं चलेत् ।
अशीतिं तु चलेदैन्द्रं सप्ततिं वारुणं चलेत् ॥

वराहसंहितायाम् ।

चालयति पवनः शतद्वयं शतमनलो दशयोजनान्वितम् ।
सलिलपतिरशीतिसंयुतं कुलिशधरोऽप्यधिकं च षष्टितः—इति ।

यां दिशं भूकम्पो गच्छति तां दिशं नृपतिरभियुञ्जीत ।

तथा च मत्स्यपुराणे ।

भूचालो यां दिशं याति यां च केतुः प्रधूपयेत् ।

.........तां च यायान्नराधिपः—इति सम्बन्धः ॥

विष्णुधर्मोत्तरे ।

यां दिशं भूकम्पो याति तां च यायाद्राजा—इति ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-ऽद्भुतसागरे भूमिकम्पाद्भुतावर्त्तः ।

---

## अथ जलाशयाद्भुतावर्त्तः ।

---

तत्र पद्मपुराणे देवानां पराजयनिमित्तम् ।

"यथार्थमाहुः सरितो न च चुक्षुभिरेऽर्णवाः"* ।

सुन्दरकाण्डे रामजयनिमित्तम् ।

"प्रसन्नाः सुरसाश्चापः...............† ।

बार्हस्पत्ये ।

विप्राणां भवति हि शुक्लमम्बुदोषो
राजानं सपदि निहन्ति लोहितं च ।
पीतं चेद्भवति निहन्ति वैश्यवर्गं
शूद्राणां भवति हि कृष्णमम्बुदोषः ॥

मत्स्यपुराणेऽसुरपराजयनिमित्तम् ।

"............उद्धूताश्च महार्णवाः"† ।

स्कन्दपुराणे प्रह्लादपराजयनिमित्तम् ।

वेलावलीसमाकीर्णा उद्धूताः सिन्धुसागराः ।

उत्तरकाण्डे माल्यवदादिराक्षसवधनिमित्तम् ।

"वेलां समुद्रश्चोत्क्रान्तः.........."‡ ।

---

* ५ सृष्टिखण्डे ३८ अ. १६४ श्लो. तत्र 'न चुक्षुभे तथाऽर्णवः'-इति ।

† नोक्तस्थले उपलभ्यते ।

‡ ७ सर्गे ३२ श्लो. ।

गदापर्वणि दुर्योधनवधनिमित्तम् ।

"उदपानगताश्चापो व्यवर्धन्त समन्ततः"* ।

उत्तरकाण्डे जगदुद्वेजकरावणोत्पत्तौ ।

"अक्षोभ्यः क्षुभितश्चैव समुद्रः सरितां पतिः"† ।

भगवते हिरण्याक्षोत्पत्तौ ।

"चुक्रोश विमनाश्चाब्धिरूर्मिभिः क्षुभितोदरः ।
सोदपानाश्च सरितश्चुक्षुभुः शुष्कपङ्कजाः"‡ ॥

भागवते वासुदेवोत्क्रान्तिनिमित्तम् ।

"नद्यो नदाश्च क्षुभिताः सरांसि च मनांसि च"‡ ।

गार्गीये ।

जलाशयगतं वारि यत्र भ्राम्यति चक्रवत् ।
वर्धते हीयते वाऽपि तत्र राजवधो भवेत् ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

नगरादपसर्पन्ते समीपमुपयान्ति वा ।
अशोष्या वाऽपि शुष्यन्ति प्रतीपं प्रवहन्ति वा ॥
नद्यो ह्रदाः प्रस्रवणा विरसा वा भवन्ति तु ।
विवर्णं कलुषं तप्तं फेनवज्जन्तुसंकुलम् ॥
क्षीरस्नेहसुरारक्तं वहन्ते व्याकुलोदकाः ।
षण्मासाभ्यन्तरे तत्र परचक्रागमो भवेत् ॥

वृद्धगर्गस्तु ।

नगरादपसर्पन्ते सरस्वन्तोऽथ निम्नगाः ।
अशोष्या अपि शुष्यन्ति विमार्गं प्रवहन्ति वा ॥
ह्रदपल्वलकूपानामुदधेर्वाऽपि नर्दनम् ।
अचिरात् तत् पुरं शून्यं भवतीत्यभिनिर्दिशेत् ॥
प्रतिस्रोतो वहन्ते वा विरसं चारुनिम्नगाः ।

---

* २२ अ. २४ श्लो. । † ३ स. । ३२ श्लो. । ‡ नोपलभ्यते ।

विवर्णं कलुषं तप्तं फेनवज्जन्तुसंकुलम् ॥
क्षीरस्नेहं सुरारक्तं वहन्ते व्याकुलोदकम् ।
षण्मासाभ्यन्तरे तत्र परचक्रागमं वदेत् ॥

वराहसंहितायाम् ।

अपसर्पणं नदीनां नगरादचिरेण शून्यतां कुरुते ।
शोषश्चाशोष्याणामन्येषां वा ह्रदादीनाम् ॥
स्नेहासृङ्मांसवहाः संकुलकलुषं प्रतीपगाश्चापि ।
परचक्रस्यागमनं नद्यः कथयन्ति षण्मासान् ॥

बृहद्यात्रायां वराहः ।

बहुतोयेऽपि संशोषः कूपेऽसृक्पूतिगन्धिता ।
राज्ञोऽब्दार्धाद्वधं कुर्यात् स्रोतोऽन्यत्वे परागमः ॥

कूपेऽसृक्पूतिविस्नृतिरित्युत्पलेन लिखितम् ।

औशनसे ।

यस्य राज्ञो जनपदे नदी वहति कर्दमम् ।
काष्ठं तृणं चोपलं वा मृतकं मत्स्यजालकम् ॥
यस्य राज्ञो जनपदे प्रतिस्रोतो नदी वहेत् ।
अष्टमासाज्जनपदो हन्यते शस्त्रपाणिभिः ॥

पराशरस्तु ।

नोपयोग्यानां नदीकूपपल्वलानामपक्रमं परिशोषणमपां वैरस्यं पुरविनाशाय सरितां प्रतिस्रोतोऽभिगमनं क्षीरस्नेहमधुसुरापूयशोणितकुणपमांसविण्मूत्रगन्धविलुलितसलिलप्रवणमहीयूकमपां गाधागाधपरिवर्त्तनमुच्छोषणं चापरचक्रागमनाय नरपतिभयाय वा ।

गदापर्वणिपाण्डवशिविरक्षयनिमित्तम् ।

"नद्यश्च सुमहावेगाः प्रतिस्रोतोवहाऽभवन्"* ।

---

* ५८ अ, ५१ श्लो, । अत्र 'वहा अभवन्नित्यत्र 'वहाऽभवन्'इत्यार्षः ।

हरिवंशपद्मपुराणयोर्हिरण्यकशिपुवधनिमित्तम् ।

"नद्यश्च प्रतिलोमा हि वहन्ति कलुषोदकाः"* ।

अग्निपुराणे च ।

नद्यश्च प्रतिकूलं तु वहन्ति रुधिरोदकाः ॥

बार्हस्पत्ये ।

महोर्मिभिः क्षोभिततोयवेगाः स्वकूलजान् वृक्षगणान् हरन्त्यः ।
नद्यः प्रतीयाम्बुवहा यदा स्युस्तदा भयं विद्धि नरेश्वरस्य ॥

एतेन स्रोतोभिघातजातस्य प्रादेशिकाभिन्नदोषावहत्वमित्युक्तम् ।

उद्योगपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

"उदपानाश्च कुम्भाश्च प्रासिञ्चन् शतशो जलम्"† ।

वराहसंहितायाम् ।

सलिलोत्पत्तिरखाते गन्धरसविपर्यये़ऽत्र तोयानाम् ।
सलिलाशयविकृतौ वा महद्भयं तत्र शान्तिरियम् ॥

तथा च मत्स्यपुराणे ।

जलशया विनिर्व्रृतिं प्रजल्पन्ति कथन्ति वा ।
प्रमुञ्चन्ति सुजिह्वां च ज्वालाधूमं सृजन्ति च ॥
अखाते वा जलोत्पतिमगन्धा वा जलाशयाः ।
संगीतशब्दाः श्रूयन्ते जनमारभयं भवेत् ॥

विष्णुधर्मोत्तरे ।

जलाशया विनिर्दन्ति प्रजल्पन्ति कथन्ति च ।
विमुञ्चन्ति तथा ब्रह्मन् ज्वालाधूमरजांसि च ॥

अन्यन्मत्स्यपुराणतुल्यम् ।

गदापर्वणि पाण्डवशिविरक्षयनिमित्तम् ।

"ह्रदाः कूपाश्च रुधिरमुद्वमन्नृपसत्तम"‡ ।

---

* भविष्यपर्वणि ४६ अ. २१ श्लो. । पद्मपुराणे ५ सृष्टिखण्डे ४२ अ. १३१ श्लो. । तत्र 'नद्यश्च प्रतिकूलानि' इति ।

† ८४ अ. ७ श्लो. ।

‡ ५८ अ. ५८ श्लो. ।

गार्गीये।

ज्वलेद्धूमोऽथ वा वह्निर्यस्मिन् देशे प्रतीयते।
तत्र राजविनाशः स्यात् क्षिप्रमेव न संशयः॥

भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम्।

"फेतायमानाः कूपाश्च नर्दन्ति वृषभा इव"*।

वाराहसंहितायाम्।

ज्वालाधूमक्काथारुदितोत्क्रुष्टानि चैव कूपानाम्।
गीतप्रजल्पितानि च जनमरकाय प्रदिष्टानि॥

गार्गीये।

उत्तिष्ठन्ति घटाः कूपादकस्माद्यत्र कुत्रचित्।
तत्र प्रधाननाशः स्यादिति वेदविदो विदुः॥

अत्र शान्तिर्मत्स्यपुराणे।

जलाशयविकारे च वारुणी शान्तिरुच्यते।

वराहसंहितायां तु।

सलिलविकारे कुर्यात् पूजां वरुणस्य वारुणैर्मन्त्रैः।
तैरेव च जपहोमं शममेवं पापमुपयाति॥

विष्णुधर्मोत्तरे।

जलाशयानां वैकृत्यप्रयतस्तु जलाशये।
स्थालीपाकेन पशुना वरुणं पूजयेद्द्विजः॥

विष्णुधर्मोत्तरमत्स्यपुराणयोः।

दिव्यमम्भःपयःसर्पिर्मधुनाऽचमनेन च।
जप्तव्या वारुणा मन्त्रास्तैश्च होमो जले भवेत्॥

मध्वाज्ययुक्तं परमान्नमत्र देयं द्विजानां द्विजभोजनार्थम्।
गावश्च देयाः सितवस्त्रयुक्तास्तथोदकुम्भाः सलिलाघशान्त्यै॥

* ३ अ, ३४ श्लो, तत्र नर्दन्तीत्यत्र कूर्दन्तीति पाठः।

मयूरचित्रे तु ।

वापीकूपतडागानामतिवारि यदा भवेत् ।
दुर्भिक्षं मरणं चैव जायते च तदा भयम् ॥
अन्यस्तत्र भवेद्राजा तथैवान्यः पुरोहितः ।
शान्तिस्तु षोडशी कार्या या सा दिव्यप्रचोदिता ॥
वरुणस्येति मन्त्रेण वृद्धौ वाप्यादिकस्य वा ।
अपामार्गस्य जुहयात् समिधो भूश्च दक्षिणा ॥
गायत्रीजपहोमौ वा कूपस्योद्गिरणे स्मृतः ।
भोजयेद्ब्राह्मणाँश्चैव घृतक्षीरगुडोदनैः ॥
पायसैर्मधुसंयुक्तैः क्षीरशान्तिं च कारयेत् ।

तत्रैव ।

प्रतिस्रोतो वहानद्यः कूलान्यपहरन्ति च ।
तथा उन्मार्गगामिन्यः शुष्यन्ति च जलाशयाः ॥
प्रद्रवन्ति सफेनाश्च वधाय नृपतेर्मताः ।
उद्गिरन्ति जलं कूपाः पुष्करिण्यो ह्रदास्तथा ॥
यदि वाऽप्यथ वा धूमस्तेभ्यः संदृश्यते यदि ।
गर्जत्यम्बुदनिर्घोषो राज्ञो निधनमादिशेत् ॥
दुर्भिक्षं मरकं चैव ग्रामस्योत्सादनं भवेत् ।
एकादशी ततः शान्तिः कर्त्तव्या दिव्यचोदिता च ॥

आत्रेये ।

उद्गिरत्युदक्तं यत्र कर्करीकलशादिकम् ।
वरुणं पूजयेत् तत्र वारुणीं शान्तिमाचरेत् ॥
महाव्याहृतिभिर्होम आपुष्पैरपराजितैः ।
चन्द्रस्वस्तिकमन्त्रेण चाज्यं हुत्वा विशेषतः ॥

संपातानानयेत् पात्रे तैलपूर्णे ततो जलम् ।
हुत्वा शान्त्युदकं तत्र तेनाभ्युक्षेच्च सर्वतः ॥
तिलधेनुर्दक्षिणाऽत्र होत्रे देया यथाविधि ।
उददानं तु देवाय स्वस्थाने विनिवेशयेत् ॥
ध्रुवोऽसीत्यादिमन्त्रेण पूरयेदुदकेन तत् ।
हिरण्यवर्णा इत्यादि सूक्तेन द्विजपुङ्गव ॥

वैजवायः* ।

कूपप्रपतने सौम्यां शान्तिं कुर्याद्यथाविधि ।
सोमं संपूजयेत् सम्यग्वरुणं च जलाधिपम् ॥

अथर्वमुनिः ।

कूपस्योद्गिरणेऽकस्माद्गर्जने शोषणे तथा ।
धूमायति ज्वलयति कुम्भे च स्वयमुत्थिते ॥
शुक्राद्भुतं विजानीयात् तद्वारे तं प्रपूजयेत् ।
दधिमध्वाज्यसहिता येनाचरदिति स्फुटम् ॥
उदुम्बरस्य समिधो जुहुयाद्घृतमेव च ।
वस्त्रं सुवर्णधेनुं च दद्याद्विप्राय दक्षिणाम्—इति ॥

फलपाकसमयो मयूरचित्रे ।

मासत्रयस्य च मध्ये जनक्षयः इति ।

वराहसंहितायाम् ।

"शोषश्चाशोष्याणां स्रोतोऽन्यत्वं च वर्षार्धम् ।
लोष्टस्य चाम्बुतरणं त्रिभिरेव विपच्यते मासैः"† ॥

पराशरस्तु ।

मासात् फलति नादेयम्········ ।

---

* विलक्षणमिदं नाम । अस्मिन् ग्रन्थे बहुत्र प्रमाणम् ।

† नेदम् अ, पुस्तके उपलभ्यते ।

तथा ।

अनुक्तेष्वपि चान्येषु परं संवत्सरात् फलम् ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-ऽद्भुतसागरे जलाशयाद्भुतावर्त्तः ।

---

## अथाग्न्यद्भुतावर्त्तः ।

तत्र पराशरः ।

अनग्निज्वननमग्नेरज्वालनमवनिपतिविनाशाय—इति ।

अग्नेरज्वलनमिन्धनवतोऽप्यग्नेरज्वलनमित्यर्थः ।

वराहसंहितायां तु ।

राष्ट्रे यस्यानग्निः प्रदीप्यते दीप्यते च नेन्धनवान् ।
मनुजेश्वरस्य पीडा तस्य सराष्ट्रस्य विज्ञेया ॥

तस्य पीडा विनाशरूपा प्रदीप्यत इति प्रशब्देन सातिशयं ज्वलनमाह ।

अतोऽग्निज्वलने पुंसां व्याधिराश्वेव जायते ।

इति बृहद्यात्रावचनमीषज्ज्वलनपरम् ।

औशनसे तु ।

अनग्निर्ज्वलते यत्र देशे तूर्णमनिन्धनः ।
यो राजा तस्य देशस्य सदेशः स विनश्यति ॥

वृद्धगर्गसंहितामत्स्यपुराणविष्णुधर्मोत्तरेषु च ।

अनग्निर्दीप्यते यत्र राष्ट्रे भृशमनिन्धनः ।
न दीप्यते वेन्धनवान् सराष्ट्रः पीड्यते नृपः ॥

यत्र राष्ट्रेऽनग्निर्दीप्यतेऽनग्निर्वा निरिन्धनो दीप्यते । इन्धनवान् वा न फलमिति । यदा त्वनिन्धनज्वलनमल्पं भवति तदा राष्ट्रपीडामात्रं फलम् ।

तथा च बार्हस्पत्ये ।

अग्निस्तु दीप्यते राष्ट्रे यत्राकस्माद्विनेन्धनम् ।
न दीप्यते चेन्धनवान् सराष्ट्रः पीड्यते नृपः ॥

प्रज्वलतेदम्बु मांसं वा तथाऽऽर्द्रं वाऽपि किं चन ।
अग्निं विना च शुष्काणि नियतं नृपतेर्बधः ॥

विनाऽग्निना यदा दह्येदिति शुष्ककाष्ठादिकमित्यन्वयः ।

वराहसंहितयाम् ।

जलमांसार्द्रज्वलने नृपतिवधः··· ।

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

प्रासादतोरणद्वारनृपवेश्मसुरालयम् ।
एतानि यत्र दह्यन्ते तत्र राजभयं भवेत् ॥
विद्युता वाऽपि दह्यन्ते तत्रापि नृपतेर्भयम् ।

वराहसंहितायाम् ।

प्रासादभवनतोरणकेतवादिषु चानलेन दग्धेषु ।
तडिता वा षण्मासात् परचक्रस्यागमो नियमात् ॥

बार्हस्पत्ये तु ।

प्रासादतोरणद्वारं प्राकारं काश्यपं गृहम् ।
शयनासनपानं च ध्वजं छत्रं सचामरम् ॥
यद्यनग्निः प्रदहते वैद्युतो वाऽपि निर्दहेत् ।
सप्ताहाभ्यन्तरे तत्र नृपतेर्नियतं वधः ॥

नृपसम्बन्धिप्रासादादिपरमेतत् ।

वराहसंहितायाम् ।

नगरचतुष्पादण्डजमनुजानां भयकरं ज्वलनमाहुः ।

वृद्धगर्गस्तु ।

पुरवाहनयानानां ज्वलनं च मुहुर्मुहुः ।
दृश्यते यत्र सप्ताहात् तत्राप्याशु भयं भवेत् ॥

बार्हस्पत्ये तु ।

पुरवाहनयानेषु ज्वलन्नग्निर्मुहुर्मुहुः ।
दृश्यतेऽतीव सहसा तथाऽप्यग्निभयं भवेत् ॥

वृद्धगर्गः ।

प्रदीप्यते च सहसा चतुष्पात् पक्षिमानुषः ।

वृक्षा वा पर्वता वाऽपि परचक्रभयं भवेत् ॥

पराशरश्च ।

चतुष्पदपक्षिमनुष्याणामङ्गेषु धूमादिदर्शनं परचक्रागमनाय ।

औशनसे तु ।

पुमानश्वो गजो वाऽपि यदाऽकस्मात् प्रदीप्यते ।
दशमासात् परं तत्र जानीयाद्राष्ट्रसंभ्रमम् ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

परवाहनयानेषु मनुष्यमृगपक्षिषु ।
विनाऽग्निं विस्फुलिङ्गश्चेद्दृश्यते यत्र कुत्र चित् ॥

तत्र संग्राममादिशेदिति सम्बन्धः ।

पराशरः ।

प्रासादचैत्यधूमप्रादुर्भावो महते भयाय ।

वृद्धगर्गस्तु ।

प्रासादादिषु चैत्येषु यदि धूमो विनाऽग्निना ।
भवन्ति वा विना धूमैरग्नयो वा भयाय ते ॥

तत्रैव ।

छत्रे गृहे वाऽथ रथे ध्वजे वा धूमः समुत्तिष्ठति यस्य तूर्णम् ।
स पार्थिवः साश्वमनुष्यकोषः पराभवं याति जनक्षयश्च ॥

वराहसंहितायाम् ।

सैन्यग्रामपुरेषु तु नाशो वह्नेर्भयं कुरुते ।

वृद्धगर्गः ।

शयनासनयानेषु केशप्रावरणेषु च ।
दृश्यतेऽग्निस्फुलिङ्गो वा धूमो वा मरणाय तत् ॥

यस्य शयनासनादौ तस्य मरणाय ।

वराहसंहितायाम् ।

धूमाग्निविस्फुलिङ्गैः शय्याम्बरमूर्धजैर्मृत्युः ।

अथाग्न्यद्भुतशान्तिः । तत्र वृद्धगर्गः ।

समिद्भिः क्षीरवृक्षाणां शर्षपेण ससर्पिषा ।
होतव्योऽग्निः स्वकैर्मन्त्रैः सुवर्णं चात्र दक्षिणा ॥

वराहसंहितायाम् ।

मन्त्रैराग्नेयैः क्षीरवृक्षात् समिद्भिर्होतव्योऽग्निः सर्पिषा वाऽपि यत्नात्।
अग्न्यादीनां वैकृते शान्तिरेवं देयं चास्मिन् काञ्चनं ब्राह्मणेभ्यः ॥

बार्हस्पत्ये तु ।

समिद्भिः क्षीरवृक्षोत्थैः शर्षपैश्च घृतेन च ।
होतव्योऽग्निः स्वकैर्मन्त्रैः सुवर्णं चात्र दक्षिणा ॥

वराहसंहितायां च ।

अग्निर्मूर्ध्यामिति तिस्र आग्नेयीस्तत्र कारयेत् ।
गुरवे पार्थिवो दद्यात् प्रियाण्याभरणानि च ॥
पायसं सर्पिषा मिश्रं ब्राह्मणानपि भोजयेत् ।
तेषामपि यथान्यायं दक्षिणां दापयेत् ततः ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

त्रिरात्रोपोषितश्चात्र पुरोधाः सुसमाहितः ।
समिद्भिः क्षीरवृक्षाणां शर्षपैश्च घृतेन च ॥
अग्निलिङ्गैश्च जुहुयाद्बहु श्वेताम्बरः शुचिः ।
दद्यात् सुवर्णं च तथा द्विजेभ्यो गाश्चैव वस्त्राणि तथा नवीनम् ।
एवं कृते पापमुपैति नाशं यदग्निवैकृत्यभवं नरेन्द्र ॥

बैजवापः ।

अनग्नावग्निज्वलने अनग्नौ धूमसम्भवे ।
आममांसस्य ज्वलने दाहे च नववाससः ॥
अग्न्यपत्यभये चैव हेम्नो वृद्धिविनाशयोः ।
एष्वद्भुतेषु विधिवदाग्नेयीं शान्तिमाचरेत् ॥

मयूरचित्रे तु ।

अनग्नावग्निज्वलने द्वितीयां दिव्यचोदिताम् ।
आग्नेयीं यदि वा शान्तिं तत्र कुर्यात् समाहितः ॥
वैश्वानराय स्वाहेति मन्त्रेण घृतसंयुताः ।
वैकङ्कतस्य समिधो जुहुयाच्छमितव्रतः ॥
हुत्वा सप्तसहस्राणि चरुं कुर्यात् तथाऽऽशनम् ।
तर्पयेद्ब्राह्मणाँश्चैव दधिक्षीरगुडोदनैः ॥
पायसैर्मधुसंयुक्तैः क्षीरशान्तिं च कारयेत् ।
ताम्रपात्रं तिलैः पूर्णं गृहं धेनुसमन्वितम् ॥
अनड्वाहं सुवर्णं च दद्यादन्ते हुतस्य च ।
अनग्नौ धूमसम्पत्तौ स्वामीपत्नीवधः स्मृतः ॥
शान्तिरेषैव कर्त्तव्या सर्वोपद्रवनाशिनी ।
अथ वा वक्ष्यते चैव हिरण्यस्यापहारतः ॥
आग्नेयी तत्र कर्त्तव्या शान्तिरत्र विपश्चिता ।

तत्रैव ।

अङ्गारः पतितो दृष्टो ज्वलन् वृक्षे गृहेऽथ वा ।
प्रभोर्द्रष्टुश्च नाशाय होमो व्याहृतिभिस्तथा ॥
आम्रस्यौदुम्बरीणां च गौर्देया विप्रभोजनम् ।

तत्रैव ।

धान्यकोष्ठे यदा धूमस्तदा संजायते भयम् ।
दधिमधुघृताक्तानामुपोष्य समिधं ततः ॥
जुहुयादयुतं संख्या होमे दद्याद्द्विजाय च ।

नारदः ।

गृहदाहो भवेद्यत्र अङ्गदाहस्तथैव च ।
केशाश्चापि च दह्यन्ते पटो वा दह्यते यदि ॥

स्नानं तत्र प्रकुर्वीत शान्तिं चेमां समाचरेत्।
तिलधान्ययवानां च घृतेन मधुना सह ॥
आहुतीनां सहस्रं तु जुहुयाच्च समाहितः।
इषे त्वोर्जेति मन्त्रेण धेनुं दद्यात् च दक्षिणाम् ॥
क्षौरं तत्र च कर्त्तव्यं ततः शान्तिर्भविष्यति।
मासमेकं द्विजश्रेष्ठ क्षपयेद्ब्रह्मचर्यया ॥
यात्रोद्वाहं न कुर्वीत मासमेकं न संशयः।
अन्यथा पुत्रदाराणां मरणं च भविष्यति ॥
षड्भिर्मासैश्च संपूर्णैः स्वयमेव विनश्यति।
तस्माद्यत्नेन कर्त्तव्यमिति दोषस्य दर्शनात् ॥
अपहारे हिरण्यस्य प्रदाहे भवनस्य च।
शिलामण्डपदाहे च दाहे देवफलस्य च ॥
देहदाहेऽथ देवानां नृत्ये हसितकम्पयोः।
गाने धूमायने स्वेदे क्रीडने ज्वलने तथा ॥
रक्तधारास्रुतौ चैव दाहे च नववाससः।
कुटुम्बस्य क्षये विद्वान् शुभकर्मसमारभे ॥
आग्नेयीं कारयेच्छान्तिं विशेषः श्रूयतामिह।
आग्नेयचरुहोमान्ते चरोरेवाहुतिद्वयम् ॥
अग्निर्मूर्धेति मूर्धानमिति मन्त्रद्वयेन च।
तस्योपरिष्टादाज्यस्य सावित्र्या चाहुतिद्वयम् ॥
कनकं रजतं ताम्रं दद्याद्धोत्रे च दक्षिणाम्।

अथ होमाद्भुतानि विष्णुधर्मोत्तरे।

प्रदक्षिणावर्त्तशिखस्तप्तजाम्बूनदप्रभः।

रथौघमेघनिर्घोषो विधूमश्च हुताशनः ॥
अनुलोमः सुगन्धश्च स्वस्तिकाकारसन्निभः ।
वर्धमानाकृतिश्चैव नन्द्यावर्त्तनिभस्तथा ॥
प्रसन्नार्चिर्महाज्वालः स्फुलिङ्गरहितो हितः ।
स्वाहावसाने ज्वलनः स्वयं देवमुखं हविः ॥
यदा भुङ्क्ते महाराज तदा राज्ञो हितं वदेत् ।
हविषस्तु यदा वह्नेर्न स्यात् सिमसिमायितम् ॥
न व्रजेयुश्च मध्येन मार्जारमृगपक्षिणः ।
पिपीलिकाश्च कर्मज्ञ तदा ब्रूयाज्जयं नृपे ॥
मुक्ताहारगुणाभे च वह्नौ राज्ञां जयं वदेत् ।
तथैव च जयं ब्रूयात् प्रस्तरस्याप्रदायिनि ॥

योगयात्रायां वराहः ।

हारकुन्दकमुन्देन्दुसन्निभः संहतोऽङ्गमुखतो महोदयः ।
अङ्कुशातपनिवारणाकृतिर्हूयतेऽल्प उपामानहव्यभुक् ॥
"स्वाहावसानसमये स्वयमुज्वलार्चिः
स्निग्धप्रदक्षिणशिखो हुतभुङ्नृपस्य ।
गङ्गादिवाकरसुताचलचारुहारां
धात्रीं समुद्ररसनां वशगां करोति ॥
चामीकराशोककुरण्टकाब्जवैदूर्यनीलोत्पलसन्निभेऽग्नौ ।
न ध्वान्तमन्तर्भवनेऽवकाशं करोति रत्नांशुहतं नृपस्य ॥
येषां रथौघार्णवमेघदन्तिनां समस्वनोऽग्निर्यदि वाऽपि दुन्दुभेः ।
तेषां मदान्तेभघटाभिघट्टिता भवन्ति यान्ने तिमिरोपमा दिशः ॥
ध्वजकुम्भहयेभभूभृतामनुरूपे वशमेति भूभृताम् ।

उदयास्तधराधराऽधरा हिमवद्विन्ध्यपयोधरा धरा ॥
द्विरदमदमहीसरोजलाजैर्घृतमधुना च हुताशने सगन्धे।
"प्रणतरिपुशिरोमणिप्रभाभिर्भवति पुरः स्फुरितेव भूर्नृपस्य"* ॥

बृहद्यात्रायाम्।

"इष्टद्रव्यघटातपत्रतुरगश्रीवृक्षशैलाकृति-
भेर्यब्दोदधिदुन्दुभीतशकटस्निग्धस्वनैः पूजितः।
नेष्टः प्रोक्तविपर्ययो हुतवहः स्निग्धो यथाऽभीष्टदः
सव्याङ्गं नृपतिं दहन्नतिहितः शेषं च लोकाद्वदेत्"† ॥

योगयात्रायाम्।

कृतेऽपि यत्नेऽतिकृशः कृशानुर्यातव्यकाष्ठाविमुखो नतार्च्चिः।
वामीकृतावर्त्तशिखोऽतिधूमो विच्छिन्नसोत्कम्पविलीनमूर्त्तिः ॥
सिमसिमायति चास्य हविर्हुतं सुरधनुःसदृशः कपिशोऽथ वा।
रुधिरपीतकबभ्रुहरिच्छविः परुषमूर्त्तिरनिष्टकरोऽनलः ॥
खरकरभवानरानुरूपो निगडविभीषणशस्त्ररूपभृद्वा।
शवरुधिरवसास्थिवस्त्रगन्धो हुतभुगनिष्टफलः स्फुलिङ्गकृच्च ॥
वर्णविपाटनतुल्यनिनादो जर्जरशब्दविरूक्षरवो वा‡।
आकुलयँश्च पुरोहितमर्त्त्यान् धूमलवैर्न शिवाय हुताशः ॥
अग्न्याश्रितं यत् फलमुक्तमस्मिँस्तज्जातकर्मादिषु पौष्टिकेषु।
यज्ञेषु सर्वेषु च वह्निकार्येष्वेवं वदेद्यस्य यथानुरूपम् ॥
अत्रानुक्तविशेषशान्तिष्वग्न्युत्पातेष्वाग्नेयी शान्तिनिवृत्तिर्वेति।

---

* बृहत्संहितायामप्युपलभ्यन्ते इमे श्लोकाः। तदर्थं द्रष्टव्यम् अ. ५०१ पृ.।

† योगयात्रायां इदं वचनम्। तदर्थं द्रष्टव्यम्। अ. ५०१ पृ.।

‡ चर्मविपाटनतुल्यनिदानो जर्जरदर्दुररूक्षुरवो वा इति अ.।

गार्गीये ।

अनग्निज्वलने विन्द्यात् सद्यः फलम्······—इति ।

पराशरः ।

अग्निजाः सप्तरात्रेण—इति ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-ऽद्भुतसागरेऽग्न्यद्भुतावर्त्तः ।

## अथ दीपाद्भुतावर्त्तः ।

वराहसंहितायाम् ।

दीपः संहतमूर्त्तिरायततनुर्निर्वेपथुर्दीप्तिमान्
निःशब्दो रुचिरः प्रदक्षिणगतिर्वैदूर्यहेमद्युतिः ।
लक्ष्मीं क्षिप्रमभिव्यनक्ति सुचिरं यश्चोद्यतं दीप्यते
शेषं लक्षणमग्निलक्षणसमं योज्यं यथाशक्तितः ॥
वामावर्तो मलिनकिरणः सस्फुलिङ्गोऽल्पमूर्त्तिः
क्षिप्रं नाशं व्रजति विमलस्नेहवर्त्त्यन्वितोऽपि ।
दीपः पापं कथयति फलं शब्दवान् वेपथुश्च
व्याकीर्णार्च्चिर्विशलभमरुद्यश्च नाशं प्रयाति ॥

अत्रानुक्तविशेषशान्तिषु दीपोत्पातेष्वग्न्यद्भुतावर्त्तलिखिताऽऽग्नेयी शान्तिः कर्त्तव्या ।

सप्ताहेनास्य फलपाक इति ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-ऽद्भुतसागरे दीपाद्भुतावर्त्तः ।

## अथ देवप्रतिमाद्भुतावर्त्तः ।

तत्र पराशरः ।

अथ दैवताभिज्वलनरोदनहसनापक्रमणवेपनपतनोद्वीक्षण-

स्वेदयुद्धधूमस्नेहदधिपयःशोणिताद्यनिमित्तप्रवर्त्तनंमहतां विनाशाय।

औशनसे ।

दैवतानि प्रसर्पन्ति यस्य राज्ञो हसन्ति च ।
उद्वीक्षन्ते प्रधावन्ति तत्र विन्द्यान्महद्भयम् ॥

वराहसंहितायां तु ।

अनिमित्तचलनभङ्गस्वेदास्रुनिपातजल्पनाद्यानि ।
लिङ्गार्च्चायतनानां नाशाय नरेन्द्रदेशानाम् ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

देवातार्चाः प्रनृत्यन्ति वेपन्ते प्रज्वलन्ति च ।
आरटन्ति च रोदन्ति प्रस्विद्यन्ति हसन्ति च ॥
उत्तिष्ठन्ति निषीदन्ति प्रधावन्ति नमन्ति च ।
कूजन्ते विक्षिपन्ते वा शस्त्रप्रहरणध्वजान् ॥
अवाङ्मुखाश्च तिष्ठन्ति स्थानात् स्थानं व्रजन्ति वा ।
वमन्त्यग्निं तथा धूमं स्नेहं रक्तं पयो वसाम् ॥
एवमाद्याः प्रदृश्यन्ते विकाराः सहसोत्थिताः ।
लिङ्गायतनचैत्येषु तत्र वासं न कारयेत् ॥
राज्ञो वा व्यसनं तत्र स वा देशो विनश्यति ।

हरिवंशे कंसवधनिमित्तम् ।

"चलिता देवताः स्थानात्………"* ।

तत्रैव हिरण्यकशिपुवधनिमित्तम् ।

"उन्मीलन्ति निमीलन्ति हसन्ति च रुदन्ति च ।
विक्रोशन्ति च गम्भीरं धूमायन्ति ज्वलन्ति च ॥
प्रतिमाः सर्वदेवानां कथयन्त्यो युगक्षयम्"† ।

---

* २३ अ. ३२ श्लो. ।  † भविष्यपर्वणि ४६ अ. १८-१९ श्लो. ।

अग्निपुराणे हिरण्यकशिपुवधनिमित्तम् ।

प्रतिमाः सर्वदेवानां हसन्ति च रुदन्ति च ।
उन्मीलन्ति निमीलन्ति धूमायन्ति ज्वलन्ति ॥
विक्रोशन्ति च गम्भीरं कथयन्त्यो युगक्षयम् ।

मत्स्यपुराणपद्मपुराणयोश्च हिरण्यकशिपुवधनिमित्तम् ।

"उन्मीलन्ति निमीलन्ति हसन्ति च रुदन्ति च ।
विक्रोशन्ति च गम्भीरं धूमायन्ति ज्वलन्ति च ॥
प्रतिमाः सर्वदेवानां कथयन्ति महद्भयम्"* ।

भागवते श्रीकृष्णोत्क्रान्तिनिमित्तम् ।

"दैवतानि रुदन्तीह स्विद्यन्तेऽह्य स्फुटन्ति च"† ।

बार्हस्पत्यवृद्धगर्गसंहितयोः ।

देवतार्चाः प्रनृत्यन्ति वेपन्ते प्रज्वलन्ति वा ।
उद्विजन्ते हसन्ते वा प्रस्विद्यन्ति रुदन्ति वा ॥
उत्तिष्ठन्ति निषीदन्ति प्रधावन्ति पतन्ति वा ।
भज्यन्ते विक्षिपन्ते वा शस्त्रप्रहरणध्वजान् ॥
अवाङ्मुखा भवन्त्येव स्थानात् स्थानं व्रजन्ति वा ।
वमन्त्यग्निं जलं धूमं स्नेहं रक्तं पयो वसाम् ॥
जल्पन्ते निःश्वसन्ते वा विचेष्टन्ते नमन्ति वा ।
विभ्रमाद्वीक्ष्यतेऽन्यत्र गात्रैर्वाऽपि विचेष्टते ॥
यत्रैते संप्रदृश्यन्ते विकाराः सहसोत्थिताः ।
लिङ्गायतनचैत्येषु तत्र वासं न रोपयेत् ॥
राज्ञो वा व्यसनं तत्र स वा देशः प्रलीयते ।
क्षुच्छस्त्रमरणैर्वाऽपि किञ्चित् तन्नावशिष्यते ॥

* मत्स्यपुराणे १६३ अ. ४५–४६श्लो. । पद्मपुराणे ५ सृष्टिखण्डे ४२ अ. १३७–१३८श्लो. ।
† नोक्तस्थले उपलभ्यते ।

तथा च भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

"देवताः प्रतिमाश्चैव प्रकम्पन्ते हसन्ति च ।
वमन्ति रुधिरं चास्यैः स्विद्यन्ते प्रपतन्ति वा"* ॥

औशनसे ।

विहसन्ति निमीलन्ति हसन्ति च रुदन्ति च ।
विक्रोशन्ति च गम्भीरं धूमायन्ते ज्वलन्ति च ॥
प्रतिमाः सर्वदेवानां कथयन्त्यो महद्भयम् ।

भागवते श्रीकृष्णोत्क्रान्तिनिमित्तानि वैकृतानि ।

"मांसशोणितगन्धीनि यत्र तत्र महद्भयम् ।
यत्र चित्रमुदीक्षेत गायते चेष्टते मुहुः ॥
तत्र द्वादशमासेषु राज्ञो मरणमादिशेत्"† ।

मत्स्यपुराणे त्रिपुरदाहनिमित्तम् ।

"अट्टहासं प्रमुञ्चन्ति हयाः काष्ठमयास्तथा ।
निमेषोन्मेषणं चैव कुर्वन्ति चित्रकर्मगाः"‡ ॥

औशनसे तु ।

चित्राणि यत्र लिङ्गानि तथैवायतनानि च ।
विकारं चक्रुरत्यर्थं तत्र विन्द्यान्महद्भयम् ॥

वृद्धगर्गसंहितावार्हस्पत्यमत्स्यपुराणविष्णुधर्मोत्तरेषु ।

पितामहर्षिधर्मेषु यन्निमित्तं द्विजेषु तत् ।

पराशरश्च ।

तत्र पितामहर्षिधर्मान् ब्राह्मणानाम् ।

वराहसंहितायाम् ।

ऋषिधर्मपितृब्रह्मप्रोद्भूतं वैकृतं द्विजातीनाम् ।

औशनसे तु ।

पितामहे तु यच्च स्यात् सोमे धर्मे ऋषिष्वपि ।

---

* २ अ, २६ श्लो. । † नो कस्थले उपलभ्यते । ‡ १८८ अ, ११-१२ श्लो. ।

निमित्तमशुभं तच्च ब्राह्मणानां भयावहम् ॥

पराशरः ।

गुरुभृगुशनैश्चराणां कृतः कम्पः पुरोधसाम् ।

वृद्धगर्गसंहिताबार्हस्पत्ययोस्तु ।

गुरुशुक्राग्निजानि स्युर्यानि तानि पुरोहिते ।

औशनसे तु ।

बृहस्पतौ वा शुक्रे वा पावके पाकशासने ।
यद्रूपं दृश्यते तत् तु विप्रे भाण्डारिके जने ॥

पराशरः ।

शक्रधनदयमवरुणरविशशाङ्कानां प्रवरनृपतीनाम् ।

वराहसंहितायाम् ।

वेदव्यासे मन्त्रिणि विनायके वैकृतं चमूनाथे ।

वृद्धगर्गसंहिताबार्हस्पत्ययोः ।

मन्त्री सेनापतिश्चैव गन्धर्वाः सविनायकाः ।

पराशरः ।

यक्षगन्धर्वविनायकानां भयकृत् सचिवानां सेनापतीनाम् ।

औशनसे तु ।

गन्धर्वेषु निमित्तं यत् तदन्यस्मिन् प्रदृश्यते ।
सेनापतीनां भयकृत् सचिवानां भयाय च ॥
मणिभद्रादयो यक्षा गन्धर्वाश्चित्रयोनयः ।
तदुद्भवमपत्यानां प्रधानानां विभावयेत् ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोस्तु ।

विनायकोद्भवं ज्ञेयं गणानां ये तु नायकाः ।

तत्रैव ।

ज्ञेयं सेनापतीनां च यत् स्यात् स्कन्दविशाखयोः ।

वृद्धगर्गसंहिताबार्हस्पत्ययोः ।

ज्ञेयं माण्डलिकानां तु यत् स्यात् स्कन्दविशाखयोः ।

पराशरः ।

स्कन्दविशाखयोर्माण्डलिकानां नरेन्द्राणां च ।

वराहसंहितायां च ।

स्कन्दविशाखसमुत्थं माण्डलिकानां नरेन्द्राणाम् ।
यद्रुद्रलोकपालोद्भवं पशूनामनिष्टं तत् ॥

वृद्धगर्गसंहितामत्स्यपुराणबार्हस्पत्यविष्णुधर्मोत्तरेषु ।

पशूनां रुद्रजं ज्ञेयं नृपाणां लोकपालजम् ।

पराशरस्तु ।

रुद्रोपेन्द्रपवनविश्वकर्मणां प्रजानाम् ।

वृद्धगर्गसंहिताबार्हस्पत्ययोः ।

लोकानां विष्णुवाय्वोर्हि विश्वकर्मणि वाहने ।

वराहसंहितायाम् ।

धातरि च विश्वकर्मणि लोकाभावाय निर्दिष्टम् ।

औशनसे तु ।

वाते प्रजापतौ चैव विश्वकर्मणि चैव हि ।
प्रवर्त्तन्ते यन्निमित्तं तज्ज्ञानोपादिकं भवेत् ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोस्तु ।

लोकानां विष्णुवाय्विन्द्रविश्वकर्मसमुद्भवम् ।

पराशरः ।

भवशक्रधनदपत्नीनां नृपमहिषीणाम् ।

औशनसे तु ।

इन्द्राणी वरुणानी च भद्रकाली महीधरा ।
वीरमाता च यत् कुर्यात् तद्राजमहिषीभयम् ॥
एवं तासां यथान्यायं याश्चान्या देवतास्त्रियः ।
कुर्युर्निमित्तं तत् स्त्रीणां प्रधानानां तु निर्दिशेत् ॥

पराशरः ।

देवप्रैष्ये नृपप्रैष्यो देवस्त्रीषु नृपस्त्रियः ।

वास्तुदेवेषु विज्ञेयं गृहिणामेव नान्यथा ॥

वृद्धगर्गसंहिताबार्हस्पत्ययोः ।

देवप्रैष्ये नृपप्रैष्यो देवस्त्रीषु नृपस्त्रियः ।
वास्तोष्पत्यपुरे ज्ञेयं यच्च प्रासादकाश्यपे ॥
कुमारेषु कुमारीणां कुमारेष्वेवमेव तु ।
यक्षराक्षसनागेषु यथोक्तं सर्वकर्म च ॥

वराहसंहितायाम् ।

देवकुमारकुमारीवनिताप्रेष्येषु वैकृतं यत् स्यात् ।
तन्नरपतेः कुमारककुमारिकास्त्रीपरिजनानाम् ॥
रक्षःपिशाचगुह्यकनागानामेवमेव निर्देश्यम् ।

औशनसे ।

कुमाराणां कुमारीषु कुमारेषु कुमारकम् ।
तथा प्रैष्येषु सर्वेषु कल्पयेच्छास्त्रतः फलम् ॥
रक्षःपन्नगयक्षेषु लिङ्गस्थापनकेषु च ।
वीरमाता च यत् कुर्यात् तद्राजमहिषीभयम् ॥

गार्गीये ।

यत्र पूजां त्यजन्त्यर्वागकस्मादेषु कर्हि चित् ।
स्वामिनो मरणं तत्र तदभावे च भूपतेः ॥

वृद्धगर्गसंहिताबार्हस्पत्ययोः ।

प्रासादं पौण्डरीकं वा विशीर्येत पतेत वा ।
वातवज्राहतं वाऽपि पुरमुख्यभयं भवेत् ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

देवयात्रासु चोत्पातान् दृष्ट्वा देशभयं वदेत् ।

बार्हस्पत्यवृद्धगर्गयोस्तु ।

देवतायतने वाऽपि प्रयातासु महोत्सवे ।

योगक्षेमाय लिङ्गाभ्यासीदनं चक्रवैकृते ॥
देवतायतने चापि यात्रायां वा महोत्सवे ।
अनोऽक्षचक्रकेतूनां युगस्य च विदारणम् ॥
भङ्गे पाते सादने वा समपर्यासनेऽपि वा ।
तस्य देशस्य राज्ञश्च विन्द्यादशुभमागतम् ॥

वराहसंहितायां च ।

दैवतयात्राशकटाक्षचक्रयुगकेतुभङ्गपतनानि ।
समपर्यासनसादनभङ्गाश्च न देशनृपशुभदाः ॥

इदं च देवताद्भुतम् । यदीया देवतार्चा तदद्भुतफलं च नयति । असति तु सम्बन्धविशेषे नृपगतं तत्परिकरगतं तद्देशगतं च ।

तथा च भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

देवतायतनस्थाश्च कुरुराजस्य देवताः ।
"कम्पन्ते च हसन्ते च नृत्यन्ति च रुदन्ति च"* ॥

बैजवापः ।

देवतार्चाविकारेषु प्रतिमार्चनपूर्विकाम् ।
कारयेद्वैष्णवीं शान्तिं देवराजशुभप्रदाम् ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

देवताया विकारेषु श्रुतिं वेत्ति पुरोहितः ।
देवतानां तु गत्वाऽपि स्नानमाच्छाद्य भूषयेत् ॥
पूजयेच्च महाभाग गन्धमाल्यानुलेपनैः ।
मधुपर्केण विधिवदुत्तिष्ठेत् तदनन्तरम् ॥
तल्लिङ्गेन च मन्त्रेण स्थालीपाकं यथाविधि ।
पुरोधा जुहुयाद्वह्नौ सप्तरात्रमतन्द्रितः ॥
विप्राश्च पूज्या मधुनाऽन्नपानैः सदक्षिणं सप्तदिनं नरेन्द्र ।

* ११२ अ. ११ श्लो. । तत्र कुरुराजस्य देवता इत्यत्र 'कुरुराजेन्द्रदेवताः' इति ।

प्राप्तेऽष्टमेऽह्नि क्षितिगोप्रदानैः सकाञ्चनैः शान्तिमुपैति पापम् ॥

वराहसंहितायां च ।

बुद्ध्वा देवविकारं शुचिः पुरोधास्त्र्यहोषितः स्नातः ।
स्नानकुसुमानुलेपनवस्त्रैरभ्यर्चयेत् प्रतिमाः ॥
मधुपर्केण पुरोधा भक्ष्यैर्बलिभिश्च विधिवदुपतिष्ठेत् ।
स्थालीपाकं जुहुयाद्विधिवन्मन्त्रैश्च तल्लिङ्गैः ॥
इति विबुधविकारे शान्तयः सप्तरात्रं
द्विजविबुधगणार्चा गीतनृत्योत्सवाश्च ।
विधिवदवनिपालैर्यैः प्रयुक्ता न तेषां
भवति दुरितपाको दक्षिणाभिश्च रुद्धः ॥

बार्हस्पत्यवृद्धगर्गयोः ।

देवतार्चाविकारेषु शुचिर्विद्वान् पुरोहितः ।
त्रिरात्रोपोषितो भूत्वा नवशुक्लाम्बरः शुचिः ॥
देवतां स्नाप्य चाच्छाद्य गन्धमाल्यैर्विभूषयेत् ।
मधुपर्केण विधिवदुपतिष्ठेत् समन्ततः ॥
धूपदीपैः सनैवेद्यैस्तिललाजाक्षतैस्तथा ।
भक्ष्यैर्भोज्यैश्च पेयैश्च मन्त्रवद्बलिभिस्तथा ॥
गोदानं भूमिदानं च गीतनृत्योत्सवक्रिया ।
रौद्री चात्रैव होतव्या सर्वाद्भुतविनाशिनी ॥
नृपश्च गुरवे दद्यादिष्टां भूमिं सदक्षिणाम् ।

आथर्वणाद्भुते ।

अथ यत्र देवता बहुविधा हासादिचेष्टाः कुर्युस्तत्रान्यराजागमनोदकवज्ररोगानावृष्टिशस्त्रकृन्मारजनपदाभ्युत्थानानि राजविनाशश्चेति । तत्र चतुष्पथे रुद्रं संपूज्योपक्रमेत् ।

'ईशानं प्रपद्ये। भूः प्रपद्ये। स्वः प्रपद्ये। महः प्रपद्ये। जनः प्रपद्ये। वेदिदेशं प्रपद्ये'इति। अतो गवामष्टशतस्य क्षीरेण पायसं श्रपयित्वा रौद्रेशान्तां सर्पिः पायसं च जुहुयादुपतिष्ठेत् संस्नाप्य शुक्लाः सुमनसो निवेद्य 'भव सर्वासां देवतानाम्'-इति पुनरुपस्थापयेत्। तत्र गच्छेत् ततस्तस्यां सर्वाः शान्त्युदकेन स्नापयित्वा संपातकृते 'नमस्ते गन्धः'-इति तिसृभिरनुलिप्य 'नतं पक्ष्म ऐन्द्रदेवाः'-इति गुग्गुलुकुष्ठधूपं दद्यात्। एवं स्वपुरदारामात्याय राज्ञे जनपदेभ्यो मन्त्रवर्जं ब्राह्मणान् भोजयित्वा एभ्य एव गाः प्रदद्यात्।

मयूरचित्रे तु।

प्रतिमा शिवलिङ्गं च स्विद्यते यदि वाऽपि हि।
दुर्भिक्षं शस्त्रसंपातो मरकं च तदा भवेत्॥
दधिमधुघृताक्तानां समिधामयुतं पुनः।
औदुम्बरीणां जुहुयादेकरात्रोषितः शुचिः॥
वृषं दद्यादियं चापि शान्तिः कार्या विपश्चिता।
वाप्यादीनां पयोवृद्धौ चूडाशाखाप्रभेदने॥
यद्वा लिङ्गस्य संस्वेदे विश्वतश्चक्षुरित्यथ।
अर्कहोमो विधातव्यः शान्तिरन्याऽथ वोच्यते॥
अहानि स्नापयेत् सप्त दध्ना क्षीरेण सर्पिषा।
कारयेद्भूमिदोहं च नटप्रेक्षणकं तथा॥
होतव्यं लक्षमेकं तु समिधं श्रीफलानि च।
इमा रुद्रेति मन्त्रेण द्विजा भोज्याः सदक्षिणाः॥

तत्रैव।

कम्पे हास्ये तथा नृत्ये रुदिते गीत एव च।
निमेषोन्मेषणे याने देवमातृगणस्य च॥

जल्पने क्रीडने चैव राजामात्यवधो भवेत् ।
धनक्षयश्च पौराणां देशोपद्रव एव च ॥
पुंस्त्रीनाम्नां नराणां च स्त्रीणामपि वधो भवेत् ।
अत्र चाभ्यर्च्चयेद्देवान् गन्धमाल्यानुलेपनैः ॥
शङ्खदुन्दुभिनादैश्च श्रीमद्भिर्गीतवादितैः ।
औदुम्बरीणां समिधां प्रयतो जुहुयाच्छतम् ॥
त्रिरात्रोपोषितो भूत्वा ऐन्द्रैर्मन्त्रैः समाहितः ।
उपहारश्च कर्त्तव्यो नृत्यगीतोपवादितैः ॥
गावश्च कपिला देया हुतान्ते भूरिदक्षिणाः ।
ततः शाम्यति तत्पापं शतक्रतुमतं यथा ॥

तत्रैव ।

परित्यजन्ति पुष्पाणि पूजिता देवता यदि ।
स्थानत्यागो भवेत् तत्र रोगपीडाभवेन्नृणाम् ॥
कारयेत् तत्र शान्तिं च होमं चैव सदक्षिणम् ।

नारदः ।

यतो देवकुले वज्रं पतेद्गृध्रोऽथ वा पुनः ।
कङ्को वा पतते विप्र चूडायामग्निदर्शनम् ॥
ईशानं भिद्यते यत्र वज्रेणैवाहतं क्वचित् ।
लिङ्गं वा स्विद्यते यत्र कम्पते वाऽनिमित्ततः ॥
चूडाभङ्गो भवेद्यत्र प्रतिमा स्विद्यते यदा ।
ग्रामोत्सादो भवेत् तत्र स्वामिनो मरणं दिशेत् ॥
राज्ञो वा मरणं राष्ट्रे धनं धान्यं च नश्यति ।
तत्र शान्तिं प्रवक्ष्यामि येन संपद्यते शुभम् ॥
रत्निमात्रमतः खात्वा अधस्ताद्द्वादशाङ्गुलम् ।

कुण्डं खात्वा विधानेन ततो होमं समारभेत् ॥
शुचिश्च प्रयतो भूत्वा अग्निः स्थाप्यो विधानतः ।
चरुं च पशुदैवत्यं साधयित्वा विधानतः ॥
परिधायाहतं वासः शोभनं द्विजसत्तम ।
ससुवर्णेन हस्तेन ततः कर्म समाचरेत् ॥
अष्टोत्तरशतं हुत्वा घृताक्तां समिधं ततः ।
माषैर्मुद्गैस्तिलैश्चैव तण्डुलैश्च सितैस्तथा ॥
घृतेन मधुना चैव नैवेद्यानि तु कारयेत् ।
संपूर्णानां शरावाणां कुण्डे कुर्यान्निवेदनम् ॥
तिलधान्यैर्यवैश्चैव घृतेन मधुना सह ।
एतैः पञ्च सहस्राणि शक्तिबीजेन* होमयेत् ॥
होमान्ते तर्पयेद्विप्रान् दक्षिणाभोजनादिना ।
भूमिं धेनुमनड्वाहं स्वर्णं धान्यं च दक्षिणाम् ॥
पञ्चगव्यं ततः कृत्वा स्नायादेवालये द्विजः ।
कलशेन पुनः स्नायाद्देवं संपूज्य यत्नतः ॥
बलिं दत्त्वा विधानज्ञः कृशरैः पायसैस्तथा ।
पुनर्द्विजातिजातं च अन्यद्वाऽत्यद्भुतं द्विजम् ॥
न भवेदशुभं किञ्चित् सर्वदेवाभयं भवेत् ।
ईशानं स्थापयेत् तत्र यागं कृत्वा विधानतः ॥
एवं कृत्वा विधानं तु कृतकृत्यो भवेन्नरः ।
मण्डपस्य यदा भित्तिः खण्डो देवकुलस्य च ॥
अकस्मान्निपतेद्यत्र कम्पते वाऽनिमित्ततः ।

* एतदर्थं मत्संगृहीतो वर्णबीकोशो द्रष्टव्यः ।

लिङ्गानि तत्र वक्ष्यामि तन्मे निगदतः शृणु ॥
राज्ञो भयं च दुर्भिक्षं वृष्टिहानिस्तथैव च ।
अग्निदाहश्च सम्पातो देशे च मरकं भवेत् ॥
दधिमधुघृताक्तानामश्वत्थसमिधस्ततः ।
जुहुयादष्टशतं प्राज्ञ इमा रुद्रेति मन्त्रतः ॥
धेनुं च दक्षिणां दद्यात् तिलपात्रं सकाञ्चनम् ।
अनेनैव कृतेनाशु ततः संपद्यते शुभम् ॥

फलपाकसमयमाह पराशरः ।

संवत्सरे पूर्णेऽर्चाविकारजम्—इति ।

वराहसंहितायां तु ।

अर्चानां जल्पितरुदितप्रकम्पितस्वेदो मासत्रयेण—इति

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते अद्भुतसागरे देवप्रतिमाद्भुतावर्त्तः ।

---

अथ शक्रध्वजाद्भुतावर्त्तः ।

---

तत्र शक्रध्वजयष्टिकरणार्थं वृक्षच्छेदवृक्षपातशब्दादिफलं वराहसंहितायाम् ।

छिन्द्यात् प्रभातसमये वृक्षमुदक् प्राङ्मुखोऽपि वा भूत्वा ।
परशोर्जर्जरशब्दो नेष्टः स्निग्धो घनश्च हितः ॥
नृपजयदमविध्वस्तं पतितमानाकुञ्चितं च पूर्वोदक् ।
अविलग्नं चान्यतरौ विपरीतमतस्त्यजेत् पतितम् ॥

शकटस्थशक्रध्वजानयने चक्रारभङ्गस्तत्फलं च ।

अरभङ्गे बलभेदो नेम्यां नाशो बलस्य विज्ञेयः ।
अन्नक्षयोऽक्षभङ्गे तथाऽणिभङ्गे तु वर्धकिनः ॥

यष्टिं प्रवेशन्तीं निपातयन्तो भयाय नागाद्याः ।
बालानां तलशब्दे संग्रामाः सत्त्वयुद्धे वा ॥

गर्गः ।

अविध्वस्तमनाधूतमद्रुताजिह्ममूर्ध्वगम् ।
इन्द्रध्वजसमुत्थानं क्षेमसौभिक्षकारकम् ॥

वराहसंहितायां तु ।

नातिद्रुतं न च विलम्बितमप्रकम्प-
मध्वस्तमाल्यपिटकादिविभूषणं च ।
उत्थानमिष्टमशुभं यदतोऽन्यथा स्यात्
तच्छान्तिभिर्नरपतेः शमयेत् पुरोधाः ॥

शान्तिभिरैन्द्रीभिः ।

विष्णुधर्मोत्तरे ।

इन्द्रध्वजशिरो भज्येत् पतेदिन्द्रध्वजो यदि ।
भज्यते शक्रयष्टिर्वा नृपतेर्नियतं वधः ॥
यन्त्रभङ्गे तथा ज्ञेयं रज्जुच्छेदे तथैव च ।
मातृकायास्तथा भङ्गे परचक्रभयं भवेत् ॥
इन्द्रध्वजोपकरणं यत्किञ्चिद्द्विजसत्तम ।
विनाशे तस्य विज्ञेया पीडा नगरवासिनाम् ॥

बार्हस्पत्ये ।

इन्द्रध्वजशिरो भिद्येत् पतेद्वा वासवः क्षितौ ।
भिद्यते शक्रयष्टिर्वा नियतं नृपतेर्वधः ॥
इन्द्रकीलो दृढो भिद्येद्द्वारपक्षसमापितः ।
स्थपत्यश्च कपाटानि स्तम्भा वा राजमृत्यवे ॥

औशनसे तु ।

देवराजध्वजानां तु भङ्गपातप्रकम्पनम् ।

चतुष्पाद्भीतये तत्र राज्ञां पापकरं ध्रुवम् ॥

पापं मरणम् ।

आथर्वणाद्भुते तु ।

शिरोभङ्गे तु राजानं मध्यभङ्गे तु मन्त्रिणः ।
अणिभङ्गे जनपदान् मूलभङ्गे तु नागरान् ॥

हन्तीति सम्बन्धः ।

इन्द्रारको यदा भिद्येद्राजकोशो विनश्यति ।
रज्जुच्छेदे परीपाते नृपतिस्तु विनश्यति ॥

वराहसंहितायां तु ।

राज्ञो विनाशं पतिता पताका करोत्यवृष्टिं पिटकस्य पातः ।
मध्याग्रमूलेषु च केतुभङ्गो निहन्ति मन्त्रिक्षितिपालपौरान् ॥
नश्यन्त्युदक्प्रभृति च क्रमशो द्विजाद्या
भङ्गे तु बन्धकिवधः कथितः कुमार्याः ।

आथर्वणाद्भुते शक्रध्वजपतने दिक्फलम् ।

यदि प्राच्यामग्निभयम् । यदि दक्षिणस्यां यमभयम् । यदि प्रतीच्यां वरुणभयम् । यद्युदीच्यां क्षुद्भयम् । यद्यन्तर्देशेषूभयतो भयं विन्द्यात् ।

वराहसंहितायाम् ।

इन्द्रभङ्गपतने नृपमृत्युः ।

तथा ।

रज्वा भङ्गे छेदने बालपीडा राज्ञो मातुः पीडनं मातृकायाः ।
यद्यत् कुर्युर्बालकाश्चारणा वा तत् तत् तादृग्भावि पापं शुभं वा ॥

गर्गस्तु ।

प्रहृष्टमनसः सर्वे क्रीडेयुर्मुदिता यदि ।
तदा जलेन गन्धैश्च विन्द्यात् सौभिक्षलक्षणम् ॥
अमेध्यै रक्तकैः केशैर्भस्मना कर्दमेन तत् ।

दुर्भिक्षं क्रोडने विन्द्याच्छत्रैश्चापि भयं भवेत् ॥
निर्घातोल्कामहीकम्पा दीप्ताश्च मृगपक्षिणः ।
उच्छ्रीयमाणाः शीघ्राश्च वायवश्च तदा भयम् ॥

वराहसंहितायां तु ।

हन्ति चाऽप्यथ पुरोहितमुल्कापार्थिवस्य महिषीमशनिश्च ।

तथा ।

धूमावृते शिखिभयं तमसा च मोहो
व्यालैश्च भग्नपतितैर्न भवन्त्यमात्याः ॥

आथर्वणाद्भुते ।

गृध्रश्चेत् तु तस्मिन् निपतति मृत्योर्भयं भवति ।

मृत्योरिति । नृपमृत्योर्देशमृत्योर्वा ।

तथा च विष्णुधर्मोत्तरे ।

निलीयते चेत् क्रव्यादः शक्रयष्टौ तथा द्विज ।
राजा वा म्रियते तत्र स वा देशो विनश्यन्ति ॥

देशशब्दोऽयं पुर इति मयूरचित्रवचनादवगम्यते तद्वचनमत्रैव शेषे लिखिष्यामः

वराहसंहितायां तु ।

क्रव्यादकौशिककपोतककाककङ्कैः
केतुस्थिते महदुशन्ति भयं नृपस्य ।
चाषेण चापि युवराजभयं वदन्ति
श्येनो विलोचनभयं निपतन् करोति ॥

तथा ।

तस्करान् मधु करोति निलीनम् ।

विष्णुधर्मोत्तरे ।

दिव्यान्तरिक्षभौमाः स्युरुत्पातास्तत्र वै यदा ।
तेषां तीव्रफलं ज्ञेयं फलमत्यन्तदारुणम् ॥
इन्द्रध्वजनिपाते तु प्रायश्चित्तमिदं स्मृतम् ।

इन्द्रयागं पुनः कुर्यात् सौवर्णेनेन्द्रकेतुना ॥
राष्ट्रं दत्वा तु गुरवे बन्धनानि प्रमोचयेत् ।
सप्ताहं पूजयित्वा तु ध्वजं दद्याद्द्विजातिषु ॥
शान्तिरैन्द्री भवेत् कार्या यष्टव्यश्च पुरन्दरः ।
महाभोज्यानि कार्याणि ब्राह्मणेभ्यो दिने दिने ॥

गावश्च देया द्विजपुङ्गवेभ्यो हिरण्यवासो रजतैः समेताः ।
एवं कृते शान्तिमुपैति पापं वृद्धिस्तथा स्यान्मनुजाधिपस्य ॥

वैजवापस्तु ।

उच्छ्रितस्य तु शक्रस्य ध्वजप्रपतने सति ।
कारयेद्वैष्णवीं शान्तिं नृपतिर्भूरिदक्षिणाम् ॥

नारदस्तु ।

इन्द्रे तूत्कम्पमाने तु यदा यष्टिर्विभिद्यते ।
राजविभ्रमदुर्भिक्षं ग्रामोत्सादश्च जायते ॥
सप्ताश्वान् रथसंयुक्तान् हेमरत्नविभूषितान् ।
विप्राय दक्षिणां दद्यात् ततः संपद्यते शुभम् ॥

मयूरचित्रे तु ।

शक्रस्योत्थानवेलायां यष्टिभङ्गे च मध्यतः ।
म्रियते नृपतिस्तत्र नगरोत्सादनं भवेत् ॥
उपोष्य जुहुयात् तत्र दूर्वाणामयुतं शुचिः ।
दधिमधुघृताक्तानां समिधां ब्राह्मणाय च ॥
रथं सप्ताश्वसंयुक्तं दद्याच्छत्रं सकाञ्चनम् ।
धेनूनां विंशतिः शान्तिर्दशमी दिव्यजाऽथ वा ॥

तत्रैव ।

शक्रध्वजे तु गृध्रस्य पतने पुरसंक्षयः ।

विद्रवं नृपतेर्विद्याच्छान्तिः कार्या तु षोडशी ॥

संवत्सरेणास्य फलपाक इति वराहसंहितायामुक्तम् ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे शक्रध्वजाद्भुतावर्त्तः ।

## अथ वृक्षलताफलपुष्पशस्यान्नव्यञ्जनाद्यद्भुतावर्त्तः ।

तत्र सुन्दरकाण्डे रामजयनिमित्तम् ।

"प्रवान्त्यभ्यधिकं गन्धा नितान्तं पुष्पिता द्रुमाः"* ।

वराहसंहितायाम् ।

शाखाभङ्गेऽकस्माद्वृक्षाणां निर्दिशेद्रणोद्योगम् ।
हसने राष्ट्रभ्रंशं रुदिते च व्याधिबाहुल्यम् ॥

पराशरश्च ।

वृक्षाणां रोदने व्याधिर्हसने देशविद्रवम् ।
शाखाप्रपतनेऽकस्मात् संग्रामे योधघातनम् ॥
स्थानात् स्थानान्तरगमे देशभङ्गभयं भवेत् ।

वृद्धगर्गसंहितामत्स्यपुराणविष्णुधर्मोत्तरेषु ।

रोदने व्याधिमाख्याति हसने देशविभ्रमम् ।
शाखाप्रपतने कुर्यात् संग्रामे योधघातनम् ॥
जल्पत्स्वपि च वृक्षेषु रोदत्सु च धनक्षयम् ।

वदेदिति सम्बन्धः ।

जनक्षयमिति क्वचित् पाठः ।

वराहसंहितायाम् ।

सर्पत्सु तरुषु जल्पत्सु चाऽपि जनसंक्षयो विनिर्दिष्टः ।

बार्हस्पत्ये तु ।

नर्दने देशनाशः स्याद्योधा नश्यन्त्यशाखया ।

---

* उक्तस्थले नोपलभ्यते ।

संभ्रमो देशनाशाय दारुशिल्पिक्षयाय च ॥

देशनाशो मरकः ।

वराहसंहितायाम् ।

पतितानामुत्थानं स्वयं भयं देशजनितं च ।

बार्हस्पत्ये ।

भेदश्च पतितोत्थाने.................... ।

शत्रुभिया धनपुत्रादिभिर्विश्लेषो भेदो मित्राणां परस्परशङ्कया स्नेहभङ्गो वा ।

तथा च मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

उत्थाने पतितानां तु भयं भेदकरं भवेत् ।

वृद्धगर्गस्तु ।

उत्थाने पतितानां तु वदेद्व्याधिकृतं भयम् ।

पराशरस्तु ।

पतितपादपानां स्वयमुत्थानं जनमारभयाय ।

बार्हस्पत्ये तु ।

...................रूढेष्वन्नक्षयो भवेत् ।

वृद्धगर्गस्तु ।

शुष्कपादपसमारोहणं दुर्भिक्षाय ।

मत्स्यपुराणविष्णुधर्मोत्तरयोश्च ।

शुष्केषु संप्ररोहस्तु वीर्यमन्यच्च जीर्जति ।

बार्हस्पत्यवृद्धगर्गसंहितयोः ।

अरोगा यदि शुष्यन्ति तदा दुर्भिक्षलक्षणम् ।

मत्स्यपुराणविष्णुधर्मोत्तरयोश्च ।

अरोगशोषणं ज्ञेयं ब्रह्मन् दुर्भिक्षलक्षणम् ।

वराहसंहितायां तु ।

शुष्कविरोहे वीर्यान्नसंक्षयः शोषणे च विरुजानाम् ।
राष्ट्रविभेदस्त्वनृतौ बालवधोऽतीव कुसुमिते बाले ॥

अनृताविष्यनेनापि कुसुमितं सम्बध्यते ।

तथा च बार्हस्पत्यवृद्धगर्गसंहितामत्स्यपुराणविष्णुधर्मोत्तरेषु ।

सुराष्ट्रभेदं कुरुते फलपुष्पमनार्त्तवम् ।

औशनसे तु ।

अनृतौ चेत् फलं पुष्पं यत्र वा म्रियते द्रुमः ।
विन्द्यादृद्वादशमे मासि राज्ञस्तत्र विपर्ययम् ॥

द्रुम इत्येकवचनं चैत्यद्रुमपरम् ।

यत औशनस एवोक्तम् ।

अकाले पुष्पवन्तश्च फलवन्तश्च पादपाः ।
दृश्यन्ते यस्य राष्ट्रे तु तस्य नाशो विभाव्यते ॥
वृक्षा बालाश्च तरुणा यत्र स्युः फलपुष्पदाः ।
अकाले चापि दृश्येरंस्तत्र विन्द्यान्महद्भयम्-इति

हरिवंशाग्निपुराणमत्स्यपुराणपद्मपुराणेषु च हिरण्यकशिपुवधनिमित्तम् ।

"अकालेषु द्रुमाः सर्वे पुष्पन्ति च फलन्ति च ।
लताश्च सफलाः सर्वाः प्राहुर्दैत्यविनाशनम्"* ॥

वृक्षाः प्राहुरिति सम्बन्धः । दैत्यनाशिका इति क्वचित् पाठः । क्वचित् तु नाशनमिति।

भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

"अनार्त्तवं फलं पुष्पं दर्शयन्ति वनद्रुमाः"† ।

अनृतौ फलपुष्पविहीनत्वाद्दोषावहं भवति ।

तथा चारण्यकाण्डे खरवधनिमित्तम् ।

"फलपुष्पविहीनाश्च तरवो न चकाशिरे"‡ ।

तात्कालिकसकलपुष्पत्यागपरं चैतत् ।

बार्हस्पत्यवृद्धगर्गसंहितामत्स्यपुराणविष्णुधर्मोत्तरेषु ।

बालानां मरणं कुर्यादबालानां फलपुष्पता ।

---

* हरिवंशे भविष्यपर्वणि ४६ अ, १७ श्लो, तत्र 'सर्वा याः प्राहुर्दैत्यनाशनम्' इति । मत्स्यपुराणे १६३ अ, ४४ श्लो, । तत्र ये चाहुर्दैत्यनाशनम्'-इति । पद्मपुराणे ५ सृष्टि-खण्डे ४२ अ, १३५-१३६ श्लो, । तत्र 'या आहुर्दैत्यनाशिकाः'-इति ।

† ३ अ, १ श्लो, । ‡ वाल्मीकीये उक्तकाण्डे २३ सर्गे 'तस्मिन् क्षणे बभूवुश्च विना पुष्पफलैर्द्रुमाः'-इति १४ श्लो, ।

पराशरस्तु ।

बालानां मरणं प्राहुर्बालानां फलपुष्पयोः ।
पादपेष्वन्यफलपुष्पप्रादुर्भावः परचक्रागमाय ।

बार्हस्पत्यवृद्धगर्गसंहितयोस्तु ।

एकवृक्षे तु नानात्वं संदृश्यं फलपुष्पयोः ।
व्यत्यासमयथार्थं वा परचक्रागमो भवेत् ॥

भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

"पद्मोत्पलानि वृक्षेषु जायन्ते कुमुदानि च"* ।

वराहसंहितायाम् ।

वृक्षात् क्षीरस्रावे सर्वद्रव्यक्षयो भवति ।
मद्ये वाहननाशः संग्रामः शोणिते मधुनि रोगः ॥
स्नेहे दुर्भिक्षभयं महद्भयं निःसृते सलिले ।

भयमनावृष्टिभयम् ।

तथा च वृद्धगर्गसंहितामत्स्यपुराणविष्णुधर्मोत्तरेषु ।

क्षयं सर्वत्र गोक्षीरे स्नेहे दुर्भिक्षलक्षणम् ।
वाहनापचयं मद्ये रक्ते संग्राममादिशेत् ॥
मधुस्रावे भवेद्व्याधिर्जलस्रावे च वर्षति ।

पराशरः ।

क्षीरे स्रवति गोपीडां स्नेहे दुर्भिक्षमादिशेत् ।
वाहनापचयं मद्ये शोणिते शस्त्रजं भयम् ॥
व्याधिं मधुनि तोये तु विन्द्याद्वर्षविनिग्रहम् ।

वराहसंहितायाम् ।

घृताढ्यपयसां स्रावे च्युते वृक्षात् तु तत्क्षयः ।
तैले नाशोऽथ मुख्यानां रक्ते शस्त्रकृतं भयम् ॥
मद्येन तु मिथोभेदो रुग्भयं मधुनः स्रवे ।

---

* ३ अ, १० श्लो, ।

यदा तु पूजितवृक्षजातान्यद्भुतानि भवन्ति तदा नृपपीडाकराणि भवन्ति ।
तथा वृक्षाद्भुतशेषे मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

एतत्पूजितवृक्षेषु सर्वं राज्ञो विपद्यते ।
पुष्पे फले वा विकृते राज्ञो मृत्युं तथाऽऽदिशेत् ॥

औशनसे तु ।

यत्र स्रवेच्चैत्यवृक्षः सहसा विविधान् रसान् ।
पृथक् पृथक् समस्तान् वा तस्य वक्ष्यामि लक्षणम् ॥
घृते मधुनि दुग्धे च स्नेहे चैव तथाऽम्भसि ।
क्षौद्रे दधिनि पूये वा व्याधयः स्युः सुदारुणाः ॥
सुरासवे मिथोभेदः शोणिते शस्त्रपातनम् ।

पराशरः ।

पूज्यपादपानां पतनमवनिपतिविनाशाय ।

हरिवंशे तु बाणपराजयनिमित्तम् ।

"अनेकशाखश्चैत्यश्च निपपात महीतले ।
अर्च्चितः सर्वकन्याभिर्दानवानां महात्मनाम्"* ॥

स्कन्दपुराणे हिरण्याक्षवधनिमित्तम् ।

पादपाश्च विना वातं पतन्त्युन्मूलिता भुवि ।

बार्हस्पत्ये ।

पूजितानां फले धूमो राज्ञो मृत्युं समादिशेत् ।

वृद्धगर्गस्तु ।

यदि वा पूजिताश्चैत्या धूमायन्ति दिवानिशम् ।
विकृतान्यर्त्तुपुष्पा वा राज्ञो मृत्युभयं भवेत् ॥

वराहसंहितायां तु ।

पूजितवृक्षेष्वनृतौ कुसुमफलं नृपभयाय निर्दिष्टम् ।
धूमस्तस्मिन् ज्वालाऽथ वा भवेन्नृपवधायैव ॥

---

* ११६ अ. ६७ श्लो. ।

अन्यत्र ।

चैत्यवृक्षाः प्रभज्यन्ते विस्वरं विनदन्ति वा ।
प्रहसन्ति प्रसर्पन्ति प्रगायन्ति नदन्ति च ॥
आगमः परचक्रस्य तेषु चोत्पद्यते परः ।

मत्स्यपद्मपुराणयोर्हिरण्यकशिपुवधनिमित्तम् ।

"वानस्पत्या न पूज्यन्ते पूजनार्हाः कथं चन ।
वायुवेगेन हन्यन्ते भज्यन्ते प्रणमन्ति च"* ॥

बार्हस्पत्ये ।

यदा तु पत्राणि महाद्रुमाणां प्रकाशदुष्टानि भवन्ति मूर्ध्नि ।
समीक्ष्य तानीह यथार्थदर्शी भयं सराष्ट्रस्य नृपस्य विन्द्यात् ॥

नीलपीतारुणैर्वस्त्रैरकस्मात् कृष्णपाण्डुरैः ।
चैत्यवृक्षाः परिवृता द्विजादिभ्यः सितादिभिः ॥
चित्रैः खगपशुव्यालव्याधिः शस्यपरिक्षयः ।
त्रिवर्णैर्व्याधयस्तीव्रा दशमासात् परं स्मृताः ॥

औशनसे तु ।

शुक्लेन वाससा यत्र चैत्यवृक्षः समावृतः ।
ब्राह्मणानां भयं तीव्रमाशु घोरं विनिर्दिशेत् ॥
रक्तवस्त्रावृतैश्चैत्यैः क्षत्रियाणां महद्भयम् ।
पीतवस्त्रैस्तु वैश्यानां शूद्राणां कृष्णवाससा ॥
नीलैः शस्योपघातः स्याच्चित्रैस्तु मृगपक्षिणाम् ।
विवर्णैर्व्याधयस्तीव्राः परं स्युर्दशमासतः ॥

एष्वद्भुतेषु लतादिष्वपि संभूतेष्वेतदेव फलं विभावितैकदेशन्यायेन बोद्धव्यम् ।
तथा च पराशरः ।

तरुगुल्मौषधिशस्यानां नातिपुष्पफलसम्भवः । सम्भवो वाऽ-

* मत्स्यपुराणे १६३ अ. ४१ श्लो. । पद्मपुराणे ५सृष्टिखण्डे ४२ अ. १४०-१४१ श्लो. ।

नृतौ जनमारभयाय ।

वृक्षाद्भुतशेषे बार्हस्पत्ये च ।

भेदश्च पतितोत्थाने रुदंष्वत्र क्षयो भवेत् ।
जल्पने धननाशः स्याद्गुल्मवल्लीलतासु च ॥
इति वृक्षविकारेषु लक्षणं परिकीर्त्तितम् ।
पाकं च दशमे मासि क्रोष्टुकं वचनं यथा ॥

औशनसे तु ।

पाकोऽस्य दशमे मासि शुक्रस्य वचनं यथा ।

वराहसंहितायाम् ।

वृक्षाणां वैकृत्ये दशभिर्मासैस्तु फलपाकः ।

अत्र शान्तिर्मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

अन्येषु चैव युक्तेषु वृक्षोत्पातेष्वतन्द्रितः ।
आच्छादयित्वा* तं वृक्षं गन्धमाल्यैर्विभूषयेत् ॥
वृक्षोपरि तथा छत्रं कुर्यात् पापप्रशान्तये ।
शिवमभ्यर्च्चयेद्देवं पशुं चास्मै निवेदयेत् ॥
मूलेभ्य इति षड्ढोमान् कृत्वा रुद्रं जपेत् ततः ।
मध्वाज्ययुक्तेन तु पायसेन संपूज्य विप्रांश्च भुवं च दद्यात् ॥
गीतेन नृत्येन तथाऽर्च्चयेत् तं देवं हरं पापविनाशहेतोः ।

वराहसंहितायां च ।

स्रग्गन्धधूपाम्बरपूजितस्य छत्रं निधायोपरि पादपस्य ।
कृत्वा शिवं रुद्रजपोऽत्र कार्यो रुद्रेभ्य इत्यत्र षडेव होमाः ॥
पायसेन मधुना च पूजयेद्ब्राह्मणान् घृतयुतेन भूपतिः ।
मेदिनी निगदिताऽत्र दक्षिणा वैकृते तरुकृते हितार्थिभिः ॥

---

* आर्षः प्रयोगः ।

बार्हस्पत्ये च ।

समाच्छाद्य ततं वृक्षं गन्धमाल्यैर्विभूषयेत् ।
भोजनं चात्र विप्राणां मधुसर्पिःसमन्वितम् ॥
छत्रं ध्वजं प्रदातव्यं पूर्णहोमस्तथैव च ।
मन्त्रैरौषधसंयुक्तैर्भूप्रदानमथापरम् ॥
बलिं चैवोपहारं च गीतनृत्यं तथैव च ।
गन्धमाल्यं च धूपं च दीपं जप्यं तथैव च ॥
भक्ष्यं भोज्यं च पेयं च रुद्रस्योपहरेन्निशि ।
रौद्री रौद्रेण मन्त्रेण वृक्षाद्भुतविनाशिनी ॥
गुरवे दक्षिणां दद्यान्नित्यं भूमिं च तत्त्वतः ।

वृद्धगर्गस्तु ।

आच्छादयित्वा* तं वृक्षं गन्धमाल्यैर्विभूषितम् ।
संस्थापयेच्चात्र शिवं पशुं चास्य निवेदयेत् ॥
मूलेभ्य इति षड्ढोमान् हुत्वा रुद्रं जपेत् ततः ।
मधुसर्पिषा तथा भोज्याः पायसेन द्विजातयः ॥
भूप्रदानं च कर्त्तव्यमेवं नश्यति किल्बिषम् ।
वृक्षस्योपरिच्छत्रं तु देयं पापप्रशान्तये ॥
गीतवादित्रनृत्यं तु रुद्रस्योपहरेन्निशि ।

मयूरचित्रे ।

अकस्माद्ग्राममध्ये तु शाखाभङ्गो महीरुहः ।
ग्रामः प्रलीयते तत्र षड्भिर्मासैर्न संशयः ॥
तस्य शान्तिर्द्वितीया स्यादान्तरिक्षप्रचोदिता ।

नारदस्तु ।

मध्याह्ने चार्धरात्रे च शाखाभङ्गो भवेद्यदि ।

---

* आर्षः प्रयोगः ।

ग्रामोत्सादो भवेत् तत्र षड्भिर्मासैर्न संशयः ॥
मण्डपभित्तिपतनात् प्रयुक्ता शान्तिरत्र तु ।

मयूरचित्रे तु ।

अकाले फलपुष्पादिदेशविद्रवकारणम् ।
वैपरीत्यं वनस्पतावृतूनां च विपर्ययः ॥
राजामात्यवधं प्राहुः परचक्रस्य चागमम् ।
आग्नेयी च द्वितीयाऽत्र याऽनग्निज्वलने श्रुता ॥

तत्रैव ।

रक्तसेको द्रुमे चैत्ये भयाय नृपतेर्भवेत् ।
शान्तिस्तु षोडशी तत्र कर्त्तव्या दिव्यचोदिता ॥

अनृतुफलपुष्पयोः शान्त्यन्तरमपि वृद्धगर्गादिभिर्विहितं तद्वचनमत्रैव फलाद्भुते लिखिष्यामः ।

अथ वृक्षादिविशेषाद्भुतानि ।

औशनसे तु ।

अश्वत्थे पुष्पिते क्षत्रा ब्राह्मणास्तु उदुम्बरे ।
प्लक्षे वैश्यास्तु पीडयन्ते न्यग्रोधे दस्यवस्तथा ॥

वृक्षोत्पातविहितसामान्यशान्तिरत्र कर्त्तव्या ।

गार्गीये ।

धवाश्वत्थकदम्बानां पुष्पितं यदि दृश्यते ।
तदा स्वामिविनाशः स्यान्नैव तत्र तु चान्यथा ॥

नारदः ।

वंशश्च पुष्पितो यत्र माणकश्च धवस्तथा ।
इक्षुश्च पुष्पितो यत्र शृङ्गवेरोऽथ वा यदि ॥
गृहं तत्र विनश्येत षड्भिर्मासैर्न संशयः ।
वंशनिर्मूलनं कुर्यान्माणकादींश्च यत्नतः ॥
तस्मिन् स्थाने तु कर्त्तव्यं सर्वथा शान्तिकं तथा ।

धेनुं च दक्षिणां दद्यात् ततः सम्पद्यते शुभम् ॥

मयूरचित्रे ।

वंशो वा शृङ्गवेरो वा फुल्लितश्चेत् ततो भवेत् ।
स्वामिपत्न्योर्वधो राज्ञः शस्यस्य च परिक्षयः ॥
पित्तज्वरसमुत्थाश्च रोगाः स्युर्देहिनामपि ।
आग्नेयी शान्तिरत्रैव याऽनग्निज्वलनोदिता ॥
इक्षुश्चैवार्द्रकं चापि फलितश्चेत् कथं चन ।
दुर्भिक्षं राजनाशश्च राजोपद्रव एव च ॥
पर्वताद्या विना पुष्पं पुष्पवन्तो विभान्ति च ।
औदुम्बरीणां समिधो जुहुयादयुतं ततः ॥
महाव्याहृतिभिर्विप्रं भोजयेद्गौश्च दक्षिणा ।
कदलीगर्भमूर्धन्याः प्ररोहन्ति गृहे यदि ॥
अरण्यं सम्भवेद्देशो गर्गस्य वचनं यथा ।
सहेमान्नं गृहं दद्याद्द्विजायौदुम्बरी समित् ॥
इमा रुद्रेति होतव्या सहस्रं चाष्टसंयुतम् ।
पक्षिणां गां ततो दद्याद्ब्राह्मणाय च भोजनम् ॥

अथ फलपुष्पशस्यान्नव्यञ्जनाद्भुतानि ।

वराहसंहितायाम् ।

फलकुसुमसंप्रवृद्धिं वनस्पतीनां विलोक्य विज्ञेयम् ।
सुलभत्वं द्रव्याणां निष्पत्तिश्चापि शस्यानाम् ॥
शालेन कलमशाली रक्ताशोकेन रक्तश्च ।
पाण्डूकः क्षीरिकया नीलाशोकेन सूकरकः ॥
न्यग्रोधेन च यवकस्तिन्दुकवृद्ध्या च षष्टिको भवति ।
अश्वत्थेन ज्ञेया निष्पत्तिः सर्वशस्यानाम् ॥

जम्बूभिस्तिलमाषा शिरीषवृद्ध्या तु कङ्गुनिष्पत्तिः ।
गोधूमाश्च मधूकैर्यववृद्धिः सप्तपर्णेन ॥
अतिमुक्तककुन्दाभ्यां कार्पासं सर्षपान् वदेदशनैः ।
वदरीभिश्च कुलत्थांश्चिरविल्वेनादिशेन्मुद्गा- ॥
अतसीवेतसपुष्पैः पलाशकुसुमैश्च कोद्रवा ज्ञेयाः ।
तिलकेन शङ्खमौक्तिकरजतान्यथ चेङ्गुदेन शणाः ॥
करिणश्च हस्तिकर्णैरादेश्या वाजिनोऽश्वकर्णेन ।
गावश्च पाटलाभिः कदलीभिरजाविकं भवति ॥
चम्पककुसुमैः कनकं विद्रुमसम्पच्च बन्धुजीवेन ।
कुरवकवृद्ध्या वज्रं वैदूर्यं नन्दिकावर्त्तैः ॥
विन्द्याच्च सिन्दुवारेण मौक्तिकं कारुकाः कुसुम्भेन ।
रक्तोत्पलेन राजा मन्त्री नीलोत्पलेनोक्तः ॥
श्रेष्ठी सुवर्णपुष्पैः पद्मैर्विप्राः पुरोहिताः कुमुदैः ।
सौगन्धिकेन नरपतिरर्केण हिरण्यपरिवृद्धिः ॥
आम्रैः क्षेमं भल्लातकैर्भयं पीलुभिस्तथाऽऽरोग्यम् ।
खदिरशमीभ्यां दुर्भिक्षमर्जुनैः शोभना वृष्टिः ॥
पिचुमन्दनागकुसुमैः सुभिक्षमथ मारुतः कपित्थेन ।
निचुलेनावृष्टिभयं व्याधिभयं भवति कुटजेन ॥
दूर्वाकुशकुसुमाभ्यामिक्षुर्वह्निश्च कोविदारेण ।
श्यामालताभिवृद्ध्या बन्धक्यो वृद्धिमायान्ति ॥

पराशरस्तु ।

अथ शस्यं पश्य नृपतिहिताहितं तरुकुसुमसम्पदोऽनुव्याख्यास्यामः। तत्राशोकाश्वत्थशालतिन्दुकक्षीरिकाशशाशिरीषचिरवि-

ल्वनीलाशोकेङ्गुदर्भदूर्वाकुसुमवदरोकुन्दजम्बूसिन्दुवारवेतसन्यग्रोधसप्तपर्णद्राक्षाभिमुक्तापारिजातमधूकविल्वोटजवासककिंशुकशिंशपानां शस्यकुसुमैश्च रक्तशालिसर्वधान्यकलमशालिषष्टिकयावकशर्षपमुद्गमसूरकशणेक्षुमूलकप्रियङ्गुकुलत्थकार्पासमाषयवकमुष्ठकसतिलकलायकगोधूमगौरकराजमाषकोद्रवशाकसम्पदं विन्द्यात्। तथा लोध्रनन्द्यावर्त्तकुरवकचम्पकबन्धुजीवसिन्दुवारार्ककरञ्जकुसुम्भखर्जूरपिप्पलैस्ताम्रवैडूर्यवज्रकनकप्रधानमौक्तिकहिरण्यविषपिप्पलीतगराणां सम्पदमभिनिर्दिशेत्। रक्तोत्पलकमलाशिताकुमुदशतपत्रकुमुदसौगन्धिकस्वर्णयूथिकामलकपटोलशम्याकवृद्ध्याऽतिवृद्धिः। नृपतिमन्त्रिद्विजर्त्विक्चमूपतिश्रेष्ठिचतुष्पादपक्षिगजानां तथा लोध्रनिचुलकुसुम्भनिम्बगजतुरगकर्णपाटलार्जुनशिंशपानां वृषिभयं शङ्कारुकसुभिक्षकरितुरगगोषुवृष्टीनां सम्पद्भवति चोपघातः पौर्णमासीषूल्कानिर्घातकम्पग्रहोपरागोपतप्तासु। तत्र माघे सुगन्धिमधुरलवणद्रव्याणाम्। फाल्गुने शङ्खचन्दनकृमिबन्धकीनाम्। चैत्रे कार्पासफलचित्रभाण्डानाम्। वैशाखे कुसुमफलतरुत्वङ्निर्यासादीनां पण्यानाम्। ज्येष्ठे सर्वशस्यानाम्। आषाढे क्षिप्तबीजानाम्। श्रावणे लाक्षालोध्रहरिद्रामाञ्जिष्ठानाम्। भाद्रपदे हयगजखरकरभचर्मशिल्पिनाम्। आश्वयुजेऽश्वोष्ट्रखरमाहिषहस्तिनाम्। कार्त्तिके कुसुमभाण्डानां ग्रैष्मिकाणां च शस्यानाम्। मार्गशीर्षे कनकमणिफलवस्त्रविषाणिनाम्। पौषे पुष्पेक्षुमणिभाण्डानाम्।

अपि च।

शमीखदिरपुन्नागपुष्पैर्दुर्भिक्षलक्षणम्।
निम्बार्जुनकदम्बानां संपदा शस्यसंपदम्॥

भयं भल्लातके क्षेममाम्रे वातं करञ्जकैः ।
मातुलिङ्गैरनावृष्टिं माधवीभिः सुरासवम् ॥
कोविदारैरग्निभयं पीलुभिश्चाप्यरोगताम् ।
मुक्तारजतशङ्खानां सम्पत् तिलकसम्पदा ॥
श्यामालता बन्धकीनामामयं कुटजैर्विदुः ।
मूलकान् शिंशपापुष्पैर्जम्बूभिश्च तिलान् वपेत् ॥
शणौर्णिकं कर्णिकारैर्हयान् भव्यैर्विनिर्दिशेत् ।
अच्छिद्रपत्राः सुस्निग्धाः फलपुष्पसमन्विताः ॥
निर्दिशन्ति शुभं वृक्षा विपरीता विगर्हिताः ।
पण्यविद्यासमुद्देशश्चोक्तः पुष्पादिलक्षणैः ॥

वृहद्यात्रायां वराहः ।

कुसुमात् कुसुमोत्पत्तौ परचक्रागमं वदेत् ।

औशनसे तु ।

पुष्पे पुष्पं भवेद्यत्र फले वा स्यात् तथा फलम् ।
पर्णे पर्णं विजानीयात् तत्र जानपदे भयम् ॥

हरिवंशे तु हिरण्यकशिपुवधनिमित्तम् ।

"फले फलान्यजायन्त पुष्पे पुष्पं तथैव च"* ।

आग्नेयपुराणेऽप्येवम् ।

पराशरः ।

शस्यनिचयेष्वकस्माद्वृद्धिक्षयौ तिलेष्वतैलं भयाय ।

भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

"सर्वशस्यपरिच्छिन्ना पृथिवी फलशालिनी ।
पञ्चशीर्षा यवाश्चापि शतशीर्षाश्च शालयः"† ॥

---

* ४६ अ, २६-२८ श्लो. । † ३ अ, ११ श्लो. । तत्र 'पृथिवी शस्यमालिनी' इति ।

पराशरः ।

यद्युत्पलकुमुदपुष्पसम्भवे यवव्रीहिष्वेककाण्डे द्वित्रिरन्तःशिरः-
प्रादुर्भावे तत्स्वामिनाशं विन्द्यात् ।

वराहसंहितायाम् ।

नालेऽब्जयवादीनामेकस्मिन् द्वित्रिसम्भवो मरणम् ।
कथयति तदधिपतीनां यमलं जातं च कुसुमफलम् ॥
अतिवृद्धिः शस्यानां नानाफलकुसुमसम्भवो वृक्षे ।
भवति हि यद्येकस्मिन् परचक्रस्यागमो नियमात् ॥
अर्धेन यदा तैलं भवति तिलानामतैलता वा स्यात् ।
अन्नस्य च वैरस्यं तदा च विन्द्याद्भयं सुमहत् ॥
विकृतकुसुमं फलं वा ग्रामादथ वा पुराद्बहिः कार्यम् ।
सौम्योऽत्र चरुः कार्यो निर्वाप्यो वा पशुः शान्त्यै ॥
शस्ये च दृष्ट्वा विकृतं प्रदेयं तत्क्षेत्रमेव प्रथमं द्विजेभ्यः ।
तत्क्षेत्रमध्ये चरुमत्र भौमं कृत्वा न दोषं समुपैति तज्जम् ॥

बार्हस्पत्यवृद्धगर्गसंहितयोस्तु ।

यमकं जायते पुष्पं फलं वा यमकं यदि ।
कुमुदोत्पलपद्मानि एकनाले बहूनि तु ॥
बीजं यत्र प्ररोहेत् तु फलमध्ये प्रमादतः ।
एतदप्यद्भुतं नाम दम्पत्योस्तु विनाशनम् ॥
बहुशीर्षा द्विशीर्षा वा तथा निष्प्रसवा अपि ।
यवा वा व्रीहयो वाऽपि स्वामिनो मरणाय ते ॥
अन्यर्त्तुफलपुष्पैर्वा न फलन्ति फलन्ति वा ।
पोदपौषधिगुल्माश्च जनमारभयं भवेत् ॥
अथ वाऽतिशयं धान्यं भद्रमक्षं विनश्यति ।

तिला वाऽप्यर्धतैलाः स्युरतिला वा भयाय च ॥
अन्यं वा धारयेत् पुष्पं फलं वा विकृतं द्रुमः ।
धान्यानां वैकृते क्षेत्रं समं शस्येन दापयेत् ॥
सौम्यं चरुं पुष्पफलं विकृतं पशुमेव तु ।
क्षेत्रमध्येऽथ होमं तु निर्वपेच्छस्यवैकृते ॥
भौमेनैवानुवाकेन निर्वपेच्छस्यवैकृतम् ।
सदक्षिणैर्द्विजैर्भुक्तैः कर्त्तारं वाऽर्चयेत् ततः ॥

मयूरचित्रे ।

धान्यात् सर्षपा जायन्ते गृहे क्षेत्रेऽथ चत्वरे ।
दुर्भिक्षं तत्र देशे स्याद्राजोपद्रव एव वा ॥
म्रियते च प्रभुस्तस्य वर्षस्याभ्यन्तरेण तु ।
सहस्रं समिधां तत्र हव्यमष्टोत्तरं स्मृतम् ॥
औदुम्बर्या इमा रुद्रा मन्त्रैर्गोदानभोजनैः ।

तत्रैव ।

उत्पतन्ति च धान्यानि गृहे चत्वर एव वा ।
म्रियते च सुतस्तस्य सप्तमासाद्विदूरतः ॥
तत्र दूर्वायुतं हव्यं मन्त्रोऽस्मिन् जातवेदसः ।
दक्षिणा गौर्ब्राह्मणानां भोजनं शुभकारकम् ॥

तत्रैव ।

अनग्नौ व्रीहयो यत्र स्फुटन्त्यन्येऽनुगा इव ।
मासाभ्यन्तरमात्रेण तत्र स्यान्नृपतेर्वधः ॥
आग्नेयी शान्तिरत्र स्यादनग्निज्वलनोदिता ।

तत्रैव ।

अङ्कुरान्न विना तोयं धान्यान्यग्निं विनैव तु ।
लाजाः स्युस्तत्र गोधान्यपुरोन्मादः प्रवर्त्तते ॥

दधिमधुघृताक्तानामुपोष्य जुहुयात् ततः ।
समिधामयुतं सप्तधान्यं दद्याद्द्विजातये ॥
आग्नेयी यदि वा शान्तिरत्र कार्या विपश्चिता ।
अनग्नावग्निज्वलने प्रोक्ता भूमौ द्वितीयका ॥

नारदः ।

यवो माषः कलायश्च तण्डुलश्च प्ररोहति ।
शुष्ककाष्ठप्ररोहे तु भक्ते रुधिरदर्शने ॥
माषतण्डुलधान्यानामयुतं जुहुयात् ततः ।
घृतेन मधुना चैव महाव्याहृतिमन्त्रवित् ॥
ब्राह्मणाय प्रदातव्यं सुवर्णं धान्यमेव च ।
वृषभश्चैव धेनुश्च ततः संपद्यते शुभम् ॥

गार्गीये ।

उत्स्विन्नाश्च मुद्गर्माषाः प्ररोहन्ति यदि क्व चित् ।
तदा तत्र विनाशः स्यात् कुलस्येति न संशयः ॥

मयूरचित्रे ।

प्ररोहन्ति गृहे येषामुत्स्विन्ना व्रीहिजातयः ।
तेषां मृत्युर्भवेद्वर्षात् समिधां दर्भकाशयोः ॥
अयुतं तत्र होतव्यं मन्त्रोऽस्मिन् जातवेदसः ।

नारदः ।

उत्स्विन्ने दग्धधान्ये च यदि तत्राङ्कुरो भवेत् ।
धान्यं वोत्पतते तत्र तण्डुलाश्चोत्पतन्ति च ॥
कलायश्च मसूरश्च मुद्गो माषस्तथैव च ।
शस्यानां हरणात् तत्र उत्सादश्च भविष्यति ॥
काष्ठे धान्यं यदा भूमौ दृश्यते मध्यतो यदा ।
म्रियते च प्रभुस्तत्र षड्भिर्मासैर्न संशयः ॥

जुहुयादयुतं तत्र धान्यस्यैव विशेषतः ।
दधिमधुघृताक्तस्य सर्वदा क्षेमकृन्नरः ॥
धान्यं विप्राय दातव्यं वस्त्रयुग्मं सकाञ्चनम् ।
धेनुं च दक्षिणां दद्यात् ततः संपद्यते शुभम् ॥

मयूरचित्रे ।

सिद्धान्ने व्यञ्जने चैव रुधिरं यत्र दृश्यते ।
राजामात्यविनाशः स्यान्मासमात्रान्न संशयः ॥
दशमी तत्र कर्त्तव्या शान्तिर्दिव्या प्रचोदिता ।
दध्नि संजायते तक्रं राज्ञो मरणकारकम् ॥
तैलं सर्पिर्जलं वाऽपि वृष्टिरत्यन्तमापतेत् ।
सिद्धान्ने व्यञ्जने चैव कृमिर्दुर्भिक्षकारकम् ॥
ऐन्द्री शान्तिस्ततः कार्या वर्धनीपतनोदिता ।

योधारिष्टप्रकरणे पराशरः ।

अथ येषां सिद्धमन्नस्य विरसदौर्गन्ध्यमत्यन्तमभीक्ष्णं प्रतिपद्यते अन्धःस्थाल्यादयो वा विपद्येरन् उत्पातोक्तविकाराणि वा लक्षेरन् तेषां वधाय स्यात् ।

भार्गवीये ।

मध्वाज्यदधिदुग्धेषु भक्ष्ये पाने विलेपने ।
यन्त्रवाहनशस्त्रेषु भवनेष्वायुधेषु च ॥
दर्पणे भक्तपात्रे च मणिमुक्ताफलेषु च ।
भूषणेषु तथाऽन्येषु शय्यायामासनेषु च ॥
काकोलूककपोतानां मृगस्य दर्शनं भवेत् ।
अन्येषां चाप्रशस्तानामागमो मृगपक्षिणाम् ॥
अश्वेतानां च पुष्पाणां सरीसृपमृगस्य च ।

वसालोहितमांसानामस्थिमज्जाशिरोरुहाम् ॥
अकस्माच्चैव संजाते दर्शने नखभस्मनाम् ।
रसान्यत्वे रसानां च दुर्गन्धे वाऽनिमित्तजे ॥
पद्मपुष्पाकृतिर्यत्र दृश्यते मधुसर्पिषि ।
कृशरे पायसे चैव क्षयस्तस्य धनायुषोः ॥
घृते वा मधुरश्मेर्वा यदा पद्माकृतिर्भवेत् ।
स्वस्तिको वाऽपि दृश्येत क्षीरौदनहविःषु च ॥
श्रोत्रियाय तु तद्दद्याद्गां चैवं शमयेन्नरः ।
यत्रत्यं चाद्भुतं पश्येत् तच्चापि प्रतिपादयेत् ॥
कुर्याच्च वारुणीं शान्तिं परमेण समाधिना ।

अक्षतरुधिरे उत्स्विन्नधान्यप्ररोहादिविहिता नारदीया शान्तिः कर्त्तव्या ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-ऽद्भुतसागरे वृक्षाद्यद्भुतावर्त्तः ।

---

## अथ गृहाद्यद्भुतावर्त्तः ।

बार्हस्पत्ये ।

राजवेश्मनि चैत्येषु प्रासादे तोरणे ध्वजे ।
औत्पातिकानि दृश्यन्ते राज्ञां तत्र भयं भवेत् ॥
प्रासादतोरणानां च द्वारप्राकारवेश्मनाम् ।
अकस्माद्दलिनां भङ्गो विज्ञेयो राजमृत्यवे ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोश्च ।

प्रासादतोरणाट्टालद्वारप्राकारवेश्मनाम् ।
अनिमित्तं तु पतनमट्टानां राजमृत्यवे ॥

औशनसे तु ।

प्रासादानां विमानानां पतने कम्पने तथा ।
विना निमित्तं नृपतेः पीडामाहुर्मनीषिणः ॥

तथा ।

प्रासादश्च विमानानि प्रज्वलन्ति च यत्र वै ।
दृढानि च विशीर्यन्ते यस्य स म्रियते नृपः ॥

गार्गीये तु ।

प्रासादमण्डपादीनामकस्मात् पतने सति ।
स्वामिनोऽथ विनाशः स्यात् तदभावे च भूपतेः ॥

पराशरः ।

दृढद्वारकपाटवंशस्थूणाभङ्गे स्वामिविनाशं विन्द्यात् ।

गार्गीये ।

अकस्मादथ वा कोष्ठः सुदृढोऽनिपतेद्यदि ।
स्वामिनो मरणं तत्र षण्मासाद्भवति ध्रुवम् ॥

वराहसंहितायाम् ।

उन्मादः स्वयमुद्घाटिते च पिहिते स्वयं कुलविनाशः ।

मत्स्यपुराणे ।

स्वयमुद्घाटिते द्वारे उन्मादो गृहवासिनाम् ।
स्वयं वा पिहिते विन्द्यात् कुलनाशं विचक्षणः ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

एतेष्वभ्यर्चयेच्छक्रं सपत्नीकं द्विजोत्तमम् ।
भोज्यानि चैव कार्याणि सुराणां बलयस्तथा ॥
गावश्च देया द्विजपुङ्गवेभ्यो भुवस्तथा काञ्चनमम्बरं च ।
होमश्च कार्योऽमरपूजनं च एवं कृते शान्तिमुपैति पापम् ॥

बार्हस्पत्ये तु ।

महाबलिं महाशान्तिं भोज्यानि सुबहूनि च ।
पूजयेच्च महेन्द्रं च महादेवमथापि वा ॥

ऐन्द्रस्थाने तु माहेन्द्रीं रौद्रीं रौद्रे नियोजयेत् ।
गवामष्टशतं दद्याद्विप्रेभ्यो मनुजाधिपः ॥
गुरवे दक्षिणां दद्यात् प्रजास्त्वेवं शुभं भवेत् ।

गार्गीये ।

गृहाट्टालकहर्म्यादौ वरटा निवसेद्यदि ।
पिकोऽथ निवसेद्वाऽपि तदा स्वामिवधो भवेत् ॥

विष्णुधर्मोत्तरे ।

गृहस्य च यदा चाषो व्याहरेत् पुरतः स्थितः ।
नृपावमाने वदति चाषः कलहभाजने ॥

वसन्तराजः ।

पर्यङ्कयानासनसंनिविष्टो गृहं प्रविष्टः कुरुते कपोतः ।
दुःखं त्रिभेदोऽपि विपाण्डुरः स्यादर्धेन चित्रो दिवसेन धूम्रः ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

उलूको वासते यत्र निपतेद्वा तथा गृहे ।
ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च ॥
प्राकारद्वारगेहेषु तोरणापणवीथिषु ।
केतुच्छत्रायुधाद्येषु क्रव्यादः संपतेद्यदि ॥
जायते चाथ वल्मीको मधुनाऽध्यासते यदि ।
स देशो वशमायाति राजाऽथ म्रियते तदा ॥
द्वारप्राकारगेहेषु प्रासादतोरणध्वजे ।
पतन्ति बहवो गृध्राः काकोलूकबकैः सह ॥
अथाप्येतेषु स्थानेषु मधु संजायते यदि ।
नलिन्यश्चात्र वल्मीके षण्मासैर्म्रियते नृपः ॥

वराहसंहितायां तु ।

गृहचैत्यतोरणेषु द्वारेषु च पक्षिसङ्घसम्पातः ।

हव्याश्च दधिमध्वक्ताः शमीनां समिधोऽयुतम् ।
भूरिमिन्द्रप्रतिमिति मन्त्रेण रूप्यदक्षिणा ॥

तत्रैव ।

दर्वी वा मुशलं चापि स्थूणा वा भिद्यते यदि ।
भिद्यते मूर्धवंशश्च गृहं देवकुलानि च ॥
मासाभ्यन्तरमात्रेण गच्छन्त्युत्सादनं तु तत् ।
दस्युभिश्च विलुप्यन्ते वर्णा गच्छन्ति संक्षयम् ॥

तत्रैव ।

मन्दिरे मूर्ध्नि वंशस्य भङ्गे स्वामिवधो भवेत् ।
गृहं त्यक्त्वा समिद्धोमः कार्यो वैकङ्कतस्य च ॥
अष्टोत्तरसहस्रं तु मन्त्रोऽस्मिन् जातवेदसः ।
भोजनं ब्राह्मणायाथ दातव्या गौश्च दक्षिणा ॥

वैजवापस्तु ।

पूर्ववंशस्य च स्फोटे स्थूणायाश्च प्ररोहणे ।
वधूवाहनयानस्य छेदने भेदनेऽपि वा ॥
सोमं संपूज्य विविधैः सौम्यां शान्तिं प्रयोजयेत् ।

मयूरचित्रे ।

यस्य गेहस्य कम्पेते स्तम्भवंशावकारणम् ।
दम्पत्योर्जायते मृत्युरत्र शान्तिरियं मता ॥
भव्यहोतव्यमयुतं दूर्वाणां समिधा ततः ।
काण्डात् काण्डेति मन्त्रेण हेम दद्यात् सभोजनम् ॥

नारदः ।

स्थूणा च कम्पते यत्र गृहं कटकटायते ।
गृहं तत्र प्रशीर्येत म्रियते गृहिणी तथा ॥
दधिमधुघृताक्तानां तिलानामयुतं ततः ।

होमयेत् तत्र धेनुं च दक्षिणात्वेन कल्पयेत्॥
वस्त्रयुग्मं प्रदातव्यं काञ्चनेन समन्वितम्।
ब्राह्मणान् भोजयेत् तत्र धान्यं दद्यात् तु दक्षिणाम्॥

मयूरचित्रे।

यदा कटकटायन्ते भवनान्यायुधानि च।
मासाभ्यन्तरमात्रेण तदा संग्राममादिशेत्॥
दिव्याऽत्रैकादशी शान्तिः करणीया विपश्चिता।

तत्रैव।

निर्भग्ने तोरणे द्वारे शान्तिरत्रैव दिव्यजा।

नारदः।

अकस्माद्गृहभूमिस्तु स्फुटते कुड्यकम्पनम्।
गृहं च कम्पते यत्र कोकारावं विमुञ्चति॥
गृहं वा पतते विप्र मूर्धवंशश्च भिद्यते।
यस्य गेहे शृगालादिः प्रविष्टोऽथ प्रसूयते॥
गृहं तस्य विनश्येत प्रभुर्वा म्रियते पुनः।
पत्नी वा म्रियते तस्य पुत्रस्य मरणं भवेत्॥
गृहोन्मादो भवेत् तस्य धनं चैव प्रलीयते।
दधिमधुघृताक्तानां पत्राणां श्रीफलस्य च॥
जुहुयादष्टसहस्राणि वैश्वानरेति मन्त्रवित्।
सुवर्णं वस्त्रयुग्मं च धेनुं चापि पयस्विनीम्॥
विप्राय दक्षिणां दद्यात् ततः संपद्यते शुभम्।

मयूरचित्रे तु।

अकस्माद्गृहमध्ये तु कोकारावं विमुञ्चति।
मासाभ्यन्तरमात्रेण गर्भस्योत्सादनं तु तत्॥
अत्रापि प्रथमा शान्तिर्यमलोत्पत्तिसम्भवा।

तत्रैव ।

मांसास्थीनि समादाय श्मशानोन्मत्तवायसाः ।
श्वा शृगालोऽथ वा मध्ये पुरस्य प्रविशेद्यदि ॥
विकिरन्ति गृहादौ च श्मशानं सा मही भवेत् ।
चौरेण हसते लोकः परचक्रस्य चागमः ॥
संग्रामश्च महाघोरो दुर्भिक्षं मरकं तथा ।
ऐन्द्री शान्तिस्ततः कार्या वर्धनीपतनोदिता ॥
अथ वाऽश्वत्थसमिधो हव्या मध्वन्वितास्तिलाः ।
वैवस्वतेन मन्त्रेण निवेद्यान्नाः सफाणिताः ॥
तिलघृतोपहारं च क्षीरशान्तिं च कारयेत् ।
ततः शाम्यति तत्पापं प्रजापतिमतं यथा ॥

नारदः ।

मृगाश्चैव वराहाश्च व्याघ्रशार्दूलजम्बुकाः ।
निपतन्ति गृहे यत्र गोरूपाणि तथैव च ॥
मधुवासो भवेद्यत्र द्वारे वा लोहकीलकम् ।
योजितं चापि गोयुग्मं प्रविशेद्भवनं यदि ॥
गोशालास्वश्वशालासु सुखशालासु* वै तथा ।
गृध्रादयः पतन्त्येते ततः शान्तिं समारभेत् ॥
धान्यानामयुतं तत्र जुहुयात् क्षेमकृन्नरः ।
धेनुं च दक्षिणां दद्यात् ततः संपद्यते शुभम् ॥

वसन्तराजः ।

रात्रौ गृहस्योपरि वासमानो दुःखाय शूकः सुतमृत्यवे स्यात् ।
गृहस्थनाशाय च सप्तरात्रं नाशाय राज्ञो द्विगुणान्यहानि ॥

* मुख्यशालासु इति क्वचित् पाठः ।

ऽयहं गृहद्वारि चरत्युलूके हरन्ति चौरा द्रविणान्यवश्यम् ।
तस्मिन् प्रदेशे निशि मांसयुक्तस्तद्दोषनाशाय बलिः प्रदेयः ॥

मयूरचित्रे तु ।

खगौघपतनं चैत्ये गृहद्वारेषु तोरणे ।
मधुवल्मीकपद्मानां जननाशः सदा भवेत् ॥
उलूकश्चैव गृध्रश्च कपोतः श्येन एव च ।
पतन्ति भवने यस्य तस्य प्राहुर्महद्भयम् ॥
पक्षान्मासान् तथा वर्षान्मृत्युः स्याद्गृहमेधिनः ।
पत्न्याः पुत्रस्य वा मृत्युर्द्रव्यं चैव प्रणश्यति ॥
ब्राह्मणाय गृहं दद्याद्दत्वा तन्मूल्यमेव च ।
गृह्णीयाद्यदि रोचेत शान्तिं चैतां प्रयोजयेत् ॥
चरुं यवमयं कृत्वा अश्वत्थसमिधोऽयुतम् ।
मनसः काममित्येत् हुत्वा जप्त्वा सुखी भवेत् ॥
यदि वा वर्धनी चेति तया शान्तिः प्रदिश्यते ।
ऐन्द्रीं शान्तिं ततः कुर्यात् त्रातारमिति मन्त्रतः ॥
औदुम्बरीश्च समिधो जुहुयाद्घृतसंयुताः ।
अष्टोत्तरसहस्राणि पञ्च तच्छान्तिकाम्यया ॥
चरुकर्माशनं चास्य विप्रान् दधिगुडौदनैः ।
तर्पयित्वा वरं हेम दद्याद्धेनुं च दक्षिणाम् ॥

नारदः ।

गृध्रः कङ्कः कपोतश्च उलूकः श्येन एव च ।
चिल्लश्च चर्मविलश्च भासः पाण्डुर एव च ॥
गृहे यस्य पतन्त्येते तस्य गेहं विपद्यते ।
पत्नी वा म्रियते तस्य पुत्रा वा मातरस्तथा ॥

धनं तस्य प्रणश्येत् तु षड्भिर्मासैर्न संशयः ।
चरुं च यमदैवत्यं शतमेकं जुहोति च ॥
तिलैर्धान्यैर्यवैश्चैव घृतेन मधुना सह ।
जुहुयात् पञ्च सहस्राणि शक्तिबीजेन मन्त्रवित् ॥
कलायैश्चैव माषैश्च मुद्गैश्च सिततण्डुलैः ।
घृतेन दधिना चैव कुण्डे तत्र निवेदनम् ॥
सम्पूर्णांस्तु शरावांश्च पत्रेणैव निवेदयेत् ।
परिधायाहतं वासो जप्त्वा मन्त्रं समाहितः ॥
अष्टोत्तरशतं जप्त्वा पत्रं वा श्रीफलस्य च ।
दशावर्त्तं तु तेनैव शिखायां धारयेत् ततः ॥
हविष्यभुग्भवेत् तावद्यावद्धोमः समाप्यते ।
एकरात्रोषितो भूत्वा गृहं विप्राय दापयेत् ॥
मूलेनैव ततः कृत्वा स्नापयेत् कलशेन तु ।
धेनुं च दक्षिणां दद्याद्वस्त्रयुग्मं सकाञ्चनम् ॥
भोज्यं तु कारयेत् तत्र ततः सम्पद्यते शुभम् ।

मयूरचित्रे ।

गृहीत्वा तु शवस्याङ्गमन्ये तु मृगपक्षिणः ।
प्रविशन्ति गृहे यस्य षड्भिर्मासैर्विनश्यति ॥
आज्यहोमो महादानं तत्र शान्त्यै प्रवक्ष्यते ।

नारदः ।

यस्य गेहे शृगालादिः प्रविष्टोऽथ प्रसूयते ।
गृहं तस्य विनश्येत प्रभुर्वा म्रियते पुनः ॥
पत्नी वा म्रियते तस्य पुत्रस्य मरणं भवेत् ।

गृहोत्सादो भवेत् तस्य धनं चैव प्रलीयते ॥
दधिमधुघृताक्तानां पत्राणां श्रीफलस्य च ।
जुहुयादष्टसहस्राणि वैश्वानरेति मन्त्रवित् ॥
सुवर्णं वस्त्रयुग्मं च धेनुं चापि पयस्विनीम् ।
विप्राय दक्षिणां दद्यात् ततः संपद्यते शुभम् ॥
फणिनोऽभिमुखं यत्र प्रविशन्ति गृहं यदा ।
निर्यान्ति च पुनस्तद्वत् तस्य लिङ्गानि मे शृणु ॥
प्रमुखं म्रियते तत्र धनहानिर्न संशयः ।
दधिमधुघृताक्तानां यः शम्याः समिधोऽयुतम् ॥
जुहुयात् तस्य गेहे तु शन्नो देवीति मन्त्रवित् ।
धेनुं च दक्षिणां दद्यात् सुवर्णं वस्त्रयुग्मकम् ॥
एवं निर्वर्त्तिते होमे शुभं भवति सर्वतः ।

मयूरचित्रे ।

गृहद्वारेण सर्पस्य प्रवेशे गृहिणीवधः ।
षड्भिर्मासैर्न संदेह उपोष्य जुहुयात् ततः ॥
दधिमधुघृताक्तानामयुतं जुहुयाच्छुचिः ।
वैकङ्कतस्य विप्राय ताम्रं दद्याच्च दक्षिणाम् ॥

तत्रैव ।

अकस्माद्दुग्धधाराश्च पतन्ति जलविन्दवः ।
घृतं तैलं वसा मांसं पतन्ति भवनेऽथ वा ॥
ज्वरः श्वासश्च दद्रुश्च कुष्टं काशो विचर्चिका ।
पाण्डुरोगः शिरोरोगो भवन्ति व्याधयोऽपरे ॥
शार्दूलपतने प्रोक्तामैन्द्रीं शान्तिं तु कारयेत् ।
रक्तधारां गृहे दृष्टा प्राङ्गणे चादिशोद्गणम् ॥

पराशरः ।

अन्तर्वेश्मन्यशरीरगीतवादित्रनिःस्वनैस्तत्स्वामिविनाशं विन्द्यात् ।

औशनसे ।

श्रूयते यस्य गेहेषु गीतवादित्रनिःस्वनाः ।
अकस्मान्म्रियते सम्यग्धनं चास्य विलुप्यते ॥
अनाहता दुन्दुभयो वादित्राणि नदन्ति च ।
छत्राणि च गृहे यस्य स तु शीघ्रं विनश्यति ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

विकृते वातजे वाऽपि वायव्या शान्तिरिष्यते ।

वायव्या शान्तिर्वाताद्भुतावर्त्ते* लिखिता ।

वराहसंहितायाम् ।

अङ्गारगैरिकाद्यैर्विकृतप्रेताभिवेशनं यस्मिन् ।
नायकविचित्रमथ वा नृपः क्षयं याति नचिरेण ॥
महाशान्त्योऽथ बलयो भोज्यानि सुमहान्ति च ।
कारयीत महेन्द्रं च माहेन्द्रीं च समर्चयेत् ॥

एतेषां फलपाकसमयं पाकावर्त्ते वक्ष्यामः ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे गृहाद्यद्भुतावर्त्तः ।

---

अथ वातजोपस्कराद्यद्भुतावर्त्तः ।

---

शान्तिपर्वणि ।

"गम्भीरशब्दाश्च महास्वनाश्च शङ्खा मृदङ्गाश्च नदन्ति यत्र ।
ययुत्सवश्चाप्रतीपा भवन्ति जयस्यैतद्भाविनो रूपमाहुः"† ॥

---

* द्रष्टव्याऽस्यैव ग्रन्थस्य ३५५ पृ. १७ पं. । † १०२ अ. ७-८ श्लो. ।

औशनसे ।

सङ्खवैणववीणाश्च भेरीमुरजगोमुखाः ।
वाद्यमानाः प्रदृश्यन्ते देशे यत्राप्यघट्टिताः ॥
संभृत्यैव ततो भावमन्यं जनपदं व्रजेत् ।
मृगवाद्यैः स देशो हि वायुश्चात्रोपजायते ॥

भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

"अनाहता दुन्दुभयः प्रणदन्ति विशां पते"* ।

पराशरस्तु ।

अनाहतानां वाद्यानां श्रवणमाहतानामश्रवणं महते भयाय ।

भयायेति शस्त्रभयाय ।

तथा च मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

वाद्यमाना न वाद्यन्ते वाद्यन्ते चाप्यनाहताः ।
आकाशे तूर्यनादाश्च गीतगन्धर्वनिःस्वनाः ॥
.........घोरं शस्त्रभयं भवेत् इति सम्बध्यते।

बार्हस्पत्ये तु ।

भेर्यो मृदङ्गाः पटहा वाद्यन्ते चाप्यनाहताः ।
आहताश्च न वाद्यन्ते अबलानि बलानि च ॥
परचक्रभयं तत्र राज्ञो वा व्यसनं भवेत् ।

व्यसनं मरणम् ।

वराहसंहितायाम् ।

अनभिहततूर्यनादः शब्दो वा ताडितेषु यदि न स्यात् ।
व्युत्पत्तौ वा तेषां परागमो नृपति मरणं वा ॥

व्युत्पत्तिर्विकृता उत्पत्तिः । सा चान्यजातीयशब्दोत्पत्तिर्दुःश्रुतिशब्दोत्पत्तिर्वा । अल्पमहत्प्रबलयोर्महदल्पशब्दोत्पत्तिर्वा ।

औशनसे तु ।

शङ्खवैणवतूर्याणां दुन्दुभीनां च निःस्वनाः ।

---

* २ अ, २७ श्लो. ।

देशे यत्र भृशं तत्र राज्ञा दण्डो निपात्यते ॥

पराशरः ।

लूकातूर्यध्वनिः पुरः सैन्यमाचष्टे विजने पुरे ।

पुरः सैन्यमाचष्ट इति । अग्रोपस्थितमिव शत्रुसैन्यं कथयति शीघ्रं परचक्रागमो भवतीत्यर्थः ।

एतदेवोक्तमौशनसे ।

नदन्त्यरण्ये तूर्याणि श्रूयन्ते व्योम्नि नित्यशः ।
न वसेत् तत्र राजा तु समागम्य दिशो दश ॥

तु-शब्दोऽप्यर्थे । दश दिशोऽपि समागम्य तत्र न वसेत् । एतदुक्तं भवति । कृताखिलदिग्विजयोऽपि एतदुत्पातवति देशे वसन् शत्रुभिर्जीयेत इति ।

भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

"अनभ्रे च महाघोरस्तनितः श्रूयते स्वनः"* ।

बार्हस्पत्ये तु ।

अरण्ये तूर्यनिर्घोषः श्रूयते यदि वाऽम्भसि ।
श्रूयन्ते च महाशब्दा गीतगान्धर्वनिःस्वनाः ॥
शरीरं व्यथते तत्र व्याधिर्वा सुमहान् भवेत् ।

पराशरः ।

चरस्थिरविपर्ययः परचक्रगमाय ।

मत्स्यपुराणविष्णुधर्मोत्तरयोस्तु ।

अचलाश्च चलन्त्येव न चलानि चलन्ति च ।
.........घोरं शस्त्रभयं भवेत् इति सम्बन्धः ।

बार्हस्पत्ये ।

शकटाद्यानि यानानि यदाऽयुक्तानि संययुः ।
भयं जनपदे विन्द्यात् तस्मिन्नुत्पातदर्शने ॥

पराशरः ।

आसनशकटयानभाण्डानामकस्मात् स्रुतिर्महते भयाय ।

---

* २ अ. ३३ श्लो. ।

औशनसे तु।

आसनं शयनं यानं यदाऽन्यत्र प्रसर्पति।
राज्ञो मरणमादेश्यं वर्षस्याभ्यन्तरे तदा॥
व्याहरन्ति प्रसर्पन्ति स्तम्भपाषाणपादपाः।
शयनासनयानानि नियतं नृपतेर्वधः॥

वैजवायः।

नृत्यगर्जननिर्घोषैस्तथा कटकटस्वनैः।
ईशायुग्यहलादीनां स्वामिनो मृत्युमादिशेत्॥
सम्यग्गोसुतपत्नीनां नाशं ग्रामस्य दस्युभिः।

पराशरः।

अश्वानामगमनं महते भायय।

बार्हस्पत्ये।

यान्ति यानान्ययुक्तानि विना वा हेतुभिस्तथा।
युक्तानि वा न गच्छन्ति नरेन्द्राणां महद्भयम्॥

मत्स्यपुराणविष्णुधर्मोत्तरयोस्तु।

यान्ति यानान्ययुक्तानि युक्तान्यपि न यान्ति चेत्।
चोद्यमानानि तत्र स्यान्महद्भयमुपस्थितम्॥

वराहसंहितायां च।

यानं वाहवियुक्तं यदि गच्छेन्न व्रजेच्च वाहयुतम्।
राष्ट्रभयं भवति तदा चक्राणां सादभङ्गे च॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः।

काष्ठादर्शकुठारादि विकारं कुरुते यदि।
गवां लाङ्गलसङ्गश्च स्त्री स्त्रियं च निपातयेत्॥
.........घोरं शस्त्रभयं भवेत् इति सम्बन्धः।

वराहसंहितायां तु।

गोलाङ्गलयोः सङ्गे दर्वीसूर्पाद्युपस्करविकारे।

क्रोष्टुकनादे च तथा शस्त्रभयं मुनिवचश्चेदम् ॥

क्रोष्टुकनादे द्रव्यविकृते च पराशरः ।

मुशलदर्वीसूर्पखनितृदृषदुपलानां क्रोष्ट्रादिदर्वीहाराभिसरणविकृतचेष्टारुतानि नृपतिभयाय ।

बार्हस्पत्ये ।

काष्ठं वा नृत्यते यत्र दर्वी वा वहते यदि ।
प्रपतेन्मुशलं चापि सूर्पं वा धूयते यदि ॥
............जायते तुमुलं भयम् इति शेषः ।

औशनसे ।

धान्यकोष्ठायुधागाराः पाषाणास्तूपपर्वताः ।
एते यत्र प्रसर्पन्ति विकृतानि भवन्ति च ॥
तस्मिन् देशे भयं क्षिप्रं बहुधा जायते महत् ।

एतेषु वातजोपस्कराद्यद्भुतेषु वाताद्यद्भुतलिखिता वायव्या शान्तिर्मत्स्यपुराणादिषु वहिता । मत्स्यपुराण एव त्वाष्ट्र्यपि शान्तिरुपस्कराद्भुते विहिता ।

तद्यथा ।

उपस्करणवैकृत्ये त्वाष्ट्री पार्थिवनन्दन—इति ।

मयूरचित्रे च ।

शयनं वाऽऽसनं चापि यस्य संचलति स्वयम् ।
तस्य पुंसो विनाशः स्याद्वर्षस्याभ्यन्तरेण तु ॥
अपामार्गसमिद्धोम इमा रुद्रेति मन्त्रतः ।

तत्रैव ।

नृत्यगर्जननिर्घोषैस्तथा कटकटस्वनैः ।
ईशायुग्यहलादीनां स्वामिनो मरणं भवेत् ॥
शस्यगोसुतपत्नीनां नाशो ग्रामस्य च स्मृतम् ।
दिव्या एकादशी शान्तिः करणीया विपश्चिता ॥

तत्रैव।

वृषी* वा भद्रपीठं वा शयनासनमेव च।
अस्पृष्टा यान्ति खे यत्र तत्र विद्यान्महद्भयम्॥
प्राजापत्या ततः शान्तिरभीक्ष्णकलहोदिता।
काष्ठानां चलने सद्यो भयं भवति देहिनाम्॥
म्रियते तु सुतस्तस्य गायत्र्या हव्यमेव तु।
श्रीफलस्य समिल्लक्षं दक्षिणा गौर्द्विजन्मने॥

तत्रैव।

शिलामुशलकांस्यानि निपतन्त्युत्पतन्ति च।
तिलदूर्वायुतं हव्यं दानं गोकांस्यमेव च॥

तत्रैव।

दर्वी वा मुशलं चापि यदि वा यान्त्युदूखलम्।
सार्थवाहजनश्रेष्ठिसचिवानां वधो भवेत्॥
प्राजापत्या ततः शान्तिरभीक्ष्णकलहोदिता।

वैजवापः।

तत्र चरोश्च दर्व्याश्च प्राकारे भेदनादिके।
उदूखलस्थो मुशलः प्रपतेदनिमित्ततः॥
एष्वद्भुतेषु कर्त्तव्या शान्तिश्चैन्द्री यथोदिता।

मयूरचित्रे।

अथ युक्तमयुक्तं वा यानं युग्यं प्रधावति।
भयं तत्र प्रद्रष्टव्यममात्यस्य वधस्तथा॥
श्रेष्ठिनां सार्थवाहानां वधोऽन्यस्य जनस्य च।
प्राजापत्या ततः शान्तिरभीक्ष्णकलहोदिता॥

तत्रैव।

चलने तोयभाण्डस्य प्रणाशात् स्थानवर्जनात्।

---

* आसनविशेषः। 'मुनीनामासनं वृषी' इति कोषप्रामाण्यात्।

विनश्यति सुतस्तस्य वर्षस्याभ्यन्तरेण तु ॥
अष्टोत्तरसहस्रं स्यादश्वत्थसमिधां ततः ।
हव्यं रौद्र्याऽथ गायत्र्या गौर्देया विप्रभोजनम् ॥

तत्रैव ।

शब्देन काञ्जिकस्यापि गृहिणीमरणं भवेत् ।
तद्भाण्डं चातिवारि स्याद्राज्ञो मरणमादिशेत् ॥
षड्भिर्मासैर्न संदेह उपोष्य जुहुयात् ततः ।
दधिमधुघृताक्तानामयुतं जुहुयाच्छुचिः ॥
वैकङ्कतस्य विप्राय दानं गौः कांस्यमेव च ।
दर्वीं वा मुशलं वाऽपि ताम्रं दद्याच्च दक्षिणाम् ॥

नारदः ।

काञ्जिकोद्गमने शब्दे प्रस्वेदे कम्पने तथा ।
गृहं तत्र प्रलीयेत गृहिणी म्रियते तथा ॥

कम्पादिविहिता नारदोक्ता शान्तिरत्र कर्त्तव्या ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे वातजोपस्करावद्भुतावर्त्तः ।

---

## अथ वस्त्रोपानहासनशयनाद्भुतावर्त्तः ।

तत्र पराशरः ।

अथ वाससां शुभाशुभैष्यत्फलसूचकमकस्मान्मषीकर्दमाञ्जनरुधिरगोमयैरुपरागस्तथाऽऽखुकीटगोजन्तुभिरवभक्षणं पाटनं च काष्ठकण्टकैर्दाहो वा वह्निना भवति तद्विज्ञानलक्षणमुपदेक्ष्यामः । तत्र प्राग्देशं प्रत्यक्पाशं नवधा वस्त्रं विभजेत् त्रिवंशम् । तदंशेषु तेषु क्रमात् फलनियमः । अर्थहानिरर्थागमो धनक्षयः स्त्रीविनाशः पत्र-

पीडा दुहितृमरणं स्वशरीरव्याधिर्व्यसनसमागमश्चेत्यष्टासु। नवमेऽध्वगमनमर्थागमः कर्मसिद्धिश्च। कुम्भादर्शकर्णशस्त्रपदत्रिकूटेन्द्ररुचकहलगृहतोरणच्छत्रचन्द्रमेखलास्रुगुपवेदीपद्मशङ्खश्रीवत्सस्वस्तिकमत्स्यनन्द्यावर्त्ताकारैस्तु क्रमाद्विपुलोऽर्थागमः कुक्षिरोगो नेत्रपीडा* विरोधोऽध्वगमनमनारोग्यव्यसनमैश्वर्यमभिषेकागमः। प्रार्थितोत्पत्तिर्वेश्मलाभो धनागमो राज्यलाभः स्त्रीसङ्गमः सोमपानं क्रतुदीक्षां यज्ञफलावाप्तिर्विपुलार्थसम्पत्तिर्वेदनं स्त्रीलाभः सौख्यं काञ्चनागमोऽर्थसम्पच्च। कवन्धश्येनकेदारसर्पसूचीपाशमुद्गरलाङ्गलपीठिकाकारैर्मरणम्। द्विरदरथतुरगसदृशैर्यानपुत्रधनैश्वर्यावाप्तिः। हयगजभुजगतुलाचापाकारैः संयुगः। दशासु मूले भार्याविनाशो मध्याग्रयोरर्थानाम्। पाशान्ते स्त्रीणाम्। सकलवस्त्रमध्यविनाशे मरणमुत्तरे पत्नीविनाशः। दक्षिणेऽपत्यापायः। तथा प्राग्भागे कुटुम्बविनाशाय। पूर्वदक्षिणे नारीणाम्। दक्षिणे सुहृदाम्। दक्षिणापरे पशूनाम्। पश्चिमे प्रेष्याणाम्। पश्चिमोत्तरे ज्ञातिवर्गस्य। पूर्वोत्तरे मध्यमे सर्वसम्पदाम्।

तथा।

नवे वस्त्रे यथोक्तं स्यात् फलं जीर्णे तु नेष्यते।
न रक्ते न पुनर्धौते न स्वयं दग्धपाटिते॥

अथाखुभक्षणोपानच्छेदनलक्षणं व्याख्यास्यामः। तत्र विंशतिश्छेदास्तेषां सप्त पूजिता विगर्हिताः शेषा भवन्ति। अङ्गुष्ठादिकनिष्ठान्तं वैश्वानरदेशे प्रभक्षितेऽन्नपानस्त्रीवस्त्रलाभं विन्द्यात्। प्रदेशिन्यां स्त्रीवस्त्रलाभम्। मध्यमायां वधबन्धम्। अनामिकायां मातृमरणं स्वसृप्रजननं वा। कनिष्ठिकायां पितृमरणं भ्रातुर्वा। नासातः स्त्रीधन-

* 'श्रोत्रपीडा' इति अ.।

लाभम्। अङ्गुष्ठाङ्गुलिमूले व्याधिभयम्। चूलायां वैमनस्यम्। ग्रीवायां शिरश्छेदनम्। मूलादर्थयानपर्याप्तिम्*। कर्णिकासकलभक्षणे सन्धिच्छेदनम्। असकलेकलहोऽसत्प्रवृत्तिं च। पार्ष्णिबन्धेऽध्वगमनम्। पार्ष्णिस्थाने वाहनागमम्। बाह्यपदपुटच्छेदने भक्षणे तु सुहृद्भ्रातृविनाशं विन्द्यात्। मध्यमस्य विपुलमर्थागमनम्। उत्तमस्य भूलाभम्। पदमध्ये शोकागमनम्। पार्श्वयोः पार्श्वरोगः। सकलोपानद्भक्षणे मरणविभ्रमप्रवासा भवन्ति।

अपि च।

न वासःफलसामग्र्यमर्धभक्तासु मध्यमम्।
शुभाशुभं विनिर्देश्यं जीर्णासु न भवेत् फलम्†॥

वराहसंहितायां तु।

वस्त्रस्य कोणेषु वसन्ति देवा नरास्तु पाशान्तदशान्तमध्ये।
शेषास्त्रयश्चात्र निशाचराणां तथैव शय्यासनपादुकासु॥
लिप्ते मषीगोमयकर्दमाद्यैश्छिन्ने प्रदग्धे स्फुटिते च विन्द्यात्।
पुष्टं नवेऽल्पाल्पतरं च भुक्ते पापं शुभं चाधिकमुत्तरीये॥
रुग्राक्षसांशेष्वथ वाऽपि मृत्युः पुंजन्म तेजश्च मनुष्यभागे।
भागेऽमराणामथ भोगवृद्धिः प्रान्तेषु सर्वत्र वदन्त्यनिष्टम्॥
कङ्कप्लवोलूककपोतकाकक्रव्यादगोमायुखरोष्ट्रसर्पैः।

---

* 'स्थानबन्धेऽन्नपानप्राप्तिम्' इति अ.।

† तथा च गर्गः।

वस्त्रमुत्तरलोमं तु प्रागदेशं नवधा भजेत्।
त्रिधा दशान्तपाशान्ते त्रिधा मध्यं पृथक् पृथक्॥
चतुर्षु कोणेषु सुराः पाशान्ते मध्यमे नराः।
दशान्ते च नरा भूयो मध्यभागे निशाचराः॥
राक्षसान् विनिवृत्त्यैवं शय्यादिष्वप्ययं विधिः।

इति अ. पुस्तकेऽधिक उपलभ्यते।

नवधा विभक्तवस्त्राकारः।

| | | |
|---|---|---|
| देवाः | राक्षसाः | देवाः |
| नराः | राक्षसाः | नराः |
| देवाः | राक्षसाः | देवाः |

छेदाकृतिर्दैवतभागगाऽपि पुंसां भयं मृत्युसमं करोति ॥
छत्रध्वजस्वस्तिकवर्धमानश्रीवृक्षकुम्भाम्बुजतोरणाद्याः ।
छेदाकृतिर्नैर्ऋतभागगाऽपि पुंसां विधत्ते नचिरेण लक्ष्मीम् ॥

वस्त्रोत्पातशान्तिमाह पराशरः ।

विवर्णितं च यद्वस्त्रं विनश्येच्छेदमङ्गलम् ।
विवर्णितं च यच्च स्यादनर्थाय विनिर्दिशेत् ॥
विलक्षणं त्यजेद्वस्त्रं समच्छेदमसङ्कुलम् ।
विवर्णितं च यद्वस्त्रं कृत्वा देवद्विजार्चनम् ॥
जपहोमोपवासैश्च तथा नाप्नोति किल्विषम् ।

विलक्षणमशोभनमिति ।

उपानदुत्पातशान्तिमाह पराशरः ।

गुरुवृद्धद्विजाचार्यस्नानमङ्गलसेवनात् ।
अंशुकानां च संयोगात् तस्माद्दोषात् प्रमुच्यते ॥

अत्रानुक्तविशेषशान्तिषु भूशय्यासनोत्पातेषु उपस्कारे वैकृतविहिता शान्तिः फलगुरुलाघवमवगम्य कर्त्तव्या ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे वस्त्रोपानहासनशयानाद्भुतावर्त्तः ।

---

## अथ शस्त्राद्भुतावर्त्तः ।

तत्र पराशरः ।

धूमज्वाला शस्त्राङ्गेऽवनिपतिविनाशाय । तथाऽऽयुधानां ज्वलनं धूमो व्याहारः कोशेभ्यश्च स्वयं निःसरणं परचक्रागमाय ।

वृद्धगर्गः ।

ज्वलन्ति यदि शस्त्राणि विनमन्ति नमन्ति च ।
कोशेभ्यो वा विनिर्यान्ति संग्रामस्तुमुलो भवेत् ॥

धावन्ते यदि शस्त्राणि निपतन्त्युत्पतन्ति च ।
तूणीरात् सहसा बाणा उद्गिरन्ति नदन्ति वा ॥
शुभा वाऽथापि मूर्छन्ति धनूंषि प्रलपन्ति च ।
येषु देशेषु तेषु स्यात् संग्रामस्तुमुलात्मकः ॥

वार्हस्पत्ये ।

ज्वलन्ति यदि शस्त्राणि विनमन्त्युन्नमन्ति च ।
कोशेभ्यश्च विनिर्यान्ति संग्रामस्तुमुलो भवेत् ॥
गर्जन्त्यायुधशस्त्राणि दहन्ति व्याहरन्ति वा ।
धनुर्वा सहसा बाणाः संग्रामस्तुमुलो भवेत् ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

आयुधेषु प्रदीप्तेषु धूमायत्सु तथैव च ।
निर्यात्सु कोशाच्च तथा संग्रामस्तुमुलो भवेत् ॥
शुभा वाऽथापि मूर्छन्ते धनूंषि विकृतानि च ।
विकारश्चायुधानां स्यात् तत्र संग्राममादिशेत् ॥

वराहसंहितायां ।

आयुधज्वलनसर्पणस्वनाः कोशनिर्गमनवेपनानि वा ।
वैकृतानि यदि वाऽऽयुधेऽपराण्याशु रौद्ररणसंकुलं वदेत् ॥

औशनसे ।

नाराचाः शक्तयः खड्गाः प्रदीप्यन्ते यदा मुहुः ।
तदा शस्त्रभयं तेषु देशेषु* च विनिर्दिशेत् ॥

मत्स्यपुराणे देवासुरयुद्धनिमित्तम् ।

"ततो जज्वलुरस्त्राणि............"† ।

भीष्मपर्वणि च कुरुपाण्डवयुद्धनिमित्तम् ।

"निश्चेरुरर्चिषश्चापात् खड्गाश्च ज्वलिता भृशम् ।

---

* त्रीणि वर्षाणि निर्दिशेदिति क्वचित् पाठः । † १५३ अ. १७५ श्लो. ।

व्यक्तं पश्यन्ति रूपाणि संग्रामं समुपस्थितम्''* ॥

आदिपर्वणि गरुडयुद्धनिमित्तम्।

"इन्द्रस्य वज्रं दयितं प्रजज्वाल भयात् ततः।
सधूमान्यपतन् सार्च्चिर्दिवोल्का नभसश्च्युताः ॥
तथा वसूनां रुद्राणामादित्यानां च सर्वशः।
साध्यानां मरुतां चैव ये चान्ये देवता गणाः।
स्वं स्वं प्रहरणं तेषां परस्परमुपाद्रवत्''† ॥

अरण्यकाण्डे रामवाक्यम्।

"सधूमा इषवश्चेमे महायुद्धाभिनन्दिनः।
रुक्मपृष्ठमिदं चापि चापं विस्फुरतीव मे ॥
संप्रहारं सुतुमुलो भवितेह न संशयः''‡।

द्रोणपर्वणि द्रोणवधनिमित्तम्।

"जज्वलुश्चैव शस्त्राणि भारद्वाजस्य मारिष''§।

तत्रैव द्रोणवाक्यम्।

"उत्पतन्त इमे बाणा धनुः प्रस्फुरतीव मे।
योगमस्त्राणि नेच्छन्ति क्रूरं मे वर्त्तते मनः''¶ ॥

क्रूरं संयोमस्त्राणि नेच्छन्तीति पराजयनिमित्ताभिधानम्।

स्कन्दपुराणे देवासुरयुद्धनिमित्तम्।

धूमायते इन्द्रवज्रम् ··············।

तथा।

नागा इव शराश्चास्य निर्वेमुर्ज्वलनं मुखे।

---

* ३ अ, २१ श्लो.। † ३२ अ, ३४२ श्लो.।

‡ वाल्मीकीये २४ सर्गे ५-६ श्लो.। तत्रायं पाठः।

सधूमाश्च शराः सर्वे मम युद्धाभिनन्दिताः।
रुक्मपृष्ठानि चापानि विचेष्टन्ते विचक्षण।
संप्रहारस्तु सुमहान् भविष्यति न संशयः।

§ ११२ अ, ११ श्लो.। ¶ नोक्तस्थले उपलभ्यते।

आयुधानि च दीप्यन्ते सधूमं शक्रनन्दन ॥

वराहसंहितायाम् ।

क्वणितं मरणायोक्तं पराजयाय प्रवर्त्तनं कोशात् ।
स्वयमद्भुते च युद्धं ज्वलिते विजयो भवति खड्गे ॥

विष्णुधर्मोत्तरे ।

मही घृतसगन्धा च यत्रोत्पलसुगन्धिनः ।
वर्णतश्चोत्पलाकाराः सवर्णा गगनस्य च ॥

खड्गाः शस्यन्त इति सम्बन्धः ।

वराहसंहितायाम् ।

करवीरोत्पलगजमदघृतकुङ्कुमकुन्दचम्पकसगन्धः ।
शुभदोऽनिष्टो गोमूत्रपङ्कमेदःसदृशगन्धः ॥
कूर्मवसास्रक्क्षारोपमश्च भयदुःखदो भवति गन्धः ।
वैडूर्यकनकविद्युत्प्रभो जयारोग्यवृद्धिकरः ॥

विष्णुधर्मोत्तरे ।

समाङ्गुलस्थाः शस्यन्ते व्रणाः खड्गेषु भार्गव ।
श्रीवृक्षपर्वताकारा लिङ्गपद्मनिभाश्च ये ॥
मङ्गलानां तथाऽन्येषां सदृशा ये च भार्गव ।
काकोलूकसवर्णाभा विषमाङ्गुलिसंस्थिताः ॥
वंशानुगाः प्रभूताश्च न शस्तास्ते कदा चन ।

वराहसंहितायाम् ।

कृकलासकाककङ्कक्रव्यादकबन्धवृश्चिकाकृतयः ।
खड्गे व्रणा न शस्ता वंशानुगताः प्रभूताश्च ॥
श्रीवृक्षवर्धमानातपत्रशिवलिङ्गकुण्डलाब्जानाम् ।
सदृशा व्रणाः प्रशस्ता ध्वजायुधस्वस्तिकानां च ॥
पुत्रमरणं धनाप्तिर्धनहानिः सम्पदश्च बन्धश्च ।

एकाद्यङ्गुलसंस्थैर्व्रणैः फलं निर्दिशेत् क्रमशः ॥
सुतलाभः कलहो हस्तिलब्धयः पुत्रमरणधनलाभौ ।
क्रमशो विनाशवनितासिचित्तदुःखानि षट्प्रभृति ॥
लब्धिर्हानिः स्त्रीलब्धयो वधो वृद्धिमरणपरितोषाः ।
ज्ञेयाश्चतुर्दशादिषु धनहानिश्चैकविंशे स्यात् ॥
चिन्तासिरनिर्वाणं धनागमो मृत्युसम्पदोऽस्वत्वम् ।
ऐश्वर्यमृत्युराज्यानि च क्रमात् त्रिंशदिति यावत् ॥

विष्णुधर्मोत्तरे चापलक्षणे ।

व्रणानां लक्षणं चास्य भविष्यति तु खड्गवत् ।

अत्र शस्त्रज्वालनेऽन्यद्भुतावर्त्तलिखिताऽऽग्नेयी* शान्तिः कर्त्तव्या इति ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे शस्त्राद्भुतावर्त्तः ।

---

## अथ पुराद्भुतावर्त्तः ।

तत्र पराशरः ।

साधुद्विजविहङ्गशूरपतिधार्मिकैः पुरपरित्यागः पुरविनाशाय ।

भागवते कृष्णोत्क्रान्तिनिमित्तम् ।

"इमे जनपदग्रामाः पुरोद्यानकराश्रमाः ।
भ्रष्टश्रियो निरानन्दाः किमिदं दर्शयन्ति नः"‡ ॥

मौशले वृष्णिक्षयनिमित्तम् ।

"प्रविद्धभूषिका रथ्या विभिन्नफणिकास्तथा"† ।

अत्रापि सावित्रीमन्त्रकलक्षहोमादिका सामान्या शान्तिः कर्त्तव्या ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे पुराद्भुतावर्त्तः ।

---

* द्रष्टव्याऽस्यैव ग्रन्थस्य ११ पृ. २ पं. । † नोक्तस्थलेऽस्योपलब्धिः । ‡ २ अ. ५ श्लो. ।

## अथ दिव्यस्त्रीपुरुषदर्शनाद्भुतावर्त्तः।

गार्गीये।

दिव्यस्त्रीपुरुषयोर्यत्र भूतगन्धर्वयोस्तथा।
दर्शनं च विमानस्य नगरे यदि लक्ष्यते॥
सामान्यपुरराष्ट्रस्य दुर्गकोषान्वितस्य च।
तदा महीपतेस्तत्र विनाशो भवति ध्रुवम्॥

नगरे राजधान्याम्। अन्यत्र तु देशानुगरम्।

तथा औशनसे।

दर्शनं देवयोनीनामसद्रूपस्य वा नृभिः।
तद्देशस्य विनाशाय तत् प्रादुर्यस्य दर्शनम्॥

पराशरः।

रक्षःपिशाचपतङ्गैः पथिरोधनं जनमारभयाय।

बार्हस्पत्ये।

रक्षःपतङ्गैः पन्थानो न वहन्ते भयान्विताः।
रक्षोरूपाणि दृश्यन्ते वनरथ्यागृहेष्वपि॥
संप्रदृष्टैः पिशाचैर्वा रक्षोभिर्वाऽपि तापते।
नगरं त्वचिरात् कालाज्जनमारेण बाध्यते॥

उत्तरकाण्डे माल्यवदादिवधनिमित्तम्।

"अट्टहासान् विमुञ्चन्तो घननादसमस्वनाः।
वाश्यन्तश्च शिवास्तत्र दारुणं घोरदर्शनाः॥
भूताः परिपतन्ति स्म दृश्यन्ते तु सहस्रशः"*।

मौशले वृष्णिक्षयनिमित्तम्।

"करालो विकटो मुण्डः परुषः कृष्णपिङ्गलः।

* वाल्मीकीये उत्तकाण्डे ६ सर्गे ५५-५६ श्लो.। तत्र 'संपतन्त्यथ भूतानि दृश्यन्ते च यथाक्रमम्' इति पाठः।

गृहाण्यवेक्ष्य वृष्णीनां नादृश्यत क्व चित् क्व चित्"* ॥

"अलङ्कारश्च च्छत्रं च ध्वजाश्च कवचानि च।

ह्रियमाणान्यदृश्यन्त रक्षोभिः शुभयानकैः"† ॥

"पुण्याहे वाच्यमाने च जपत्सु च महात्मसु।

अभिधावन्त श्रूयन्ते न चादृश्यन्त कश्चन"‡ ॥

स्कन्दपुराणे त्रिपुरदाहनिमित्तम्।

अपवादाश्च श्रूयन्ते पुण्याहोदीरणेषु च।

मत्स्यपुराणे।

"हिंसहिंसेति श्रूयन्ते गिरश्च भयदाः पुरे"§।

स्कन्दपुराणे प्रह्लादपराजयनिमित्तम्।

निर्घाताः साशनिरवा गिरो हाहा रवा दिशः।

उत्तरकाण्डे शैलूषसुतानां वधनिमित्तम्।

"प्रादुरासीन्महाञ्छब्दः खे शरीरं न दृश्येत।

सर्वेषु राजन् देशेषु तदद्भुतमिवाभवत्"¶ ॥

गदापर्वणि दुर्योधनवधनिमित्तम्।

"अशरीरा महानादाः श्रूयन्ते स्म तदा नृप"**।

तत्रैव पाण्डवशिविरक्षयनिमित्तम्।

"यक्षाणां राक्षसानां च पिशाचानां तथैव च।

अन्तरिक्षे महानादः श्रूयते भरतर्षभ"†† ॥

स्कन्दपुराणे देवानां परजयनिमित्तम्।

मुहूर्त्तेन चिरं कालं भवता चोभयं सुराः।

पराभवं च शत्रूणां भविष्यति महद्भयम् ॥

इत्येवं नभसो वाचो महागम्भीरनिःस्वनाः।

---

* २ अ. २ श्लो.। † ३ अ. ३ श्लो.। ‡ २ अ. १५ श्लो.।
§ १३४ अ. १२ श्लो.। ¶ उक्तस्थले नोपलभ्यते।
** ५६ अ. १४ श्लो.। †† ५८ अ. ५२-५३ श्लो.।

औशनसे ।

ब्राह्मणा यत्र वध्यन्ते ग्रामे राष्ट्रेऽथ वा पुरे ।
राजधानीषु वा यत्र तत्राभावस्य लक्षणम् ॥

मत्स्यपुराणे ।

एतेष्वभ्यर्च्चयेच्छक्रं सपत्नीकं द्विजोत्तम ।
भोज्यानि चैव कार्याणि ब्राह्मणानाशयेत् सदा ॥
गावश्च दद्याद्द्विजपुङ्गवेभ्यो भुवं तथा काञ्चनमन्दिराणि ।
होमश्च कार्यो द्विजपूजनं च एवं कृते शान्तिमुपैति पापम् ॥

बार्हस्पत्ये तु ।

अपूज्या यत्र पूज्यन्ते पूजनार्हा न कर्हिचित् ।
पूज्येऽवमाननिष्ठा च भयस्यैतन्निदर्शनम् ॥
अधीयन्ते नार्हयन्ति ब्राह्मणा बलिभिः सुरान् ।
भिन्नाः कौटिल्यबहुला नराः परुषवादिनः ॥
ब्राह्मणाश्च निरुत्साहाः सन्ध्यासत्यविवर्जिताः ।
शीलाचारविहीनाश्च मद्यमांसानृतप्रियाः ॥
नराः पाखण्डभूयिष्ठा विनाशे पर्युपस्थिते ।
महाबलिं महाशान्तिं भोज्यानि सुमहान्ति ॥
पूजयेत् तु महेन्द्रं च महादेवमथापि वा ।
ऐन्द्रस्थाने तु माहेन्द्रीं रौद्रे रौद्रीं प्रयोजयेत् ॥
गवामष्टशतं दद्याद्विप्रेभ्यो मनुजाधिपः ।
गुरवे दक्षिणां दद्यात् पूजास्वेवं शुभं भवेत् ॥

मयूरचित्रे ।

अग्रहारे पुरे ग्रामे कलिर्यत्र महान् भवेत् ।
निर्निमित्तं प्रकृत्या वा द्विजैर्वा नृपतेर्भयम् ॥

शान्तिस्तु षोडशी तत्र कर्त्तव्या दिव्यचोदिता ।
यद्वा पैतामही शान्तिर्यथेयमुपदिश्यते ॥
अष्टोत्तरशतं तत्र पालाशीर्जुहुयाच्छुचिः ।
समिधोऽथ वृषं धेनुं दद्यात् साज्यं च पायसम् ॥
अथ वा यमलोत्पत्तावुक्ता शान्तिरिहापि वा ।

मार्कण्डेयपुराणे ।

कलहाकलहं गेहे करोत्यविरतं नृणाम् ।
कुटुम्बनाशहेतुं च तत्प्रशान्तिं निबोध मे ॥

कलहा कलहानाम्नी ।

दूर्वाङ्कुरान् मधुघृतक्षीराक्तान् बलिकर्मणि ।
विक्षिपेज्जुहुयाच्चैवानलं मन्त्रं च कीर्त्तयेत् ॥
भूतानां मातृभिः सार्धं बालकानां तु शान्तये ।
विद्यानां तपसां चैव शाम्यमस्य यमस्य च ॥
कृषिवाणिज्यलाभे च शान्तिं कुर्वन्तु मे सदा ।
कूष्माण्डी यातुधानाश्च ये चान्ये गणसंज्ञिताः ॥
महादेवप्रसादेन नन्दीश्वरमतेन च ।
सर्व एते नृणां नित्यं तुष्टिमाशु व्रजन्तु वै ॥
तुष्टाः सर्वं निरस्यन्तु दुष्कृतं नुरनुष्ठितम् ।
महापातकजं सर्वं यच्चान्यद्विघ्नकारकम् ॥
तेषामेव प्रसादेन विघ्ना नश्यन्ति सर्वशः ।
विवादेषु विवाहेषु वृद्धिकर्मसु चैव हि ॥
पुण्यानुष्ठानयोगेषु गुरुदेवार्च्चनेषु च ।
जपयज्ञाभिधानेन यात्रासु च चतुर्दशम् ॥
शरीरारोग्यभोग्येष सखारम्भे धनेष च ।

वृद्धबालातुरेष्वेवं शान्तिं कुर्वन्तु मे सदा ॥

आग्नेये ।

अकस्माच्छत्रुकलहे आग्नेयीं शान्तिमाचरेत् ।
शमस्वेत्यादिभिर्मन्त्रैर्नवभिर्जुहुयाद्घृतम् ॥
चरुं हुत्वा स्वयं प्राश्य दद्यात् स्वयं च दक्षिणाम् ।
यत्र वा कलहस्तस्मात् तत्र शान्त्युदकं परम् ॥
सदाचारा द्विजा यत्र युध्यन्त्यायुधपाणयः ।
तत्र देशविनाशः स्यादैन्द्रीं शान्तिं समाचरेत् ॥
आयाहि त्वं प्रभृतिभिर्मन्त्रैरष्टाभिराहुतिम् ।
आज्यस्य जुहुयादष्टौ होम ऐन्द्रचरोस्ततः ॥
इन्द्रः पूज्यो बलिर्देयो गोदानं द्विजपूजनम् ।

मयूरचित्रे ।

स्त्रियाश्चैव मनुष्यस्य केशाकेशि भवेद्यदा ।
आभीक्ष्णकलहौ तौ च विवादो यत्र मन्त्रिणा ॥
चाण्डाला ब्राह्मणैः सार्धं विवदन्ते तु यत्र वै ।
भयं तत्र प्रदेष्टव्यममात्यस्य वधस्तथा ॥
श्रेष्ठीनां सार्थवाहानां वधोऽन्यस्य जनस्य च ।
प्राजापत्या ततः शान्तिः कर्त्तव्या पापनाशिनी ॥
अश्वत्थसमिधं हुत्वा घृताक्तां मधुसंस्कृताम् ।
सावित्र्याऽष्टसहस्रेणा प्राजापत्यैस्तु यत्नतः ॥
पायसान् भोजयेद्विप्रान् हुतान्ते भूरिदक्षिणाम् ।

तत्रैव ।

केशाकेशिफलं भूमौ पातयेच्च कलिं कुले ।
न शुभा याऽत्र सा शान्तिर्या गोधागृहवेशने ॥

तत्रैव।

नार्यौ द्वे केशसंलग्ने पततो गृहचत्वरे।
अर्थहानौ ततः शान्तिर्होमो भोजनदक्षिणा॥

गार्गीये।

उह्यमानः शवोऽकस्मात् क्षितावभिपतेद्यदा।
यत्कुलेऽसौ शवस्तेषां विनाशो भवति ध्रुवम्॥

नारदः।

शवस्तु नीयमानस्तु भूमौ निपतते यदि।
कुटुम्बमरणं तत्र धनधान्यपरिक्षयः॥
इमा रुद्रेति मन्त्रेण जुहुयात् सर्पिषा हुतिम्।
आहुती द्वे सहस्रे च होमश्च कथितो भवेत्॥
वृषभं दक्षिणां दद्यात् ततः संपद्यते शुभम्।

मयूरचित्रे।

मृतः श्मशानं नीतो यः प्रत्युज्जीवति मानवः।
स्वस्थो वा भवति क्षिप्रं पुनरायाति मन्दिरम्॥
स देशः क्षीयते क्षिप्रं परचक्रेण हन्यते।
यमदृष्ट्या ततः शान्तिः सक्षीराः समिधः शतम्॥
घृताक्ता जुहुयाद्विप्रो हुतान्ते भूरिदक्षिणाम्।
सावित्र्याऽष्टसहस्रेण क्षीरशान्तिं च कारयेत्॥
कपिला गौस्तिलं कांस्यं देयं यममतं यथा।

पराशरः।

मृतो वा व्याहरेद्गच्छेद्यत्र तत्र भयं वदेत्।

अत्र सावित्रीमन्त्रदशलक्षहोमादिका सामान्या शान्तिः कर्त्तव्या।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे मानुषाद्भुतावर्त्तः।

अथ पिटकाद्भुतावर्त्तः ।

तत्र पराशरः ।

अथ पिटकाः सितरक्तपीतकृष्णवर्णा द्विजादीनां वर्णानां क्रमात् स्थानवर्णविशेषेण सकलफलदा भवन्ति । तत्र सुव्यक्तः स्निग्धः सुवर्णोऽभिषेकागमं कुर्यात् । शिरसि धनागमम् । केशान्ते सौभाग्यम् । ललाटे धनसंचयम् । भ्रुवोर्दौर्भाग्यम् । संगरे दौःशिल्यमिष्टसंगमं च । नेत्रपुटयोः शोकम् । नेत्रयोरिष्टदर्शनम् । शङ्खभेदे प्रव्रज्या । चिन्तामश्रुपाते । गण्डयोः सुतनाशम् । नासावंशे वस्त्रलाभम् । अन्येषूत्पन्नं सुरभिसंगमं च । चिबुकाधरोष्ठाधरेष्वर्थमभिप्रेतम् । हन्वोर्धनागमम् । गले पानमाभरणं च । शिरःसन्धौ ग्रीवायां चोपघातं शस्त्रेण । कर्णयोस्तद्भूषणमानन्दश्रवणम् । पार्श्वयोः शोकम् । उरसीष्टसंगमम । स्कन्धयोर्भैक्षचर्याम् । कक्षयोरर्थक्षयम् । हृत्स्तनयोः पुत्रलाभम् । पृष्ठे दुःखशमनम् । अरिविनाशो बाह्वोः । प्रबाह्वोराभरणम् । मणिबन्धे नियमः । पाणौ धनागम् । भाग्यं चाङ्गुलीषु । शोकमुदरे । अन्नपानावाप्तिर्नाभौ । चौरैरर्थहरणमधरे । धनधान्यावाप्तिर्वस्तौ । सौभाग्यमर्थलाभं वृषणयोः । पुत्रजन्म स्त्रीलाभं मेहने । गुदे सौभाग्यम् । मानाङ्गनालाभमूर्वोः । जानुनोररिभिरुपघातम् । शस्त्रेण जङ्घायाम् । गुल्फयोरध्वपरिक्लेशागमनम् । स्फिजोरपहरणम् । पार्ष्णितलयोरगम्यागमनम् । अङ्गुलीष्वङ्गुष्ठे ज्ञातिपूजा—इति ।

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

अङ्गाद्दक्षिणभागे तु शस्त्रेषु स्फुरणं भवेत् ।
अप्रशस्तं तथा वामे पृष्ठस्य हृदयस्य च ॥

स्वल्पयात्रायाम् ।

दक्षिणपार्श्वस्पन्दनमिष्टं हृदयं विहाय पृष्ठे च ।

बृहद्यात्रायां वराहः ।

दक्षिणपार्श्वस्पन्दनमभिधास्ये तत्फलं क्षयो वामे ।
पृथ्वीलाभः शिरसि स्थानविवृद्धिर्ललाटे स्यात् ॥
भ्रूनासिकान्तरे प्रियसमागमो भृत्युलब्धिरक्षिनसोः ।
दृक्पर्यन्तेऽर्थाप्तिः पूर्वं ज्ञेयाऽत्र पाकं वा ॥
योषित् सम्यग्गण्डे दृक्कर्माधश्च सङ्गरे विजयः ।
श्रवणे रहितश्रवणं नासायां प्रीतिसौमुख्यम् ॥
अधरोष्ठयोः प्रियसमागश्च वेद्यो गले च भोगाप्तिः ।
अंसे भोगविवृद्धिर्बाहाविष्टेन संयोगः ॥
हस्तेऽर्थाप्तिः पृष्ठे पराजयो वक्षसि स्मृतो विजयः ।
प्रीत्युप्तिः पार्श्वे स्तने त्वपूर्वा विजयलब्धिः ॥
कट्यां वरप्रमोदौ स्थानभ्रंशः प्रकीर्त्तितो नाभौ ।
अन्त्रे कोषविवृद्धिः क्लेशो हृदयेऽर्थपर्यन्तः ॥
वाहनलाभः स्फिक्पायुवेपने योषिदागमनम् ।
शिश्ने तनयोत्पत्तिर्वस्तावन्तःपुराभ्युदयः ॥
पृष्ठत उर्वोर्दोषः पुरतश्चलनेन सार्वहितलब्धिः ।
प्रचलति च जानुसन्धावरिसन्धानं वलवदुक्तम् ॥
देशैकदेशनाशो जङ्घायां स्थानलब्धिरङ्घ्रिपरम् ।
अध्वगमनं सलाभं चरणतलस्पन्दमाने तु ॥

वसन्तराजः ।

स्याद्भूमिलाभः स्फुरितेन मूर्ध्नि स्थानप्रवृद्धिश्च ललाटदेशे ।
भ्रूघ्राणमध्ये प्रियसङ्गमाय नासाक्षिमध्ये च सहायलाभः ॥

दृगन्तमध्ये स्फुरणेऽर्थसम्पदुत्कण्ठना स्यात् स्फुरिते दृगादौ ।
जयो दृशोऽधः स्फुरणे रणे स्यात् प्रियश्रुतिः स्यात् स्फुरिते च कर्णे॥
योषित्समृद्धिः स्फुरिते च गण्डे घ्राणेन सौगन्ध्यमुदौ भवेताम् ।
भोज्येष्टसङ्गावधरोष्ठयोश्च स्कन्धे गले भोगविवृद्धिलाभौ ॥
स्पन्दे भुजस्य प्रियसङ्गमाय स्पन्दः करस्य द्रविणाप्तिहेतुः ।
स्पन्दस्तु पृष्ठस्य पराजयाय स्पन्दो जयायोरसि मानवानाम् ॥
भवेच्च पार्श्वस्फुरणे प्रमोदः स्तनप्रदेशे विषयस्य लाभः ।
कट्यां भवेतां तु बलप्रमोदौ स्थानस्य हानिः स्फुरितेन नाशः ॥
वृद्धिस्तथाऽन्त्रस्फुरणे धनस्य दुःखं धनान्तं हृदयस्य चान्तः ।
स्फिक्पार्श्वकम्पे वरवाहनाप्तिर्वराङ्गकम्पे वरयोषिदाप्तिः ॥
गुह्यप्रकम्पे तनयस्य जन्म वस्तिप्रकम्पे युवतिप्रवृद्धिः ।
दोषं प्रजल्पन्ति तथोरुपृष्ठे उरोः पुरः स्यात् सुसहायलाभः ॥
स्याज्जानुसन्धिस्फुरिते च सन्धिर्जङ्घाप्रकम्पेऽपि च लाभनाशः ।
स्थानाप्तिरूर्ध्वं चरणप्रकम्पे यात्रा सलाभाऽपि तलप्रकम्पे ॥

विष्णुधर्मोत्तरे ।

दक्षिणेऽतिप्रशस्तेऽङ्गे प्रशस्तः स्याद्विशेषतः ।
अप्रशस्ते तथा वामे अप्रशस्तं विशेषतः ॥

पराशरः ।

उत्पातगण्डपिटका दक्षिणतो वामतस्त्वनभिघाताः ।
धन्या भवन्ति पुंसां तद्विपरीताश्च नारीणाम् ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

लाञ्छनं पिटकं चैव ज्ञेयं स्फुरणवत् तथा ।
विपर्ययेणाभिघातं सर्वं स्त्रीणां विपर्ययम् ॥

वसन्तराजः ।

मशकं तिलकं पिटकं वाऽपि व्रणमथ चिह्नं किमपि कदाऽपि ।

स्फुरितं यदाऽधितिष्ठति यावत् स्यात् पूर्वोक्तां फलमपि तावत्॥

बृहद्यात्रायां वराहः ।

व्रणपिटकतिलकलाञ्छनमशादयस्त्वेव निर्दिष्टाः ।
कण्डूयनं नरपतेर्दक्षिणपाणौ जयायेति ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

अतोऽन्यथा सिद्धिरजल्पता तत्फलस्य शस्तस्य तु निन्दितस्य ।
अनिष्टचिह्नोपगमे द्विजानां कार्यं सुवर्णेन तु तर्पणं स्यात् ॥

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे पिटकाद्भुतावर्त्तः ।

## अथ स्वप्नाद्भुतावर्त्तः ।

तत्र पराशरः ।

अभियातव्यदिगीशेन्द्रयमवरुणसोमेभ्यः पृथिव्यै वायवे सूर्याय ग्रहेभ्यश्च यथाकल्पं यथामन्त्रं यथोपहारमुपकृत्य शुचौ देशे कुशसंस्तृतायां भूमौ शय्यायां शीर्षकश्रियै पदाभ्यां भद्रकाल्यै बलिमुपहृत्योभयतः सर्वरत्नबीजौषधिगर्भान् नवानुदकुम्भान् कल्पयित्वा कृतस्वस्त्ययनः सावधानः शुचिः सूक्ष्मक्षौमाहतवसनः प्राङ्मुखो रुद्रेति हृदि रुद्रं समाधायातिरुद्रं जपेत् स्वप्नदर्शनार्थी ।

बृहद्यात्रायां वराहः ।

दूकूलमुक्तामणिभृन्नरेन्द्रः समं त्रिदैवज्ञपुरोहितो यः ।
स्वदेवतागारमनुप्रविश्य निवेशयेत् तत्र दिगीश्वरार्चाम् ॥
अभ्यर्च्य मन्त्रैस्तु पुरोहितस्तामधश्च तस्यां भुवि संस्तृतायाम् ।
दर्भैस्तु कृत्वा स्तरमक्षतैस्तु किरेत् समन्तात् सितशर्षपैश्च ॥
ब्राह्मीं सदूर्वामथ नागपुष्पं कृत्वोपधानं शिरसि क्षितीशः ।
पूर्णान् घटान् पुष्पफलापिधानानाशासु कुर्याच्चतुरः क्रमेण ॥

यज्जाग्रतो दूरमुदेति दूरमावर्त्त्य मन्त्रान् प्रयतस्त्रिरेतान् ।
लब्ध्वैकभुग्दक्षिणपार्श्वशायी स्वप्नं परीक्षेत यथोपदेशम् ॥

नमः शम्भो त्रिनेत्राय रुद्राय वरदाय च ।
वामनाय विरूपाय स्वप्नाधिपतये नमः ॥
भगवन् देव देवेश शूलभृद्वृषवाहन ।
इष्टानिष्टे समाचक्ष्व स्वप्ने सुप्तस्य शाश्वतम् ॥
एकवस्त्रः कुशास्तीर्णे सुप्तः प्रयतमानसः ।
निशान्ते पश्यति स्वप्नं शुभं वा यदि वाऽशुभम् ॥

मत्स्याचार्यः ।

आयुस्तृतीयभागे शेषे गतिजः प्रकीर्त्तितः स्वप्नः ।
पूर्वे काले त्वागामिकोद्भवास्त्वेव निर्देश्याः ॥

अनूक आद्ये स्मृत आयुषोऽंशे शेषे त्रिभागे गतिजः प्रदिष्टः ।
गतैष्यजात्यन्तरसत्त्वसङ्गः स्वप्ने ह्यनूके गतिजे च नित्यम् ॥
धातुप्रकोपग्रहपाकचिन्ता दुष्टाऽभिचारोद्भवगुह्यकोत्था ।
धातोः प्रकोपादनिलात्मकस्य तच्चाद्रितुङ्गस्थललङ्घनानि ॥
पित्तेऽधिके काञ्चनरक्तमाल्यदिवाकराग्निज्वलनानि पश्येत् ।
श्लेष्माधिकश्चन्द्रभशुक्लपुष्पसरित्सरोऽम्भोनिधिलङ्घनानि ॥
जघन्यमध्यप्रथमे निशांशे प्रावृट्शरन्माधवसंज्ञिते च ।
काले मरुत्पित्तकफप्रकोपाः साधारणः स्यात् खलु सन्निपातः ॥
दशासु चोक्तं ग्रहपाकजातं चिन्तावदृष्टं च यथा तथैव ।
बीभत्ससत्त्वाभिभवोपचारे विश्वोद्भवो गुह्यकजः प्रदिष्टः ॥
अनूकचिन्तागतिदोषदृष्टान्यभीक्ष्णकर्माणि च निष्फलानि ।
अदृष्टदीर्घाः कथिताश्च तद्वदनित्यपाकाः कथिताविशेषाः ॥

पराशरः ।

तस्य त्रिविधं दर्शनमपार्थकं यथार्थमन्यार्थं च । मनो हि निद्रानिहितंतत्त्वविज्ञानं कदाचिदतिहर्षशोकक्रोधचिन्ताभयमदप्रमोदेर्ष्याकलुषितमतिदृष्टश्रुतार्थभूतार्थभावितमाविशुद्धधातुदोषप्रकोपप्रतापप्रतप्तेन्द्रियमिवोद्भवान्तमवशमभिक्षिप्तमतिबहुशोऽतिव्याकुलं दिवावृत्तं वा स्वप्नगतमनुभवति तदनियतमपार्थकं चोपदिशन्ति।

कायवाङ्मनोविशुद्धानां चातिसत्त्वानां देवताः प्रत्यक्षवदभिदर्शयन्ति तद्यथार्थमित्याचक्षते । न चानिमित्तभाविनो भावाः । कालो हि भूतार्थनिमित्तमेष्यफलबोधकं स्वप्नाख्यमभिदधाति । तदन्यथा दृष्टमन्यथानियतफलमिति भवति चात्र मनोविकारजस्वप्नमभिवाञ्छन्त्यपार्थकम् । यथार्थदर्शनार्थत्वाद्यथार्थं देवताश्रयं वा ।

यो ह्यन्यदर्शनादन्यफल आत्मनिमित्तजस्तमन्यार्थमनेकार्थं प्रवक्ष्याम्यखिलार्थतोऽन्यः ।

चरकस्तु ।

दृष्टं श्रुतार्थभूतं च प्रार्थितं कल्पितं तथा ।
भावितं दोषजं चैव स्वप्नं सप्तविधं विदुः ॥
तत्र पञ्चविधं पूर्वमफलं भिषगादिशेत् ।

बृहद्यात्रायां वराहः ।

प्रत्यक्षवद्भवति यः स्फुरतीव चान्तः
स्वप्नस्य तस्य नियमात् सदसत्फलाप्तिः ।
स्वप्नाः शुभाशुभफलाः कथितानराणा-
मुद्देशमात्रमिह तानपवर्णयामि ॥

तत्र शुभं स्वप्नमाह पराशरः ।

तत्रावनेर्भुजगनलेनोद्धृत्य स्कन्धारोपणे वा ग्रसनमभिलङ्घनमर्कचन्द्रसंभक्षणं तृणमधिरोहणमुदधिसलिलसकलाभिपानमभि-

तरणमवनेश्च रुधिरपरिस्रावनमन्त्रैरविकलपरिवारणं भुजापरिष्वञ्जनं वा सकलवसुधाधिपत्याय। तथा स्निग्धहरितफलितसितसुरभिकुसुमकुसुमितप्रशस्ततरुसमधिरोहरणम्। बृहदमलदृढहर्म्यश्वेतगजमस्तकक्षितिधरसितशिखरज्वालितरथनृपतिशिरसामपि। नरशिरोभक्षणमसृग्ह्रदावगाहनमभिषेचनपानानुलेपनमवनिविजयाय राज्ञाम्। अराज्ञामिष्टधनविद्यासुखाधिपत्याय।

बृहद्यात्रायां वराहः।

स्वाङ्गप्रज्वलनं परोपशमनं शक्रध्वजालिङ्गनं
दृक्संयुक्तकरैर्निपत्य च तरोः प्रक्षेपणं दिक्षु च।
बद्धो वा निगडैर्प्रसेचन दहनं नानाशिरोबाहुना
छत्रं वा द्विरदोऽभिषिच्य विभृयाद्दिव्यो ऽथ वा ब्राह्मणः॥
उडुपदिनकृद्भङ्गः शृङ्गं च्युतास्वभिषेचनं
यदि च महिषीसिंहीव्याघ्रीगवां मुखदोहनम्।
जठरनिसृतैश्चान्त्रैर्ग्रामद्रुमाद्रिविचेष्टनं
विशति यदि वा सुश्लिष्टाङ्गीतनुः प्रवराङ्गना॥
नरजहृदयमूर्धभक्षणं वा स्वदेहे
सुतनुभुजगसिंहेभाममांसादनानि।
तृणतरुकुसुमाम्बुप्रोद्भवो वा स्वनाभौ
क्षितिगिरिपरिवर्त्तोन्मूलने वाऽधिराज्यम्॥
दिनकरशशिताराभक्षणस्पर्शनानि
हरणमपि च मूर्ध्नः सप्तपञ्चत्रिधा वा।
वृषभगृहनगेन्द्राश्वेभसिंहाधिरोहा
ग्रसनमदधिभूम्याश्चाधिराज्यप्रदानि॥

विपुलरणविमर्दैर्द्यूतवादैश्च जित्वा
पशुमृगमनुजानां लब्धिरध्यासनं वा ।
विलसनपरिलेपोऽगम्यनारीगमो वा
स्वमरणशिखिलाभः शस्यसंदर्शनं च ॥
सितसुरभिमनोज्ञालेपमाल्याम्बराणां
द्विजसुरगुरुराज्ञां* दर्शनान्याशिषश्च ।
मणिरजतसुवर्णाम्भोजपात्रेषु भुङ्क्ते
यदि दधिपरमान्ने मज्जतेऽसृग्ह्रदे वा ॥
सिततुरगफलध्वजातपत्रव्यजनसरोजमणिद्विजेन्द्रलाभः ।
अभय विजय भुङ्क्ष्व वेति शब्दाः परिणतराज्यफलप्रदाः प्रदिष्टाः ॥

योगयात्रायां वराहः ।

स्वं लेढि जिह्वया यः स्युरदक्षो दीर्घयाऽवरः स्वप्ने ।
अपि दासकुले ज्ञातः स सागरान्तां महीं पाति ॥

पराशरः ।

दुर्गाधिरोहणं स्वभुजचलान्मानुषामनुषद्विषदनिमित्तपातनमसिशरकवचचापभूषणान्यप्रहरणलाभोऽरिविजयाय। सिंहव्याघ्रतुरगर्षभगजनररथादिरोहणममलसलिलपुलिनविमलनभोग्रहार्कचन्द्रतारोदयाभिदर्शनम् । दर्शनं च सुरगुरुनृपतिसिद्धद्विजाचार्यकसितसुरभिकुसुमितवनप्ररूढवनहरितोद्यानविविधवननवशस्यपाकापाण्डुप्रवर्त्तितमहीतलानां तथाऽऽममत्स्यमांसभक्षिभिः स्वाङ्गारशमनं परानानाङ्गसंभक्षणमभिनववास्तुप्रवेशकरणदर्शनमभिप्रवेशोऽवनिपतिमहिषीणां भवनशयनासनाङ्गज्वलनशकृदनुलेपनप्रभक्षणमदि-

* द्विजसुरगुरुराजानामित्यनेन भवितव्यम् ।

रान्नपानसङ्ग्रामताडनमगम्याभिगमनपलितपाणिसमेतवृद्धकेश-श्मश्रुनखरोम्णामभिलखितकार्यसिद्धवृद्धयेऽधमानाम् ।

योगयात्रायां वराहः ।

शाद्वलतीरोपान्तां वसुधां नवशस्यशालिनीमटताम् ।
पद्मानि चिन्वतां वा स्वप्नान्ते वृद्धयः पुंसाम् ॥
शोकश्चिन्ता रुदितं व्याकुलता बन्धनं वधः क्लेशः ।
वृद्धिकराण्युक्तानि स्वप्नान्ते वाऽपि मरणानि ॥

पराशरः ।

सिंहव्याघ्रतुरगर्षभभुजङ्गमानां लाभो लाभश्च सितकुसुमितलतास्रग्वीणासनशयनकर्णिकाञ्जलिकादशनयवनपादुकास्थवृकककङ्कविकानां स्त्रीलाभाय। वृश्चिकाहिदर्शनं मणिरत्नदर्शनं काञ्चनप्रदीपगजकलभतुरगकिशोरवत्सहंससर्पार्भकलाभः पुत्रलाभाय।

बृहद्यात्रायां वराहः ।

मुद्रादृषदञ्जनीविपञ्चीस्त्रीसङ्गारिषु चाङ्गनाभिरुक्ता ।
लब्धे सरकेऽथ दर्पणे वा भृङ्गारादिषु चोद्भवं सुतस्य ॥

चरकः सुश्रुतश्च ।

स्वप्ने चोपलभेत पद्मोत्पलकुमुदामातकादीनि ।
पुन्नामधेयान्येव प्रसन्नमुखवर्णता भवेत् ब्रूयात् ॥
पुत्रमियं जनयिष्यति तद्विपरीतेति सा कन्याम् ।

पराशरः ।

श्वेतसूक्ष्माविरजःप्रशस्ताहतवसनभृङ्गारव्यजनसितचामरध्वजातपत्रद्विरदपायससैन्धवलवणदधिपयःप्रशस्तसितकुसुमवनशस्यलाभोऽर्थलाभाय ।

बृहद्यात्रायां वराहः ।

सिद्धिप्राप्तिः स्याद्धि कोषेऽसिलाभो वश्यो राजा जायते शासनाप्त्यै ।

तथा ।

कैपिण्ये धनलब्धिरम्बुतरणे शोकस्य नाशो भवेद्-
वर्षे रोदितशोचितादिषु तथा दाहे विवृद्धिः स्मृतः ।

विष्णुपुराणविष्णुधर्मोत्तरयोः ।

शैलप्रासादनागाश्ववृषभारोहणं हितम् ।
द्रुमाणां श्वेतपुष्पाणां गगने च तथा द्विज ॥
तृणद्रुमोद्भवो नाभौ तथैव बहुलाभता ।
तथा च बहुशीर्षत्वं पतितोद्भव एव च ॥
सुशुक्लमाल्यधारित्वं सुशुक्लाम्बधारिता ।
चन्द्रार्कताराग्रसनं परिमार्जनमेव च ॥
भूम्यम्बुधीनां ग्रसनं शत्रूणां च वधक्रिया ।
जयो विवादद्यूतेषु संग्रामेषु तथा द्विजन ॥
भक्षणं चार्द्रमांसानां मत्स्यानां पायसस्य च ।
दर्शनं रुधिरस्यापि स्नानं वा रुधिरेण च ॥
सुरारुधिरमद्यानां पानं क्षीरस्य वाऽप्यथ ।
अन्त्रैर्विचेष्टनं भूमौ निर्मलं गगनं तथा ॥
मुखेन दोहनं शस्तं महिषीणां तथा गवाम् ।
सिंहीनां हस्तिनीनां च वडवानां तथैव च ॥
प्रासादो देवविप्रेभ्यो गुरुभ्यश्च तथा शुभः ।
अम्भसा त्वभिषेकस्तु गवां शृङ्गश्रुतेन च ॥
चन्द्राद्भ्रष्टेन वा राज्ञा ज्ञेयं राज्यप्रदं हि तत् ।
राज्येऽभिषेकश्च तथा छेदनं शिरसोऽपि वा ॥
मरणं वह्निलाभश्च वह्निदाहो गृहादिषु ।
लब्धिश्च राज्यलिङ्गानां तन्त्रीवाद्याभिवादनम् ॥

तथोदकानां तरणं तथा विषमलङ्घनम् ।
हस्तिनीवडवानां च गवां च प्रसवो गृहे ॥
आरोहणमथासां च रोदनं च तथा शुभम् ।
वरस्त्रीणां तथा लाभस्तथाऽऽलिङ्गनमेव च ॥
निगडैर्बन्धनं धन्यं तथा विष्ठानुलेपनम् ।
जीवतां भूमिपालानां सुहृदामपि दर्शनम् ॥
दर्शनं देवतीर्थानां विमलानां तथाऽम्भसाम् ।
शुभान्यथैतानि नरस्तु दृष्ट्वा प्राप्नोत्ययत्नाद्ध्रुवमर्थलाभम् ।
स्वप्नानि धर्मज्ञभृतां वरिष्ठव्याधेर्विमोक्षं तु तथाऽतुरोऽपि ॥

आग्नेयपुराणे राजभयनिमित्तम् । त्रिजटादृष्टस्वप्नाः ।

सपर्वतवनां कृत्स्नां ग्रसमानो महीमिमाम् ।
स्वप्ने रामो मया दृष्टो रुधिरं पीतवान् बहु ॥
मुक्तां नागसहस्रेण शिविकामन्तरिक्षगाम् ।
प्रास्थापयदथो सीतां सुखमास्थाय राघवः ॥
रावणश्च मया दृष्टो विमाने पुष्पके स्थितः ।
लक्ष्मणेन सह भ्रात्रा चतुर्दन्ते महागजे ॥
रामेण संगता सीता आरुह्य श्वेतपर्वतम् ।
सागरेण परिक्षिप्तं भास्करं परिमार्जनम् ॥
राघवश्च मया दृष्टः सीतया सहितो युवा ।
श्वेतहस्तिसमारूढः श्वेतवस्त्रावगुण्ठितः ॥
पाण्डुरर्षभयुक्तेन रथेनाश्वयुजा तथा ।
शुक्लमाल्याम्बरधरो लक्ष्मणेन च संगतः ॥

सुन्दरकाण्डे च त्रिजटावाक्यम् ।

"स्वप्नो ह्यद्य च मया दृष्टो दारुणो रोमहर्षणः ।

राक्षसानामभावाय भर्त्तुरस्या भयाय तु"* ॥

अस्याः सीतायाः ।

"सपर्वतां नगां कृत्स्नां ग्रसमानो वसुन्धराम् ।
मयाऽद्य दृष्टः स्वप्नान्ते रुधिरं पीतवान् बहु" ॥
गजदन्तमयीं दिव्यां शिविकामन्तरिक्षगाम् ।
युक्तां गजसहस्रेण स्वयमास्थाय राघवः ॥
समुद्रेण परिक्षिप्तमारुह्य श्वेतपर्वतम् ।
रामेण संगता सीता भास्करेण प्रभा यथा ॥
द्रुमोपपातः काकुस्थो भार्य्यया सह सीतया ।
लक्ष्मणेन च वीरेण विमाने पुष्पके स्थितः ॥
पाण्डुरर्षभयुक्तेन रथेनाश्वयुजा तथा ।
शुक्लमाल्याम्बरधरो लक्ष्मणेन समन्वितः ॥
यस्या ह्येतादृशः स्वप्नो दुःखितायाः प्रदृश्यते ।
सा दुःखैर्बहुभिस्त्यक्ता प्रियं पश्येदनन्तरम्"† ॥

आग्नेयपुराणे विभीषणराज्यनिमित्तं । त्रिजटादृष्टः स्वप्नः ।

विभीषणो गजारूढः श्वेतमाल्यानुलेपनः ।
मदयुक्तगजारूढः फलान्याहर्त्तुमुद्यतः ॥

बृहद्यात्रायां वराहः ।

दृष्ट्वा स्वप्नं शोभनं नैव स्वप्यात् पश्चाद्दृष्टो यः स्वपाकं विधत्ते ।
शंसेद्दुष्टं तज्ज्ञसाधुद्विजेभ्यस्ते चाशीर्भिः पूजयेयुर्नरेन्द्रम् ॥

मत्स्यपुराणे ।

एकस्यां यदि चेद्रात्रौ शुभं वा यदि वाऽशुभम् ।
पश्चाद्दृष्टश्च यस्तत्र तस्य पाकं विनिर्द्दिशेत् ॥

---

* २७ सर्गे ६ श्लो. । † वाल्मीकीये २७ सर्गे एतान्येतद्भिन्नान्यपि वचनानि उपलभ्यन्ते । तत्र बहुत्रपाठभेदोऽप्यस्ति ।

तस्मात् तु शोभने स्वप्ने पश्चात् स्वापो न शस्यते ।

अथ दुःस्वप्नो मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

नाभिं विनाऽन्यगात्रेषु तृणवृक्षसमुद्भवः ।
चूर्णनं मूर्ध्नि कांस्यानां मुण्डनं नग्नता तथा ॥
मलिनाम्बरधारित्वमभ्यङ्गः पङ्कदिग्धता ।
उच्चप्रपतनं चैव दोलारोहणमेव च ॥
अर्जनं पद्मलोहानां हयानामपि मारणम् ।
रक्तपुष्पद्रुमाणां च चाण्डालस्य तथैव च ॥
वराहर्क्षखरोष्ट्राणां तथा वाऽऽरोहणक्रिया ।
भक्षणं पक्वमांसानां तैलस्य कृसरस्य च ॥
नर्त्तनं हसनं चैव विवाहो गीतमेव च ।
तन्त्रीवाद्यविहीनानां वाद्यानामपि वादनम् ॥
श्वेतो वराहोऽधोगमनं स्नानं गोमयवारिणा ।
पङ्कोदकेन च तथा वर्हतोयेन वाऽप्यथ ॥
मातुः प्रवेशो जठरे चितारोहणमेव च ।
शक्रध्वजाभिपतनं पतनं शशिसूर्ययोः ॥
दिव्यान्तरिक्षभौमानामुत्पातानां च दर्शनम् ।
देवद्विजातिभूपानां प्रजानां क्रोध एव च ॥
आलिङ्गनं कुमारीणां पुरुषाणां च मैथुनम् ।
हानिश्चैव स्वगात्राणां विरेकवमनक्रिया ॥
दक्षिणाशाभिगमनं व्याधिनाऽभिभवस्तथा ।
फलोपहारश्च तथा शाद्वलानां विशोधनम् ॥
गृहाणां चैव पातश्च गृहसंमार्जनं तथा ।

क्रीडा पिशाचक्रव्यादवानरान्त्यनरैरपि ॥
परादभिभवश्चैव तस्माच्च व्यसनोद्भवः।
कषायवस्त्रधारित्वं तद्वस्तुक्रीडनं तथा ॥
स्नेहपानावगाहौ च रक्तमाल्यानुलेपनम्।
एवमादीनि चान्यानि दुःस्वप्नानि विनिर्दिशेत् ॥

पराशरः।

श्ववानरोष्ट्रखरनकुलमार्जारमहिषवराहद्वीपिभासाद्यप्रशस्तान्यदंष्ट्रिनखिक्रव्याददर्शनमभिद्रवणं वातक्लेशाय। यानं व्याधये। वधो वधाय। निपातः पराजयाय। केशलोमनखदर्शनपातनं मणिरत्नाभरणपतनं छेदनाय। हरणं व्याधिक्लेशबन्धुनाशाय। श्मश्रुकर्मोन्मर्दनं सकृन्मूत्रकरणं नग्नताऽऽत्मनो घृततैलवसनाभ्यङ्गवसनादिविकृतपुरुषस्त्रीभिरमानुषैरसकृदभिद्रवणं पक्वमत्स्यभक्षणं व्याधिक्लेशभयाय। विरेचनमन्नक्षयाय। घृतोदपूर्णकुम्भकमण्डलूपस्थानच्छत्रसूत्रवद्धरज्जुदर्शनं लाभो वाऽध्वगमनाय। मत्तप्रव्रजितनग्नशौण्डिकप्रशुष्कनदीह्रदतीर्थाभिदर्शनं शुकमयूरगोधामूषिकाजाविकनटनर्त्तकाश्ववारणगीतवादनं स्वयं वा गीतिनृत्यवादनं कांस्यभाण्डावभेदः सेतुतरुच्छेदः प्रवेशस्तमसि शून्यभिन्नागारेषु च शुष्कवृक्षदर्शनारोहणमवनेर्विचलनमशनिमेघनभोनीहारदर्शनं कृमिकीटपतङ्गदंशमशकमक्षिकाभिदर्शनमभिलपनं च। अञ्जनत्रपुताम्रशीसलोहाभावो रथशिखरयानच्छत्रावपतनं मज्जनं वा कलुषजले पङ्कवल्मीकपांशुसिकताऽधिरोहणमवसनं वा कलिक्लेशायानर्थाय। वा स्वभवनहर्म्यप्रासादनिपतनमभिनिष्क्रमणं वा स्वगृहादुत्थितरुदितानामङ्गनानामङ्गलीभिः सम्मार्जन्या वा मार्जनं सर्वस्वनाशाय।

चन्द्रार्कनिपतनमभिप्लवो वा चक्षुर्व्याघाताय पार्थिवोपद्रवाय वा। नगरपुरशिखतोरणेन्द्रध्वजसुरपतिभवननिपतनं नृपतिविघाताय स्वपतिक्लेशाय वा।

वराहः।

नाभेरन्यत्र गात्रे तृणतरुकुसुमप्रोद्भवः स्नेहपानं
क्रीडायां नोपभोगाः खरकपिकरभव्यालरौद्रैश्च सत्त्वैः।
कायस्यालेपनं वा कलुषजलमसीगोमयस्नेहपङ्कै-
र्दृग्जिह्वादन्तबाहुप्रपतनमथ वाऽनर्थशोकप्रदानि॥
गीतक्रीडितभूषितप्रहसितप्रेङ्खलितास्फोटिता-
न्यर्केन्दुध्वजतारकानिपतनं स्रोतोवहाधोगमः।
रज्जुच्छेदचिताप्रपातजननीगात्रप्रवेशास्तथा
स्वप्ने कांस्यविवर्णनं च शिरसि क्लेशामयानर्थदम्॥
स्थलपशुमृगकीटानूपचर्माण्डजानां
प्लवनमुदकनाशौ स्याद्विवाहोत्सवो वा।
सरसिजजतुभाण्डक्रीडनं नर्त्तनं वा
मलिनविवसनत्वं वाऽऽशु शोकप्रदानि॥

पुंद्रव्यनाशेषु हृताद्वियोगश्छेदश्च पाणेः कमलापहारे।
प्रासादशृङ्गादिशिरोवताराः स्वप्नेषु नेष्टा इति संप्रदिष्टाः॥
सर्पे कर्णं नासिकां वा प्रविष्टे तच्छेदः स्याद्वेष्टने चाशु बन्धः

वराहः।

लास्ये प्राप्नोति वधं रुदिते हास्ये प्रगीतके रोगः।
पवनं कलहप्रायं प्रतिलोमफलः किल स्वप्नः॥
चित्रं कर्मविचित्रं यः पश्यति नैव वर्त्तितं स्वप्ने।
शोकः समाश्रयेत् पतितं वासार्थमिवाण्डजे वृक्षम्॥

स्वप्ने पिबतः पुंसो विरेचनं स्नेहमौषधं वाऽपि ।
रोगो ग्लपयति देहं हिमकिरणापात इव पद्मम् ॥
मञ्जर्यादधियात्राशयबलवालोषिता रजतयष्टिः ।
वध्री सकोषवीणा कार्या लाभाय लभ्यन्ते ॥
व्यावल्गितविक्रीडितविलसितसंगीतनृत्यहसितानि ।
स्वप्ने प्रतिबुद्धानामायासकराण्यभिहितानि ॥

योगयात्रायां वराहः ।

श्मश्रुकेशनखदैर्घ्यकर्त्तनं वानरीविकृतनार्युपासनम् ।
रक्तवस्त्रसरुजाङ्गनार्दनं रोगमृत्युभयशोकतापदम् ॥

बृहद्यात्रायां च ।

हरिणारोहे भ्रमणं मृत्युर्न चिरेण शूकरारोहे ।
उष्ट्रारोहे व्याधिर्वृद्धिः स्यात् कुञ्जरारोहे ॥

अथ रिष्टस्वप्नः । पराशरः ।

श्ववानरोष्ट्रखरनकुलमार्जारमहिषवराहद्वीपिश्येनभासाद्यप्रशस्तान्यदंष्ट्रिनखिक्रव्यादानामधिरोहणं नग्नं वाऽधिरुह्य याम्याशाभिगमनं मज्जनं वा क्वचिद्भस्मरक्तचन्दनतैलमसीप्रलिप्तगात्राशोकपुष्पैकभृतो बिसानि भक्षयतः पांशुसिकतागोमयेषु महति कलुषह्रदे वा निमज्जनं तथा कुसुमितकिंशुककोविदारकरवीरचैत्ययष्टिरूपाधिरोहणं करवीरकमलदलमालाबन्धो वा भृष्टयवमसिभस्मतैलवशापानं गात्रानुलेपनं वा मरणाय ।

कालावल्यां तु ।

गृध्रश्च काकगोमायुरक्षःप्रेतपिशाचकैः ।
भक्ष्यते प्रोक्ष्यते वाऽपि खरजात्युष्ट्रसैरिभैः ॥
आत्मा यदीदृशः स्वप्ने दृश्यते भावविह्वलः ।

तत्राब्दैके गते नूनं गम्यतेऽन्तकवश्यता ॥

विष्णुधर्मोत्तरे तु ।

सुवर्णं रजतं मूत्रं पुरीषं वमते निशि ।
स्वप्ने स मासे दशमे प्रयाति यममन्दिरम् ॥

पराशरः ।

सुवर्णरजतमूत्रपुरीषाणां वा स्वप्ने छर्दनं दशमे मासि मरणाय ।

मार्कण्डेयपुराणे ।

वान्त्यां मूत्रे पुरीषे च सुवर्णं रजतं तथा ।
प्रत्यक्षमथ वा स्वप्ने जीवितं दशमासिकम् ॥

देवलस्तु ।

छर्दिमूत्रपुरीषेषु सुवर्णरजतप्रभम् ।
प्रत्यक्षमथ वा स्वप्ने नवमासान् स जीवति ॥

पराशरः ।

यक्षरक्षःप्रेतपिशाचानां स्वप्ने दर्शनमतीन्द्रियाणां नवमे मासि। मरणाय-इति सम्बन्धः ।

कालावल्याम् ।

रक्तगन्धप्रलिप्ताङ्गो रक्तमाल्योपशोभितः ।
तैलाभ्यक्तोऽतिभीतश्च मुण्डितो रक्तवस्त्रधृक् ॥
खरमारुह्य वेगेन दक्षिणां दिशमाव्रजेत् ।
यस्यात्मा दृश्यते स्वप्ने तन्नाशो वत्सरार्धतः ॥

देवलः ।

कृष्णैश्च विकटैश्चैव पुरुषैश्चोद्यतायुधैः ।
पाषाणैस्ताडयते स्वप्ने षण्मासान् न स जीवति ॥

वायुपुराणेऽप्येवम् ।

मार्कण्डेयपुराणे ।

करालैर्विकटैः कृष्णैः पुरुषैरुद्यतायुधैः ।

पाषाणैस्ताडितः स्वप्ने सद्यो मृत्युं व्रजेन्नरः ॥

कालावल्याम् ।

लोहदण्डयुतं कृष्णं नरं कृष्णपरिच्छदम् ।
स्वप्ने च पार्श्वतो दृष्ट्वा त्रिमासान् मृत्युराप्यते ॥

आदित्यपुराणे तु ।

कृष्णं तथोद्भासितलोहदण्डं कृष्णाम्बरं स्वं च नरं निरीक्ष्य ।
तमेव संसाररिपुं विजेतुं विसृज्य मासत्रियेन याति ॥

देवलः ।

रक्तगन्धाम्बरः स्रग्वी गच्छेद्वा दक्षिणामुखः ।
खरोष्ट्रमपि वा रोहेत् त्रीन् मासान् नाभिजीवति ॥

तथा ।

दृष्ट्वाऽऽत्मानं मृतं स्वप्ने द्वादशाहं स जीवति ।

मार्कण्डेयपुराणे ।

केशाङ्गारं तथा भस्म भुजङ्गान् निर्जलां नदीम् ।
दृष्ट्वा स्वप्ने दशाहात् तु मृत्युरेकादशे दिने ॥

देवलस्तु ।

भस्माङ्गाराँश्च केशाँश्च नदीं शुष्कां भुजङ्गमान् ।
पश्येद्यो दशरात्रं च न जीवेत् तादृशः पुमान् ॥

वायुपुराणलिङ्गपुराणयोरप्येवम् ।

सुश्रुतः ।

अन्तावसायिभिर्यो वा कृष्यते दक्षिणामुखः ।

स्वस्थस्य व्याधयो व्याधितस्य मरणायेति सम्बन्धः ।

वायुपुराणलिङ्गपुराणयोस्तु ।

मुक्तकेशो हसँश्चैव गायन् नृत्यँश्च यो नरः ।
याम्यां दिशमितो गच्छेत् तदन्तं तस्य जीवितम् ॥

मार्कण्डेयपुराणे ।

क्षुद्रवानरयानस्थो गायन् वै दक्षिणां दिशम् ।

स्वप्ने प्रयाति तस्यापि न मृत्युः कालमृच्छति ॥

वायुपुराणलिङ्गपुराणयोस्तु ।

क्षुद्रवानरयुक्तेन रथेनाशां तु दक्षिणाम् ।
गायन्नथ व्रजेत् स्वप्ने विन्द्यान्मृत्युमुपस्थितम् ॥

देवलश्चैवम् ।

वायुपुराणलिङ्गपुराणयोः ।

उष्ट्रा वा रासभा वाऽपि युक्ताः स्वप्ने रथेऽशुभाः ।
यस्य सोऽपि न जीवेत् तु दक्षिणाभिमुखो गतः ॥

मार्कण्डेयपुराणे तु विशेषः ।

उष्ट्रारासभयानेन यः स्वप्ने दक्षिणां दिशम् ।
प्रयाति तं चेज्जानीयात् सद्यो मृत्युं नराधिपः ॥

चरकस्तु ।

श्वभिरुष्ट्रैः खरैर्वाऽपि याति यो दक्षिणां दिशम् ।
स्वप्ने पक्षं तथाऽऽसाद्य स जीवन्तं विमुञ्चति ॥

वायुपुराणलिङ्गपुराणयोः ।

कृष्णाम्बरधराः श्यामा गायन्त्योऽप्सरसोऽङ्गनाः ।
नयेयुर्दक्षिणामाशां स्वप्नेऽप्येवं न जीवति ॥

देवलस्तु विशेषमाह ।

कृष्णाम्बरधरा श्यामा गायन्ती वाऽप्यथाङ्गना ।
यन्नयेद्दक्षिणामाशां स्वप्ने सोऽपि न जीवति ॥

मार्कण्डेयपुराणे तु ।

रक्तकृष्णाम्बरधरा गायन्ति च हसन्ति याः ।
दक्षिणाशां नयेन्नारीः स्वप्ने सोऽपि न जीवति ॥

सुश्रुतः ।

कृष्णाम्बरधरा नारी हसन्ती मुक्तमूर्धजा ।
यं चाकर्षति बद्ध्वा स्त्री नृत्यन्ती दक्षिणामुखम् ॥

तस्य मरणायेति सम्बन्धः ।
वायुलिङ्गमार्कण्डेयपुराणेषु ।

नग्नं श्रवणकं स्वप्ने हसमानं महाबलम् ।
एकं वा वीक्ष्य च बहून् विद्यान्मृत्युमुपस्थितम् ॥

वायुमार्कण्डेयपुराणेषु ।

आमस्तकतलो यस्तु निमज्जेत् पङ्कसागरे ।
दृष्ट्वा तु तादृशं स्वप्नं सद्य एव न जीवति ॥

चरकः ।

लाक्षारक्ताम्बराभं यः पश्यत्यम्बरमन्तिकात् ।
सरक्तपित्तमासाद्य तेनैवान्ताय नीयते ॥

वायुपुराणलिङ्गपुराणयोः ।

यस्तु प्रावरणं शुक्लं स्वकं पश्यति मानवः ।
कृष्णं रक्तमपि स्वेन तस्य मृत्युरुपस्थितः ॥

देवलस्तु विशेषमाह ।

छिद्रवासश्च कृष्णं च स्वप्ने यो बिभृयान्नरः ।
नग्नं वा श्रवणं दृष्ट्वा विन्द्यान्मृत्युमुपस्थितम् ॥

वायुपुराणेऽप्येवम् ।
लिङ्गपुराणे ।

श्वभ्रे यो निपतेत् स्वप्ने द्वारं चास्य पिधीते ।
न वोत्तिष्ठति यस्तस्मात् तदन्तं तस्य जीवितम् ॥

मार्कण्डेयपुराणेऽप्येवम् ।
लिङ्गपुराणे ।

अग्निप्रवेशं कुरुते स्वप्नान्ते यस्तु मानवः ।
न च स्मृतं न चाभिज्ञा तदन्तं तस्य जीवितम् ॥

मार्कण्डेयपुराणे तु विशेषः ।

स्वप्नेऽग्निं प्रविशेद्यस्तु न च निष्क्रमते पुनः ।
जलप्रवेशादपि वा तदन्तं तस्य जीवनम् ॥

चरकः ।

नृत्यन्रक्षोगणैः सार्धं यः स्वप्नेऽम्भसि सीदति ।
स प्राप्य भयमुन्मादं याति लोकमतः परम् ॥
कलुषेऽम्भसि पङ्के वा कूपे वा तमसाऽऽवृते ।
स्वप्ने मज्जति सोद्वेगः श्रोतसा क्रियते च यः ॥
रक्षःप्रेतपिशाचस्त्रीचाण्डालद्रविडान्ध्रकैः ।
गृध्रोलूकैश्च काकाद्यैः स्वप्ने यः परिवार्यते ॥
वंशवेत्रलतायाततृणकण्टकसंकटे ।
संगृह्यते मुह्यति च स्वप्ने यः प्रपतत्यपि ॥
भूमौ पांशूपधानानां वल्मीके वाऽथ भस्मनि ।
श्मशानायतने श्वभ्रे स्वप्ने यः प्रपतत्यपि ॥
यस्योत्तमाङ्गे जायन्ते वंशगुल्मलतादयः ।
वयांसि च निलीयन्ते स्वप्ने मौढ्यमियाच्च यः ॥

स्वप्नोऽयं व्याधितानां च महते भयायेति सम्बन्धः ।

लता कण्टकिनी यस्य दारुणा हृदि जायते ।
स्वप्ने गुल्मस्तु मत्ताय क्रूरो विशति मानवम् ॥
नग्नस्याज्यावसिक्तस्य जुह्वतोऽग्निमनार्चिषम् ।
पद्मान्युरसि जायन्ते स्वप्ने कुष्ठैर्मरिष्यति ॥
मत्तं नृत्यन्तमाविध्य प्रेतो हरति यं नरम् ।
स्वप्ने हरति तं मृत्युरपस्मारपुरःसरः ॥
शष्कुलीर्वाऽप्यपूपान् वा स्वप्ने खादति यो नरः ।
स्नेहं बहुविधं स्वप्ने चाण्डालैः सह यः पिबन् ॥
स चेत् प्रच्छर्दयेत् तादृक् प्रतिबुद्धो न जीवति ।
प्रेतैः सह पिबेन्मद्यं यः स्वप्ने कृष्यते शना ॥

सुघोरज्वरमासाद्य प्रयाति यममन्दिरम् ।
स्नेहं बहुविधं स्वप्ने चाण्डालैः सह यः पिबेत् ॥
बुध्यते स प्रमेहेण गृह्यते स च मानवः ।

अयोध्याकाण्डे भरतवाक्यम् ।

"दृष्टो मयाऽद्य स्वप्नो वै चन्द्रमाः पतितः क्षितौ ।
संशुष्कः सागरश्चैव सूर्यो ग्रस्तश्च राहुणा ॥
अद्राक्षमपि च स्वप्ने पितरं रक्तवाससम् ।
कृष्यमाणं नरैर्बद्ध्वा दक्षिणामभितो दिशम् ॥
पुनश्चाप्येनमद्राक्षं स्नेहाक्तं रक्तमूर्धजम् ।
पतन्तमद्रिशिखरादगाधे गोमये ह्रदे ॥
तस्मिन् नग्नश्चोन्मज्जन् दृष्टो मे गोमये ह्रदे ।
पिबन्नञ्जलिना तैलं हसमानः पुनः पुनः ॥
तैलेनाभ्यक्तसर्वाङ्गस्तैलमेव व्यगाहत ।
पीठे कार्ष्णायसे चैलविषण्णं कृष्णवाससम् ॥
प्रहसन्ति स्म राजानः प्रमदाः कृष्णपिङ्गलाः ।
दृष्टो रासभयुक्तेन रथेन च पिता मया ॥
रक्तमाल्याम्बरधरः प्रयातो दक्षिणामुखः ।
प्रदीप्तमम्भसा शान्तं दृष्टवानस्मि पावकम् ॥
सीदन्तं च तथाऽद्राक्षं पङ्के लग्नं महागजम् ।
विशीर्यमाणः शैलेन्द्रो भग्नश्चैत्यमहाद्रुमः ॥
स्वप्नेनाद्य मया दृष्टो निपतँश्च महीध्वजः ।
एवमेव मया स्वप्नो दृष्टः पापभयावहः ॥
व्यक्तं रामोऽथ वा राजा प्राणाँस्त्यक्त्वा दिवं गतः ।

यो हि रासभयुक्तेन रथेन परिकृष्यते ॥
मर्त्यः स नचिरादेव ध्रुवं याति यमक्षयम्''* ।

सुन्दरकाण्डे रावणवधनिमित्तं त्रिजटादृष्टः स्वप्नः ।

"विमानात् पुष्पकादद्य रावणः पतितः क्षितौ ।
कृष्यमाणः स्त्रिया दृष्टो मुण्डो रक्ताम्बरो हसन् ॥
रथेन खरयुक्तेन रक्तमाल्यानुलेपनः ।
प्रयातो दक्षिणामाशां प्रविष्टः कर्दमं ह्रदम् ॥
कण्ठे बद्ध्वा दशग्रीवं प्रमदा रक्तवासिनी ।
काली कमलपत्राक्षी दिशं याम्यां प्रकर्षति''† ॥

आग्नेयपुराणे ।

विमानात् पुष्पकादद्य रावणः पतितो मया ।
कृष्णमाणः स्त्रिया दृष्टो मुण्डः पीताम्बरो हसन् ॥
रथेन खरयुक्तेन रक्तमाल्यानुलेपनः ।
प्रयातो दक्षिणामाशां नागतः पुनरेव हि ॥
वराहे तु समारूढश्छागले गर्दभे तथा ।
शिशुमारे ससैन्यस्तु प्रयातो दक्षिणां दिशम् ॥
सुसमाजेन संवृत्तो गीतवादित्रनृत्यवान् ।
विदधद्रक्तवस्त्रं हि हास्ययुक्तः स नृत्यति ॥

सुन्दरकाण्डे कुम्भकर्णवधनिमित्तम् ।

"वानरेण मया दृष्टः कृष्यमाणेन चासकृत् ।
उष्ट्रेण कुम्भकर्णश्च प्रयातो दक्षिणां दिशम् ॥
कुम्भकर्णादयश्चेमे सर्वे राक्षसपुङ्गवाः ।

* नैतानि पद्यानि वाल्मीकीये उक्तस्थले उपलभ्यन्ते ।

† वाल्मीकीये उक्तकाण्डे २७ सर्गे; २१-२७ श्लो. । तत्राधिकः पाठो भिन्नश्चोपलभ्यते ।

पीतैर्निर्वासिता वस्त्रैः क्रीडन्तो गोमये ह्रदे ॥
समाजश्च महाभूतो नृत्यवादित्रगीतवान् ।
पिबतां मुण्डशीर्षाणां रक्षसां रक्तवाससाम् ॥
पीत्वा तैलं प्रवृत्ताश्च प्रहसन्ति महास्वनाः ।
लङ्कायां भग्नकक्षायां सर्वा राक्षसयोषितः''* ॥

आग्नेयपुराणे ।

पीत्वा तैलं प्रवृत्ता हि प्रहसन्त्यो महास्वनाः ।
लङ्कायां भस्मभूतायां सर्वा राक्षसयोषितः ॥
सागरे पतिता दृष्टा नद्यां चैव प्रवाहिताः ।
गजवाजिरथैर्युक्ता लङ्केयं ससुहृद्गणा ॥

सुन्दरकाण्डे तु ।

"लङ्का चेयं पुरी कृत्स्ना सवाजिरथकुञ्जरा ।
सागरे पतिता दृष्टा भग्नगोपुरतोरणा''† ॥

लिङ्गपुराणे त्रिपुरवधनिमित्तकथने मयवाक्यम् ।

मयाऽद्य दृष्टः स्वप्नान्ते पीनाको क्रोधमूर्छितः ।
उदरेऽस्मत्पुरीं सर्वां विवेशयति वेगितः ॥

मौशले वृष्णिवंशक्षयनिमित्तम् ।

"काली स्त्री पाण्डुरैर्दन्तैः प्रविश्य हसती निशि ।
स्त्रियः स्वप्नेषु मुष्णन्ती द्वारकां प्रति धावति''‡ ॥

तथा ।

वृष्णयन्धका नखा दन्ताः स्वप्ने दृष्टा भयानकाः ।

पराशरः ।

सरर्षिसिद्धगणगन्धर्वयक्षनागानामुपयाचितानुबन्धे यथोक्त-

---

* वाल्मीकीये २७ सर्ग श्लो. । तत्र बहुत्र पाठभेदोऽधिकश्च ।

† नोक्तस्थले उपलभ्यते । ‡ ३ अ. १ श्लो. ।

दर्शननिमित्तानुबन्धिफलम् ।

पराशरः ।

शुभाशुभस्वप्नविधानमुक्तमयुक्तयुक्तं च समूह्य बुद्ध्या ।
देशादिवर्णाकृतिसम्पदश्च तत्तत्फलं संपरिकल्पयेच्च ॥
पादादिपादोत्तरपादवृद्ध्या वर्षार्धमासत्रयमासकालाः ।
क्षपा विभागेषु चतुर्षु दृष्टाः स्वप्ना अनिष्टेष्टफलप्रदाः स्युः ॥

वराहः ।

आद्ये वर्षाद्वत्सरार्धाद्द्वितीये पाको वर्षार्धार्धभागे तृतीये ।
मासात् पाकः शर्वरीपश्चिमान्ते सद्यः पाको गोविसर्गेषु दृष्टः ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

स्वप्नास्तु प्रथमे यामे संवत्सरविपाकिनः ।
षड्भिर्मासैर्द्वितीये तु त्रिभिर्मासैस्त्रियामिकाः ॥
चतुर्थे मासमात्रेण पच्यन्ते नात्र संशयः ।

वराहः ।

भूयः प्रस्वपनं न चास्य कथनं गङ्गाभिषेको जपः
शान्तिः स्वस्त्ययनं निषेवणमिति प्रातर्गवां शृङ्गयोः ।
विप्रेभ्यश्च तिलान्नहेमकुसुमैः पूजा यथाशक्तितः
पुण्यं भारतकीर्त्तनं च कथितं दुःस्वप्नविच्छित्तये ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

एषामकथनं शस्तं भूयः प्रस्वपनं तथा ।
कल्कस्नानं तिलैर्होमो ब्राह्मणानां च पूजनम् ॥
स्तुतिश्च वासुदेवस्य तथा तस्य तु पूजनम् ।
नागेन्द्रमोक्षश्रवणं ज्ञेयं दुःस्वप्ननाशनम् ॥

पराशरः ।

देवद्विजाग्निप्रतिपूजनानि मन्त्रोपजाप्यानि पवित्रमेव ।

तिलान्नगोभूमिहिरण्यदानं दुःस्वप्नसंदर्शननाशनानि ॥

बृहद्यात्रायां वराहः ।

तथाऽम्बुसंस्पर्शनमन्त्रहोमस्तिलप्रदानं स्वपनं च भूयः ।
शान्तिर्जपश्चाकथनं दमश्च दुःस्वप्नहन्त्रीणि पयश्च गाङ्गम् ॥

नारदः ।

चन्द्रादित्ययोराकाशे स्वप्ने चैवार्धदर्शनम् ।
ततः स्नानं प्रकुर्वीत प्रभाते द्विजसत्तम ॥
तिलानामयुतं तत्र जुहुयात् सुसमाहितः ।
तिलोऽसीति तु मन्त्रेण ततः संपद्यते शुभम् ॥
धेनुं च दक्षिणां दद्यात् ततः संपद्यते शुभम् ।
ब्राह्मणाँस्तोषयेत् तत्र दक्षिणाभोजनादिना ॥
दानं च द्विविधं देयमशुभानां विनाशनम् ।
ततः शान्तिर्भवेत् तत्र दुःस्वप्नं च विनश्यति ॥
षड्भिर्मासैस्तु संपूर्णैरन्यथा मरणं भवेत् ।

अत्रानुक्तविशेषशान्तिषु विशेषतोऽवगम्य गुरुलाघवं लक्षहोमचण्डीपाठादिशान्तिः कर्त्तव्या ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचितेऽद्भुतसागरे स्वप्नाद्भुतावर्त्तः ।

---

## अथ कायरिष्टाद्भुतावर्त्तः ।

तत्र रिष्टस्वरूपमाह सुश्रुतः ।

शरीरशीलयोर्यस्य प्रकृतेर्विकृतिर्भवेत् ।
तच्च रिष्टं समासेन··············इति ॥

ज्योतिःपराशरविष्णुधर्मोत्तरयोस्तु ।

प्रकृतेर्विकृतिर्नृणां बुद्धीन्द्रियशरीरजा ।
अकस्माद्दृश्यते येषां तेषां मरणमादिशेत् ॥

चरकः ।

मरणं चापि तन्नास्ति यन्न रिष्टपुरःसरम्—इति ।

तच्च रिष्टं द्विविधं नियतमनियतं च । तत्र कालमृत्युसूचकं नियतम् । गणितागतायुःसमाप्त्यामरणं कालमृत्युस्तत्र प्रतीकाराभावः ।

महाभारते ।

न मन्त्रो न तपो दानं न मित्राणि न बान्धवाः ।
शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ॥

कैश्चिदपि कालमृत्योरपि वञ्चनोपायो दर्शितः ।

तथा च ।

रसायनं तथा द्रव्ययोगयुक्तैर्महात्मभिः ।
कालमृत्युरपि प्राज्ञैर्जीयते नालसैर्नरैः ॥

सुश्रुतश्च ।

ध्रुवं त्वरिष्टमरणं ब्राह्मणैस्तत् किलामलम् ।
रसायनतपोजप्यतत्परैर्वा निवार्यते ॥

अकालमृत्युसूचकमनियतम् । क्रूरग्रहदशान्तर्दशादिमरणमकालमृत्युः । तच्च स्वस्त्ययनादिसाध्यमेवेति ।

अथ रिष्टविशेषाः । तत्र बुद्ध्यादिरिष्टानि ।

तत्र पराशरः ।

सूक्ष्मार्थदर्शिनी मन्दाऽमन्दाऽसूक्ष्मार्थदर्शिनी ।
तपोयोगादृतेऽतीव बुद्धिः स्यात् प्राणसंशये ॥

सुश्रुतः ।

ह्रीरपक्रामति यतः कान्तिस्मृतिधृतिश्रियः ।
अकस्माद्यं भजन्ते च स परासुरसंशयम् ॥

मोक्षधर्मे तु।

अतिद्युतिरतिप्रज्ञा अप्रज्ञा वा द्युतिस्तथा।
प्रकृतेर्विक्रियायत्नः षण्मासान्मृत्युलक्षणम्॥

चरकः।

शयनादशनादङ्गात् काष्ठात् कुड्यात् कटादपि।
असन्मृगपतेः किञ्चित् समुद्यत्कालचोदिताः॥
प्राणाः समुपतप्यन्ते विज्ञानमुपरुध्यते।
इन्द्रियाणि विनश्यन्ति खिलीभवति चेतना॥
औत्सुक्यं भजते सत्त्वं चेतो भीराविशत्यपि।
स्मृतिं विशति मेधावी ह्रीश्रियौ वाऽपसर्पतः॥
उपप्लवन्ते पाप्मान ओजस्तेजश्च नश्यति।
इत्येतानि मनुष्याणां भवन्ति विनशिष्यताम्॥

विज्ञानमिति शिल्पशास्त्रं शिथलीभवति निष्फलं भवति। सत्त्वमिति मनः। उपप्लवन्ते पाप्मान इति पापानि वर्धन्ते। ओज इति बलम्। तेज इति शारीरोऽग्निः।

तथा।

यैः पुरा विन्दते भावैः समेतैः परमां रतिम्।
तैरेव रममाणस्य राज्ञो मरणमादिशेत्॥

ज्योतिःपराशरविष्णुधर्मोत्तरयोः।

इष्टैरनिष्टसंयोगोऽनिष्टैरिष्टसमागमः।
भयधैर्यविपर्यासो जायते प्राणसंक्षये॥

कालावल्याम्।

अतिक्रुद्धोऽतिभीतश्च वर्षमेकं स जीवति।

आदित्यपुराणे तु।

स्थूलः कृशः क्रोधवशश्च भीतो यदा त्वकस्माद्भवते महात्मा।
तदा तनुं प्रजहात्यब्दमात्रादभङ्गुरां मनुजः स्वाक्षयर्थाम्॥

चरकः ।

भिषग्भेषजपानाक्षगुरुमित्रद्विजातयः ।
वशगाः सर्व एवैते ये रसायनवर्त्तिनः ॥

मार्कण्डेयपुराणे तु ।

येषां विनीतः सततं येऽस्य पूज्यतमाः स्मृताः ।
तानेव चावजानाति तानेव च विनिन्दति ॥
देवानार्चयते विद्वान् गुरुविप्रांश्च निन्दति ।
मातापित्रोरसत्कारं जामातॄणां करोति च ॥
योगिनां चैव विदुषामन्येषां चैव निन्दति ।
प्राप्ते काले तु पुरुषस्तद्विज्ञेयं विचक्षणैः ॥

महाभारते ।

अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः ।
प्रथमं ब्राह्मणं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥
ब्राह्मणाश्च विवादन्ते ब्राह्मणांश्च जिघांसति ।
नैतान् स्मरति कृत्येषु याचितश्च न यच्छति ॥
रमते निन्दया चैव प्रशसां नाभिनिन्दति ।

अथ नयनारिष्टम् । तत्र देवलः ।

अरुन्धतीं ध्रुवं चैव सोमच्छायां महापथम् ।
यो न पश्येन्न जीवेत् स नरः संवत्सरात् परम् ॥

सोमच्छायेति । चन्द्रस्यैतच्छाया साऽर्कबिम्बाच्छादिका यदपगमे चन्द्रमसः शुक्लत्वं वर्धते । एतदुक्तं भवति । अन्यदृश्यचन्द्रच्छायाच्छादितचन्द्रबिम्बैकदेशादर्शने रिष्टमिति । लिङ्गपुराणेऽप्येवम् ।

वराहसंहितायां तु ।

अरुन्धतीदेवपथं ध्रुवं च छायां शशाङ्कस्य च नेक्षते यः ।
अन्यैरदृश्यं यदि वीक्षते वा वर्षान्तरे मृत्युवशं प्रयाति ॥

विष्णुधर्मोत्तरे।

न पश्यति तु यो व्यभ्रे प्रभामर्कनिशाकृतोः।
छायां चन्द्रार्कयोश्चापि तयोश्च गमनं तथा॥
देवमार्गप्रभां वह्निध्रुवं तारामरुन्धतीम्।
पश्यत्यदृष्टमन्यैर्वा मृत्युः स्यात् तस्य वत्सरात्॥

पराशरः।

तत्र व्यभ्रे नभसि रविचन्द्रज्वलनप्रभाच्छायाऽरुन्धतीध्रुवान्यतारकाणामदर्शनं मरणाय मासि द्वादशे।

चरकस्तु दृश्यादर्शनेऽदृश्यस्य दर्शने क्षिप्रं रिष्टमाह।

यश्च पश्यत्यदृश्यान् वै दृश्यान् यश्च न पश्यति।
तावुभौ पश्यतः क्षिप्रं यमक्षयमसंशयम्॥

मोक्षधर्मे तु।

योऽरुन्धतीं न पश्येत् तु दृष्टपूर्वां कदा चन।
तथैव ध्रुवमित्याहुः पूर्णेन्दुं दीपमेव च॥
खण्डभागं दक्षिणतस्तेऽपि संवत्सरायुषः।
दीपं ज्योतींषि दोसानि यश्चाग्निमिव पश्यति॥
चन्द्रं सूर्यमिवाचष्टे सूर्यं वा चन्द्रवर्चसम्।
स्वस्थः स लभते व्याधिं व्याधितो मृत्युमृच्छति॥

ज्योतींषीति ग्रहनक्षत्राणीत्यर्थः।

कालावल्यां तु अरुन्धतीध्रुवरोहिणीदेवपथादर्शने षाण्मासिकरिष्टमुक्तम्।

अरुन्धतीं ध्रुवं चैव रोहिणीं च महापथम्।
न पश्येदपि वाऽकस्मादात्मस्थं वाऽंशुकं ज्वलत्॥
यस्यैतल्लक्षणं तस्य षण्मासान्मरणं दिशेत्।

अंशुकं ज्वलदिति अदृश्याग्निज्वलदंशुकमित्यर्थः।

आदित्यपुराणे तु।

आकाशगङ्गामथ रोहिणीं च वसिष्ठभार्यां ध्रुवमध्यमं च।

भ्रुवोर्मध्ये देवपथं प्रपश्येत् पूर्णं चन्द्रं तारकां कृष्णवर्णाम् ॥
अदृश्यमानेन हुताशनेन स्याद्दग्धवस्त्रं त्वथ वा कथंचित् ।
षड्भिर्मासैस्तां प्रियां संप्रयाति कामीव नारीमभिसारिकां तु ॥

आकाशगङ्गामिति देवपथम् । मध्ये इति कर्मपदम् । दक्षिणभ्रूमध्यं वा ते चेन्न पश्येदित्यर्थः । पूर्णं चन्द्रमिति अपूर्णं पूर्णं पश्येदिति ।

तथा च वराहसंहितायाम् ।

संपूर्णं चाभिनवं दृष्ट्वैको जीविताद्भ्रस्येत्–इति ।

कालावल्याम् ।

सप्तर्षीन् ग्रहचक्रं च दिशश्चात्यन्तनिर्मलाः ।
स्वघ्राणरसने वाऽपि न पश्येन्म्रियते ध्रुवम् ॥

आदित्यपुराणे तु ।

ऋषीन् ग्रहान् ककुभः पांशुवर्णाः पश्यन् न पश्येद्रसनाननासः ।
षड्भिर्दिनैर्याति तनुं विहाय वाक्सायकैर्निहतः कामुके च ॥

मयूरचित्रे तु ।

अरुन्धतीं ध्रुवं चैव चन्द्रार्कौ च महापथम् ।
न पश्येद्यदि तत्रैषा शान्तिर्गर्गप्रचोदिता ॥
हेम्ना कृत्वा स्वकां मूर्त्तिं ब्राह्मणेभ्यो निवेदयेत् ।
ब्रह्मशान्तिं ततः कुर्याद्ब्रह्मयज्ञान्तमित्यथ ॥
मन्त्रेण जुहुयात् पञ्चसहस्राणि तथाऽष्ट च ।
औदुम्बरीश्च समिधश्चरुप्राशनमेव च ॥
ब्राह्मणाँस्तर्पयेत् तत्र हुतान्ते भूरिदक्षिणाम् ।

चरकः ।

प्रभावतः प्रभाहीना निष्प्रभा वा प्रभावतः ।
नरान् विलिङ्गान् पश्यन्ति भावाभावं जिहासवः ॥

विष्णुधर्मोत्तरे ।

सप्रमाणामथान्येषां प्रभां यस्तु न पश्यति ।

मास्येकादशमे तस्य मरणं परिकीर्त्तितम् ॥

पराशरस्तु ।

वह्निसूर्येन्दुप्रभाणामदर्शनमेकादशे ।

मरणायेति सम्बन्धः ।

देवलस्तु ।

अरश्मिवन्तमादित्यं रश्मिवन्तं च पावकम् ।
यः प्रपश्यन् न जीवेत् स मासादेकादशात् परम् ॥

रश्मिवन्तं च पावकमिति दिवा पश्येदिति सम्बन्धः । मार्कण्डेयपुराणलिङ्गपुराणयोरप्येवम् ।

कालावल्यां रश्मिहीनसूर्यदर्शने षाण्मासिकरिष्टमुक्तम् ।

पश्येद्रश्मिविनिर्मुक्तं सूर्यमिन्दुमलाञ्छनम् ।
तारामञ्जनकल्पां तु शुष्के वाऽप्योष्ठतालुके ॥
भूमिच्छिद्रं रविच्छिद्रमकस्माद्यः प्रपश्यति ।
यस्यैतल्लक्षणं तस्य षण्मासान्मरणं दिशेत् ॥

आदित्यपुराणे त्वेषामर्धमासिकरिष्टत्वमुक्तम् ।

भूम्यर्कयोश्छिद्रमतिप्रकाशं शशाङ्कमर्कं त्वथ शीतरश्मिम् ।
तदाऽर्धमासेन च तां प्रयाति पुनः प्रविष्टः कलहान्तरीयाम् ॥

अतिप्रकाशमिति सूर्यप्रकाशम् ।

मयूरचित्रे ।

चन्द्रमध्ये तु यश्छिद्रं पश्येन्मासं स जीवति ।
दक्षिणायां प्रभोर्मूर्त्तौ जुहुयाद्गौरसर्षपान् ॥

इत्यष्टमी शान्तिः ।

यद्वा धान्यानि दूर्वाश्च तिलान् हव्यान् यवाँस्तथा ।
अपामार्गं च शान्त्यर्थं महाव्याहृतिभिस्ततः ॥
दक्षिणा धेनुवस्त्राणि दातव्यानि द्विजातये ।

इति नवमी शान्तिः ।

नारदस्तु ।

आदित्यचन्द्रयोर्मध्ये छिद्रं पश्यति यो नरः ।
उत्पातमीदृशं दृष्ट्वा मासमेकं स जीवति ॥
इमा रुद्रेति मन्त्रेण जुहुयात् सर्पिषा हुतिम् ।
आहुती द्वे सहस्रे तु होमश्च कथितो भवेत् ॥
वृषभं दक्षिणां दद्यात् ततः संपद्यते शुभम् ।

मोक्षधर्मे तु चन्द्रसूर्ययोश्छिद्रदर्शने सप्ताहरिष्टत्वमुक्तम् ।

शीर्णनाभि तथाऽवक्रं छिद्रं सोमं प्रपश्यति ।
तथैव च सहस्रांशुं सप्तरात्रेण मृत्युभाक् ॥

शीर्णनाभिमिति मध्यशून्यमवक्रं पूर्णम् ।

षट्कणिकायां वराहः ।

एकश्चन्द्रविकारं यः पश्यति न स चिरं जीवेत् ।

बृहत्संहितायां च ।

शृङ्गेनैकेनेन्दुं विलीनमथ वाऽप्यवाङ्मुखमशृङ्गम् ।
सम्पूर्णं चाभिनवं दृष्ट्वा यो जीविताद्भ्रस्येत् ॥

गार्गीये ।

एकशृङ्गमशृङ्गं वा विशीर्णं पूर्णमेव च ।
प्रतिपद्युदितं चन्द्रं यः पश्यति स नश्यति ॥

प्रतिपच्चन्द्रोदयश्चन्द्राद्भुतावर्त्ते* उक्तः ।

चरकः ।

मृण्मयीमिव यः पात्रीं कृष्णाम्बरसमावृताम् ।
आदित्यमीक्षते श्वभ्रं चन्द्रं वा स न जीवति ॥
अपर्वणि यदा पश्येत् सूर्याचन्द्रमसोर्ग्रहम् ।
व्याधितोऽव्याधितो वाऽपि तदन्तं तस्य जीवितम् ॥

---

* द्रष्टव्याऽस्यैव ग्रन्थस्य ३३ पृ. ९ पं. ।

मार्कण्डेयपुराणे तु ।

शक्रायुधं वाऽर्धरात्रे दिवा वा ग्रहणं तथा ।
दृष्ट्वा मन्येत संक्षीणमात्मजीवितमात्मवित् ॥

देवलः ।

रात्रौ चेन्द्रायुधं पश्येद्दिवा नक्षत्रमण्डलम् ।
परनेत्रेषु चात्मानं न पश्येत् स न जीवति ॥

लिङ्गपुराणब्रह्माण्डपुराणयोरप्येवम् ।

कालावल्याम् ।

दिवोल्कापतनं पश्येन्नक्तं चेन्द्रधनुस्तथा ।
गम्यते तेन मासेन मृत्योर्वदनकोटरम् ॥

आदित्यपुराणे तु ।

उल्का दिवा चेन्द्रधनुर्निशायां विद्युल्लता व्योम्नि विना पयोदैः ।
मासि प्रपूर्णे स च संप्रयाति तां खण्डितां स्वां प्रकृतिं प्रयाति ॥

चरकः ।

मरीचीनसतो मेघान्मेघान् वाऽप्यसतोऽम्बरे ।
विद्युतो वा विना मेघान् यः पश्यति स नश्यति ॥

मयूरचित्रे तु ।

विना वातं विना मेघं तोयपाते जनक्षयः ।
मासत्रयस्य मध्ये च प्रभुर्दृष्ट्वा विनश्यति ॥
हव्यं सहस्रं तत्रैकः समिधो वेतसस्य च ।
कयानश्चित्रमन्त्रेण देया गौर्द्विजभोजनम् ॥

सुश्रुतः ।

विमानयानप्रासादैर्यश्च संकुलमम्बरम् ।
स्वस्थः स लभते व्याधिं व्याधितो मृत्युमृच्छति ॥

अतिपश्यतीति सम्बन्धः ।

मयूरचित्रे तु ।

छत्रध्वजविमानानि दृश्यन्ते गगने यदि ।

मासत्रयस्य मध्ये तु द्रष्टुर्मृत्युं समादिशेत् ।
क्षीरशान्तिस्तु कर्त्तव्या तया संपद्यते शुभम् ॥

आदित्यपुराणे तु ।

गन्धर्वाणां नगरं वृक्षसंस्थं निरीक्ष्य वाऽऽकस्मिकमंग्रसंस्थम् ।
मासैश्चतुर्भिरथ संप्रयाति रक्तैर्माल्यैः पुष्पवर्षैश्च युक्तम् ॥

कालावल्यां च ।

गन्धर्वनगरं पश्येद्वृक्षाग्रे यदि कुत्र चित् ।
दशमासावसाने च यमसद्मनि स व्रजेत् ॥

देवलस्तु ।

रुक्मशाखान् द्रुमान् दृष्ट्वा गन्धर्वनगराणि च ।
पश्येत् प्रेतपिशाचाँश्च दशमासान् स जीवति ॥

मार्कण्डेयपुराणे तु ।

दृष्ट्वा प्रेतपिशाचादीन् गन्धर्वनगराणि च ।
सुवर्णवर्णान् वृक्षान् वा नवमासान् स जीवति ॥

लिङ्गपुराणेऽप्येवम् ।

विष्णुधर्मोत्तरे तु ।

रक्षःप्रेतपिशाचानां यक्षाणामपि दर्शनात् ।
अतीन्द्रियाणामन्येषां नवमे मरणं भवेत् ॥

पराशरस्तु ।

रक्षोयक्षपिशाचानां स्वप्ने दर्शनमतीन्द्रियाणां मूर्त्तित्यागो नवमे ।

चरकस्तु ।

जाग्रन् पश्यति यः स्वप्नान् रक्षांसि विविधानि च ।
अन्यद्वाऽप्यद्भुतं कश्चिन्न स जीवितुमर्हति ॥

कालावल्याम् ।

दृश्येताकस्मिकः क्वापि पुरुषः कृष्णपिङ्गलः ।
यदि वाऽब्दत्रये नूनं मरणं परिकीर्त्तयेत् ॥

चरकः ।

घनीभूतमिवाकाशमाकाशमिव मेदिनीम् ।
विगीतमुभयं त्वेतत् पश्यन्मरणमृच्छति ॥

घनीभूतमिति कठिनतां यातम् । अथ वा घनीभूतं पृथिवीभूतम् । विगीतं विपरीतम् ।

विष्णुधर्मोत्तरज्योतिःपराशरयोस्तु ।

पृथिवीमिव चाकाशमाकाशमिव मेदिनीम् ।
आकशमिव चात्मानं पूर्णमिन्दुं तथाऽतिथौ ॥
तोयवन्मेदिनीं तोयं मेदिनीमिव पश्यति ।
अतीन्द्रियं निरीक्षेत न चेत् तं करसंस्थितम् ॥
शुक्लकृष्णविपर्यासं सूक्ष्मासूक्ष्मविपर्ययम् ।
विपर्यासं सदसतामीक्षते जीवितक्षये ॥

सुश्रुतः ।

धूमनीहारवासोभिरावृतामिव मेदिनीम् ।
प्रदीप्तमिव लोकं च यो वै प्लुतमिवाम्भसा ॥
भूमिमष्टापदाकारां लेखाभिर्यश्च पश्यति ।
यश्चानिलं मूर्त्तिमन्तमन्तरिक्षेऽभिपश्यति ॥
स्वस्थः स लभते व्याधिं व्याधितो मृत्युमृच्छति ।

चरकस्तु ।

यस्य दर्शनमायाति मारुतोऽम्बरगोचरः ।
अग्निर्नायाति वा दीप्तस्तस्यायुःक्षयमादिशेत् ॥
स वै जले सुविमले जलजाले विशेन्नरः ।
स्थिते गच्छति वा दृष्ट्वा जीवितात् परिमुच्यते ॥

स्थिते इति स्थिर इत्यर्थः ।

स एव ।

अग्निं प्रकृतिवर्णस्थं नीलं पश्यति निष्प्रभम् ।

कृष्णं वा यदि वा शुक्लं सोऽग्नौ वसति सप्तमीम् ॥

सप्तमीमिति सप्तमीं निशाम्।

आदित्यपुराणे।

स वायुगात्रं त्वथ कृष्णरक्तं त्वाकस्मिकं स्वं च पुराग्रसंस्थम्।
नराकृतिं वीक्ष्य त्रिभिस्तु वर्षैः सोत्कण्ठितो याति तनुं विहाय ॥

चरकः।

आह्वयन्तं समीपस्थं स्वजनं जनमेव वा।
महामोहावृतम्मन्यः पश्यन्नपि न पश्यति ॥

आदित्यपुराणे।

दिवोदकेनैव मुखं प्रपूर्य फूत्कृत्य तन्मध्यगतं न पश्येत्।
सुरेन्द्रचापं त्वथ वीक्षितं चेन्मासैश्चतुर्भिः किल संप्रयाति ॥

वीक्षितं पूर्वदृष्टम्।

कालावल्यां च।

प्रत्यर्कं वीक्ष्यते यस्तु विमेघेऽहनि यत्नतः।
आपूर्य वदनं तोयैः फूत्कृतं वीक्षते क्रमात् ॥
तन्मध्ये दृश्यते नूनं धनुरिन्द्रस्य शोभनम्।
तस्मिन्नदृश्यमाने तु षण्मासे मरणं भवेत् ॥

येन प्रत्यर्कं फूत्कृत्य जलकणौघमध्ये शक्रधनुः प्रत्यहं दृश्यते स यदा तन्न पश्यति तदा तस्य रिष्टं भवतीत्यर्थः।

लिङ्गपुराणब्रह्माण्डपुराणयोः।

दिवा वा यदि वा रात्रौ प्रत्यक्षे यो निहन्यते।
हन्तारं न स पश्येच्च स गतायुर्न जीवति ॥

मार्कण्डेयपुराणे त्वस्यैव स्वप्ताहरिष्टत्वमुक्तम्।

यश्चातिहन्यते भूतो दृष्ट्वा रात्रावथो दिवा।
स मृत्युं सप्तरात्रेण नरः प्राप्नोत्यसंशये ॥

कालावल्याम् ।

पश्येन्मेलापकं क्वापि हंसकाकशिखण्डिनाम् ।
गम्यते तेन मासेन मृत्योर्वदनकोटरम् ॥

आदित्यपुराणे ।

देशे क्व चिद्धंसमयूरकाकसङ्घातमुग्रं युगपद्रटन्तम् ।
मासि प्रपूर्णे स च संप्रयाति तां खण्डितां स्वां प्रकृतिं परां तु ॥

पश्येदिति सम्बन्धः ।

मयूरचित्रे ।

खरोष्ट्राश्वशृगालाश्च वृक्षस्योपरिसंस्थिताः ।
कथयन्ति तदा मृत्युं तत्र मासान्न संशयः ॥

कालावल्याम् ।

इन्द्रनीलनिभच्छाया मुक्ताफलविभूषिताः ।
शुक्लास्तस्या हि दृश्यन्ते यत्र गा व्योम्नि सन्निधौ ॥
तेषु वा दृश्यमानेषु षण्मासैर्मरणं दिशेत् ।

मार्कण्डेयपुराणे तु ।

स्ववस्त्रममलं शुक्लं रक्तं पश्येत् तथाऽसितम् ।
यः पुमान् मृत्युमापन्नं तस्यापि हि विनिर्दिशेत् ॥

कालावल्याम् ।

तत्राब्जं तु विजानीयात् षोडशच्छदमैन्दवम् ।
द्वादशारं भवेत् सौरमित्यागमगतिस्त्वियम् ॥
तत्र चत्वारि दृश्यानि दलान्यङ्गुलिपीडनात् ।
खद्योतद्युतिलावण्यभाजितावर्णयोरपि ॥
सोमाधो भ्रूलतापाङ्गप्राणान्तिकदले क्रमात् ।
विनष्टे निर्दिशेन्मृत्युं षड्भिर्युग्मैकमासतः ।

सोमाध इति वाम इत्यर्थः ।

एष एव हि जायेत क्रमः सूर्येऽपि पूर्वकः ।
दिग्बाणगुणचन्द्रेषु दिनेषु मरणं दिशेत् ॥
पद्मयोरुभयोर्मध्ये चत्वार्यैव दलानि यः ।
पश्येदापीड्यमानानि मृत्युं दिनशतैर्दिशेत् ॥

आदित्यपुराणे ।

वामेक्षणाधःस्थितचन्द्रिकां स न पश्यति स्वाङ्गुलिपीडनेन ।
तदा स मासैर्विगतैश्च षड्भिः प्रयाति नैवं सकलं विहाय ॥
भ्रूमार्गसंकोचनसंस्थितां च संपीडनान्नैव पश्येद्यदा ताम् ।
तदा त्रिभिर्मासगतैर्नरश्च छिद्रं तु मर्माणि जहाति तानि ॥
कर्णोपान्ते पीडयन्नानुपश्यन्मासद्वयेन प्रजहेत् स देहम् ।
घ्राणोपान्तं पीडयन्नानुपश्यन्मासेन देहं प्रजहाति तस्मात् ॥
नेत्रस्याधो दक्षिणस्याधःसंस्थां यदा कलां तां शशिनो न पश्येत् ।
तदा वर्षैश्चाष्टभिः स्वं च देहं जहेच्च नित्यं गतवाँश्च नित्यः ॥
नेत्राधःस्थां तां प्रपश्यन् स्वकान्ति तस्माद्वर्षैः पञ्चभिः संप्रयाति ।
कर्णोपान्ते तां न पश्यँस्त्रिभिश्च वर्षैरतीतैः प्रजहाति सर्वम् ॥
घ्राणोपान्ते तां न पश्यँश्चतुर्भिर्वर्षद्वयेनैव गतेन मृत्युम् ।
समं द्वयोर्नेत्रयोस्तां च पश्यन्मार्गाष्टकस्थां युगपत् कलां तु ॥
मासैस्त्रिभिर्दशभिर्वासरैश्च रन्ध्रं व्रजेद्वासकसंज्ञिकां ताम् ।

अथ श्रोत्रारिष्टम् ।

गीताध्ययनवाद्यानामकस्माच्छृणुयाद्ध्वनिम् ।
तं प्रवृत्तं न शृणुयाद्विपरीतं शृणोति च ॥
दिव्यध्वनिं वा शृणुयाच्छृणुयाद्वाऽपि भैरवम् ।
अयाचितामादिशति भिक्षां देहोत्यनुक्षयं ॥

सुतस्तु

शृणोति विविधान् शब्दान् यो दिव्यानसतो बहून् ।
समुद्रपुरमेघानामसम्पत्तौ च तत्स्वनात् ॥
तत्स्वनान् वा न गृह्णीते गृह्णीते वाऽन्यशब्दवत् ।
ग्राम्यारण्यस्वनाँश्चापि विपरीतान् शृणोत्यपि ॥
द्विषच्छब्देषु रमते सुहृच्छब्देषु कुप्यति ।
यश्चाकस्मान्नशृणोति तं ब्रुवन्ति गतायुषम् ॥

चरकः ।

अशब्दस्य च यः श्रोता शब्दोऽन्यश्च न बुध्यते ।
द्वावप्येतौ यथा प्रेतौ तथा ज्ञेयौ विजानता ॥

मार्कण्डेयपुराणे ।

पिधाय कर्णौ निर्घोषं न शृणोत्यात्मसम्भवम् ।
नश्यते चक्षुषो ज्योतिर्यस्य सोऽपि न जीवति ॥

पराशरः ।

श्रोत्रच्छिद्रयोरङ्गुल्यग्रावनद्धयोरन्तर्नादाश्रवणं सद्यो मरणाय ।

चरकस्तु ।

संवृत्याङ्गुलिभिः कर्णौ ज्वालाशब्दं य आतुरः ।
न शृणोति शुभं तत्र बुद्धिमान् परिवर्जयेत् ॥

कालावल्याम् ।

रत्यन्ते यदि वाऽकस्माद्घण्टानादोऽनुभूयते ।
येन तस्य विजानीयान्मरणं पाञ्चमासिकम् ॥

अथ घ्राणरिष्टं विष्णुधर्मोत्तरज्योतिःपराशरयोः ।

शोभनाशोभनघ्रेयग्रहणे तु विपर्ययः ।
सुरभीनामपां द्वेषो दुर्गन्धानामपीष्टता ॥
असृक्क्षयाय निर्दिष्टः प्रकृतेर्विकृतिर्यदि ।

चरकस्तु ।

विपर्ययेण यो विद्याद्गन्धानां साध्वसाधुताम् ।
न चेतू तान् सर्वशो विद्युस्तं विद्धि च गतायुषम् ॥

सुश्रुतस्तु ।

सुरभिं दूरभिं चेति दूरभिं सुरभिं तथा ।
यो वै गन्धं न गृह्णाति शान्तदीपे च मानवः ॥
स्वस्थः स लभते व्याधिं व्याधितो मृत्युमृच्छति ।

मोक्षधर्मे तु ।

पूतिगन्धमुपघ्राति सुरभिं प्राप्य यो नरः ।
देवतायतनस्थस्तु सप्तरात्रेण मृत्युभाक् ॥

देवलः ।

दीपगन्धं च नापैति विद्यान्मृत्युमुपस्थितम् ।

लिङ्गपुराणब्रह्माण्डपुराणयोरप्येवम् ।

मार्कण्डेयपुराणे तु ।

दीपादिगन्धं नो वेत्ति·········—इति विशेषः ।

विष्णुधर्मोत्तरे ।

निर्वाणाद्दीपगन्धं तु यस्तु नाघ्राति मानवः ।
सप्ताहेन तु धर्मज्ञाः पश्यन्त्यर्कसुतं ध्रुवम् ॥

पराशरः ।

निर्वाणाद्दीपगन्धस्याघ्राणे सप्ताहात्—इति ।

अथ जिह्वारिष्टं विष्णुधर्मोत्तरज्योतिःपराशरयोः ।

षण्णां रसानां पर्यासमिष्टानिष्टविपर्ययः ।
अभक्ष्यलौल्यमत्यर्थं मरणायोपजायते ॥

सुश्रुतः ।

विपरीतेन गृह्णाति रसान् यश्चोपयोजितान् ।
यो वै रसान् न संवेत्ति तं ब्रुवन्ति गतायुषम् ॥

अथ त्वगरिष्टं ज्योतिःपराशरविष्णुधर्मोत्तरयोः ।

श्लक्ष्णं खरं खरं श्लक्ष्णं शीतोष्णस्य विपर्ययम् ।
अकस्माद्वेत्ति यो देही दुर्लभं तस्य जीवितम् ॥

चरकस्तु ।

उष्णान् शीतान् खरान् श्लक्ष्णान् मृदूनपि सदारुणान् ।
स्पर्श्यान् स्पृष्ट्वा ततोऽत्यर्थं मुमूर्षुस्तेष्वमन्यत ॥

सुश्रुतस्तु ।

यस्तूष्णमिति गृह्णाति शीतमुष्णं च शीतवत् ।
संजातशीतपिटको यश्च दाहेन पीड्यते ॥
उष्णगात्रोऽतिमात्रं च यः शीतेन प्रवेपते ।
प्रहारं नाभिजानाति स गच्छेद्यमशासनम् ॥

कालावल्याम् ।

खरशीतोष्णरूक्षादिस्पर्शश्चापि विहन्यते ।
गम्यते तेन मासेन मृत्योर्वदनकोटरम् ॥

ज्योतिःपराशरविष्णुधर्मोत्तरयोः ।

स्पर्शदृष्टिरसघ्राणशब्दचेष्टाविपर्ययः ।
दृश्यते हि मुमूर्षाणां स्वस्थातुरशरीरिणाम् ॥

चरकस्तु ।

शब्दः स्पर्शो रसो गन्धो रूपं चेष्टा विचिन्तितम् ।
उत्पद्यन्ते शुभान्येव प्रतिकर्मप्रवृत्तिषु ॥
इत्येतानि मनुष्याणां भवन्ति विनशिष्यताम् ।

प्रतिकर्मप्रवृत्तिष्विति तदर्थसकलधर्मप्रवृत्तिष्वित्यर्थः ।

पराशरः ।

यो न वेत्तीन्द्रियग्राह्यं वेत्ति वाऽतीन्द्रियं नरः ।
तपोयोगादृते देही देहमन्यं प्रयात्यसौ ॥

चरकस्तु।

अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम्।
इन्द्रियैरधिकं पश्यन् पञ्चत्वमधिगच्छति॥

तथा।

स्वस्थः प्रज्ञाविपर्यासैरिन्द्रियार्थेषु वैकृतिः।
पश्यन्ति येषु बहुशस्तेषां मरणमादिशेत्॥

अथ केशाद्यरिष्टम्। तत्र चरकः।

प्रमुह्य च नखान् केशान् प्रतिगृह्णात्यतीव च।

तथा।

यस्य केशातिरिक्ताश्च दृश्यन्तेऽभ्यक्तसन्निभाः।
उपरुद्धायुषं ज्ञात्वा तं नरं परिवर्जयेत्॥
आयम्योत्पाटितान् केशान् यो नरो नानुबुध्यते।
अनातुरो वा रोगी वा षड्रात्रं नातिवर्त्तते॥

मोक्षधर्मे।

मूर्धतश्चोत्पतेद्धूमः सद्यो मृत्युनिदर्शकः।

लिङ्गपुराणे तु।

धूमं वा मस्तकात् पश्यन् दशाहं न स जीवति।

देवलस्तु।

मस्तके तु भवेद्धूमोऽर्धमासं न स जीवति।

पराशरस्तु।

जलार्द्रशिरसि धूमाभिदर्शनं सूर्यसंतप्तमस्तकस्यादर्शनमूष्मणो वा त्र्यहात्।

प्रबलतरधूमदर्शनपरमेतत्।

तथा च कालावल्याम्।

उपरिष्टाद्विसर्पन्ति पश्चाहं धूममालिकाम्।
ब्रह्मद्वारेण पश्येद्यस्तस्यायुस्त्रिसमावधि॥

बृहद्यात्रायां वराहः ।

छायाऽशिरस्का कचधूमनाशः खण्डं पदं देहजघोषहानिः ।
आहारशीलाकृतिवैकृतं च प्राप्तं कृतान्तं कथयन्ति तज्ज्ञाः ॥

चरकः ।

यस्य गोमयचूर्णाभं तूर्णं मूर्धनि जायते ।
सस्नेहं च भवेत् तत्र मासान्तं तस्य जीवितम् ॥

पराशरस्तु ।

गोमायुचूर्णतुल्यरजसोऽङ्गेभ्य उत्तमाङ्गात् प्रवर्त्तनं पञ्चमे ।

कालावल्याम् ।

कमारुह्य व्रजेद्वेगी कृकलासस्तु यस्य हि ।
वर्णत्रयं बिभर्त्त्याशु तन्नाशः पाञ्चमासिकः ॥

कं शिरः ।

आदित्यपुराणे तु ।

यदा तु पीतारुणकृष्णवर्णं ब्रह्मद्वारे कृकलासं प्रपश्येत् ।
तदा स वै तच्छरीरं जहाति बालं स्वनाथेन भयादरण्ये ॥

कृकलासप्रकरणे वसन्तराजः ।

पतत्यकस्मात् तु स यस्य मूर्ध्नि शिवाय तस्याद्भुतशान्तिरुक्ता ।

शान्तिः चतुष्पदवैकृते विहिता ।

पराशरः ।

काकस्येनगृध्रादीनां क्रव्यभुजां पक्षिणां वाऽकस्माच्छिरोऽभिलयनं षष्ठे ।

विष्णुधर्मोत्तरे तु ।

क्रव्यादाः पक्षिणो यस्य मूर्ध्नि लीयन्ति वै द्विजाः ।
काकस्येनादयस्तस्य षष्ठे मरणमादिशेत् ॥

देवलस्तु ।

काकः कपोतो गृध्रो वा निलीनो यस्य मूर्धनि ।
क्रव्यादाः पक्षिणश्चैव षण्मासान् न स जीवति ॥

मार्कण्डेयपुराणे ।

गृध्रः कपोतः काको वा वायसो वाऽऽपि मूर्धनि ।
क्रव्यादो वा खगो लीनः षण्मासं न निवर्त्तते ॥

चरकः ।

लेखाभिश्चन्द्रवक्राभिर्ललाटमुपलीयते ।
यस्य तस्यायुषः षड्भिर्मासैरन्तं समादिशेत् ॥
धमनीनामपूर्वाणां जालमत्यर्थशोभनम् ।
ललाटे दृश्यते यस्य षण्मासान् न स जीवति ॥
ललाटे वस्तिशीर्षे वा नीला यस्य प्रकाशते ।
राजी बालेन्दुकुटिला न सजीवितुमर्हति ॥

चरकः ।

भ्रुवोर्वा यदि वा मूर्ध्नि सीमन्तावर्त्तकान् बहून् ।
अपूर्वानकृताव्यक्तान् दृष्ट्वा मरणमादिशेत् ॥
त्र्यहमेते न जीवन्ति लक्षणेनान्तरा जनाः ।
अरोगाणां पुनस्त्वेतत् षड्रात्रं परमुच्यते ॥

चरकः ।

यस्य चेत् पक्ष्माणि जटाबद्धानि स्युः स परासुरिति विन्द्यात् ।

तथा ।

जटीभूतानि पक्ष्माणि दृष्टिश्चापि निगृह्यते ।
यस्य जन्तोर्न तं धीरो भेषजेनोपपादयेत् ॥
यस्य सूनानि वर्ष्माणि न समायान्ति शुष्यतः ।
चक्षुषी चोपदिह्येते यथा प्रेतस्तथैव सः ॥

सूनानि उच्छ्वसितानि । वर्ष्माणि नयनोपरिष्टानि न समायान्ति सम्यक् संपूर्यन्ते । उपदिह्येते उपचिते भवतः ।

विष्णुधर्मोत्तरे ।

अवघट्टनं नेत्रस्य विना रोगं यदा भवेत् ।

एकस्य यदि वा दृश्येत् स्थानभ्रंशो द्वितीयके ॥

द्वितीयके मासि मरणायेति सम्बन्धः ।

पराशरः ।

एकनयनश्रावो विना रोगमवघट्टनं स्थानभ्रशनं वा द्वितीयके ।

मोक्षधर्मे तु ।

अकस्माच्च स्रवेद्यस्य वाममक्षि नराधिप ।
मूर्धतश्चोत्पतेद्धूमः सद्यो मृत्युनिदर्शनम् ॥

पराशरस्तु ।

परिभ्रान्ते स्थिरे ध्वस्तेऽव्यक्तनिन्द्ये विलोचने ।
उत्फुल्ले वर्त्मनो मूर्त्तदृष्टिर्देवोऽऽर्धदृष्टिके ॥
विवर्णश्यामहरिते निमेषरहिते प्लुते ।
निम्ने निमेषबहुले नेत्रे स्यातामसुक्षये ॥

चरकस्तु ।

तस्य चेच्चक्षुषी प्रकृतिहीने विमुक्ते अत्युत्पिण्डिते अतिप्रविष्टे अतिजिह्मे अतिविषमे अतिविमुक्तबन्धने । अतिप्रस्तुतोन्मिषिते सततनिमेषिते निमेषितोन्मेषातिप्रवृत्ते विपरीतदृष्टिके व्यस्तदृष्टिके । नकुलार्थे कपोतार्थे अलाभवर्णे कृष्णनीलश्यामघनाप्रहरणनिद्रामुक्तानां वैकारिकाणां वर्णानामन्यतमेनाभिसंप्लुते वा स्यातां परासुरिति विन्द्यात् ।

विमुक्ते इति विगतियुक्ते । अत्युत्पिण्डिते अत्यन्तनिर्गते । अतिजिह्मे अतिकुटिले । अतिविषमे इति एकं संवृत्तमपरं विस्तृतम् । विपरीतदृष्टिके इति केकरदृष्टिके । अथ वाऽन्यथा ग्राहिणी व्यस्तदृष्टिके इति विस्तृतिदृष्टिमण्डले । नकुलार्थे इति दिवा शुक्लरूपदर्शनी । कपोतार्थे इति दिवा कृष्णरूपदर्शिनी ।

तथा च तयोर्लक्षणम् ।

नकुलार्थस्तु रूपाणि दिवा शुक्लानि पश्यति ।
कपोतार्थस्तु रूपाणि दिवा कृष्णानि पश्यति ॥

अलाभवर्णे इति तप्ताङ्गारवर्णे ।

आदित्यपुराणे ।

सश्वेततारश्च दिने प्रयाति रक्तेक्षणः सन्ध्ययोश्चापि जीवः ।
निशागमे नीलतारः प्रयाति कामीव वा वर्जितलोलनेत्रः ॥

सुश्रुतः ।

यस्य दृष्टिमण्डले भिन्नविकृतीनि रूपाण्यालोक्यन्ते तस्य मरणाय—इत्यनुवर्त्तते ।

देवलः ।

नासा च वक्रा भवति स ज्ञेयो गतजीवितः ।

लिङ्गपुराणब्रह्माण्डपुराणयोरप्येवम् ।

पराशरस्तु ।

वक्रविकृतनासादर्शनं मासान्ते ।

मरणायेति सम्बन्धः ।

विष्णुधर्मोत्तरे ।

मासेन विकृता नासा वक्रा च मरणप्रदा ।
नासाभङ्गेन धर्मज्ञ द्व्यहान्मरणमादिशेत् ॥

चरकः ।

गायतो नासिकावंशः पृथुत्वं यस्य गच्छति ।
असूनः सूनसंकाशः प्रत्याख्येयो विजानता ॥

मार्कण्डेयपुराणे ।

नासिका वक्रतामेति कर्णयोर्नमनोन्नती ।
नेत्रं च वामं स्रवति स ज्ञेयो गतजीवितः ॥

लिङ्गपुराणे तु ।

नेत्रमेकं स्रवेद्यस्य कर्णौ स्थानाच्च भ्रश्यतः ।
नासा वक्रा च भवति स ज्ञेयो गतजीवितः ॥

ब्रह्माण्डपुराणेऽप्येवम् ।

कालावल्याम् ।

नेत्रे च वर्त्तुलीभूते कर्णौ भ्रष्टौ स्वदेशतः ।

वक्रा नासा भवेद्यस्य सप्तरात्रं स जीवति ॥

आदित्यपुराणेऽप्येवम् ।

मोक्षधर्मे तु ।

कर्णनासाधरसमं दन्तदृष्टिविरागिता ।

संज्ञालोपो निरूष्मत्वं सद्यो मृत्युनिदर्शनम् ॥

देवलः ।

गण्डयोः पिटके रक्ते तस्य मृत्युरुपस्थितः ।

लिङ्गपुराणेऽप्येवम् ।

ब्रह्माण्डपुराणे तु ।

गण्डे च पिटका रक्तास्तस्य मृत्युरुपस्थितः ।

पराशरश्च ।

गण्डयोश्च रक्ततिलकानामुत्पत्तिरहोरात्रात् ।

विष्णुधर्मोत्तरे तु ।

गण्डयोस्तिलकान् रक्तान् वर्णवैकृत्यमेव च ।

अहोरात्रेण मरणं पुरुषस्य समादिशेत् ॥

चरकः ।

यस्य नीलावुभावोष्ठौ पक्वजाम्बवरसंनिभौ ।

मुमूर्षुरिति तं विन्द्यान्नरं धीरो गतायुषम्–इति ॥

पराशरः ।

अकस्मात् पुष्पिता रूक्षा दग्धा स्थिरदृशाश्चलाः ।

सूक्ष्मस्थूलविपर्यस्था विरलाः सहितास्तथा ॥

अतिह्रस्वातिदीर्घा वा नताः शर्करिणोऽसिताः ।

प्रकृत्या विकृता दन्ता दृश्यन्ते जीवितक्षये ॥

चरकस्तु ।

अस्थिश्वेता द्विजा यस्य पुष्पिताः पङ्कसंवृताः ।

विकृतासन्नरोगं तु विहायारोग्यमश्नुते ॥

तथा च।

दन्ताः प्रतिकीर्णाः श्वेताः जायन्ते शर्करा वा स्युः परासुरिति विन्द्यात्।

तथाऽतिश्वेतना गुर्वी कटकोपचिता भृशम्।
श्यामा सूनाऽथ वा शुष्का प्रेतजिह्वा प्रसर्पिणी॥
अत्यर्थविनता यस्य यस्य चात्यर्थसंवृता।
जिह्वा वा परिशुष्का वा नासिका न स जीवति॥
व्यावृत्तमूर्धजिह्वाक्षौ भ्रुवौ यस्य च विच्युते।
कण्टकैश्चाचिता जिह्वा यथा प्रेतस्तथैव सः॥

तथा।

मुखं चूर्णसमं तस्य लिङ्गं सद्यो मरिष्यतः।

तथा।

नीलं वा यदि वा श्यामं ताम्रं वा यदि वारुणम्।
मुखार्धे चान्यथा वर्णो मुखार्धे रिष्टमुच्यते॥
स्नेहो मुखार्धे सुव्यक्ते रौक्षमर्धमुखे भृशम्।
ग्लानिरर्धे तथा हर्षो मुखार्धे प्रेतलक्षणम्॥
तिलकाः पिप्लवो व्यङ्गा राजयश्च पृथग्विधाः।
आतुरस्याशु जायन्ते मुखे प्राणान्मुमुक्षतः॥

मार्कण्डेयपुराणे।

आरक्ततामेति मुखं जिह्वा श्यामा सिता यदा।
तदा प्राज्ञो विजानीयान्मृत्युमात्मानमादिशेत्॥

लिङ्गपुराणे तु।

यस्य कृष्णा खरा जिह्वा पद्माभासं च वै मुखम्।
गण्डे च पिटके रक्ते तस्य मृत्युरुपस्थितः॥

ब्रह्माण्डपुराणेऽप्येवम्।

चरकस्तु ।

मुखशब्दश्चवावोष्ठौ शुक्लस्यावातिलोहितौ ।
विकृत्या यस्य चानीलौ न स रोगाद्विमुच्यते ॥

कालावल्यां तु ।

कालाक्षयोर्मुखं चूर्णं सक्थ्योर्मुक्तमांसता ।
संत्रासश्चोष्णता वंशे यस्य तं परिवर्जयेत् ॥

कालावल्यां तु ।

कृष्णपद्मोपमं वक्त्रं रसना कज्जलच्छविः ।
ईदृशं लक्षणं ज्ञात्वा मासार्धं जीव्यते ध्रुवम् ॥

आदित्यपुराणे ।

पश्येच्च रक्तोत्पलकान्ति वक्त्रं नानावर्णस्त्वथ वा कृष्णजिह्वः
तदाऽर्धमासेन च तां प्रयाति पुनः प्रहृष्टः कलहान्तरीयाम् ॥

देवलस्तु ।

यस्य कृष्णौ करौ जिह्वा पद्माभासं च वै मुखम् ।
गण्डे च पिटका रक्ताः स जीवेच्चतुरो दिनान् ॥

चरकः ।

शुष्कत्वादास्यकण्ठस्य पेयं पातुं न पारयेत् ।
उरसश्च विशुष्कत्वाद्यो नरो न स जीवति ॥

आदित्यपुराणे तु ।

सस्विन्नहृत्कम्पिततालुमन्दस्खलद्द्विजिह्वश्च यदा महात्मा ।
तदाऽर्धमासेन च तां प्रयाति पुनः प्रहृष्टः कलहान्तरीयाम् ॥

कालावल्याम् ।

गात्रेऽप्यनेकशो वर्णा हृदयं वाऽपि रोदिति ।
तालुकण्ठौष्ठनाभिश्च हिक्का वाऽकस्मिकी यदा ॥
ईदृशं लक्षणं ज्ञात्वा मासार्धं जीव्यते ध्रुवम् ।

चरकः ।

तस्य चेन्मध्ये परिदृश्यमाने स्पन्देयातां परासुरिति विन्द्यात्

देवलः ।

यस्य वै भुक्तमात्रस्य हृदयं पीडयते क्षुधा ।
जायते दन्तहर्षश्च तं गतायुषमादिशेत् ॥

मार्कण्डेयपुराणे तु ।

यस्य वै स्नानमात्रस्य हृदयं पीडयते भृशम् ।
जायते दन्तहर्षश्च तं गतायुषमादिशेत् ॥

मार्कण्डेयपुराणेऽप्येवम् ।

लिङ्गपुराणे तु ।

यस्य वै स्नानमात्रस्य हृत्पादमवशुष्यति ।
पिबतश्च जलं शोषो दशाहं सोऽपि जीवति ॥

पराशरः ।

सद्यः स्नानानुलिप्तस्य हृत्पाणिपादाशुशोषणं त्र्यहात् ।

विष्णुधर्मोत्तरे ।

सद्यः स्नानानुलिप्तस्य हृत्पादशिरसां भवेत् ।
क्षिप्रं संशोषणं तस्य त्र्यहान्मरणमादिशेत् ॥

लिङ्गपुराणब्रह्माण्डपुराणयोरप्येवम् ।

देवलस्तु ।

यस्य वै स्नानमात्रस्य उरः पादौ च शुष्यतः ।
मस्तके वा भवेद्धूमोऽर्द्धमासं न स जीवति ॥

चरकस्तु ।

यस्य स्नानानुलिप्तस्य पूर्वं शुष्यत्युरो भृशम् ।
आर्द्रेषु सर्वगात्रेषु मासार्धं न स जीवति ॥

कालावल्यां तु ।

स्नानमात्रस्य यदपि हृत्पादौ शुष्यतः क्षणात् ।
मासद्वये गते तस्य गमनं यमसद्मनि ॥

मयूरचित्रे ।

हृदये मस्तके चापि कृशा दीप्तिर्विभाति च ।

मृत्युं तस्य विजानीयादर्वाग्मासद्वये ध्रुवम् ॥

चरकः ।

तस्य चेदुदरे शीर्षे शिरः प्रभाषेरन् श्यामताम्रहरिद्रानीलशुष्काश्च स्युः परासुरिति विन्द्यात् ।

मार्कण्डेयपुराणे ।

ऊर्ध्वं च दृष्टिर्न च संप्रतिष्ठिता रक्ता पुनः संपरिवर्त्तमाना ।
मुखस्य चोष्मा शुषिरं च नाभेः शंसन्ति पुंसामपरं शरीरम् ॥

लिङ्गपुराणे ।

ऊर्ध्वं च दृष्टिर्न च संप्रतिष्ठिता रक्ताः पुनः संपरिवर्त्तमानाः ।
मुखस्य सोष्मा शुषिरा च नाभिरत्युष्णमूत्रो विषमस्य एषः ॥

ब्रह्माण्डपुराणेऽप्येवम् ।

चरकश्च ।

शेफश्चात्यन्त्यमुत्सिक्तं निःसृतौ वृषणौ भृशम् ।
ततश्चैव विपर्यासौ विकृत्या प्रेतलक्षणम् ॥

कालावल्यां तु ।

गच्छतश्च ततः पश्चान्निर्गमाद्बाहुजङ्घयोः ।
ब्रह्मसूत्रविनाशो वा नाशस्तस्यैकवासरः ॥

आदित्यपुराणे ।

निर्गच्छेद्वा वेश्मनो बाहुजङ्घाकपाटभङ्गे युगपद्गते च ।
तस्मिन् दिने सनिःशेषं प्रलीने सोत्कण्ठितां तामनुसंप्रयाति ॥

चरकः ।

घटयन् जानुना जानु पादावुद्यन् प्रपातयन् ।
यो यास्यति मुहुर्वक्त्रमातुरो न स जीवति ॥
हस्तौ पादौ धमन्यौ च तालु चैवातिशीतलम् ।
भवत्यायुःक्षये क्रूरमथ वा तु भवेन्मृदु ॥
हस्तपादं मुखं चोभे विशेषाद्यस्य शुष्यतः ।

श्रूयते वा विना देहं स च मासाद्विनश्यति ॥

कालावल्याम् ।

स्वहस्तपादयोरेव वामदक्षिणयोरपि ।
अनामिकोत्तरदेशे आव्रणे कृष्णयोस्तदा ॥
दृष्टयोर्जीव्यते त्वष्टादशाहानि न संशयः ।

आदित्यपुराणे ।

पूर्णां तथा पादयोः कृष्णरेखां दिश्युत्तरस्यां समुपस्थितां च ।
अनामिकोर्ध्वे नखपर्वणी च प्रयाति चाष्टादशभिर्दिनैश्च ॥

चरकः ।

अथास्याङ्गुलिरागच्छेत् तस्य चेदङ्गुलय आयामा न स्फुटेयुः परासुरिति विन्द्यात् ।

तथा ।

तस्य चेन्नखा वीतमांसशोणिताः पक्कजाम्बुवर्णा वा स्युः परासुरिति विन्द्यात् ।

तथा ।

पुष्पाणि नखदन्तेषु पङ्को वा दन्तसंश्रितः ।
चूर्णकश्चोष्णदन्तेषु लक्षणं मरणस्य तत् ॥
ओष्ठयोः पादयोः पाण्योरक्ष्णोर्मूत्रपुरीषयोः ।
नखेष्वपि च वैवर्ण्यमेतत् क्षीणबलेऽन्तकृत् ॥
निकषन्ति च यः पादौ च्युतांशः परिधावति ।
विकृत्या नरलोकेऽस्मिँश्चिरं वसति मानवः ॥
अयोगमभियोगं वा शरीरे मतिमान् भिषक् ।
खादीनां युपदृदृष्ट्वा भेषजं न विचारयेत् ॥
दन्तै श्छिद्रनखाग्राणि नखैश्छिन्दन् शिरोरुहान् ।
भूमिं काष्ठेन विलिखन् न रोगात् परिमुच्यते ॥

मुहुर्हसन् मुहुः क्ष्वेडन् शयनं हन्ति यः सदा।
मुहुश्छिद्राणि विमृशेद्यो नरो न स जीवति॥

आदित्यपुराणे।

खण्डं स्वपादौ च निरीक्ष्य भूमौ मासैश्चतुर्भिस्त्वथ संप्रयाति।

मार्कण्डेयपुराणे।

खण्डं यस्य पदे पार्ष्ण्यां पदस्याग्रेऽथ वा भवेत्।
पांशुकर्दमयोर्मध्ये सप्त मासान् स जीवति॥

देवलस्तु।

पांशौ वा कर्दमे वाऽपि यस्य खण्डं पदं भवेत्।
अग्रतः पृष्ठतो वाऽपि सप्त मासान् स जीवति॥

लिङ्गपुराणब्रह्माण्डपुराणयोरप्येवम्।

पराशरस्तु।

सिकतापांशुकर्दमेषु विकृतासकलपादाङ्कदर्शनं वा सप्तमे।

मयूरचित्रे।

वालुकापांशुमध्ये च पदं दत्वा न पश्यति।
मृत्युं तस्य विजानीयात् सप्तमासान्तरेण तु॥

विष्णुधर्मोत्तरे।

पदं वा सकलं यस्य खण्डं विकृतमेव वा।
पांशुकर्दमयोर्दृश्येत् सप्तमे मासि मृत्युभाक्॥

चरकः।

तस्य चेत् परिदृश्यमानं पृथक्त्वेन पादजङ्घोरुस्फिगुदरपार्ष्णिपृष्ठे मुष्टिकापार्ष्णग्रीवाताल्वोष्ठजिह्वाललाटं स्विन्नं शीतं गुरु दारुणं वीतमांसशोणितं वा स्यात् परासुरयं पुरुषो विकलं विन्द्यात्। तथाऽस्य चेत् परिमृष्यमाणानि पादगुल्फजानुवंक्षणगुदगलवृषणमेढ्रनाभ्यंसस्तनमणिकहनुनासिकाकर्णाक्षिभ्रूशङ्खादीनि ग्रस्तानि व्यस्तानि व्यक्तानि च्युतानि वा स्थानेभ्यः स्युः परासुरयं पुरुषो न

चिरात् कालं मरिष्यतीति विन्द्यात् ।

तथा ।

निचितं यस्य मांसं स्यात् त्वगस्थिष्वेव दृश्यते ।
क्षीणं स्यान्न शुभं तस्य मासमायुः परं भवेत् ॥
ह्रस्वं च यः प्रश्वसिति त्वविद्धं स्पन्दते च यः ।
मृतमेव तमात्रेयो व्याचचक्षे पुनर्वसुः ॥
दीर्घं च यः प्रश्वसिति श्लेष्मणा चाभिभूयते ।
हीनवर्णबलाहारो यो नरो न स जीवति ॥
दूर्वाग्रे* नयने यस्य मन्ये चानतकम्पने ।
बलहीनः पिपासार्त्तः शुष्कास्यो न स जीवति ॥

मार्कण्डेयपुराणे ।

संभिन्नो मारुतो यस्य मर्मस्थानानि कृन्तति ।
न हृष्यतेऽम्बुस्पर्शाच्च तस्य मृत्युरुपस्थितः ॥

लिङ्गपुराणब्रह्माण्डपुराणयोरप्येवम् ।

देवलस्तु ।

मारुतो यस्य गात्रेषु मर्मस्थानानि कृन्तति ।
जीवेत् त्र्यहं तु स नरो न संदेहस्तथा भवेत् ॥
अद्भिः स्पृष्टो न हृष्येत नाहनी द्वे स जीवति ।

चरकः ।

रसन्ति बलमङ्गानि चेष्टा व्युपरमन्ति वा ।
वैरस्यं भजते कायः कायच्छिद्रं विशुष्यति ॥
इत्येतानि मनुष्याणां भवन्ति विनशिष्यताम् ।
शरीरकम्पः संमोहो गतिर्वचनमेव च ॥
मर्त्तस्य चोपलभ्यन्ते यस्य मासं स जीवति ।

* ऊर्ध्वगे इति अ, पु, पा, ।

देवलः ।

अकस्माद्यो भवेत् स्थूलो योऽकस्माद्वा भवेत् कृशः ।
प्रकृतिर्विकृतिश्चैव अष्टमासान् स जीवति ॥

मार्कण्डेयपुराणे ।

स्थूलः कृशः कृशः स्थूलो योऽकस्मादेव जायते ।
प्रकृतेश्च निवर्त्तेद्यस्तस्यायुश्चाष्टमासिकम् ॥

लिङ्गपुराणब्रह्माण्डपुराणयोरप्येवम् ।

विष्णुधर्मोत्तरे ।

दौर्बल्यं जायते यस्य बहुसम्पन्नभोजिनः ।
अनश्ने तस्य पीनत्वमष्टमे स्यात् स मृत्यभाक् ॥

पराशरस्तु ।

बहुसम्पन्नभुजो वाऽकस्माद्बलोपचयहानिरशुभो वाऽतिवृद्धिरष्टमे ।

कालावल्याम् ।

स्थूलश्चाकस्मिको जायेताथ वाऽऽकस्मिकः कृशः ।
अतिक्रुद्धोऽतिभीतश्च वर्षमेकं स जीवति ॥

आदिपुराणे* चैवम् ।

चरकस्तु ।

समस्तगुणसम्पन्नमन्नमश्नाति यो नरः ।
शश्वच्च बलवर्णाभ्यां हीयते न स जीवति ॥

पराशरः ।

कृष्णपुरुषवर्णप्रादुर्भावमात्रोऽहोरात्रात् ।

कालावल्यां तु ।

गात्रेऽप्यनेकशो वर्णान् हृदयं वाऽपि रोदिति ।
ईदृशं लक्षणं ज्ञात्वा मासार्धं जीव्यते ध्रुवम् ॥

---

* बहुत्र 'आदित्यपुराणे' इत्युपलभ्यते ।

चरकस्तु

यस्य वैकारिको वर्णः शरीरे तूपलभ्यते ।
अर्धे वा यदि वा कृत्स्ने निमित्तं न च नास्ति सः ॥

तथा ।

प्रकृतिवर्णमर्धशरीरे विकृतिवर्णमर्धशरीरे द्वावपि वर्णौ मर्यादाविभक्तौ दृष्ट्वा यद्येवं सव्यदक्षिणभागेन यद्येवं पूर्वपश्चिमविभागेन यद्युत्तराधरविभागेन यद्यन्तर्बहिर्विभागेनान्तरिष्टमिति विन्द्यात् ।

वर्णभेदेन ग्लानिहर्षरौक्ष्यस्नेहा व्याख्याता इति । पूर्वपश्चिमविभागेनेति अभिमुखपृष्ठविभागेनेत्यर्थः । अन्तर्विभागेनेति । अत्रान्तर्गतो वर्णो मुखनासाकर्णादिश्रोत्रान्तर्गतो बोद्धव्यः ।

चरकः ।

यो रसः प्रकृतिस्थानां नराणां देहसम्भवः ।
स एषां चरमे काले विकारं भजते द्वयम् ॥
कश्चिदेवास्य वैरस्यमत्यर्थमुपपद्यते ।
स्वादुत्वमपरश्चापि विपुलं भजते पुनः ॥
तमप्यनेन न्यायेन विद्याद्विकृतितां गतम् ।
मनुष्यो हि मनुष्यस्य कथं रसमवाप्नुयात् ॥
मक्षिकाश्चैव यूकाश्च दंशाश्च मशकैः सह ।
विरसादपसर्पन्ते जन्तोः कायान्मुमूर्षतः ॥
अत्यर्थरसिकं कायं कालपक्कस्य मक्षिकाः ।
अपि स्नातानुलिप्तस्य भृशमायन्ति सर्वशः ॥

तथा ।

सिप्रायन्ते च गात्राणि लिङ्गं सद्यो मरिष्यतः ।

सिप्रायन्ते घर्मायन्त इति ।

विष्णुधर्मोत्तरे ।

अर्धमासेन दुर्गन्धप्रभवस्य शरीरतः ।

मार्कण्डेयपुराणे च ।

यस्य वस्तसमो गन्धो गात्रे शवसमोऽपि वा ।
तस्यार्धमासिकं ज्ञेयं योगिनो नृप जीवितम् ॥

वस्तसमश्छागसम इत्यर्थः ।

लिङ्गपुराणेऽप्येवम् ।

पराशरस्तु ।

अर्धमासाच्छवशोणितकुणपविण्मूत्रामनोज्ञगन्धप्रवर्त्तनहेतुकं गात्रेभ्यः—इति ।

कुणपः पिशाचादिः ।

देवलः ।

शवगन्धो भवेद्यस्य द्वादशाहं स जीवति ।

कालावल्यां तु ।

शवगन्धो भवेद्यस्य तिस्रो रात्रीः स जीवति ।

आदिपुराणे तु ।

उत्खातरोमाश्चविरक्तदेहो निर्घर्षदन्तो विकृताननश्च ।
एभिर्दिनैः शावगन्धं प्रयाति परां च तां मण्डलां संप्रकर्त्तुम् ॥

सुश्रुतस्तु ।

पक्वमत्स्य*वशातैलघृतगन्धाश्च ये नराः ।
मद्यगन्धाश्च ये यान्ति गतास्ते यमसद्मनि ॥

चरकस्तु ।

नानापुष्पोपमा गन्धा यस्य चाभिदिवानिशम् ।
पुष्पितस्य वनस्येव नानाद्रुमलतावतः ॥
तमाहुः पुष्पितं धीरा नरं मरणलक्षणैः ।
स चैवं वत्सराद्देहं जहातीति न संशयः ॥

---

* पङ्कमत्स्य-इति क्वचित् पाठः ।

एवमेकैकशः पुष्पैर्यस्य गन्धसमो भवेत् ।
इष्टैर्वा यदि वाऽनिष्टैः स च पुष्पित उच्यते ॥
स मासेनाशुभान् गन्धानेकैकस्याथ वा पुनः ।
आजिघ्रेद्यस्य गात्रेषु तं विन्द्यान् पुष्पितं भिषक् ॥
आप्लुतानाप्लुते काये यस्य गन्धाः शुभाशुभाः ।
व्यत्यासेनानिमित्ताः स्युः स च पुष्पित उच्यते ॥
तद्यथा चन्दनं कुष्टं तगरागुरुणी मधु ।
माल्यमूत्रपुरीषे च मृतानि कुणपस्य च ॥
ये चान्ये विविधात्मानो गन्धा विविधयोनयः ।
तेऽप्यनेनानुमानेन विज्ञेया विकृतिं गताः ॥
इदं चाप्यतिदेशार्थं लक्षणं गन्धसंश्रयम् ।
वक्ष्यामि यदभिज्ञाय भिषग्मरणमादिशेत् ॥
वियोनिर्वित्वरो गन्धो यस्य गात्रेषु जायते ।
इष्टो वा यदि वाऽनिष्टो न स जीवति तां समाम् ।

वित्वरः स्थायीत्यर्थः ।

पराशरस्तु ।

सुरभिर्वाऽप्यसुरभिर्यस्य गन्धः प्रवर्त्तते ।
अस्वस्थः स्वस्थदेहः स्याद्दृष्टं तज्जीवितान्तकृत् ॥

सुश्रुतस्तु ।

पांशुनेवावकीर्णानि यश्च गात्राणि मन्यते ।
वर्णान्यता वा रूक्षो वा यस्य गात्रे भवन्ति च ॥
स्नातानुलिप्तं यच्चापि भजन्ते नीलमक्षिकाः ।
सुगन्धिर्वाति वाऽकस्मात् तं ब्रुवन्ति गतायुषम् ॥

आदिपुराणे ।

अर्धं शीतं त्वथ देहार्धमुष्णं सर्वं त्वकस्मादथ वा प्रतप्तम् ।
कुर्वन् दिनैः सप्तभिः संप्रयाति स्वाधीनेष्टां तां प्रियां कामुकेन ॥

कालावल्यां च ।

उष्णं यस्य भवेदर्धं शरीरं चार्धशीतलम् ।
तस्य सप्तमरात्रौ तु मृत्युरित्यागमोदितः ॥
यस्य चाकस्मिकी ज्वाला ज्वलन्ती जायते तनौ ।
स याति सप्तदिवसे मृत्योर्वदनकोटरे ॥

चरकस्तु ।

भृशं दाहाभिभूतस्य क्रोशतो भृशशीतलम् ।
यस्याङ्गमुपलभ्येत यथा प्रेतस्तथैव सः ॥

तथा ।

एको वा यदि वाऽनेको यस्य वैकारिकः स्वरः ।
सहसोत्पद्यते जन्तोर्हीयमानस्य नास्ति सः ॥

पराशरस्तु ।

स्वरः प्रकृत्या विकृतो विस्वरोऽतिस्वरः कृशः ।
अजैडकानुकारी वा पक्षिणो वाऽप्यसुक्षये ।

चरकः ।

अपस्वरं भाषमाणं प्राप्तं मरणमात्मनः ।
श्रोतारं चापशब्दस्य दूरतः परिवर्जयेत् ॥
यस्यान्यदपि किंचित् स्याद्वैकृतं स्वरवर्णयोः ।
बलमांसविहीनस्य तत् सर्वं मरणोदयम् ॥

तथा ।

वर्णस्वरावग्निबलं वागिन्द्रियमनोबलम् ।
हीयेतायुःक्षये नित्या निद्रा भवति मानवे ॥

पराशरविष्णुधर्मोत्तरयोः।

अतिदीर्घोऽतिह्रस्वो वा भृशमुष्णोऽतिशीतलः।
उच्छ्वासः प्राणसंत्यागे गतासूनां प्रजायते॥

चरकस्तु।

दीर्घमुच्छ्वस्य यो ह्रस्वं नरो निःश्वस्य ताम्यति।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्जयेत्॥

चरकस्तु।

संस्थानेन प्रमाणेन वर्णेन प्रभयाऽपि वा।
छाया विवर्त्तते यस्य स्वप्नेऽपि प्रेत एव सः॥
संस्थानमाकृतिर्ज्ञेया सुषमा विषमा च या।
मध्यमल्पं महच्चोक्तं प्रमाणं त्रिविधं नृणाम्॥
प्रतिप्रमाणसंस्थानां जलादर्शातपादिषु।
छाया या सा प्रतिछाया छाया वर्णप्रभाश्रया॥
खादीनां पञ्चपञ्चानां छाया विविधलक्षणा।
नाभसी निर्मला नीला सस्नेहा निर्मलेव च॥
रूक्षा श्यावाऽरुणा या च वायवी सा हतप्रभा।
विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया॥
शुद्धवैदूर्यविमला सुस्निग्धा चाऽम्भसी मता।
स्थिरा स्निग्धा घना श्लक्ष्णा श्यामा श्वेता च पार्थिवी॥
वायवी गर्हिता तासां चतस्रः स्युः शुभोदयाः।
वायवी तु विनाशाय क्लेशाय महतेऽपि वा॥
स्यात् तैजसी प्रभा सर्वा सा तु सप्तविधा स्मृता।
रक्ता पीता सिता श्यामा हरिता पाण्डुराऽसिता॥
तासां याः स्युर्विकाशिन्यः स्निग्धाश्च विमलाश्च याः।

ताः शुभा रूक्षमलिनाः संक्षिप्ताश्च शुभोदयाः ॥
वर्णमाक्रामति छाया भाति वर्णप्रकाशिनी ।
आसन्ना लक्ष्यते छाया भा प्रकृष्टा प्रकाशते ॥
ना छायोनोऽप्रभः कश्चिद्विशेषाच्चिह्नयन्ति च ।
नृणां शुभाशुभोत्पत्तिं कालच्छायाः प्रभाश्रयाः ॥

कालावल्याम् ।

सायं चोषसि रात्रौ वा ज्योत्स्नावत्यां प्रयत्नतः ।
बाहू वितत्य चात्मीयां छायामालोक्य सर्वतः ॥
शनैरुत्तोलिते नेत्रे स्वच्छाया दृश्यतेऽम्बरे ।
न दृश्यते यदा तत्र शिरो मरणमादिशेत् ॥
पूर्ववच्च यदा बाहुर्दक्षिणो न विभाव्यते ।
भ्रातृनाशं विजानीयाद्वामो वाऽथ न दृश्यते ॥
बाहुस्ततो न संदिग्धं कलत्रसुतनाशकः ।

आदिपुराणे च ।

सूर्योदये वाऽस्तमने निशायां चन्द्रस्य ज्योत्स्नामथ चोत्थितस्तु
स्वात्मछायां बाहुदण्डौ प्रसार्य दृष्ट्वा कबन्धं प्रजहाति देहम् ।
पश्यँश्च तां दक्षिणबाहुहीनां विसर्जयेद्भ्रातरमग्रभूतम् ।
पश्यँश्च तां वामभुजोच्छ्रितां च पुत्राँश्च दाराँश्च विसर्जयेच्च ॥

कालावल्याम् ।

ईषत्प्रविततौ बाहू जानूपरि निवेश्य च ।
एकीकृत्य च बाहूर्ध्वं दिदृक्षुस्तु करो भवन् ॥
रम्भाकोशनिभां छायां लक्षयेत् प्रत्यहं नरः ।
यदा त्वेकदलं तत्र विकाशि परिलक्षयेत् ॥
तस्यामेव तदा नूनं पूर्ववत् परिकल्पयेत् ।

पूर्ववदिति षण्मासान्मरणमित्यर्थः ।

आदिपुराणे ।

कृत्वा कराभ्यां मुकुटं ललाटे त्वरं निधायाथ च जानुपूर्वे ।
सुवर्त्तुलां तां च निरीक्ष्य भूयो विशेत् स्वदेहं समरान्निवृत्तः ॥
विशीर्णपर्णामथ तां च दृष्ट्वा षड्भिर्मासैस्तां सदेहां जहाति ।
यथैव हंसो वक्रतुण्डघातैर्विकीर्णपत्रां नलिनीं विरूपाम् ॥

मार्कण्डेयपुराणे तु ।

स्वां छायामथ वा दृष्ट्वा चतुर्मासान् स जीवति ।

पराशरस्तु ।

स्वच्छायाविकृतदर्शनं पञ्चमे मासि मरणाय-इति सम्बन्धः ।

महाभारते मोक्षधर्मे ।

"परचक्षुषि चात्मानं ये न पश्यन्ति पार्थिव ।
आत्मच्छायाकृतीभूतं तेऽपि संवत्सरायुषः"* ॥

यस्य नेत्रे बहुभिः स्वदेहो न दृश्यते तस्यैव रिष्टं भवति ।

तथा च रिष्टप्रकरणे हारीतः ।

आदर्शतलसंकाशे नेत्रे नष्टकुमारिका ।

चरकस्तु ।

दृष्ट्वा यस्य हि जानीयादात्मरूपां कुमारिकाम् ।
प्रतिच्छायामयीमक्ष्णोर्नैनमिच्छेच्चिकित्सितुम् ॥

भागवते कंसारिष्टदर्शने ।

"अदर्शनं स्वशिरसः प्रतिरूपेषु सत्स्वपि"† ।

पराशरस्तु ।

निर्मलेऽम्बुन्यादर्शे चात्मदेहादर्शनं स्वशिरश्च सद्यो मरणाय ।

मार्कण्डेयपुराणे तु ।

घृते तैले तथाऽऽदर्शे तोये वा नात्मनस्तनुम् ।

---

* शान्तिपर्वणि ३१७ अ. १०, ११ श्लो. ।

† श्रीमद्भागवते १० स्कन्धे पूर्वार्धे ४० अ. २६ श्लो. ।

यः पश्येदशिरस्कां वा मासादूर्ध्वं न जीवति ॥

आदिपुराणे ।

पश्यन्नपश्यञ्जलदर्पणेषु वक्त्रं तथा स्पर्शनस्वेदनं च ।
मासि प्रपूर्णे स च संप्रयाति लोकोत्तरं तत्र किमत्र चित्रम्*॥

लिङ्गपुराणे ।

अप्सु वा यदि वाऽऽदर्शे यद्यात्मानं न पश्यति ।
अशिरस्कं तथाऽऽत्मानं मासादूर्ध्वं न जीवति ॥

देवलस्तु ।

अप्सु वा यदि वाऽऽदर्शे छायां पश्यति नात्मनः ।
छायां वा विकृतां पश्यन्मासमेकं स जीवति ॥

मयूरचित्रे ।

छायामशिरसं यश्च पश्येन्मासं स जीवति ।
शान्तिर्दिव्या चतुर्थीह कर्त्तव्याऽतियशस्विनी ॥
स्वच्छायां च न पश्येद्यः षण्मासान्न स जीवति ।
शान्तिरेकादशी कार्या तत्र दिव्यप्रचोदिता ॥

नारदस्तु ।

आत्मनश्चाशिरश्छायां नैव पश्येत् तु कर्हिचित् ।
उत्पातमीदृशं दृष्ट्वा मासमेकं स जीवति ॥
इमा रुद्रेति मन्त्रेण जुहुयात् सर्पिषाहुतिम् ।
आहुतिर्द्वे सहस्रे तु होमश्च कथितो भवेत् ॥
वृषभं दक्षिणां दद्यात् ततः संपद्यते शुभम् ।

चरकः ।

अवाक्शिरा वाऽजिह्वा वा यस्य वा विशिरा भवेत् ।
जन्तो रूपगतच्छायां नैनमिच्छेच्चिकित्सितुम् ॥

* 'तां खण्डितां स्वां प्रकृतिं परां तु'-इति ग. पुस्तके पाठः ।

विष्णुधर्मोत्तरे ।

जले न पश्येच्च मुखं निर्मले दर्पणे तथा ।
पश्येन्न पुरुषश्छायां सद्यो मरणमादिशेत् ॥

सुश्रुतस्तु

ज्योत्स्नादर्शोष्णुतोयेषु यश्च च्छायां न पश्यति ।
पश्यत्येकाङ्गहानां वा विकृतां वाऽन्यसत्त्वजाम् ॥
श्वकाककङ्कगृध्राणां प्रेतानां यक्षरक्षसाम् ।
पिशाचोरगनागानां भूतानां विकृतामपि ॥
स्वस्थः स लभते व्याधिं व्याधितो मृत्युमृच्छति ।

कालावल्याम् ।

स्वच्छायां दक्षिणे दृष्ट्वा तदैव मरणं दिशेत् ।

आदिपुराणे तु ।

सूर्योदये वाऽस्तमने च काले मध्याह्नकाले त्वथ दक्षिणस्याम् ।
देहच्छायां वीक्ष्य तनुं जहाति तस्मिन् दिनान्ते स्त्रियमेव दुष्टाम् ॥

चरकः ।

छिन्नाऽछिन्नाऽकुला छाया हीना वाऽप्यधिकाऽपि वा ।
नष्टतन्वी द्विधा छिन्ना विशरा विस्तृता च या ॥
एताश्चान्याश्च याः काश्चित् प्रतिच्छाया विगर्हिताः ।
सर्वा मुमूर्षुतां ज्ञेया न चेल्लक्ष्मनिमित्तजाः ॥

महाभारते मोक्षधर्मे ।

"कृष्णश्यावच्छविच्छायः षण्मासान्मृत्युलक्षणम्"* ।

सुश्रुतस्तु ।

श्यामा लोहितका नीला पीतिका वाऽपि देहिनाम् ।
अभिद्रवति यं छाया स परासुरसंशयम् ॥

---

* शान्तिपर्वणि ३१७ अ, १३ श्लो. ।

मार्कण्डेयपुराणे ।

हन्यते काकपङ्क्तीभिः पांशुवर्षेण वा पुनः ।
स्वां छायां विकृतां पश्येच्चतुष्पञ्च स जीवति ॥

चरकः ।

मुण्डज्योतिरनेकाग्रो दुश्छायो दुर्मनाः सदा ।
रतिं न लभते याता* परलोकं समान्तरे ॥
दुर्बलो बहुभुक्तो यः प्राग्भुक्त्वाऽन्नमनातुरः ।
अल्पमूत्रपुरीषश्च यथा प्रेतस्तथैव सः ॥

सुश्रुतः ।

मूत्रपुरीषवृद्धिरभुञ्जानानां मरणाय—इति सम्बन्धः ।

मूत्रादिकमरिष्टं स्वप्नाद्भुतावर्त्ते† लिखितम् ।

चरकः ।

निष्ठ्यूते यस्य दृश्यन्ते वर्णा बहुविधाः पृथक् ।
यश्च सीदत्यपः प्राप्य न स जीवतुमर्हति ॥

कालावल्याम् ।

क्षुच्छकृन्मदमूत्राणि युगपत् सम्भवन्ति चेत् ।
तस्यामेव तिथौ तस्य वर्षेण मरणं भवेत् ॥

आदिपुराणेऽप्येवम् ।

चरकः ।

निष्ठ्यूतं च पुरीषं च रेतश्चाम्भसि मज्जति ।
यस्य तस्यायुषः प्राप्तमन्तमाहुर्मनीषिणः ॥

लिङ्गपुराणब्रह्माण्डपुराणयोः ।

सूर्योदये प्रत्युषसि प्रत्यक्षं यस्य वै शिवा ।
क्रोशन्त्यभिमुखाऽभ्येति स गतायुर्भवेन्नरः ॥

देवलश्चैवम् ।

---

* यास्यतीति ।

† द्रष्टव्याऽस्यैव ग्रन्थस्य ५०६ पृ. ४ पं. ।

मार्कण्डेयपुराणे तु ।

सूर्योदये यस्य शिवा क्रोशन्ती याति संमुखम् ।
विपरीतरवा घोरा स सद्यो मृत्युमृच्छति ॥

बार्हस्पत्ये तु ।

मृगः पशुर्वा पक्षी वा वाशेद्यः संमुखे स्थितः ।
यस्य चोत्थापनं कुर्यात् स मनुष्यो विनश्यति ॥

अत्र मृगपक्षिवैकृतविहिता शान्तिः कर्त्तव्या ।

मयूरचित्रे ।

शिरोदभ्रमुरोमात्रं कपोतो गृध्रवायसौ ।
निराशाश्चेद्ब्रुवन्त्येते गच्छतः पुरुषस्य तु ॥
अचिरेणैव कालेन श्मशानमधिगच्छति ।
ते च भाण्डे चरुं कृत्वा वारुण्या होम इष्यते ॥

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-ऽद्भुतसागरे कायरिष्टाद्भुतावर्त्तः ।

---

## अथ दन्तजन्माद्भुतावर्त्तः ।

विष्णुधर्मोत्तरे ।

उपरि प्रथमं यस्य जायन्ते च शिशोर्द्विजाः ।
दन्तैर्वा सह यस्य स्याज्जन्म भार्गवसत्तम ॥
मातरं पितरं वाऽपि खादेदात्मानमेव च ।
तत्र शान्तिं प्रवक्ष्यामि तन्मे निगदतः शृणु ॥
गजपृष्ठगतं बालं नौस्थं वा तारयेद्द्विजः ।
तदभावे तु धर्मज्ञ काञ्चने वा [illegible] ॥

सर्वौषधैः सर्वगन्धैर्बीजैः पुष्पैः फलैस्तथा ।
पञ्चगव्येन रत्नैश्च मृत्तिकाभिश्च भार्गव ॥
स्थालीपाकेन धातारं पूजयेत् तदनन्तरम् ।
सप्ताहं चात्र कर्त्तव्यं तथा ब्राह्मणभोजनम् ॥
अष्टमेऽहनि विप्राणां तथा देया च दक्षिणा ।
काञ्चनं रजतं गावं भुवं चात्मानमेव च ॥

बृहस्पतिः ।

बालानामष्टमे मासि षष्ठे वाऽपि ततः पुनः ।
दन्ता यस्य विजायन्ते माता वा म्रियते पिता ॥
बालकः पीड्यते तत्र स्वयमेव न संशयः ।
दधिमधुघृताक्तानामश्वत्थसमिधां ततः ॥
जुहुयादष्टशतं प्राज्ञः स्वमन्त्रेण तु मन्त्रवित् ।
धेनुं च दक्षिणां दद्यात् ततः संपद्यते शुभम् ॥

नारदः ।

बालानामष्टमे मासि दशमेऽपि तथा पुनः ।
दन्ता यस्य विजायन्ते माता वा म्रियते पिता ॥
बालकः पीड्यते तत्र स्वयमेव न संशयः ।
दधिमधुघृताक्तानामश्वत्थसमिधां ततः ॥
जुहुयादष्टशतं प्राज्ञः स्वमन्त्रेण तु मन्त्रवित् ।
धेनुं च दक्षिणां दद्यात् ततः संपद्यते शुभम् ॥
दन्तजन्मनि सामान्यं शृणु स्नानमतः परम् ।
भद्रासने निवेश्यैनं मृद्भिर्मूलैः फलैस्तथा ॥
सर्वौषधैः सर्वबीजैः सर्वगन्धैस्तथैव च ।
स्नापयेत् पूजयेच्चात्र वह्निं सोमं समीरणम् ॥

पर्वतांश्च तथा ख्यातान् देवं चैव तु केशवम् ।
एतेषामेव जुहुयाद्घृतमग्नौ यथाविधि ॥
ब्राह्मणानां तु दातव्या ततः शक्त्या तु दक्षिणा ।
ततः स्वलङ्कृतं बालमासनेषूपवेशयेत् ॥
भाजनच्छन्नमूर्धानं बीजैस्तैः स्नापयेत् पुनः ।
सुस्विन्नैर्बालकाना च तैश्च कार्यं तु पूजनम् ॥
पूज्याश्च विविधा नार्यो ब्राह्मणाः सुहृदस्तथा ।

सदन्तजन्मशान्ति प्रसवाद्भुतावर्त्तेऽपि वक्ष्यामः ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे दन्तजन्माद्भुतावर्त्तः ।

---

## प्रसवाद्भुतावर्त्तः ।

वराहसंहितायाम् ।

प्रसवविकारे स्त्रीणां द्वित्रिचतुष्प्रभृति संप्रसूतौ च ।
हीनातिरिक्तकाले च देशकुलसंक्षयो भवति ॥

वृद्धगर्गसंहिताबार्हस्पत्ययोस्तु ।

अकालप्रसवा नार्यः कालातीतप्रजास्तथा ।
बन्ध्यार्धयुग्मप्रसवा द्वियुग्मप्रसवास्तथा ॥
अमानुषाणां मुण्डानि संजातव्यञ्जनानि च ।
अधिकाङ्गान्यनङ्गानि न्यूनाङ्गान्यथ वा पुनः ॥
चतुष्पात्पक्षिसदृशान् प्रसूयन्ते यदि स्त्रियः ।
विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् ॥
अप्राप्तवयसो गर्भा द्विचतुष्पात् स्त्रियोऽपि वा ।
विन्यस्तं विकृतं वाऽपि प्रजायन्ते भयाय तत् ॥

औशनसे ।

चतुरस्कं द्विशीर्षं च गात्रैरभ्यधिकं तथा ।
एकचक्षुरचक्षुर्वा दशनैः पलितैस्तथा ॥
व्यञ्जनैश्चैव संपन्नं मानुषी यत्र सूयते ।
द्विसंवत्सरपर्यन्ते राजा तत्र विनश्यति ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोस्तु ।

अकालप्रसवा नार्यः कालातीतप्रजास्तथा ।
विकृतप्रसवाश्चैव युग्मप्रसवनास्तथा ॥
अमानुषा अमुण्डाश्च संजातव्यञ्जनास्तथा ।
हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा स्त्रियः ॥
पशवः पक्षिणश्चैव तथैव च सरीसृपाः ।
"विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत्"* ॥

पराशरस्तु ।

स्त्रीणामब्दद्वयं गर्भधारणं त्रिचतुर्विकृतपक्षिपशुनागजननं वा कुलदेशविनाशाय ।

औशनसे ।

मानुषी जनयेद्यत्र त्रिशीर्षान् विविधान् पशून् ।
षण्मासोर्ध्वं भयं तीव्रं तत्र तूत्पद्यते महत् ॥
परचक्रागमं चैव निर्दिशेदिह शास्त्रवित् ।
संग्रामश्चात्र विपुलो जायते विकृतात्मकः ॥
सर्पं वा पक्षिणं वाऽपि जनयेद्यत्र मानुषी ।
प्रवासस्तस्य देशस्य सप्तमासात् परं भवेत् ॥

बृहद्यात्रायां वराहः ।

देहनाशो यदा स्त्रीणां खगाहिपशुसम्भवः ।

---

* मत्स्यपुराणे २३५ अ, १-३ श्लो, ।

औशनसे तु ।

उष्ट्रं वा या प्रसूयेत वानरं वाऽपि मानुषी ।
अन्यद्वा जनयेत् किञ्चित् स्थावरं वाऽपि किञ्चन ॥
रोगेण शस्त्रपातेन दुर्भिक्षेण च पीडितः ।
स देशो व्यथते शीघ्रं राजा तत्र विनश्यति ॥
अमानुषं मानुषी च मानुषं वाऽप्यमानुषी ।
प्रसूयते प्रजानीयात् परचक्रागमं ध्रुवम् ॥
चतुरस्कं द्विशीर्षं वा गात्रैर्न्यूनाधिकैस्तथा ।
व्यञ्जनैश्चोपसम्पन्नं मानुषी या प्रसूयते ॥
द्विसंवत्सरपर्यन्ताद्राजा तत्र विनश्यति ।
उष्ट्रो गजो वा अश्वो वा मृगो वा यत्र जायते ॥
पक्षैर्मासाच्च भवति राज्ञः शस्त्रभयं महत् ।
परचक्रसमुत्थं वा स देशो भयमृच्छति ॥
योनिव्यतिकरं यत्र कुर्युरेवंविधं स्त्रियः ।
गौर्वा प्रसूयतेऽन्यानि तत्र राजा विनश्यति ॥
वसन्ति येषु देशेषु तेषु विद्यान्महद्भयम् ।
नारी खरवृषोष्ट्रांश्च शुनः सूकरगर्दभान् ॥
राक्षसान् वा पिशाचान् वा यदाऽप्येवं प्रसूयते ।
व्यापद्यन्ते च धान्यानि शस्यानि च धनानि च ॥
चतुर्विधं भयं घोरं क्षिप्रमेव प्रवर्त्तते ।
बध्यते हि प्रधानस्तु सार्धमासाष्टके तथा ॥
व्याधिश्च तेषु देशेषु त्रीणि वर्षाणि निर्दिशेत् ।

भीष्मपर्वणि कुरुक्षयनिमित्तम् ।

"गर्भिण्यो राजपुत्राँश्च जनयन्ति विभीषणान्"* ।

"त्रिपदाः शिखिनस्ताक्ष्यांश्चतुर्दंष्ट्रा विषाणिनः ॥

तथैवान्यानि दृश्यन्ते स्त्रियो वै ब्रह्मवादिनाम् ।

वैनतेयान् मयूराँश्च जनयन्ति पुरे तव"† ॥

औशनसे ।

गौरश्वं वडवा गावो यस्मिन् देशे प्रसूयते ।

अभ्यन्तरेण वर्षात् तु राज्ञो मरणमादिशेत् ॥

मौशले वृष्णिक्षयनिमित्तम् ।

"व्यजायन्त खरा गोषु करभाऽश्वतरीषु च ।

शुनीषु विडालाश्च मूषिका नकुलीषु च"‡ ॥

औशनसे ।

अश्वा किशोरं जनयेत् शृङ्गिणं यत्र तत्र तु ।

आदिशेन्मरणं राज्ञस्तद्वर्षाभ्यन्तरेण तु ॥

भीष्मपर्वणि कुरुक्षयनिमित्तम् ।

"गोवत्सं वडवा सूते श्वा शृगालं महीपते ।

कुकुरान् करभाँश्चैव शुकाँश्च शुभवादिनः"§ ॥

"त्रिविषाणाश्चतुर्नेत्राः पञ्चशीर्षा द्विमेहनाः ।

द्विशीर्षाश्च द्विपुच्छाश्च दंष्ट्रिणः पशवोऽशिवाः ॥

जायन्ते विकृतास्याश्च व्याहरन्तोऽशिवा गिरः"¶ ।

वृद्धगर्गसंहिताबार्हस्पत्ययोः ।

जङ्गमं स्थावरे जायेत् स्थावरं जङ्गमे तथा ।

अस्मिन् जन्मविपर्यासे परचक्रागमं वदेत् ॥

---

* ३ अ. २ श्लो. । † ३ अ. ४-५ श्लो. । ‡ २ अ. ९ श्लो. ।
§ ३ अ. ६ श्लो. । ¶ ३ अ. ३-४ श्लो.

पराशरश्च ।

गजाश्वयमलप्रसवे तत्स्वामिविनाशं विन्द्यात् ।

वृद्धगर्गसंहिताबार्हस्पत्यविष्णुधर्मोत्तरेषु ।

वडवा हस्तिनी गौर्वा यदि युग्मं प्रसूयते ।
विजातिं विकृतं वाऽपि षण्मासैर्म्रियते नृपः ॥

भीष्मपर्वणि कुरुक्षयनिमित्तम् ।

"स्त्रियः काश्चित् प्रजायन्ते चतस्रः पञ्च कन्यकाः ।
जातमात्राश्च नृत्यन्ति गायन्ति च हसन्ति च"* ॥

वराहसंहितायां तु ।

वडवोष्ट्रगोमहिषहस्तिनीषु यमलोद्भवे मरणमासाम् ।
षण्मासान् सूतिफलं शान्तौ श्लोकौ च गर्गोक्तौ ॥
नार्यः परस्य विषये त्यक्तव्यास्तु हितार्थिना ।
तर्पयेच्च द्विजान् कामैः शान्तिं चैवात्र कारयेत् ॥
चतुष्पदाः स्वयूथेभ्यस्त्यक्तव्याः परभूमिषु ।
नगरं स्वामिनं यूथमन्यथा तु विनाशयेत् ॥

पराशरः ।

फलं तद्दुष्टगर्भाणां मातृगर्भविवासनात् ।
यस्मात् तस्मात् स्वविषये क्षितिं तत्र न धारयेत् ॥

औशनसे ।

विशन्ति येषु तान्याशु त्यक्तव्यानि शुभार्थिना ।
तस्मादेतानि सत्त्वानि राजा शीघ्रं प्रवासयेत् ॥

वृद्धगर्गसंहिताबार्हस्पत्ययोः ।

परभूमिषु तान्याशु त्यक्तव्यानि शुभार्थिना ।
शान्तयश्चापि कर्त्तव्या ब्राह्मणैर्वेदपारगैः ॥

---

* ३ अ, ७ श्लो. ।

मत्स्यपुराणविष्णुपुराणयोः ।

"वित्रासयेत् तां नृपतिः स्वराष्ट्रात् स्त्रियश्च पूज्याश्च ततो द्विजेन्द्राः ।
किमिच्छकैर्ब्राह्मणतर्पणं च लोके ततः शान्तिमुपैति पापम्"* ॥

तथा ।

शान्तिः प्रसववैकृत्ये प्राजापत्या विधीयते ।

आथर्वणाद्भुते तु ।

विकृतं पशुजातं जीवन्तं पशुपतये निवेद्य रौद्रगणैराज्यं जुहुयाद्धुताग्निश्चेत् स्नापयित्वा स्रग्गन्धधूपैरलङ्कृत्य घृतेनाभ्युक्ष्याग्निं प्रज्वाल्य सकृद्धुत्वा महाशान्तिं कुर्यात् ।

तत्र श्लोकः ।

अपत्यभेदो विविधैकशीर्षे एकद्विशीर्षे भवति द्विरास्यम् ।
अपादहस्ते म्रियते त्वमात्यो जाते कबन्धे नृपतिर्विनश्येत्-इति ॥

मयूरचित्रे तु ।

यत्र गर्भे विपर्यासो मानुषीणां गवामपि ।
अद्भुतानि प्रसूयन्ते तत्र देशस्य विद्रवः ॥
अत्रापि दिव्यजा शान्तिः कार्या पञ्चदशी बुधैः ।
मानुषामानुषाणां च गोजाश्वमृगपक्षिणाम् ॥
जायन्ते जातिभिन्नाश्च सदन्ता विकृतास्तथा ।
बहुशीर्षा अशीर्षा वा बहुकर्णा अकर्णकाः ॥
एकशृङ्गास्त्रिशृङ्गाश्च तथैव च चतुर्भुजाः ।
दीर्घकर्णा महाकर्णा गजकर्णाश्च मानवाः ॥
श्वापदव्याघ्रमार्जारहरिणा रूपधारिणाः ।
जायन्ते पुरुषा यत्र तत्र संग्राममादिशेत् ॥
राजश्रेष्ठवधो नाशो धनस्य च कुलस्य च ।

* मत्स्यपुराणे २३५ अ. ४ श्लो. ।

यमला यत्र जायन्ते नारीणां गजवाजिनाम् ॥
हस्त्यश्वकपिवक्त्राश्च कूष्माण्डाकृतयस्तथा।
ब्रह्मशान्तिं ततः कुर्यादत्र ब्रह्मेति वायुना ॥
अष्टोत्तरसहस्राणि पञ्चैव जुहुयाद्बुधः।
समिधां तु पलाशस्य तर्पयेत् पूर्ववद्द्विजान् ॥
दासीदाससमायुक्तं गोधान्यफलसंयुतम्।
दद्याद्विप्राय तद्गेहं हुतान्ते भूरिदक्षिणाम् ॥
फलपाकोद्भवश्चास्य मासाभ्यन्तरमात्रतः।
तथा चाष्टोत्तरं विद्वान् सहस्रं जुहुयाच्छुचिः ॥
खदिराश्वत्थसमिधो विरूपाक्षेण मन्त्रतः।
दद्याच्च कपिलां धेनुं हुतान्ते कनकं तथा ॥

अथर्वमुनिः।

मास्यष्टमे स्त्रीप्रसव उत्पातो भौम उच्यते।
स्ववारे पूजयेद्भौमं दध्याज्यमधुसंयुतम् ॥
जुहुयान्मृत्युसूक्ताभ्यां मधूकसमिधोऽयुतम्।
काञ्चनं वृषभं वस्त्रं दद्याद्विप्राय दक्षिणाम् ॥
अचिराज्जायते जन्तुर्द्वित्र्यनेकशिरास्तथा।
सूर्याद्भुतं विजानीयात् पूजयित्वा दिवाकरम् ॥
दध्याज्यमधुसंयुक्ताः समिधस्त्वर्कसम्भवाः।
यद्राजानं प्रभृतिभिर्जुहुयाद्घृतमेव च ॥
धेनुं सुवर्णं वस्त्रं च दद्याद्धोमे च दक्षिणाम्।
सर्वदोषाः प्रशाम्यन्ति ततः संपद्यते शुभम् ॥
नारी जनयते सर्पान् मण्डूकांश्चाप्यमानुषान्।

बृहस्पत्यद्भुतमिदं तद्वारे तं प्रपूजयेत् ॥
उदुम्बरस्य समिधो दधिसर्पियुताः शुभाः ।
आहुतिसूक्तेन शुचिर्जुहुयान्नियमस्थितः ॥
वस्त्रं सुवर्णं धेनुं च दद्याद्विप्राय दक्षिणाम् ।
स्त्रीगर्भपातो महिषी मानुषी गौरथापि वा ॥
यमलानि प्रसूयेत सिंहादित्येऽथ वाऽपि गौः ।
महिष्यां शुक्लवत्साश्च जायन्ते अतिवर्णिकाः ॥
सदन्ताश्चैव जायन्ते जातमात्रा हसन्ति च ।
बुधाद्भुतं विजानीयात् स्ववारे तं प्रपूजयेत् ॥
दर्शोऽस्य दर्शोति वटसमिद्धोमादि पूर्ववत् ।
वसुध्वजं सुवर्णं च दद्याद्विप्राय दक्षिणाम् ॥

वैजवापः ।

स्त्रिया गोर्वडवाया वा यमलं यदि जायते ।
दद्याद्यमलजननीं मारुतीं शान्तिमाचरेत् ॥
धेन्वा यमजनन्यैव निष्क्रीणीयात् तु तां स्त्रियम् ।

अग्निहोत्रप्रकरणे ।

स एव स्त्रीगोवडवायमलजनेन मारुतं सप्तकपालं यमजननीं दद्यात् । धेन्वा सरूपवत्सया पत्नीं निष्क्रीणीयात् ।

मयूरचित्रे ।

घोटिका हस्तिनी चैव महिषी यमलं यदि ।
प्रसूते भूपतेर्नाशः संग्रामश्च महान् भवेत् ॥
कारयेल्लक्षहोमं च बहुदानं च कारयेत् ।
भोजनं ब्राह्मणायाथ दद्याद्गां चैव दक्षिणाम् ॥
महिष्या यमलोत्पत्तौ कन्यकानां च जन्मनि ।

दन्तवैकृतिजामैन्द्रीं शान्तिं यद्वा प्रयोजयेत् ॥
स्त्रियो वा यदि वा गावः सूत्वा न सुवते पुनः ।
विद्वानुत्पातनाशाय वायव्यं साधयेच्चरुम् ॥

वायवे स्वाहा वायुरिदं शमयतु स्वाहा वाचस्पते महिमानम्-इति हुत्वा रजतकाञ्चनं दद्यात् ।

वायव्यस्तत्र तत्रोक्तः स एव ख्यापितश्चरुः ।

एतत् फलं गर्भाधानोक्तमिथुनजन्मकोषस्थयमलजन्मत्रितयजन्मकोषस्थबहुतरज-न्मद्विगुणमुखहस्ताङ्घ्रिजन्मकबन्धजन्माबाहुजन्मैकनेत्रजन्मानेत्रजन्महीनाङ्गजन्मसर्पादि-जन्मयोगजातव्यतिकरेण बोद्धव्यम् । आधानकालाज्ञाने तु जन्मकालात् प्रश्नकालाद्वा मिथुनजन्मादियोगा अवगन्तव्याः ।

तथा च वराहः ।

..................जन्मन्याधाने प्रश्नकाले च ।

आथर्वणाद्भुते ।

अथ योगत्रिसदृशश्चतुर्थोऽनुजः स्यात् स कुमारोऽनायुष्यः पुमान् स्त्री वा तत्र कारयेद्रोहिण्यामुत्तरासु जन्मनक्षत्रे वा 'योऽस्मिन् यस्त्वाम्'-इति ऋचाऽऽश्वत्थीः समिधोऽभ्यादध्यादहतेन वसनेन कुमारं समातापितृकं प्रच्छाद्यालभ्य व्रीहीयवानां स्थालीपाकं जुहुयात् । 'कामस्तत्कालोऽश्वः प्राणाय नमः' 'सहस्रबाहुर्जीवास्तु यथा द्यौश्च । 'कयानश्चित्र आभुवद्'-इति तिस्रः । एताभिरेव स्थालीपाकशेषचरुं कुमारं मातापितरौ च प्राशयेत्-इति ।

नारदः ।

कृष्णा गौः कपिलो वत्सः कपिला कृष्ण एव च ।
उभये विप्रवर्याय दातव्ये तत्क्षणात् पुनः ॥
ततो होमं प्रकुर्वीत शान्त्यर्थं तु तिलेन वै ।
नमस्ते रुद्र-मन्त्रेण दक्षिणां तु प्रदापयेत् ॥

यथावित्तानुसारेण ततः शान्तिर्भवेद्द्विज ।
स्नानं कृत्वा शुचिर्भूत्वा जपित्वा मन्त्रमेव च ॥
येन मन्त्रेण होतव्यं तन्मन्त्रं च तथा जपेत् ।
शतावर्त्तेन मन्त्रेण पत्रं वा श्रीफलस्य तु ॥
जुहुयात् सशिवार्थं तु एवं रक्षा कृता भवेत् ।
अष्टोत्तरशतं चैव गायत्र्या जप उत्तमः ॥
आत्मशुद्धिं ततः कृत्वा सर्वहोमं समाचरेत् ।
ससुवर्णेन हस्तेन शुद्धात्मा शंसितव्रतः ॥
परं च तारयेत् शुद्धमात्मानं च विधानवित् ।
शान्तिकं च जपेद्विप्र इदं विष्णुर्विचक्रमे ॥
सहस्रशीर्षा-मन्त्रेण जपेत् पौष्टिकशान्तये ।
शान्त्यर्थं च समुत्पाद्या एता औषधयः क्रमात् ॥
श्यामाकं च शमी चैव वल्मीकस्य च मृत्तिका ।
श्वेतशर्षपसंयुक्ता दूर्वामुस्तादयो द्विज ॥
अश्वत्थत्वक्समायुक्तं वटवैकङ्कतं तथा ।
श्यामालतां सुवर्णं च प्रियङ्गु चार्कमेव च ॥
कुम्भं चोदकसंपूर्णं सर्वै रत्नैः समन्वितम् ।
ऐशान्यां दिशि शान्त्यर्थं स्थापयेत् सुसमाहितः ॥
चतुर्थी चाष्टमी चैव द्वादशी च चतुर्दशी ।
एता वै तिथयः पुण्याः स्मृता अद्भुतशान्तये ॥

नारदः ।

भानौ सिंहगते चैव यस्य गौः संप्रसूयते ।
मरणं तस्य निर्दिष्टं षड्भिर्मासैर्न संशयः ॥

ततः शान्तिं प्रवक्ष्यामि येन सम्पद्यते शुभम् ।
प्रसूतां तत्क्षणादेव तां विप्राय प्रदापयेत् ॥
ततो होमं प्रकुर्वीत घृताक्तान् राजशर्षपान् ।
आहुतीनां घृताक्तानामयुतं जुहुयात् ततः ॥
सोपवासः प्रयत्नेन दद्याद्विप्राय दक्षिणाम् ।
वस्त्रयुग्मं यवं चैव ससुवर्णं प्रदापयेत् ॥
इष्टदैवतमन्त्रेण ततः शान्तिर्भवेद् द्विज ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-ऽद्भुतसागरे प्रसवाद्भुतावर्त्तः ।

---

## अथ सर्वशाकुनाद्भुतावर्त्तः ।

---

तत्राह वराहः ।

अन्यजन्मान्तरकृतं कर्म पुंसां शुभाशुभम् ।
यत् तस्य शकुनः पाकं निवेदयति गच्छताम् ॥

न केवलं गच्छतां तिष्ठतां च ।

अत एवाह वसन्तराजः ।

शुभाशुभज्ञानविनिर्णयाय हेतुर्नृणां यः शकुनः स उक्तः ।
गतिस्वरालोकनभावचेष्टासंकीर्णनाम्ना द्विपदादिकानाम् ॥

ज्योतिःपराशरः ।

कौशिक उवाच । भगवन् सर्वविरुतेङ्गितज्ञानमिति यदुक्तं पुरस्तात् कथमज्ञातानामिङ्गितैर्विरुतैर्वा ज्ञानमिति तमाह भगवान् पराशरः । न हि खलु सौम्यकालविहितं चराचरस्य भूतग्रामस्य भावाभावमिति यदुक्तमग्रे तदेव भगवान् परमात्माऽक्षरश्च सर्वगोऽती-

तभूरीश्वरश्च तत्प्रचोदितं जीवाजीवमित्यलं सूचकं च निमित्तमाचक्षते मुनयः ।

वराहः ।

द्वन्द्वरोगार्दितत्रस्तकलहामिषकाङ्क्षिणः ।
आपगान्तरिता मत्ता न ग्राह्याः शकुनाः क्व चित् ॥

वसन्तराजः ।

नीडेषु सक्तो रतमांसलुब्धो भीतः प्रमत्तः क्षुधितो रुगार्त्तः ।
तथा च बालो वनमन्तरेण ग्राह्यो न नद्यन्तरितस्तथा यः ॥

मयूरचित्रे तु ।

वन्दिनो रोगिणोऽथार्त्ता भीता युद्धामिषैषिणः ।
सीमानदीव्यपेताश्च सवैराश्चैव निष्फलाः ॥

वटकणिकायां वराहः ।

द्वन्द्वार्त्तरोगार्दितभीतमत्तवैरार्त्तयुद्धामिषकाङ्क्षिणश्च ।
सीमान्तनद्यन्तरिताश्च सर्वे न चिन्तनीयाः सदसत्फलेषु ॥

पराशरस्तु ।

मत्तवित्रस्तव्याधितव्यङ्गकलहामिषासक्तविद्रुतानि प्रमाणानि न प्रमाणीकुर्यात् ।

वराहः ।

रोहिताश्वाजबालेयकुरङ्गोष्ट्रमृगाः शशः ।
निष्फलाः शिशिरे ज्ञेया वसन्ते काककोकिलाः ॥
न तु भाद्रपदे ग्राह्या सूकराश्च वृकादयः ।
शरद्यजाविकाः क्रौञ्चाः श्रावणे हस्तिचातकौ ॥
व्याघ्रर्क्षवानरद्वीपिमहिषाः सबिलेशयाः ।
हेमन्ते निष्फला ज्ञेया बालाः सर्वे विमानषाः ॥

वसन्तराजस्तु ।

अश्वोष्ट्रमार्जारखरा रजन्यां शशो मृगो वा शिशिरे व्यलीकाः ।
हेमन्तकाले महिषर्क्षसिंहा विलेशयद्वीपिशिशुप्लवङ्गाः ॥
स्यातां वृथा काकपिकौ वसन्ते वृथा वराहश्च वृका नभस्ये ।
स्युः श्रावणे वारणचातकाद्या अजाविगोक्रौञ्चनिभा घनान्ते ॥

पराशरस्तु ।

अथ शकुनेषु कोकिलमयूरजीवञ्जीवकप्रियपुत्रराजपुत्रगोदापुशतपुत्रदात्यूहमदनसारिकावर्षाभूकोयष्टिकमहापुष्परवशाकदण्डिमाणवककवायसकुक्कुटचकोरक्रौञ्चसारङ्गप्लवगचित्रकापोतपुष्परथोष्ट्ररथादीनां वसन्तग्रीष्मौ मदकालः । शतपत्रोत्क्रोशमृगराजमयूरकोकिलबकबलाकाप्लवगप्रीणनचातकसारङ्गानां वर्षाः । चकोरकादम्बमदनसारिकाकीरपुष्परथचातकहंसचक्रवाकसारसकुरकक्रौञ्चकारण्डभ्रमराणां शरत् । श्येनकुररक्रौञ्चसारसादीनां हेमन्तशिशिरौ । एवमादयः शकुना मदकालश्च । मृगात्मनां पुरुषस्त्रीनामकशिवाशशजम्बूकसृमरचमरसूकरवानरमार्जारनकुलगजगवयवृषमशकमहिषमूषकसिंहव्याघ्रकूर्मबलाकादीनां प्रायसः सर्वेषां वसन्तो मदकालः । विशेषतश्च नरव्याघ्रादीनां प्रावृट् । वृषभेरण्डमहिषगवयसृमरचमराणां शरत् । गोगवयवृषादीनां हेमन्तशिशिरौ ।

वराहः ।

न ग्राम्यो वन्यगो ग्राह्यो नारण्यो ग्रामसंस्थितः ।
दिवाचरो न शर्वर्यां न च नक्तञ्चरो दिवा ॥

शुभशकुने च गृह्यत इत्यर्थः ।

यदाह वसन्तराजः ।

ग्राम्यो बहिर्ग्रामगतश्च वाऽथो दिवाचरो निश्यदिवाचरोऽह्नि ।
वृथाऽथ वा स्वस्थितिकालहीनश्चरन् भ्रमन् भयतिदेशभीत्यै ॥

अत उभयमत्रैव ग्राह्यम् । तत्र दीप्तो रौद्रः शकुनोऽशुभो भवति । शान्तः सौम्यश्च शुभो मिश्रो मिश्र इति । दैवदीप्तः क्रियादीप्तश्चेति द्विविधो दीप्तः । पञ्चधा दैवदीप्तः क्रियादीप्तश्चेति । एवं शान्तोऽपि । सौम्यरौद्रौ द्विविधौ ।

तथा च वराहः ।

क्षणतिथ्युडुवाताकैँ दैवदीप्तो यथोत्तरम् ।
क्रियादीप्तो गतिस्थानभावस्वरविचेष्टितैः ॥
दशधैवं प्रशान्तोऽपि सौम्यस्तृणफलाशनः ।
मांसामेध्याशनौ रौद्रौ विमिश्रोऽन्नाशनः स्मृतः ॥

अशोभनो मुहूर्त्तादौ जातः क्षणदीप्तः । वातः प्रतिलोमो वातदीप्त इत्युत्पलेन व्याख्यातम्* । दग्धज्वलिनधूमितदिग्भवस्त्रिविधो रविदीप्तः ।

पराशरः ।

अङ्गारिण्यर्कनिर्मुक्ता दीप्ता यस्यां दिवाकरः ।
प्रधूमितैष्यसूर्या दिशान्ताः पञ्चेतरा दिशः ॥

वसन्तराजस्तु ।

दिग्धा दिगुक्ता दिननाथमुक्ता विवस्वदीप्ता भवति प्रदीप्ता ।
सा धूमिता यां सविता प्रयातः शेषा दिशस्ताः किल पञ्च शान्ताः ॥
दग्धा दिगैशी ज्वलिता दिगैन्द्री धूमान्विता वाऽनलदिक् प्रभाते ।
प्रत्यह्नि चैव प्रहराष्टकेषु भुङ्क्ते दिशोऽष्टौ सविता क्रमेण ॥
अर्धे दिनस्य प्रहरेऽवशिष्टे यावन्निशायाः प्रहरार्धमाद्यम् ।
स्यात् पश्चिमा सा रविणा च गूढा गम्योषिते धूमितभस्मवत्यौ ॥
ईदृशं चिषुवतोर्द्वयोर्भवेद्दक्षिणायनदिने तु शाङ्करी ।
पावकी ज्वलति चोत्तरायणे भस्मधूमसहिते तु पार्श्वयोः ॥
अन्यत्र संक्रान्तिचतुष्टयात् तु भोगः स्वबुद्ध्या ककुभां विभाव्यः ।
चलो रविः सन्ततमेव याति यस्या दिशः सौम्ययमाधिवासे ॥

* द्रष्टव्या अ, पु, १०१३ पृ. १२ पं. ।

प्रत्येकमेवं सततं सुमेरोर्यद्दक्षिणाभ्यागमनेन सर्पन् ।
दिवारजन्योः प्रहराष्टकेन भुङ्क्ते दिशोऽष्टौ सविता क्रमेण ॥
दक्षिणायनदिने तु शाङ्करी पावकी ज्वलति चोत्तरायणे ।

इति च स्थूलतरमुक्तम् ।

वस्तुतस्तु—औदयिकविषुवस्थानाद्दक्षिणोत्तरयोः सार्धद्वाविंशतिसमक्रान्त्यंशभोगदिनादारभ्य चतुर्विंशत्यंशपरिमितं दक्षिणोत्तरपरमक्रान्तिद्वयपूरकं सार्धांशभोगदिनपर्यन्तं विपरीतायने नान्ये । पुनः सार्धक्रान्त्यंशप्रतिलोमभोगदिनपर्यन्तं क्रमेणाग्नेयीशान्यौ ज्वलतः । यतः षष्ट्यधिकांशशतत्रयपरिमितस्य भचक्रस्याष्टमो भागः पञ्चचत्वारिंशदंशा दिक्परिमाणमिति । एवं पञ्चविधो दैवदीप्तः । स्वदक्षिणगतिचेष्टितैर्गतिचेष्टदीप्तौ । शुष्कवृक्षादिगतः स्थानदीप्तः । इङ्गिताकारैरवगम्य क्रूरान्तःकरण आश्रयदीप्तः । दुःश्रुतिरुतः स्वरदीप्तः । इति पञ्चविधः क्रियादीप्तोऽपि । उक्तविपरीतोऽपि दशविधः शान्तो भवति ।

वसन्तराजस्तु ।

आभस्मिता याः ककुभः समस्ताः धिष्ण्यादिदोषै रहितश्च कालः ।
अवामचेष्टागतिरप्यवामाभावः प्रसन्नो मधुरो विरावः ॥
स्थानं मनोहारि तदेव दैवं सप्तप्रकारं कथयन्ति शान्तम् ।
सप्तप्रकारं पुनरेतदेव वहन्ति दीप्तं विपरीतभावात् ॥
एषां च मध्यात् ककुभादिकानां जातेषु शान्तेष्वधिकाधिकेषु ।
शुभं नराणामधिकाधिकं स्यात् तद्वत् प्रदीप्तेष्वशुभं प्रदीप्तम् ॥

पराशरः ।

दग्धवक्रान्तराच्छिन्नशुष्ककण्टकिवृक्षगाः ।
अश्मनिम्बकपालाशसिकताकेशभस्मसु ॥
श्मशानाङ्गारवल्मीकविषमोखरसानुषु ।
जीर्णशीर्णाशुचिभ्रष्टदेशस्था दीप्तसंज्ञिताः ॥
मनोज्ञस्निग्धहरितक्षीरिपुष्पतरुस्थिताः ।
समप्रशस्तभूमिष्ठाः शान्ताः स्युर्मृगपक्षिणः ॥

वराहः ।

भिन्नभैरवदीनार्त्तपरुषक्षामजर्जराः ।
स्वरा नेष्टाः शुभाः शान्ता हृष्टप्रकृतिपूजिताः ॥

वसन्तराजस्तु ।

आर्त्तभीतरवजर्जरदीप्ता भिन्नकण्ठलघुभैरवरूक्षाः ।
निन्दनीयनिनदाः शुभशब्दाः शान्तपूर्णमुदिताः प्रकृतास्तु ॥

पराशरस्तु ।

तिथिवातार्कभस्थानचेष्टादीप्ता यथाक्रमम् ।
धनसैन्यबलाङ्गेषु कर्मणां स्युर्भयङ्कराः ॥
जीमूतध्वनिदीप्तेषु भयं भवति मारुतात् ।
उभयोः सन्ध्ययोर्दीप्ताः शस्त्रोद्भवभयङ्कराः ॥
चितिकेशकपालेषु मृत्युबन्धवधप्रदाः ।
कण्टकीकाष्ठभस्मस्थाः कलहाय सुदुःसहाः ॥
अप्रसिद्धतया चापि निःसारास्थिव्यवस्थिताः ।
कुर्वन्ति शकुना दीप्ताः शान्ता जाप्यफलास्तु ते ॥
कलहस्वरदीप्तेषु स्थानदीप्तेषु विग्रहः ।
उच्चमादौ ध्वनिं कृत्वा नीचं पश्चाच्च मोघकृत् ॥

वसन्तराजस्तु ।

भवेदनल्पः प्रथमं ततोऽल्पस्वरोऽनुकूलोऽपि नरस्य यस्य ।
मुष्यन्ति नूनं पथि तस्करास्तं यत्नेन तस्माच्छकुनाः परीक्ष्याः ॥
तिथ्या समीरेण तथा सवित्रा नक्षत्रचेष्टास्थितिभिश्च दीप्ताः ।
धनस्य सैन्यस्य बलाङ्गयोश्च कर्मेष्टयोश्च क्रमतो भयाय ॥

पराशरः ।

अङ्गारिण्यामतिक्रान्तं दीप्तायां प्रत्युपस्थितम् ।
प्रधूमितायामागामिशान्तं शान्तासु निर्दिशेत् ॥

वराहः।

मुक्तप्राप्तैष्यसूर्यासु फलं दिक्षु तथाविधम्।
अङ्गारदीप्तधूमिन्यस्ताश्च शान्तास्ततोऽपराः॥
तत्पञ्चमदिशां तुल्यं शुभं त्रैकाल्यमादिशेत्।
परिशेषदिशोर्वाच्यं यथासन्नं शुभाशुभम्।

वसन्तराजः।

सन्ध्याद्वये शस्त्रभयं प्रदीप्ता वाताद्भयं मेघनिनाददीप्ता।
उपक्रमे वारिधनागमस्य दीप्ता जनान् संजनयन्ति भीतिम्॥
जाते प्रदीप्ते शकुने नराणां स्याद्भस्मितायां दिशि वित्तहानिः।
आलिङ्गितायां दिशि जीवनाशः सन्तापशोकौ दिशि धूमितायाम्॥

पराशरः।

दीप्तासु पूर्वतो युवराजभयाय। आग्नेय्यामग्निभयाय। दक्षिणस्यां सार्थस्य* निवेशघाताय। नैर्ऋत्यां चौरभयाय। पश्चिमतः सर्वे पर्वतघाताय। वायव्यां वातोद्गमाय। ऐशान्यां मित्रविरोधो विपर्यः शान्तासु।

ऐन्द्र्यां दीप्तानुबन्धी च शकुनो व्याहरेद्यदि।
मृत्यो वा नृपतौ पीडां कुर्याद्वा नृपसत्कृते॥
तस्यामेवं तु शान्तायां शान्तं स्याच्च रुतं यदि।
तयोरेव तदा विद्याद्धनलाभं प्रियागमम्॥
आग्नेयेऽग्निभयं दीप्ते देहपीडां च निर्दिशेत्।
शान्ते स्याद्दर्शनं तत्र शिल्पिनामग्निजीविनाम्॥
देहपीडां भयं नाशं याम्ये दीप्ते विनिर्दिशेत्।
शान्ते मन्त्रिनृमुख्याणां विकल्पस्य च दर्शनम्॥

---

* 'सार्थो वणिक्समूहे स्यात्'-इति कोषः।

नैर्ऋते कलहो दीप्ते दहनश्रवणं स्मृतम् ।
हृतागमनमानन्दं शान्ते तस्मिन् विनिर्दिशेत् ॥
शूद्रेण कलहं दीप्ते भयं च जलजीविनाम् ।
कर्षकोदधिपुष्पं च शान्ते दृश्येत वारुणे ॥
वायव्ये तस्करव्याधिबालशाकुनिकागमम् ।
दीप्ते शान्तेऽथ धनिनां वधबन्धकजीविनाम् ॥
सौम्ये दीप्ते मृगे विन्द्यात् प्रधानद्विजसत्तम ।
शान्ते शिवमनावासिब्राह्मणस्य च दर्शनम् ॥
ऐशाने शकुने दीप्ते सुहृत्कलहमादिशेत् ।
निवृत्ते मधुरे शान्ते सुहृद्भिः सह सङ्गमम् ॥

वसन्तराजः ।

जातोदयो दीप्तककुब्विभागे प्रशान्तदिक्स्थेन कृतानुनादः ।
अनर्थशङ्कां शकुनो विधाय निःशंसयं निष्फलतां प्रयाति ॥
प्रशान्तदिग्जो विहितानुनादो यदा भवेद्दीप्तदिगुत्थितेन ।
श्रेयस्तदानीं शकुनः प्रदर्श्य प्रयाति वैकल्यमवश्यमेव ॥

वराहः ।

वधघातभयानि स्युः पादोरोमस्तकान्तिगैः ।
शष्पापःपिशितान्नाद्यैर्दोषा वर्षक्षतग्रहाः ॥
वामसव्यरुतो मध्यः प्राह स्वपरयोर्भयम् ।
मरणं कथयन्त्येते सर्वे समविराविणः ॥
विदिक्स्थः शकुनो दीप्तो वामस्थेनानुवाशितः ।
स्त्रियाः संग्रहणं प्राह तद्दिगाख्यातयोनितः ॥
ऐन्द्रयानलदिशोर्मध्ये त्रिभागेषु व्यवस्थिताः ।
कोशाध्यक्षानलाजीवितपोयुक्ताः प्रदक्षिणम् ॥

शिल्पी भिक्षुर्विवस्त्रा स्त्री याम्यानलदिगन्तरे ।
परतश्चापि मातङ्गगोपधर्मसमाश्रयाः ॥
नैर्ऋतीवारुणीमध्ये प्रमदासूतितस्कराः ।
शौण्डिकः शाकुनी हिंस्रो वायव्यापश्चिमान्तरे ॥
विषघातकगोस्वामिकुहकज्ञास्ततः परम् ।
धनवानीक्षणीकश्च मालाकारस्ततः परम् ॥
वैष्णवश्चरकश्चैव वाजिनां रक्षणे रतः ।
द्वात्रिंशदेवं भेदाः स्युः पूर्वदिग्भिः सहोदिताः ॥
राजा कुमारो नेता च दूतः श्रेष्ठी चरो द्विजः ।
गजाध्यक्षश्च पूर्वाद्याः क्षितिपाद्याश्चतुर्दिशम् ॥
गच्छतस्तिष्ठतश्चापि दिशि यस्यां व्यवस्थितः ।
विरौति शकुनो वाच्यस्तद्दिग्जेन समागमः ॥

शुभाशुभहेतुः समागमः ।

वसन्तराजः ।

एवंप्रकाराः शकुना जनानां शान्ताः पुनर्याप्यफला भवन्ति ।
तं भक्षयन्तोऽशनमिष्टसिद्धिं कुर्वन्त्यसिद्धिं मुनिरुक्तिरेषा ॥
तृणं फलं खादति यः स सौम्यो रौद्रः पुरीषामिषभक्षको यः ।
प्रशान्तदीप्तं विदधाति कार्यमन्नाशनोऽस्मादुभयप्रकारः ॥
प्रसादभूभृत्सुरमन्दिराणि स्तम्बेरमास्तम्भतुरङ्गशालाः ।
अशून्यगेहे भगवाँश्च पूज्यः क्षीरद्रुमाट्टालकतोरणानि ॥
एवंप्रकाराणि मनोहराणि स्थानानि तुङ्गानि शुभावहानि ।
नीचेषु मध्ये शुभदानिदानीं देशप्रदेशान् प्रदिपादयामः ॥
शुचिः सतोया विशदा मनोज्ञा सगोमया शस्यवती च भूमिः ।
छाया तथा शाद्वलमेवमाद्या भवन्ति नीचे शुभदाः प्रदेशाः ॥

करण्डशूलाचितशृङ्गयूपाः शरः खरः शैरिभशूकरोष्ट्राः ।
वल्मीकशुष्कोत्पटितद्रुमाद्या नीचेषु देशेषु भवन्ति शस्ताः ॥
अङ्गारभस्मोपलरज्जुपङ्कगर्त्तागुहाः केशतुषास्थिविष्ठाः ।
घृणाकराः कर्पटकोटराद्या न नीचदेशाः शुभदा भवन्ति ॥

वराहः ।

शीघ्रमासन्ननीचस्थैश्चिरादुन्नतदूरगैः ।
स्थानवृद्ध्युपघाताच्च तद्वद्ब्रूयात् फलं बुधैः ॥

वसन्तराजश्च ।

समीपभूतैरचिरेण सिद्धिश्चिरेण दूरे शकुनैः प्रयातैः ।
स्वस्थानसंस्थैर्बलिभिः स्वकाले जातैः फलं सम्यगसम्यगन्यैः ॥

पराशरः ।

नक्तंदिवाचारिस्थलान्तरिक्षचराणामुत्तरोत्तरा बलवन्तः । तेषां स्वदेशकाले फलसामग्री ।

वराहः ।

स्वकाले गिरितोयस्था बलिनो द्युनिशाचराः ।
क्लीबस्त्रीपुरुषाश्चैषां बलिनः स्युर्यथोत्तरम् ॥

वसन्तराजस्तु ।

नपुंसकस्त्रीपुरुषा विहङ्गा यथोत्तरं स्युर्बलिनः समस्ताः ।
तेषां च भेदत्रयलक्षणाय श्लोकाविमौ शाकुनिकाः पठन्ति ॥

पीनोन्नतविकृष्टांसाः पृथग्ग्रीवाः सुवक्षसः ।
स्वल्पगम्भीरविरुताः पुमांसः स्थिरविक्रमाः ॥
तनुग्रीवाः कृशस्कन्धाः सूक्ष्मास्यपदविक्रमाः ।
प्रसक्ता मृदुभाषिण्यः स्त्रियोऽतोऽन्यन्नपुंसकम् ॥

वराहः ।

कुक्कुटेभपिरिल्यश्च शिखिवञ्जुलच्छिक्कराः ।

बलिनः सिंहनादाश्च कूटपूरी च पूर्वतः ॥

वसन्तराजः ।

कूटपूरकमयूरपिरिल्यः सिंहनादगजवञ्जुलकाश्च ।
छिक्करः सकुंकरा कुररीमान् पूर्वतोऽधिकबलान् कथयन्ति ॥

वराहः ।

क्रोष्टुकोलूकहारीतकाककोकर्क्षपिङ्गलाः ।
कपोतरुदिताक्रन्दक्रूरशब्दाश्च याम्यतः ॥

वसन्तराजश्च ।

हारीतकाकर्क्षकपोतकाकोलूकास्तथा पिङ्गलकाश्शृगालौ ।
क्रूरारवाक्रोशनरोदनानि भवन्ति नित्यं बलवन्त्यवाच्याम् ॥

वराहः ।

गोशशक्रौञ्चलोमाशहंसोत्क्रोशकपिञ्जलाः ।
विडालोत्सववादित्रगीतहासाश्च वारुणाः ॥

वसन्तराजश्च ।

उत्क्रोशगोक्रौञ्चविडालहंसाः कपिञ्जला लोमशिका शशाश्च ।
वादित्रनृत्योत्सवगीतहासा बलं प्रतीच्यां भृशमुद्वहन्ति ॥

वराहः ।

शतपत्रकुरुङ्गाखुमृगैकशफकोकिलाः ।
चाषशल्यकपुण्याहघण्टाशङ्खरवा उदक् ॥

वसन्तराजश्च ।

सरोजकाकैकशफास्तथाऽखुर्मृगस्तथा कोकिलशल्यकौ च ।
पुण्याहघण्टारवशङ्खशब्दा दिश्युत्तरस्यां बलमुद्वहन्ति ॥

वराहः ।

श्रेष्टे हयसिते प्राच्यां शवमांसे च दक्षिणे ।
कन्यकादधिनी पश्चादुदग्गोविप्रसाधवः ॥
जालश्वचरणौ नेष्टौ प्राग्याम्यौ शस्त्रघातकौ ।

पश्चाद्वाशवषण्ढौ च खलासनहलान्युदक् ॥
शिवा श्यामा रला छुच्छुः पिङ्गला गृहगोधिका ।
शूकरी परपुष्टा च पुन्नामानश्च वामतः ॥

वसन्तराजः ।

श्यामा शिवा पिङ्गलिकाऽन्यपुष्टा पल्ली रला शूकरिका तथैव ।
छुच्छुन्दरी वाऽपि शुभाय वामा पुन्नामधेयाः शकुनाश्च सर्वे ॥

वराहः ।

स्त्रीसंज्ञा भासभषककपिश्रीकर्णछिक्कराः ।
शिखिश्रीकण्ठपिप्पीकरुरुश्येनाश्च दक्षिणाः ॥

वसन्तराजश्च ।

श्रीकण्ठछिक्काः सरुरुप्लवङ्गाः श्रीकर्णभासौ भषको मयूरः ।
श्येनः समः पिप्पिकया प्रशस्ताः स्त्रीनामधेया अपि दक्षिणेन ॥

वराहः ।

क्ष्वेडास्फोटितपुण्याहगीतशङ्खाम्बुनिःस्वनाः ।
सतूर्याध्ययनाः पुंवत् स्त्रीवदन्या गिरः शुभाः ॥

वसन्तराजश्च ।

आक्ष्वेडितस्फोटितगीतवाद्यपुण्याहशङ्खाध्ययनाम्बुकुम्भाः ।
वामेन पुंवत् कथयन्ति भद्रं स्त्रीवच्छुभा दक्षिणतः परेषाम् ॥

वराहः ।

ओजाः प्रदक्षिणाः शस्ता मृगाः सनकुलाण्डजाः ।
चाषः सनकुलो वामो भृगुराहापराह्णतः ॥
"मयूरोलूकशूकर्यो दक्षिणा निशि पूजिताः ।
वामाः शिखिविडालाखुदर्दुरव्याघ्रसारसाः"* ॥
छिक्करः कटपूरी च पिरिल्पो चाह्नि दक्षिणाः ।

* नेदम् अ. पु. उपलभ्यते ।

अपसव्यं सदा शस्ता दंष्ट्रिणः सक्लिशयाः ॥
अपसव्यास्तु शकुनाः दीप्ता भयनिवेदिनः ।
आरम्भे शकुनो दीप्तो वर्षान्तस्तद्भयङ्करः ॥

वसन्तराजः ।

खञ्जनाजनकुलाः शिखिचाषौ कीर्त्तनेक्षणरुतैर्ददतीष्टम् ।
चातकाहिशशशूकरगोधाः कीर्त्तनेन न तु दृष्टिरुताभ्याम् ॥
अच्छभल्लुकपिदर्शनशब्दौ सिद्धिदौ न परिकीर्त्तनदृष्टौ ।

वटकणिकायां वराहश्च ।

रुतकीर्त्तनदृष्टेषु भारद्वाजाजवर्हिणः ।
धन्यौ नकुलचाषौ च सरटः पापदोऽग्रतः ॥
*चातकाहिशशक्रोडगोधानां कीर्त्तनं शुभम् ।
रुतसंदर्शने नेष्टे प्रतीपं वानरर्क्षयोः ॥

नेष्टावलोकनगमागमयुद्धकर्मवेश्मप्रवेशमनुजाधिपदर्शनेषु ।
यानप्रतीपविधिना शुभदा भवन्ति केचिज्जगुर्गमनवन्नृपदर्शने च ॥

बृहत्संहितायाम् ।

कर्मसंगमयुद्धेषु प्रवेशे नष्टमार्गणे ।
यानव्यत्यस्तगा ग्राह्या विशेषश्चात्र वक्ष्यते ॥
दिवा प्रस्थानवद्ग्राह्याः कुरङ्गरुरुवानराः ।
अह्नश्च प्रथमे भागे चाषवञ्जुलकुक्कुटाः ॥
पश्चिमे शर्वरीभागे नप्तृकोलूकपिङ्गलाः ।
सर्वं एव विपर्यस्था ग्राह्याः सार्थेषु योषिताम् ॥
नृपसंदर्शने ग्राह्याः प्रवेशेऽपि प्रयाणवत् ।
गिर्यरण्यप्रवेशेषु नदीनां चावगाहने ॥
जवजातिबलस्थानहर्षसत्त्वस्वरान्विताः ।

* आहकाहि-इति अ. पु. उपलभ्यते ।

स्वभूमावनुलोमाश्च तदूनाः स्युर्विवर्जिताः ॥
दिग्देशचेष्टास्वरबासरर्क्षमुहूर्त्तहोराकरणोदयांशान् ।
चरस्थिरोन्मिश्रबलाबलं च बुद्ध्वा फलानि प्रवदेत तज्ज्ञः ॥

वसन्तराजश्च ।

जातिस्वरस्थानबलप्रमोदैर्जवेन सत्त्वेन तथाऽऽनुकूल्यात् ।
दिक्कालतिथ्यादिकहंसचारैर्बलाबलं प्राणभृतां परीक्ष्यम् ॥
तुल्येऽपि जाते शकुने जनानामालोक्यते यत्र फलस्य भेदः ।
स प्राणसंचारकृतो विशेषस्तत्प्राणगत्या शकुनो गवेष्यः ॥
भवेद्धि नाड्यां परिपूरितायां सर्वोऽपि वामः शकुनः प्रशस्तः ।
स्यात् पिङ्गलायां परिपूरितायां सर्वोऽपि सव्यः शकुनः प्रशस्तः ॥
पञ्चषाणि शकुनानि देहिनामुत्तरोत्तरकृतोदयानि चेत् ।
पूर्वपूर्वमभिबाध्य निश्चितं नुर्ददाति शकुनोऽन्तिमः फलम् ॥

वराहः ।

यथाऽऽत्मानं नृपं सैन्ये पुरा चोद्दिश्य देवताम् ।
सार्थिप्रधानं साम्यस्य जातिविद्यावयोऽधिकम् ॥

वसन्तराजश्च ।

सार्थप्रधानं शिबिरे नरेशं स्वमात्मकार्ये नगरे च देवम् ।
विद्यावयोजात्यधिकांश्च साम्ये निर्दिश्य पश्येच्छकुनान्यभिज्ञः ॥
वेत्ति वाऽथ यमयं न हि वेत्ति मन्यते तमवमन्यतेऽथ वा ।
यत्र वा नर उपेक्षते स्वयं नेदृशेषु शकुनो विशिष्यते ॥

वटकणिकायां वराहः ।

रुपहतमनोज्ञवृक्षसंस्थः शुचिरुचिरावनिशस्यसंस्थितः ।
तिथिदिवसर्क्षलग्नकालेष्वशुभफलोऽपि शुभप्रदः प्रदिष्टः ॥

इति श्रीमहाराजाधिराजनिःशङ्कशङ्कर श्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे सर्वशाकुनाद्भुतावर्त्तः ।

* नेव

## अथ नानामृगविहगाद्यद्भुतावर्त्तः।

तत्र-पराशरः।

वृषतरुरुमृगचमरहरिणसिंहव्याघ्रादीनामारण्यानां स्वयमनुप्रवेशः पुरविनाशाय।

वृद्धगर्गसंहिताबार्हस्पत्ययोः।

व्याघ्रान् सिंहान् सहरिणाँश्चमरान् पृषतान् रुरून्।
दृष्ट्वा प्रविष्टान् नगरे शून्यं भवति तत् पुरम्॥

औशनसे तु।

रुरवश्च वराहाश्च* पृषता हरिणास्तथा।
येषु ग्रामेषु दृश्यन्ते तानरण्यात् विनिर्दिशेत्॥
प्रधानाश्चात्र बध्यन्ते पक्षे सप्तदशे तथा।
तस्मिन् जनपदे चैवमहद्दुरपद्यते भयम्॥

तथा।

देवदूता न हन्तव्या आरण्या ग्राममागताः।
तेषां बन्धे भवेद्बन्धो मोक्षे मोक्षो वधे वधः॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः।

"प्रविशन्ति यदा ग्राममारण्या मृगपक्षिणः।
अरण्यं यान्ति वा ग्राम्याः स्थलं यान्ति जलोद्भवाः
स्थलजा वा जलं यान्ति घोरं वा शान्तिनिर्भयाः।
राजद्वारे पुरद्वारे शिवा चाप्यशिवप्रदा॥
दिवा रात्रिचरा वाऽपि रात्रावपि दिवाचराः"† ।

वृद्धगर्गसंहिताबार्हस्पत्ययोः।

मृगपक्षिण आरण्या विशन्ति निर्भयाः पुरम्

* 'शरभाश्चैव गोधाश्च' इति क्वचित् पाठः।

† मत्स्यपुराणे २३७ अ, १-२ श्लो.।

त्यक्त्वा वा नगरं ग्राम्या व्रजन्ति निर्भया वनम् ।
दिवारात्रिचरा वाऽपि पुरे ग्रामे च शब्दिताः ।
रात्रौ पुरविनाशाय दिवा राजवधाय च ॥

दिवारात्रिचरा वेति चरन्तीति सम्बन्धः ।

तथा च वराहः ।

पुरपक्षिणो वनचरा वन्या वा निर्भया विशन्ति पुरम् ।
नक्तं वा दिवसचरा क्षपाचरा वा चरन्त्यहनि ॥

भयदा इति सम्बन्धः ।

वृद्धगर्गसंहिताबार्हस्पत्ययोः ।

ग्रामस्य मध्ये धावन्तो मृगा यदि महद्भयम् ।

वृद्धगर्गस्तु ।

बालान् दन्तैर्यदाऽऽगृह्य ग्राममध्ये च धावति ।
यतो मृगः पलायीत ततो मोक्षं विजानते ॥
अस्थिकाष्ठमलातं वा चैलकेशास्थिभाजनम् ।
श्मशानादाहरेद्ग्रामे मृत्यवे वा भयाय वा ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

"ग्राम्यास्त्यजन्ति च ग्रामं शून्यतां तस्य निर्दिशेत्*" ।

वृद्धगर्गसंहिताबार्हस्पत्ययोस्तु ।

मृगपक्षिणो वा नगरं त्यजन्ति सर्वशो यदि ।
ब्राह्मणाः श्रवणा वाऽपि शून्यं भवति तत् पुरम् ॥

वसन्तराजः ।

ारण्यसत्त्वा मिलिता रुदन्तो ग्रामोपकण्ठे भयदा भवन्ति ।
ः पुनस्तैः परिवेष्ट्यमानो विवेष्ट्यते वैरिजनेन नूनम् ॥
ा भियेऽरण्यचरानुनादा रोधाय ते ग्रामचरानुशब्दाः ।
रानुस्वनेन भीतिं वदन्ति बन्दिग्रहणप्रवृत्ताम् ॥

---

* मत्स्यपुराणे २३७ अ, ३ श्लो. ।

ग्रामे पुरे वा यदि वन्यसत्त्वा रात्रौ प्रविष्टा दिवसे च दृष्टाः ।
तदा तदाशु ज्वरतामुपैति स्युर्मृत्यवे तत्र मृतप्रसूताः ॥
गृहागता गेहपतेर्भयाय पुरस्य रोधाय तु गोपुरस्थाः ।
स्युर्वन्यसत्त्वाः शकुनानि चैषामुद्भावनीयान्यपराणि चैव ॥

वृद्धगर्गस्तु ।

धावन्तो यत्र वाशन्ति सूर्यप्रतिमुखा मृगाः ।
शीघ्रं तत्र पलायीत दृष्ट्वा तत्र भयं भवेत् ॥
अवतीर्य नदीकूलं जलनिम्नसरांसि च ।
मृगा नदन्ति वर्षासु तद्भयोत्पातलक्षणम् ॥
अरण्ये भैरवं घोरं नन्दित्वा प्रविशेत् पुरम् ।
गोचतुष्पदपीडा स्याच्छस्त्रोत्पातं विनिर्दिशेत् ॥
रात्रिं दिवं संप्रदीप्ता दिक्षु सर्वासु सर्वशः ।
व्याहरन्ति मृगा घोरं विद्रवाय भयाय वा ॥

वृद्धगर्गसंहिताबार्हस्पत्ययोः ।

अशिवं चापि वाशन्ति सन्ध्ययोर्मृगपक्षिणः ।
श्येना गृध्रा बलाका वा चार्कमण्डलचारिणः ॥
वाशन्ते भैरवं यत्र तदप्याशु विनश्यति ।

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

"दीप्ता वाशन्ति सन्ध्यासु मण्डलानि च कुर्वते ।
वाशन्ति विस्वरं यत्र तत्राप्येतत् फलं भवेत्"*

वराहसंहितायां च ।

सन्ध्याद्वयेऽपि मण्डलमाबध्नन्तो मृगा विहङ्गा
दीप्तायां दिश्यथ वा क्रोशन्तः संहता भयदाः

* मत्स्यपुराणे २३७ अ. ४ श्लो. ।

वृद्धगर्गसंहिताबार्हस्पत्ययोः ।

"प्रदोषे कुक्कुटो वाशेद्धेमन्ते चैव कोकिलः"* ।
वसेत् पुरे वा ग्रामे वा तदप्याशु विनश्यति ॥

वराहसंहितायाम् ।

कुक्कुटरुतं प्रदोषे हेमन्तादौ च कोकिलालापः ।
श्येनाः प्ररुदन्त इव द्वारे वाशन्ति जम्बुका दीप्ताः ॥
प्रतिलोममण्डलचराः श्येनाद्याश्चाम्बरे भयदाः ।

तत्रैव सन्ध्याप्रकरणे ।

भैरवमुच्चैर्वाशन् मृगोऽसकृद्ग्रामघातमाचष्टे ।
रविदीप्तो दक्षिणतो महास्वनः सैन्यघातकरः ॥
अपसव्ये संग्रामः सव्ये सेनासमागमः शान्ते ।
मृगचक्रे पवने वा सन्ध्यायां मिश्रगे वृष्टिः ॥

वृद्धगर्गसंहिताबार्हस्पत्ययोस्तु ।

पूर्वायामथ सन्ध्यायामप्रशान्तस्वरो मृगः ।
ग्रामघातं समाख्याति ग्रामेण परिवारितः ॥

वराहः ।

पशुशस्त्रव्याहारे नृपमृत्युर्मुनिवचश्चेदम् ।

[औ]शनसे तु ।

गावोऽश्वाः कुञ्जराश्चैव खरोष्ट्रा वानरोरगाः ।
नकुलाः पक्षिणो व्याडा ये चाप्येवंविधाः पुनः ॥
सत्त्वान्येतानि जल्पन्ते येषु देशेषु मानुषाः ।
तेषु देशेषु राजा तु षष्ठे मासि विनश्यति ॥

[...]रः ।

[...]श्येनगृध्रोलूकादिभिरभीक्ष्णं निषेवणं नोडीकरणं
[...]च ।

---

*[...]पुराणे चापि २३७ अ. ५ श्लो. उपलभ्यते ।

बार्हस्पत्ये च ।

प्रासादध्वजशालासु द्वारप्राकारतोरणे ।
गृध्रवायसकङ्कानां नीडं दृष्ट्वा पुरं त्यजेत् ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

"मूषिकान् शलभान् दृष्ट्वा प्रभूतं क्षुद्भयं भवेत्"* ।

पराशरः ।

शुकशलभमूषकविडालपन्नगानामभिपतनं शस्यदुर्भिक्षाय ।

बार्हस्पत्ये तु ।

काकमूषिकमार्जाराः सपतङ्गाः सहोरगाः ।
अतीव बहुशो दृष्ट्वा दुर्भिक्षाय भयाय च ॥

पराशरः ।

अथैन्द्रयादिदिक्पतङ्गावरोधने राजापनयबलप्रकोपरोगपरच-क्रागमगोपवधशस्यक्षयगोगजवधमादिशेत् कटाहादिगृहवत्-इति ।

वराहः ।

सर्वे दुर्भिक्षकर्त्तारः स्वजातिपिशिताशनाः ।
सर्पमूषिकमार्जाराः पृथुरोमविवर्जिताः ॥

अत्र शान्तिर्मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

"मृगपक्षिविकारेषु कुर्याद्धोमं सदक्षिणम् ।
देवाः कपोता इति च जप्तव्यं पञ्चभिर्द्विजैः ॥
गावश्च देया विधिवद्द्विजानां सकाञ्चना वस्त्रयुगोत्तरीय
एवं कृते शान्तिमुपैति पापं मृगैर्द्विजैर्वा विनिवेदितं"†

वराहस्तु ।

मृगपक्षिविकारेषु कुर्याद्धोमं सदक्षिणम् ।
देवाः कपोता इतिं च जप्तव्यं पञ्चभिर्द्विजैः ॥

---

* मत्स्यपुराणे २३७ अ. ९ श्लो. ।

† मत्स्यपुराणे २३७ अ. १३-१४ श्लो. ।

सुदेव इति चैकेन देया गावश्च दक्षिणाः ।
जपेच्छाकुनसूक्तं वा मनोर्वैदशिरांसि च ॥

बार्हस्पत्ये तु ।

पुरोहितोऽत्र कुर्वीत कापोतीं शान्तिमुत्तमाम् ।
देवाः कपोता इति च तत्र मध्ये समर्पयेत् ॥
आवापे व्यतिषङ्गे वा उपरिष्टाच्च हूयते ।
कामिकीं दक्षिणां दद्याद्गुरुर्वा येन तुष्यति ॥

मयूरचित्रे तु ।

सन्ध्याकाले यदा प्राप्ते रुदन्ति मृगपक्षिणः ।
वित्रस्यन्ति प्रधावन्ति तत्र विद्यान्महद्भयम् ॥
शान्तिः साधारणी तत्र कर्त्तव्या गर्गभाषिता ।

तत्रैव ।

प्रस्वरं चेच्छिवा रौति श्वगोवाजिगजास्तथा ।
नर्दन्ति स्त्री गवी चापि भयं भवति भूपतेः ॥
शान्तिस्तु षोडशी कार्या या सा दिव्यप्रचोदिता ।

तत्रैव ।

प्राकारे नगरद्वारे राजद्वारे चतुष्पथे ।
भृङ्गाश्च वायसा यत्र निवसन्ति व्रजन्ति च ॥
दह्यते तत् पुरं क्षिप्रं परैश्चापि विलुप्यते ।

त्र ।

काककोकिलकङ्कानां गृध्रकौशिकयोस्तथा ।
आरण्यानां च निलयाः प्राकारद्वारवेश्मसु ॥
मरकं कलहं चैव राजामात्यवधं वदेत् ।
शारदी शान्तिरत्रोक्ता पूर्वोपद्रवनाशिनी ॥
अश्वत्थसमिधो विद्वान् घृताक्ताञ्जुहुयाच्छतम् ।

अष्टोत्तरं मरुन्मन्त्रैर्निर्वेद्यास्ताः सशोणिताः ॥
ब्राह्मणान् भोजयेद्दध्ना हुत्वा ते भूरिदक्षिणाः ।
आग्नेयी वाऽपि कर्त्तव्या याऽनग्निज्वलनोदिता ॥

वृद्धगर्गः ।

वियोनिषु यदाऽऽयान्ति मिश्रीभावगता अपि ।
खरोष्ट्रहयमातङ्गा मनुष्याश्च भयाय तत् ॥

औशनसे तु ।

देशे वा यदि वा ग्रामे योनिव्यतिकरो भवेत् ।
अजः शुनीमजां श्वा वा संसर्गं यत्र गच्छति ।
अभ्यन्तरेण तत्राब्दाद्राष्ट्रे मरणमादिशेत् ॥

वराहसंहितायाम् ।

परयोनावभिगमनं भवति तिरश्चामसाधुधेनूनाम् ।
उक्षाणो वाऽन्योन्यं पिबति श्वा वा सुरभिपात्रम् ॥
मासत्रयेण विद्यात् तस्मिन् निःसंशयं परागमनम् ।
तत्प्रतिघातायैतौ श्लोकौ गर्गेण निर्दिष्टौ ॥
त्यागो विवासनं दानं तत् तस्याशु शुभं भवेत् ।
तर्पयेद्ब्राह्मणाँश्चात्र जपहोमाँश्च कारयेत् ॥
स्थालीपाकेन धातारं पशुना च पुरोहितः ।
प्रजापत्येन मन्त्रेण जपेद्बह्वन्नदक्षिणाम् ॥

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे नानामृगविहगाद्भुतावर्त्तः ।

---

## अथ गजाद्भुतावर्त्तः ।

तत्र पराशरः ।

दन्तिनां श्रीपुष्टिकरमदप्रादुर्भावः प्रहर्षो विजयाय ।

वराहसंहितायां च ।

प्रवेशनं वारिणि वारणस्य प्रायेण नाशाय भवेन्नृपस्य ।
ग्राहं गृहीत्वोत्तरणं द्विपस्य तोयात् स्थलं वृद्धिकरं नृभर्त्तुः ॥

विष्णुधर्मोत्तरे ।

ग्राहं गृहीत्वा द्विरदः सग्राहः सलिलाशयात् ।
उत्तरन् विजयाय स्यादग्राहो भयवर्धनः ॥

राजपुत्रः ।

देशे त्वदंशमशके ह्यव्रणो यत्र वारणः ।
हस्तेन बीजति मुहुस्तत्पराभवलक्षणम् ॥

विष्णुधर्मोत्तरे ।

ग्रामे व्रजति नागश्चेन्मैथुनं देशहा भवेत् ।

राजपुत्रः ।

हस्तिन्या भक्ष्यमाच्छिद्य स्वयं भक्षयते यदा ।
वारणस्तेन जानीयान्निमित्तेन पराभवम् ॥

पराशरः ।

हस्तिनां हस्तेन स्कन्धविलेखनमाहारेषु प्रद्वेषः । प्रकम्पनमुत्तमाङ्गानां पादैः पादप्रघर्षणं वेपथुर्मुखाक्षिमुण्डेभ्यो वा स्रक्प्रवर्त्तनं निशि भैरवो निनादो विभिन्नकांसस्य बृंहणं वित्रस्तपरिधावनं मदप्रणाशः पांशुकलुषग्रासाभिषङ्गप्रकीर्णताऽप्रकीर्णानां प्रधावनमश्रुप्रवर्धनं प्रवेपनं प्रदत्तकवलप्रतिग्रहः शिरोऽवध्वननमार्त्तानुनादो बहिर्दन्तशकलावपतनं विषाणभङ्गः पराजयाय ।

अयोध्याकाण्डे दशरथमरणनिमित्तम् ।

"तत्यजुः कवलं नागाः................"* ।

सुन्दरकाण्डे रावणवधनिमित्तम् ।

"कवलांश्चाप्यपास्यन्ति विनदाश्चापि च कुञ्जराः"* ।

---

* नोक्तस्थले उपलभ्यते ।

शल्यपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

"अश्रूणि मुमुचुर्नागा वेपथुश्चाभवद्भृशम्"* ।

अथ बृंहितफलम् । तत्र बृहस्पतिः ।

सेनामध्ये तु यदा बृंहति शार्दूलवद्गजो दृष्टः ।
भवति स्वसैन्यविजयस्तदा तु सङ्ख्ये नरेन्द्रस्य ॥
कलहं सनादमधुरं किञ्चिच्चोत्क्षिप्तपुष्करस्तु यदा ।
बृंहति वारणनाथस्तदा जयं नरपतिर्लभते ॥
दशनविवर्त्तितहस्तस्तुरङ्गगम्भीरशङ्खनादसमम् ।
बृंहति यदा तु हस्ती तत्रापि जयो भवेद्भर्त्तुः ॥
मुखविवरकपोलगतं करं यदाऽपहृत्य गजो दृष्टः ।
मधुरं गजहसितं तत् जयप्रदं भवति भूपानाम् ॥
त्रीन् वारान् क्रौञ्चरवं हंसरवं बृंहितं यदा कुरुते ।
एतदपि नागहसितं जयप्रदं भवति भूपानाम् ॥
गर्जति कण्ठेन यदा घनो यथा वारणः प्रहृष्टमनाः ।
मुखरन्ध्रनिविष्टकरस्तदा जयो जायते भर्त्तुः ॥
उदरागृहीतसलिलं सशीत्करं बृंहितं यदा कुरुते ।
भवति तदा नरनाथस्य शत्रुनाशः सुखेनैव ॥
स्पृशति कराग्रेण यदा चरणतलं भ्रमरबृंहितं कुर्वन् ।
स्तम्भे चालभ्य सुखं गमनं राज्ञस्तदा भवति ॥
शुष्कतृणकाष्ठकण्टकवल्मीकास्थिस्मशानदुष्टासु ।
पाषाणाङ्गाराशुचिभूमिषु पादस्थिता करिणः ॥
बृंहन्ति हीनलक्षणमसकृद्भर्त्तुस्तदा जयो नास्ति ।
जयदाश्च शाद्वलानि दिवाकरस्योद्देशस्थिता नित्यम् ॥

* २३ अ. २४ श्लो. । तत्र 'वेपथुं चास्पृशन् भृशम्' ।

शङ्काचालितनयनो वराहवद्घुरघुरं बृंहन् ।
यदि नागो भवति भयं तदा रणे नरपतेर्नूनम् ॥
भूतलविस्तृतहस्तो नदति यदा धरणिकम्पनादसमम् ।
नरपतिराष्ट्रविनाशो भवति तदा शत्रुसैन्यकृतः ॥
जयते विजये विद्विट् शान्तः पुरराष्ट्रपीडनं च तथा ।
मदमुदितकरभरवसदृशनिःस्वनं यदि करी कुरुते ॥
बलिभुग्निःस्वनसदृशं यदि बृंहति विनमिताननो हस्ती ।
म्रियते तदाऽस्य याता मासस्यान्ते चतुर्थस्य ॥
भूमौ चलितनिवेशातशिथिलकरो बृंहते तदा करुणम् ।
मीलितलोचनयुगलो भर्त्तृविनाशं तदा कुरुते ॥
सततं दूषितहृदयो रोगाणामागमं रिपुभयं च ।
खरपारावतरुतसमबृंहितमुखरं करी कुरुते ॥
कुक्कुटनादं बृंहति असकृत् सन्ध्याद्वये यदा हस्ती ।
हस्तिपसहितस्तु तदा स एव पञ्चत्वमुपयाति ॥
आघ्रातानन विवरा बृंहन्ति यदा सुदुःसहं करिणः ।
सहसाऽभिघातजनितं तदा भयं भवति भूपानाम् ॥
चीत्कारं यदि कुरुते परुषं संग्रामकम्पितो हस्ती ।
धरणीतलन्यस्तकरस्तदा भयं जायते भर्त्तुः ॥
यातारं सैन्यपतिं क्रुद्धो भीत इव स्वनं कुरुते ।
वेगपरिवर्त्तितमुखः स नाशयेद्वारणः सद्यः ॥
अशनिस्फूर्जितसदृशं द्विरदो यदि बृंहते रणारम्भे ।
धरणीतलगतवदनस्तदा जयो नास्ति भूपस्य ॥
निःश्वसितदीनवदनो जम्बुकनादानुकारिकृतशब्दः ।

यो नागो रणसमये न तस्य भर्त्ता जयं लभते ॥
यः किङ्किणीकलकलसदृशं नादं करोति कुपितोऽपि ।
त्याज्योऽसौ नरपतिना सेनासन्तापकृद्भवति ॥
कृष्टतरुरुहो नादं बृंहति पर्यश्रुलोचनो हस्ती ।
पीलुपतियात्तनाशं स्वदेहनाशं तदा कुरुते ॥
वामान्दोलितचरणो यदा करी बृंहते सनिःश्वासम् ।
आलानगतः कुरुते तदा वधो यात्तपीलुपयोः ॥
एवं कुर्वीत यदा प्रकृतिस्था बृंहितानि मातङ्गाः ।
औत्पातिकानि राज्ञस्तान्येव भवन्ति नान्यानि ॥
रुतकालोचितयवसान्नपानशयनादिभिः सुखिनः ।
विचरन्तो बृहन्ते उत्पातकृतं रुतं तु विज्ञेयम् ॥
शान्तिं तदुपशमार्थं द्विजभोजनपूर्विकां तदा कुर्यात् ।
पायसमधुप्रधानं विप्रेभ्यो भोजनं देयम् ॥
सहदेवी मञ्जिष्ठा लाक्षा विजया शतावरी पाठा ।
पुत्रञ्जीवारिष्टकसहिता मुस्ता हरिद्रा च ॥
द्रव्याण्येतानि सुचूर्णितानि सारस्वते जले कृत्वा ।
स्नपयेत् कुम्भशतेन हि मतङ्गजं भद्रके दिवसे ॥
स्नपितस्य ततः शीघ्रं प्रदक्षिणीकृतपिनाकिभवनस्य ।
औत्पातिकः प्रणश्यति दोषो नागस्य नरनाथ ॥

अथ मदफलम् । तत्र राजपुत्रः ।

अप्राप्ते मदकाले च यदा माद्यति वारणः ।
उपस्थितं विजानीयादुपसर्गं बलस्य तु ॥
न विद्यते मदः काले भवेच्चेद्वारणस्य च ।

उत्पातं तं विजानीयान्मदलिङ्गेन शास्त्रवित् ॥
धर्महीना वयोहीना धातुहीनाश्च वारणाः ।
अप्राप्तमदकालत्वादत्यर्थं निन्दिताः पुनः ॥
अतिस्थूलाः कृशाश्चापि श्रान्ताश्च व्याधितास्तथा ।
यत्र च्छिद्राः प्रभिद्यन्ते कटाभ्यां कोशतस्तथा ॥
शिरोभिस्यन्दतो रोगान्मूत्राभिस्यन्दतोऽपि वा ।
अथ चेद्युगपन्माद्येत् कटाभ्यां कोशतस्तथा ॥
विवर्णं गन्धहीनं च तदपि व्याधिलक्षणम् ।
मदं मन्दगुणैर्युक्तं यदा स्रवति पोतकः ॥
वर्णस्थं गन्धयुक्तं च हर्षेण च समन्वितम् ।
मण्डले तु तदा तस्मिन् महदौत्पातिकं भवेत् ॥
गजग्रामेऽथ वाऽरण्ये मातङ्गो यत्र माद्यति ।
यूथस्य नाशं जानीयाद्दाहं नागवनस्य च ॥
मृगाणां पक्षिणां चैव ये चान्ये तत्र संश्रिताः ।
एतेनैवोपसर्गेण प्राप्नुवन्ति विनाशनम् ॥
वर्षे तु प्रथमे नागो ह्युपसर्गात् प्रभिद्यते ।
मदः सुरभिगन्धो वा दुर्गन्धो वाऽपि जायते ॥
तस्य राष्ट्रस्य नाशाय प्रादुर्भावो मदस्य हि ।
संदृष्टो नयतत्त्वज्ञैस्तस्मिन्नुत्पातदर्शने ॥
वर्षे द्वितीये मातङ्गः प्रभिन्नो यदि दृश्यते ।
ब्राह्मणास्तत्र पीडयन्ते*शस्यहानिश्च जायते ॥
नानाविधाश्च रोगाः स्युस्तत्पुरे तु सदा वदेत् ।

* 'शस्यं हास्यति काश्यपी' इति, ग, पु, पा, ।

त्रिवर्षस्तु यदा मत्तो मातङ्गो यदि दृश्यते ॥
क्षत्रियाणां तथा विद्याद्व्यसनं प्रत्युपस्थितम् ।
प्रभेदो वारणस्याथ चतुर्वर्षस्य निन्दितः ॥
अमात्यास्तत्र हन्यन्ते म्रियन्ते च पुरोहिताः ।
पञ्चवर्षस्य नागस्य प्रभेदो निन्दितो भृशम् ॥
निर्दिशेच्छास्त्रवित् तत्र परपक्षभयं महत् ।
षड्वर्षस्याथ नागस्य मदकालो न विद्यते ॥
यदि माद्यति चेन्नागः स एव म्रियते ध्रुवम् ।
देशे तु यस्मिन् दृश्येत सप्तवर्षो मदान्वितः ॥
व्याधिना मरणं तत्र भूमिपालस्य निर्दिशेत् ।
महादोषप्रयुक्तं च अष्टवर्षप्रभेदनम् ॥
कोशो मन्त्री सहायश्च पुरं चैव विनश्यति ।
निन्दितं तु मदं विद्यान्नववर्षस्य हस्तिनः ॥
अत्यर्थं स्याद्भयं घोरं शस्त्रसम्मर्द एव च ।
सुमहाँस्तु भवेद्द्वेषो दशवर्षप्रभेदने ॥
सद्यस्तु मरणं विद्यान्नृपतेः प्रत्युपस्थितम् ।
द्वितीयायां दशायां तु वारणो यदि माद्यति ॥
पञ्चवर्षाण्यनावृष्टिं तस्मिन् देशे विनिर्दिशेत् ।
दिवा वा यदि वा रात्रौ प्रभिन्नो दृश्यते यदा ॥
निःश्रेयस्तस्य प्रस्थानं तत्क्षणे चैव हस्तिना ।
कारयेत् तत्र शान्तिं च ब्राह्मणाँश्चापि तर्पयेत् ॥
उत्पातप्रतिघातार्थमिमं विधिमुपाचरेत् ।
प्रतिघातस्त निर्दिष्टः प्रायश्चित्तस्य कारणात् ॥

त्रीण्यहानि पशून् राष्ट्रे तस्मिन् कर्म न कारयेत् ।
अशुभानां फलं कृत्स्नं राज्ञे राष्ट्रस्य निर्दिशेत् ॥

अथ करिणीमदफलम् । तत्र राजपुत्रः ।

स्त्रीपुंसयोर्यथाऽन्यत्वं सर्वप्राणिषु दृश्यते ।
एवमेव निसर्गात् तु धेनूनामप्रभेदनम् ॥
अतोऽन्यथा यत्र भवेदुत्पात इति तं विदुः ।
कश्चित् कदाचिद्दृश्येत स गन्धो हस्तिनीष्वपि ॥
मदः स चापि मन्तव्यो वक्ष्यते तत्परं फलम् ।
स्रावः कश्चित् प्रवर्त्तेत कटाभ्यां नैव कोशतः ॥
शिरोऽभिस्यन्दरोगस्तु निर्गन्धो न मदः स्मृतः ।
स्रावः कोशाद्भवेद्यस्तु कटाभ्यां न प्रवर्त्तते ॥
मूत्राभिक्षरणे चैव तद्गन्धो न मदो भवेत् ।
उभयत्रापि निर्गन्धं यदा स्रवति हस्तिनी ॥
तद्धि वैकारिकं दानं विद्याद्व्याधिसमुद्भवम् ।
मदं यदा तु विसृजेत् वमतिं पूतिमेव च ॥
औत्पातिकं तदा विद्याद्रूपैरेतैर्महीपते ।

विष्णुधर्मोत्तरे तु ।

प्रसूता नागवनिता मत्ता चान्त्याय भूपतेः ।

पोलुकाप्यः ।

यत्र राष्ट्रे पुरे वाऽपि हस्तिनी प्रविधावति ।
तद्धि राष्ट्रं सराजं च सपुरं च विनश्यति ॥

राजपुत्रस्तु ।

पुरे राष्ट्रे वने वाऽपि हस्तिनी यत्र माद्यति ।
राजा च नश्यते तत्र कुलं चैव विनश्यति ॥

पुरं वा तत्र भवति राष्ट्रं वा तद्विनश्यति।
यूथं वा तत्र भवति यूथपो वा विनश्यति॥
दशभ्योऽनन्तरं सा चेत् प्रभिन्ना म्रियते यदि।
तदा नान्यद्भवेत् पापं माद्यत्यात्मवधाय सा॥
मत्ता विधूय यन्तारं नर्दन्ती यत्र धावति।
सराष्ट्रं शिबिरं तत्र परचक्रेण पीड्यते॥
मत्ता मूत्रपुरीषाणि यदा संप्राश्य तिष्ठति।
राजा विनश्यते तत्र कुलं चानु विनश्यति॥
तदा पुरे च राष्ट्रे च भवेद्घोरं महद्भयम्।
मत्ता लोलुप्यमाना चेच्छुष्कास्या क्षुधिता तथा॥
धेनुका मद्यमाना च निर्हर्षा च प्रधावति।
भवेत् तत्र च दुर्भिक्षं देशे दुर्वृष्टिरेव वा॥
परचक्रभयाद्भङ्गः श्रेष्ठाङ्गपतनं तथा।
मत्तया भक्ष्यते युद्धे हस्तिन्या यदि वारणः॥
महद्भयं तत्र भवेद्देशस्य नगरस्य च।
संग्रायाभिपतेन्नागं मत्ता यत्र च धेनुका॥
बलकोपो भवेत् तत्र मन्त्रिणां वध एव वा।
लेण्डान् मूत्रं च मुञ्चन्ती निर्गच्छेद्यत्र धेनुका॥
तदा विनाशं जानीयाद्धान्यस्य च धनस्य च।
अस्मिन्नौत्पातिके शान्तिमिमां कुर्यान्नराधिपः॥
उपोष्य समाहामात्रः सामात्यः सपुरोहितः।
ततोऽस्याः शोणितैरेव धेनुकां तां प्रवर्धयेत्॥
हस्तिवत्कल्पितां तां तु विषाणाभ्यां च योजिताम्।

नीराजयित्वा तां रात्रौ धेनुकां कृतकौतुकाम् ॥
अथैनां हस्तिवन्नीत्वा शत्रुपक्षे विमोक्षयेत् ।
करोति पीडां तत्रापि शत्रोर्वनगताऽपि वा ॥
इत्येवमेनां कुर्वीत शत्रोर्वननिवासिनीम् ।
तां विसृज्य बलिं होमानुपहाराँश्च कारयेत् ॥
अन्यैश्च पेशलैर्विप्रान् दक्षिणाभिश्च तर्पयेत् ।
अथ वा पूर्ववत् कृत्वा शान्तिं तप्तकटद्वयाम् ॥
सुवर्णेन सुतप्तेन वनमेव प्रधावयेत् ।

अथ गजदन्तभङ्गफलम् । तत्र बृहद्यात्रायां वराहः ।

दक्षिणे शुभमतीव शोभनं पापमेव च विरुद्धमन्यतः ।
याप्यता भवति तद्विपर्यये विस्तरोऽथ मुनिभिः प्रकीर्त्तितः ॥
मूलमध्यदशनाग्रसंस्थिता देवदैत्यमनुजाः क्रमात् ततः ।
स्फीतमध्यपरिपेलवं फलं शीघ्रमध्यचिरकालसम्भवम् ॥
सौम्यलग्नतिथिभादिभिः फलं वर्धते शुभमतोऽन्यथा भवेत् ।
क्षीरमिष्टफलपुष्पपादपेष्वापगातटविघट्टनेन वा ॥
वाममध्यरदभङ्गखण्डनं शत्रुनाशकृदतोऽन्यथा परम् ।

विष्णुधर्मोत्तरे ।

शुभे काले शुभे देशे निम्नगायाश्च रोधसि ।
शुभे द्रुमे वा भवति भूभर्त्तुर्विजयावहः ॥

दन्तभङ्ग इति सम्बन्धः ।

राजपुत्रः ।

गजस्याभिघ्नतो द्रव्यं स्थावरं जङ्गमं तथा ।
दन्तव्यथा यदा च स्याद्दन्तैरभिहतस्य वा ॥
व्याधिना वाऽभिभूतस्य जरया पीडितस्य वा ।

दैवपीडा निमित्ताद्वा गजदन्तव्यथा भवेत् ॥
इत्येषां दन्तभङ्गानामुत्पत्तिः समुदाहृता।
अत ऊर्ध्वं समासेन भङ्गयोनिः प्रवक्ष्यते ॥
सकलापगमो भङ्गः शौषिर्यं दन्तुराननम्।
चलनं जर्जरत्वं च पाटनं च तथा भवेत् ॥
इति सप्तविधा योनिर्भङ्गानां समुदाहृता।
मूलमध्याग्रभङ्गानां वक्ष्यते कालसंग्रहः ॥
मूले त्रैमासिको ज्ञेयो मध्ये षाण्मासिको भवेत्।
ऊर्ध्वं संवत्सरादग्रे भङ्गानां कालसंग्रहः ॥
समं च विषमं चैव भङ्गसंस्थानमिष्यते।
छेदतुल्यं समं विद्यादतुल्यं विषमं भवेत् ॥
अतः परं प्रवक्ष्यामि फलयोगं शुभेतरम्।
उपरिष्टात् तथा चान्तः समो भङ्गश्च शोभनः ॥
यश्च पुण्ये भवेद्देशे पुण्यभङ्गो महाफलः।
निपतेयुर्यदा दन्ताच्छुल्बान्याजौ तु दन्तिनः ॥
शुभं फलं तदा विद्यान्नृपतेः समुस्थितम्।
विषाणाभ्यन्तरे शुल्बमुपरिष्टात् तथैव च ॥
पतेद्यातुश्च वृद्ध्यर्थं नृपतेश्चार्थसिद्धये।
उद्योगे पतिते शुल्बे दन्ताभ्यन्तरतो जयः ॥
उत्तरे सैन्यवृद्धिः स्यात् सुहृद्भिश्च समागमः।
दन्तस्याभ्यन्तराद्भ्रष्टं गजबाहुल्यमादिशेत् ॥
तत्रोपरिष्टाच्छकलं हन्ति शत्रूँश्चिरोत्थितान्।
विषाणाभ्यन्तरे भागे बाहूपर्यपि चोत्थितान् ॥

संशत्यसंशयं राज्ञः कोशवृद्धिमुपस्थिताम् ।
आर्द्रकूलाभिघातेन विषाणं यदि भज्यते ॥
सुवृष्टिं निर्दिशेद्विद्वाँस्तस्मिन्नुत्पातदर्शने ।
दन्ताग्रं पतितं भूमौ जले वा यदि दृश्यते ॥
अथ यातुर्विजानीयादर्थलाभमुपस्थितम् ।
यदि भद्रेण पापस्य दन्तो भवति दन्तिनः ॥
ततः क्षेमं सुवृष्टिं च सुभिक्षं चैव निर्दिशेत् ।
प्रभिन्नेनाप्रभिन्नस्य विषाणं यदि भज्यते ॥
सुभिक्षं च सुवृष्टिं च तस्मिन् विद्यान्निर्दशनम् ।
क्रीडितः सलिले दन्तो यदि नागस्य भज्यते ॥
तत्र चेत् पतितो दृष्टः सुवृष्टिमभिनिर्दिशेत् ।
प्रदक्षिणावर्त्तनिभो दन्तभङ्गो यदा भवेत् ॥
भूपतेः पुत्रलाभाय तन्निमित्तं ततो भवेत् ।
दन्तिनो मध्यभागाच्च करिण्याः शोणितं स्रवेत् ॥
पुत्रलाभाय नृपतेः तदपि स्यान्निदर्शनम् ।
पुष्पिते फलिते वाऽपि सक्षीरे च महीरुहे ॥
यदि दन्तो भवेद्भग्नः सोऽर्थलाभकरः स्मृतः ।
विषाणाभ्यन्तराद्भङ्गो नृपस्त्रीलाभमादिशेत् ॥
उपरिष्टाद्गुरुस्त्रीणां धनधान्यप्रदो भवेत् ।
भास्करोदयवेलायां विषाणं यदि भज्यते ॥
पुत्रलाभाय नृपतेस्तन्निमित्तं तदा भवेत् ।
ज्येष्ठायां वरुणे चैव मूले चेद्भङ्गमाप्नुयात् ॥
विशाखयोः पुनर्वस्वो रोहिण्यामुत्तरेषु च ।

शुभे देशे शुभा भङ्गाः शुभा ज्ञेया महाफलाः ॥
स्वात्यश्वियुग्धनिष्ठासु रेवत्यां तिष्यहस्तयोः ।
चित्रायां चैव नक्षत्रे सौम्यश्रवणयोस्तथा ॥
ये भवन्ति शुभा भङ्गाः शुभा ज्ञेया महाफलाः ।
मुहूर्त्तेष्वथ देशेषु ये भङ्गाः शुभलक्षणाः ॥
तेषु मन्दफला दृष्टा यथाशास्त्रविनिश्चयम् ।
पापकेभ्यस्तिथिभ्यश्च नक्षत्रेभ्यस्तथैव च ॥
तिथयो ये च शिष्टाः स्युर्भङ्गास्तेषु शुभावहाः ।

बृहद्यात्रायां वराहः ।

दन्तभङ्गफलमत्र दक्षिणे भूपदेशबलविद्रवप्रदम् ।
वामतः सुतपुरोहितेभयान् हन्ति साटविकदारनायकान् ॥
आदिशेदुभयभङ्गदर्शनात् पार्थिवस्य सकलं कुलक्षयम्* ।

विष्णुधर्मोत्तरे तु ।

दन्तभङ्गोऽशुभे देशे द्रुमे वा भयवर्धनः ।
क्रूरेष्वशुभलग्नेषु तथा रागविशेषतः ॥

पराशरस्तु ।

बहिर्दन्तशकलावपतनं पराजयाय । मूलात् पार्थिवस्य । मध्यतः कुमाराणाम् । अग्रतो नायकस्य । सेनापतेरुभयतः । बहुधा च राज्ञः सेनायां हस्त्यश्वानां वधाय ।

राजपुत्रस्तु ।

मूले यथाफलो भङ्गो मध्ये मध्यफलः स्मृतः ।
अग्रे त्वल्पफलो ज्ञेयः शुभो वा यदि चेतरः ॥
उभौ भङ्गौ विजानीयान्मध्यमाविति निश्चितौ ।
शुभदेशे शुभो भङ्गः सदा बहुफलो भवेत् ॥

* इत्यादिकानि बहूनि वचनानि बृहत्संहितायामप्युपलभ्यन्ते द्रष्टव्यम् अ.पु.१०९३पृ.

पापदेशे च यः पापः स पापतर उच्यते ।
युग्मशुल्बप्रपतनं निन्दितं सततं भवेत् ॥
विषाणात् पतिते शुल्बे श्रेष्ठे मध्येतरेऽपि वा ।
यथासङ्ख्यं फलं विद्यादशुभं शुभमेव च ॥
विषाणं दक्षिणं भग्नं पतितं वाऽपि हस्तिनः ।
पदं स्याद्व्यथितं वाऽपि तत्फलं नृपतेर्भवेत् ॥
विषाणमध्ये यत् प्रोक्तं फलं योक्तुर्विधीयते ।
ततः कोषे सुतेऽमात्ये राष्ट्रे द्रव्ये पुरोधसि ॥
वाहने चाथ सैन्ये च वैधे धातरि वा पुनः ।
एषामन्यतरस्मिँश्च विद्यात् फलमुपस्थितम् ॥
एवं छेदेषु पुष्पेषु विक्रियासु विनिर्दिशेत् ।
शुल्बं बहिर्धरं न्यसेन्न म्लानं च समावहेत् ॥
यदि कुं दारयेद्युद्धे विषाणं सकलं पतेत् ।
बहिस्तदनयं कुर्यादधस्ताद्वित्तनाशनम् ॥
अतिद्रुतं शुल्बमूलं विषाणं यदि भ्रंशते ।
विद्यात् तेनाभिघातेन दुर्वृष्टिं शास्त्रकोविदः ॥
यस्यापि भिद्यतः स्तम्भान्नवो दन्तश्च भ्रंशते ।
भवेत् सरुधिरो भङ्गस्तस्य यात्रा विनश्यति ॥
तेनार्थनाशं जानीयाद्यातुस्तस्मिन् विनिर्दिशेत् ।
यस्य दन्तस्त्रिधा भग्नोऽन्त्ये मध्ये च तथोद्गमे ॥
भर्त्ता तस्य द्विपेन्द्रस्य ससत्त्वो युधि हन्यते ।
यदा भवति भद्रस्य विषाणं पापलक्षणम् ॥
तदा प्रकोपं जानीयाद्विषयस्य बलस्य वा ।

यदा मत्तेन मत्तस्य दन्तो भ्रंश्येत दन्तिनः ॥
तदा विद्यादनावृष्टिं दुर्भिक्षं चैव शास्त्रवित् ।
गजस्य पतितो दन्तो भग्नो वा सकरीरकः ॥
दक्षिणे यदि वा वामे भवेन्नृपवधाय सः ।
मत्तस्य यदि मत्तेन दन्तो भिद्येत दन्तिनः ॥
महदग्निभयं तत्र पुरे राज्ये विनिर्दिशेत् ।
यदा ग्राम्येण वन्यस्य विषाणं परिभ्रंश्यते ॥
तदा पीडां विजानीयाद्धस्तिनां वनवासिनाम् ।
भिनत्ति दन्तमारण्यो हस्तिनो नागरस्य चेत् ॥
ग्राम्याणां हस्तिनां विद्याद्विनाशं समुपस्थितम् ।
अथ चेत् क्रीडमानस्य विषाणं भ्रंश्यते जले ॥
पतितं यदि दृश्येत दुर्वृत्तं तन्निदिशनम् ।
विषाणं भज्यते मूले हस्तिनो यदि हस्तिना ॥
अर्थहानिं ततो विद्यात् पार्थिवस्य विचक्षणः ।
यदाऽऽयतविषाणेन बहुधा विप्रशीर्यते ॥
तदा राष्ट्रं समुदितं सहामात्यैर्विनश्यति ।
मूले सरुधिरं भग्नं विषाणं जर्जरीकृतम् ॥
यदा नागस्य नृपतेस्तदा राजा विनश्यति ।
यस्य नागस्य दन्ताग्रे शौवीर्यमुपलभ्यते ॥
वर्षस्याभ्यन्तरे चैव योद्धुर्भार्या विनश्यति ।
तिक्तं वा यदि वा शुष्कं कटुकं कण्टकिद्रुमम् ॥
हस्तिनो भिद्यतो विद्याद्दन्तभङ्गस्य शोभनम् ।

भूतलस्पृष्टहस्तो हि भज्यते यद्यपक्रमे* ॥
तस्य नागस्य महतो मासस्यान्ते वधो भवेत् ।
मूले हन्यान्महामात्रं पार्थिवं सकरीरकः ॥
मध्यभागे गजाध्यक्षं दन्तभङ्गस्तु हस्तिनः ।
अथाग्रदन्तो भज्येत पतितश्चेन्न दृश्यते ॥
पुरोहितस्य मरणं सपुत्रस्य विनिर्दिशेत् ।
विषाणं भिद्यते यस्य मध्ये नागस्य मध्यतः ॥
व्याधिना पीड्यते देहं तस्य यातुरसंशयम् ।
अकस्माद्यस्य नागस्य मध्येदन्तं व्यथा भवेत् ॥
व्याधिना तस्य ये रोगा महामात्रः प्रपीड्यते ।
दक्षिणे चोपवाह्यस्य दन्तेन रुधिरे च्युते ॥
वर्षस्याभ्यन्तरे राज्यं विनाशनमभिनिर्दिशेत् ।
यदि दन्तद्वयं युद्धे भज्यते सकरीरकम् ॥
अन्तःसंक्षरणे चास्मिन् सपुत्रो म्रियते नृपः ।
पतितोऽध्वनि नागस्य विषाणे सकरीरके ॥
राज्ञः शस्त्रभयं विद्याद्राष्ट्रविभ्रंशमेव च ।
तृणे काष्ठे तु पतिते राष्ट्राद्भ्रंशेत पार्थिवः ॥
भूमौ तु पतिते रोगं मरणं च विनिर्दिशेत् ।
सलिले पूर्वमुद्दिष्टं फलमाहुर्विचक्षणाः ॥
बाह्यभागाश्रितो भङ्गो नृपतिस्त्रीवियोगकृत् ।
तस्यैव भागतः स्त्रीणामधस्तान्मरणावहः ॥
यदा हि पूर्वसन्ध्यायां वैश्यानामनयो ध्रुवम् ।

* अपक्रमे पलायने इति ।

अथ चेद्भज्यते रात्रौ विषाणं यदि हस्तिनः ॥
शूद्रान् म्लेच्छाँश्च दस्यूँश्च भयं स्पृशति दारुणम् ।
यदा विषाणं भज्येत व्रजत्यस्तं दिवाकरे ॥
तदा विद्यान्नरपतेर्वित्तनाशमुपस्थितम् ।
कृत्तिकास्वशुभो भङ्गः पापदेशे यदा भवेत् ॥
तदा प्रकुरुते राज्ञो वित्तनाशमुपस्थितम् ।
ज्येष्ठायां वारुणे मूले गर्हितः पापदेशजः ॥
दन्तभङ्गो भवेन्नित्यं नृपतेर्भूमिनाशनम् ।
आर्द्रायां त्रिषु पूर्वेषु भरणीषु मघासु च ॥
अहिदेवेषु ये भङ्गाः पापाः स्युः पापदेशजाः ।
ते भवन्ति शुभा राज्ञः प्रोच्यन्ते क्षिप्रमेव च ॥
एतेष्वेव च ये भङ्गा दारुणा इतरेषु च ।
नक्षत्रेषु यथोक्तेषु शुभाश्च शुभदेशजाः ॥
ते मन्दफलपाकाः स्युरिति शास्त्रविनिश्चयः ।
त्रिषूत्तरेषु रोहिण्यां पुनर्वसुविशाखयोः ॥
पापाः स्युः पापदेशस्था भङ्गाः पापमहाफलाः ।
चित्राश्वयुग्धनिष्ठासु रेवत्यां पुष्यहस्तयोः ॥
मृगशीर्षे तथा स्वातौ नक्षत्रे श्रवणेऽपि च ।
ये भवन्त्यशुभा भङ्गाः पापदेशसमाश्रिताः ॥
ते वैरिणि च पच्यन्ते भवन्त्यल्पफलास्तथा ।
यः पापः पापदेशस्थो नक्षत्रैः सग्रहो भवेत् ॥
विषाणभङ्गो नागस्य स च मन्दफलो भवेत् ।
पक्षच्छिद्राणि सर्वाणि निन्द्याद्यास्तिथयस्तथा ॥

पापकाः पापदेशस्थास्ते विज्ञेया महाफलाः ।
तिथिष्वेतेषु चैव स्युर्निन्दितेषु दिनेषु च ॥
ये भवन्ति शुभा भङ्गास्ते वैस्वल्पफलाः स्मृताः ।
दन्तेषु सुप्रशस्तेषु पापकाः पापदेशजाः ॥
गजानां दन्तभङ्गाः स्युस्ते ह्यल्पफलदाः स्मृताः ।
बले मुहूर्त्ते सावित्रे मैत्रे चाभिजिते तथा ॥
विजये चाशुभा भङ्गास्तेऽपि हीनफलाः स्मृताः ।
शेषेषु तु मुहूर्त्तेषु ये भङ्गाः पापदेशजाः ॥
महाफलाश्च विज्ञेयास्ते पापाश्च न संशयः ।

अथ दन्तवृद्धिफलम् । तत्र राजपुत्रः ।

मूलायामेषु यो दन्तोऽनाहाद्वर्धेत दन्तिनः ।
यातुर्गजस्य राज्ञस्य तदा वृद्धिमथादिशेत् ॥
मध्ये वर्धेतानाहेन महामात्रविवृद्धये ।
वृद्धेऽग्रदन्ते सैन्यानां वृद्धिर्गजपदस्य च ॥
सर्वथा वर्धते दन्तो यदि नागस्य मूलतः ।
ससुतस्य सराष्ट्रस्य नृपस्यायुर्विवर्धयेत् ॥
लक्ष्यते स्निग्धकालाभं विषाणं तु सुवृष्टये ।
उन्नते दक्षिणे दन्ते राजा वर्धेत सर्वतः ॥
उन्नते वामदन्ते तु यातुर्वृद्धिमथादिशेत् ।
उन्नते दक्षिणे दन्ते भवेद्राज्ञोऽर्थवृद्धये ॥
वामदन्ते फले प्रोक्तः सर्वत्र च विधीयते ।
दन्तयोरुभयोरेव फलमुक्तं विशेषतः ॥

अथ दन्तकालिमादिफलम् । तत्र राजपुत्रः ।

मूले चाग्रे तु दन्तस्तु परिम्लानो यदा भवेत् ।

उत्पातं निर्दिशेत् तस्मिन् राष्ट्रपीडामुपस्थिताम् ॥
आमात्यांश्च कुमारांश्च मध्ये म्लाने भयं स्पृशेत् ।
सर्वम्लानगतो दन्तो दक्षिणो वाम एव च ॥
विनाशमादिशेद्राज्ञः सराष्ट्रस्य तदाऽचिरात् ।
दक्षिणस्त्वथ वामो वा दन्तो हि यदि म्लायते ॥
दक्षिणे पीड्यते राजा वामे याता विनश्यति ।
अनयोरुभयोरेव नाशं राज्ञः समादिशेत् ॥
विषाणस्रवणे तस्माद्द्रुतं प्रस्थापयेन्नृपम् ।
एवमौत्पातिके तस्मिन् कृता शस्ता प्रतिक्रिया ॥
प्रज्वलेत् सहसा दन्तो दिवा वा यदि वा निशि ।
अत्र स्वराज्यान्नृपतिः कान्तरे वसतेऽचिरम् ॥
धूमायमाने दन्ते तु अग्निसंभ्रममादिशेत् ।
दन्ताग्रे हस्तिनो यस्य विषं मधु च दृश्यते ॥
विद्यान्नृपतिनाशाय बलस्य व्यसनाय च ।
अधस्तावनते दन्ते दक्षिणस्य स्वभावतः ॥
कुलविच्छेदनं राज्ञः यातुर्दारार्थनाशनम् ।
वामे त्ववनते दन्ते यातुरेवाभिनिर्दिशेत् ॥
नाशं सपुत्रदारस्य सर्वस्वहरणं तथा ।
निर्णये दक्षिणे दन्तो राज्ञोऽर्थानामसिद्धये ॥

अथ दन्तच्छेदे शुभलक्षणानि । तत्र वराहसंहितायाम् ।

शुक्लः समः सुगन्धिः स्निग्धश्च शुभावहो भवेच्छेदः ।

राजपुत्रः ।

अत्र धान्यसमो गन्धो हरितालसमोऽपि वा ।
सुभिक्षं धान्यवृद्धिं च सुवृष्टिश्च तदा भवेत् ॥

चन्दनागुरुधूपानां तुल्यो गन्धो भवेद्यदि ।
विजयं राष्ट्रवृद्धिं च भूमिलाभं च निर्दिशेत् ॥
माल्यगन्धेन जानीयादर्थसिद्धिमुपस्थिताम् ।
कुसुमोत्पलपद्मानां सुगन्धेषु शुभं वदेत् ॥
करीषसमगन्धेषु गवां वृद्धिमथादिशेत् ।
अनुरक्तेषु गन्धेषु शुभेषु शुभमादिशेत् ॥

वराहसंहितायाम् ।

श्रीवृक्षवर्धमानच्छत्रध्वजचामरानुरूपेषु ।
छेदे दृष्टेष्वारोग्यविजयधनवृद्धिसौख्यानि ॥
प्रहरणसदृशे सुजयो नन्द्यावर्त्ते प्रनष्टदेशाप्तिः ।
लोष्टे तु लब्धपूर्वस्य भवति देशस्य संप्राप्तिः ॥
स्त्रीरूपे धननाशो भृङ्गारेऽभ्युत्थिते सुतोत्पत्तिः
कुम्भेन निधिप्राप्तिर्यात्राविघ्नं च दण्डेन ॥

राजपुत्रस्तु ।

नावमश्वरथं नागं वृषभं पूर्णमम्बुजम् ।
दृष्ट्वा छेदेषु रूपाणि निर्दिशेद्वा धनागमम् ॥
मणिमुक्ताप्रवालानां रत्नानां स्वस्तिकस्य च ।
भूषणनामनारोग्यं यात्रासिद्धिं च निर्दिशेत् ॥
प्राशासिशक्तिश्रीवृक्षवर्धमानस्य दर्शने ।
संग्रामे विजयं तस्य राष्ट्रवृद्धिं तदाऽऽदिशेत् ॥
स्नेहयुक्तं तथा श्वेतं विशुद्धं यत् प्रकाशितम् ।
ज्ञेयं दन्तेषु तच्छेदे नृपतेर्विजयावहम् ॥
छेदे यदाऽम्बु दृश्येत तुरङ्गस्तत एव च ।
अचिराद्वसुधालाभं नृपतेरादिशेत् तदा ॥

पुत्रजन्मादिशिद्धिः स्याद्दधिभृङ्गारदर्शने ।
लाङ्गलच्छत्रचक्राणां दर्शने व्यजनस्य च ॥
चक्रस्याप्रतिघातस्य शत्रूणां व्यसनं भवेत् ।
स्त्रीलाभं शयने विद्याद्विनाऽऽयासं मनःसुखम् ॥
यज्ञभाण्डस्य कुम्भस्य च्छेदे रूपस्य दर्शने ।
यज्ञस्य महतो वाऽपि निधिलाभं तदाऽऽदिशेत् ॥
नक्रमण्डूकशङ्खानां नलिनस्योत्पलस्य च ।
प्रतिरूपाणि च्छेदेषु दृष्ट्वा वृष्टिमथादिशेत् ॥
स्वस्तिकान्तं मुखं दृष्ट्वा वाजिलाभं तदाऽऽदिशेत् ।
तमेवोर्ध्वमुखं दृष्ट्वा राजा शीघ्रमथारुहेत् ॥
आरूढश्चाभिषेक्तव्यस्तदा स्यात् स प्रतापवान् ।
छेदेषु यदि दृश्येते संहितौ मत्स्यकच्छपौ ॥
मद्यमांसस्य निष्पत्तिराचष्टव्या तदा बुधैः ।
दृश्यते यदि मत्स्योऽत्र कच्छपश्चेन्न दृश्यते ॥
सुवृष्टिं न च दुर्भिक्षं विपरीतेऽन्यथा भवेत् ।
छेदेन दृष्ट्वा प्रमदां राजा राज्ञीमवाप्नुयात् ॥
ग्रथितामिव च्छेदेषु पश्येत् सुमनसः स्रजम् ।
तदाऽऽदिशेद्राष्ट्रवृद्धिं राज्ञः स्त्रीलाभमेव च ॥

अथाशुभलक्षणानि । वराहसंहितायाम् ।

कृकलाशकपिभुजङ्गैर्दुर्भिक्षव्याधयो रिपुवशित्वम् ।
गृध्रोलूकध्वाङ्क्षश्येनाकारेषु जनमरकः ॥
पाशेऽथ वा कबन्धे नृपमृत्युः·········इति ।

राजपुत्रस्तु ।

यच्छदे विस्फुलिङ्गो वा धूमो वा विप्लवोऽपि वा ।

दृश्यते कल्पमानस्य नृपतेरादिशेत् तदा ॥
सुवर्णे राष्ट्रनाशाय दाहव्याधिभयं तथा ।
कल्पमानेषु दन्तेषु शीर्यते यत्र मेदिनी ॥
अस्मिन्नौत्पातिके राज्ञः शत्रुभ्यो भयमादिशेत् ।
छेदेषु यदि दृश्येरन् वानरा यदि वा मृगाः ॥
तदाऽऽदिशेद्राष्ट्रनाशं व्याधिना च जनक्षयम् ।
सूर्यस्य दर्शनाच्छेदे जनमारीं विनिर्दिशेत् ॥
अशुभेषु शुभं विद्याच्छुभे शुभफलं भवेत् ।

दन्तपुष्पफलम् । तत्र पराशरः ।

शुक्लपीतमाञ्जिष्ठलोहितनीलवर्णानां दन्तानां भङ्गे तु पुष्पाणां प्रादुर्भावो विजयाय ।

राजपुत्रः ।

लक्ष्यते सर्ववर्णेषु यत्तु स्निग्धं स्पृष्टमेव च ।
विद्यात् तु पूजितं पुष्पमन्यत् तु परिवर्जितम् ॥
अथ चेत् पतिते भागे पुष्पं स्निग्धं सितं भवेत् ।
भूमिलाभं तथा राज्ञः सद्य इत्यभिनिर्दिशेत् ॥
प्राकारमणिसोपानं पुष्पं दन्ते गजस्य तु ।
राष्ट्रलाभं तु विपुलं तदा विद्यान्महीपते ॥
महानीलमणिप्रख्यमिन्द्रनीलसमप्रभम् ।
दन्ते चेद्दृश्यते पुष्पं सुवृष्टिमभिनिर्दिशेत् ॥
पीतं शुक्लं प्रकाशेत स्निग्धं सूर्योदये यदि ।
कनकस्य तदा लाभमादिशेत् तु महीपते ॥
पुष्पं दन्ते प्रकाशेत यदि चेत् स्निग्धकालकम् ।
अधितिष्ठेन्नृपः शत्रून् हस्त्यश्वं लभते बहु ॥

स्वेदान्तमुपलभ्येत यत् पुष्पं स्निग्धकालकम् ।
वर्धते विषमस्तेन भूमिपालस्य सर्वतः ॥
पुष्पं यच्छ्वेतपर्यन्तं रक्तं दृश्येत सुप्रभम् ।
नचिराद्द्विषदार्त्तानां राज्ञः प्रथममादिशेत् ॥
अङ्गराजेन्द्रधनुषो यत् पुष्पं दृश्यते समम् ।
तेन क्षेमं सुवृष्टिं च सुभिक्षं वाऽऽदिशेद्बुधः ॥
वज्राणि मणिच्छत्राणि रथसूर्यसमानि च ।
पुष्पाणि यत्र दृश्यन्ते तदा राज्ञः शुभं वदेत् ॥
पुष्पं दन्ते प्रकाशेत बालव्यजनसंनिभम् ।
तदर्थं च विजानीयाद्वर्धमानं शुभावहम् ॥
स्वस्तिकस्याथ मत्स्यस्य नन्द्यावर्त्तध्वजस्य च ।
तुल्यरूपाणि धान्यानि नित्यमेवाभिनिर्दिशेत् ॥
वाजिवारणतुल्येन पुष्पेण वृषभेण च ।
वाहनस्य तदा वृद्धिं भूमिपस्य विनिर्दिशेत्* ॥
प्रासादशैलसंकाशं पुष्पं दन्ते गजस्य तु ।
दृष्ट्वा तदाऽऽदिशेद्राज्ञो भूमिलाभमुपस्थितम् ॥
स्निग्धपीतेषु पुष्पेषु दृश्यमानेष्वथादिशेत् ।
सुवर्णलाभं रत्नानां विविधानामथागमम् ॥
श्वेतपुष्पे पुत्रलाभं रुक्मलाभं च पीतके ।
महिष्यास्त्वादिशेद्राज्ञो हस्तिन्या यदि दन्तयोः ॥

अथाशुभपुष्पदन्तलक्षणम् ।

भागे प्रशस्ते यत् पुष्पं श्वेतं च परुषं भवेत् ।

---

* मांसविद्रुमसंकाशम्—इति क्वचित् पाठः ।

तद्वादिशेद्भूतनाशं नृपतेरचिराद्विति ॥
कनकं परुषं पुष्पं विशुभ्रं चैव यद्भवेत् ।
निर्दिशेच्छास्त्रवित् तेन महद्भयमुपागतम् ॥
धूम्रवर्णेषु पुष्पेषु दृश्यमानेषु दन्तयोः ।
राष्ट्रं सनगरं दह्येन्न च वर्षति वासवः ॥
रथस्याश्वस्य नागस्य असमग्रस्य दन्तयोः ।
आदिशेत् तुल्यरूपेषु नृपतेर्वाहनक्षयम् ॥
कृष्णसर्पवराहाणां रासभानां समं तथा ।
देशानामनयं विद्याद्दृष्ट्वा पुष्पमुपस्थितम् ॥
पतन्ति वा यदा कृष्णा व्यालाश्च रुधिराशनाः ।
एतेषां तुल्यरूपेषु विद्यादनयमागतम् ॥
निर्दिशेत् कृष्णपुष्पाणां दर्शनं पुष्पवित् तथा ।
दूतानां परराष्ट्रेभ्यस्त्वागमं पृथिवीपते ॥
पुष्पाणि बहुवर्णानि दृश्येरन् सुबहून्यपि ।
निर्दिशेन्नृपतेस्तैस्तु क्षिप्रं मरणमागतम् ॥
अथ श्यामानि पुष्पाणि प्रदृश्येरन् विशेषतः ।
रोगाश्च दारुणा राष्ट्रे भवन्तीति न संशयः ॥
श्यामप्रायाणि पुष्पाणि बहुवर्णानि हस्तिनः ।
बहूनि यदि दृश्येरन् जनमारीं निवेदयेत् ॥
पुष्पाणि लोहितान्येव दृश्यन्ते सर्वतो यदा ।
उत्पातदर्शने तस्मिन् राजा शस्त्रेण हन्यते ॥
दृश्यमानेषु पुष्पेषु रूक्षपीतेषु हस्तिनः ।
निर्दिशेच्च नरेन्द्रस्य व्याधिपीडामुपस्थिताम् ॥

रक्तं पुष्पं प्रकाशेत हस्तिन्या यदि दन्तयोः ।
हस्तिन्या यदि दन्तेषु श्यामं पुष्पं प्रकाशते ॥
पुत्रव्यसनमाप्नोति नरेन्द्रमहिषी तदा॥

अथ दन्तस्रावफलम् । तत्र पराशरः ।

सुरभिर्मनोज्ञो नागदन्तस्रावो विजयाय ।

राजपुत्रस्तु ।

कल्पमाणाद्विषाणाच्चेत् पतेयुर्वारिविन्दवः ।
पृथिवीजयहेतुत्वे नृपतेरभिषेचनम् ॥
यदि चेत् कल्पमानेषु शोणितं संप्रदृश्यते ।
गृहीत्वा शोणितं सद्यः कुर्यात् पश्चाङ्कुलं मुखे ॥
छित्त्वा तस्य विषाणे तु वनमेव प्रवेशयेत् ।
कुर्याच्छान्तिं यथोक्तां च तथैव द्विभोजनम् ॥

वराहस्तु ।

......................जनविपत् स्रुते रक्ते ।
कृष्णे श्यामे रूक्षे दुर्गन्धे वाऽशुभं भवति ॥

पराशरः ।

दुर्गन्धवहलपूयशोणितस्रावो विषाणाभ्यां भयाय ।

पीलुकाचार्यः ।

जरया वातरोगार्त्तः प्रायोऽज्ञाने प्रवर्त्तते ।
न दोषादभिघाताद्वा यदा दन्तोऽनिमित्ततः ॥
प्रच्युतो लक्ष्यते सद्यः पूयं शोणितमेव च ।
कुणपं विस्रगन्धं वा दुर्गन्धं वा यदा भवेत् ॥
तमौत्पातिकमेवाहुराचार्याः तत्त्वकाविदाः ।
दक्षिणे त्वथ दन्ते तु प्रथमं दृश्यते यदा ॥
तदा व्याधिकरो राज्ञः सैन्ययोक्तुर्भयावहः ।

स्रवणं पतनं वाऽपि दन्तस्य सहसा यदि ॥
देवोत्पातकृतं त्वेतदसाध्यमिति कीर्त्यते ।
स नागः शिवमिच्छद्भिः स्वदेशस्य नृपस्य च ॥
स्वराष्ट्रात् परराष्ट्रे च प्रस्थाप्यः सुविचक्षणैः ।

वराहसंहितायाम् ।

गलनम्लानफलानि च दन्तस्य समानि भङ्गेन ।

अथ दन्तराजीफलम् । तत्र राजपुत्रः ।

शरशक्तिधनुश्चक्रशूलपट्टिशलक्षणाः ।
दन्ताग्रराजयो यस्य स नृपं वोढुमर्हति ॥
विषाणानुगता राजी हस्तिन्यभ्यन्तरा भवेत् ।
राज्ञो बलं वर्धयते सर्वभूतहिताय सा ॥
अनुगच्छेद्यदा राजी दन्तस्योपरि या भवेत् ।
तदा नृपस्य जायेत कन्या पूजितलक्षणा ॥
बहिः पार्श्वादधस्ताद्वा दृष्ट्वा राजीमथादिशेत् ।
महीपतेः शत्रुवृद्धिममात्यानां च संक्षयम् ॥
तिरश्चीना यदा राजी दन्तमेकं परिक्षिपेत् ।
ध्रुवं तदा राष्ट्रनाशो विज्ञेयः पृथिवीपते ॥
राजी यदा तु दन्ते स्यात् समा दीर्घा समाहिता ।
तदा देशे ह्यनावृष्टिं त्रीणि वर्षाणि निश्चयात् ॥

अथ पतनफलम् । तत्र राजपुत्रः ।

उदक्शिराः श्वेतलोमा शुक्लो यदि हरिष्यते ।
वृद्धो दक्षिणपक्षेण वृद्धिं तत्रापि निर्दिशेत् ॥
गात्राणि हस्तं बालं च विप्रसार्य हरिः पतेत् ।
सव्येतरेण पक्षेण प्राक्शिरा म्रियते यदि ॥

अस्मिन् पक्षे प्रपतने पार्थिवस्यादिशेज्जयम् ।
सुवृष्टिं च सुभिक्षं च शत्रूणां च पराभवम् ॥
उद्भ्रम्य पूर्वपक्षेण दक्षिणेन पतेद्यदि ।
अवाक्शिरा गजो भूत्वा राष्ट्रवृद्धिं तदाऽऽदिशेत् ॥
अथ वा स्निग्धमेघाभः स्नात्वा पीत्वा च वारणः ।
जलावगाहे म्रियते सुवृष्टिं तत्र निर्दिशेत् ॥
पश्चार्धेन विभागेन निषीदति यदि द्विपः ।
सुभिक्षं तेन नागानामादिशेद्ग्रामवासिनाम् ॥
अनाहे म्रियते नित्यं सुभिक्षमभिनिर्दिशेत् ।
स्तम्भे निवारितो नागः स्तम्भे चैव निषीदति ॥
तत्रैव त्यजति प्राणान् विजयं तेन निर्दिशेत् ।
शालां प्रदक्षिणीकृत्य कुञ्जरो म्रियते यदि ॥
तदा समर्घतां वृष्टिं प्राप्नुयात् स नराधिपः ।
हस्त्यागारस्य च स्थाने द्वारस्याभिमुखस्य चेत् ॥
अन्यैश्च वाहनैश्चैव पार्थिवैः स तु वर्धते ।
पूर्वतः स्तम्भमाश्लिष्य स्वस्थाने यस्तु सीदति ॥
वसुधाभिमुखो हस्ती भूलाभं तेन निर्दिशेत् ।
तत्रैव शिरसा पूर्वं भूमिगं वा म्रियेत चेत् ॥
नृपस्य वर्धते सैन्यं धनं चैवास्य मन्त्रिणा ।
नागयानमथागम्य वारणो म्रियते यदि ॥
करेणादाय सलिलं स्रवत्यक्षावुभावपि ।
दिशः सर्वाश्च वीक्ष्याथ तोयं पिबति चेद्गजः ॥
पीत्वा चोपरि मातङ्गः क्षिपेत् दक्षिणपश्चिमम् ।

सुवृष्टिं तस्य देशस्य वर्षाणि त्रीणि निर्दिशेत् ॥
यदा महादन्तकरः समैः श्वेतैर्नखैः पुनः ।
वर्ष्मणा चारुसर्वाङ्गः श्वेतरोमा हरिर्गजः ॥
रोगेण पीड्यमानस्तु पूर्वादिं यद्दिशं व्रजेत् ।
विजिगीषुर्दिशं तां तु प्रार्थमानोऽभिवर्धते ॥
एवमेव हि विज्ञेयं ये स्युर्जनपदे गताः ।
वर्णास्त्रयोऽत्र वर्धन्ते शूद्रपक्षो विनश्यति ॥
कृष्णपक्षे प्रतिहते वामपक्षेण चेत् पतेत् ।
कृष्णेऽत्र वर्धते वर्णत्रयाणां तु महद्भयम् ॥
शुक्ले दक्षिणपक्षेण काले वामेन वारणः ।
म्रियते तत्र वक्ष्यामि फलावाप्तिं शुभाशुभाम् ॥

विष्णुधर्मोत्तरे ।

कृष्णपक्षे मृतो नागो वह्निपृष्ठगतस्तथा ।
दारुणासु च वेलासु दक्षिणायनमूर्धनि ॥

नैमित्तिकं भवतीति सम्बन्धः ।

राजपुत्रस्तु ।

वामेन चेत् पतेच्छुक्ले कृष्णे दक्षिणपक्षतः ।
हस्ती यदा तदा ब्रूयात् पतनं वा फलं ध्रुवम् ॥
कालो महाशरीरश्च निपतेद्यदि पावके ।
शिरो दक्षिणतः कृत्वा वामेन बहुला गजाः ॥
गात्रापरं करं बालमुपसंगृह्य भीतवत् ।
एतैर्निमित्तैर्नागस्य विद्याद्राज्ञः पराभवम् ॥
दन्तो नागस्य भ्रंशेत वामे निपततो भुवि ।
तेनोत्पातेन नृपतेर्विद्याद्धोरं बलक्षयम् ॥

शिरसा चेन्निपतितो दक्षिणो भ्रंशते यदि ।
उत्पातदर्शने तस्मिन् मन्त्रिव्यसनमादिशेत् ॥
विषाणं यदि भ्रंशेत मुखेन पततो भुवि ।
निमित्तात् तस्य नागस्य विद्यात् पार्थिवनाशनम् ॥
स्वयं निषण्णो मातङ्गः प्राङ्मुखः प्रम्रियेत चेत् ।
दस्यूनां बहुले पक्षे प्रकोपमभिनिर्दिशेत् ॥
म्रियते प्रतिसंरुध्य बाले यत्रापरं करम् ।
शिरो दक्षिणतः कृत्वा कालपक्षे यदा गजः ॥
पुनर्वामेन निपतेत् तेनोत्पातेन निर्दिशेत् ।
प्रकोपं विषयाणां च तथा राज्ञोऽर्थनाशनम् ॥
वेगेनालनमाच्छाद्य स्थानान्निष्क्रम्य वारणः ।
उद्भ्राम्य वामेनालोक्य निपतेद्दक्षिणाशिरः ॥
स हि सव्येन पक्षेण धरण्यां यदि वारणः ।
अनेनोत्पातजातेन विद्याद्राष्ट्रस्य विद्रवम् ॥
यदा निर्गम्य नागस्तु धरण्यभिमुखः पतेत् ।
वारणोऽनावृतस्थाने तदा विद्यान्महद्भयम् ॥
दन्ती स्थानाच्च निर्गम्य शालाभिन्नमुखो यदि ।
निपतेत् तेन नागानां ग्रामाणामादिशेद्भयम् ॥
स्नात्वा यदि च निर्वाणो न पीत्वा च जलं गजः ।
वामपक्षेण निपतेद्दुर्वृष्टिं तेन निर्दिशेत् ॥
यदाऽभिसारितो नागो म्रियमाणः पतेद्भुवि ।
तदा तु दुर्भिक्षभयं हस्तिनामभिनिर्दिशेत् ॥
दिवा मार्गे त्वभिमुखो मुखेन यदि चेत् पतेत् ।

तस्मिन् गजानां दुर्भिक्षं ब्रूयादुत्पातदर्शने ॥
अवाक्शिराश्चोर्ध्वपादो जीमूताभो मतङ्गजः ।
यदाऽग्नौ निपतेत् काले तदा राजा विनश्यति ॥
हरितः श्यामवर्णो वा पादैरूर्ध्वैरवाक्शिराः ।
वैश्वानरे यदि पतेद्भर्त्ता तस्य विपद्यते ॥
अपसव्यमथागम्य करिणी म्रियते यदि ।
अर्थसिद्धिं तदा विद्याद्योक्तुस्तेन सुदारुणम् ॥
आलाने तु यदा स्थित्वा वामपक्षेण चेत् पतेत् ।
अनर्थं तु विजानीयाद्राज्ञस्तत्र विनिर्दिशेत् ॥
म्रियते यदि मातङ्गः स्थित्वाऽऽलाने निकारितः ।
यातुस्तु व्यसनं घोरं तेनोत्पातेन निर्दिशेत् ॥
अथालानमविच्छिद्य यदि पश्चात् पतेद्गजः ।
निर्दिशेत् तेन नागस्य व्यसनं परिकर्मणा ॥
तथैवालानमाच्छिद्य शालायां म्रियते यदि ।
मुखेन भूमिमालम्ब्य तदपि स्यादसिद्धये ॥
अयनं गर्जितं चैव नागानां निर्दिशेत् तदा ।
शिरो दक्षिणतः कृत्वा पूर्वपक्षात् पतेद्यदि ॥
शालास्थो व्यसनं तत्र निर्दिशेन्मन्त्रिसैन्ययोः ।
भूमौ निपत्य दन्ताभ्यां यत्र विद्धा म्रियेत चेत् ॥
महद्भयं तत्र भवेत् पार्थिवस्य गजस्य च ।
अरालो मृदुकर्मा च महाशीर्षो महामदः ॥
वेगेन गत्वा म्रियते वक्त्रं कृत्वा च सर्वतः ।
अभावं शूद्रपक्षस्य तेनोत्पातेन निर्दिशेत् ॥

समाहितं पूर्वतश्च यस्य दक्षिणचारिणः ।
मध्याभो दक्षिणो दन्तः स्वे च भागे प्रतिष्ठितः ॥
भ्रमन् दक्षिणपक्षेण शुक्लपक्षेण चेत् पतेत् ।
अभावं ब्राह्मणानां च विद्यानाशं तथैव च ॥
श्यामा पादैः शुभश्चैव श्यामास्या शुभमस्तका ।
रक्ताक्षी सूक्ष्मकेशी च सुविभक्तमृदुस्तनी ॥
वामपक्षेण निपतेद्विस्तीर्य दक्षिणाशिरः ।
नृपस्यान्तःपुरस्त्रीणां विनाशमभिनिर्दिशेत् ॥

अत्र शान्तिर्विष्णुधर्मोत्तरे ।

अतः परं प्रवक्ष्यामि कर्म नैमित्तिकं तव ।
गजानां मरके प्राप्ते तथा व्याधौ च दारुणे ॥
दन्तच्छेदाशुभोत्पत्तौ तथा राजद्विपे मृते ।
दन्तभङ्गे तथा जाते वामपक्षमृते गजे ॥
कृष्णपक्षे मृते नागे वह्निपृष्ठमृते तथा ।
दारुणासु च वेलासु दक्षिणापरमूर्धनि ॥
हस्तिन्यां वा मदे जाते प्रकृतेश्च विपर्यये ।
पूर्वोत्तरे तु दिग्भागे नगरान्मुखभेऽशुभे ॥
आसन्नतोयजस्निग्धद्रुमे वीतवनस्पतौ ।
प्रागुदक्प्रवणेनात्र स्थण्डिलं परिकल्पयेत् ॥
कमलं विन्यसेत् तत्र कर्णिकाद्योतकेसरम् ।
शीर्षं च विन्यसेत् तत्र केसरेषु तु विन्यसेत् ॥
ब्रह्माणं भास्करं पृथ्वीं तथा स्कन्दं च भार्गव ।
दलेषु तत्र दिक्पालान् विन्यसेत् सह कुञ्जरैः ॥

पत्रान्तरेषु चास्त्राणि यथावदनुपूर्वशः ।
वज्रं तु विन्यसेद्विद्वान् शक्रपत्रादनन्तरम् ॥
ततश्चक्रं ततो दण्डं तोमरं तदनन्तरम् ।
ततो वै दिव्यसेनाङ्गं तोमरं सशरं धनुः ॥
ततो गदां महाभाग ततः शूलं च विन्यसेत् ।
तदा तस्यान्तरदलं वृत्तया रेखया भजेत् ॥
आदित्यैः सह नासत्यौ ततः पूर्वेण विन्यसेत् ।
वसुरग्निदिशो भागे वायव्ये मरुतस्तथा ॥
विश्वेदेवास्तथा रक्षो रक्षोदिशि च विन्यसेत् ।
कृत्वैवं देवतान्यासं वृत्तया रेखया भजेत् ॥
बाह्येन विन्यसेत् तेषु शूलाकारानृषिद्विजान् ।
पूर्वेण वाऽथ याम्येन तथा देवीं सरस्वतीम् ॥
नदीं पश्चिमतः शैलाँस्तथोदग्भृगुसत्तम ।
महाभूतानि देवेषु कोशहस्तगतानि तु ॥
पद्मं चक्रं गदां शङ्खमैशान्यादिषु विन्यसेत् ।
सप्तहस्तेषु दण्डेषु पताकाश्च तथा न्यसेत् ॥
सितरक्तासिताः पीता यथावदनुपूर्वशः ।
दिक्षु तोरणविन्यासं तोरणानां वनेषु च ॥
क्षीरवृक्षद्रुमदलैः कुसुमैः सफलैर्भवेत् ।
तोरणस्य प्रमाणं च यद्दृष्टं परिकीर्त्तितम् ॥
उच्छ्राये च तथाऽऽयामे ज्ञेयं दामसमं द्वयम् ।
तार्क्ष्यं तालं च मकरं मत्स्यं चैवानुपूर्वशः ॥
तोरणोपरि मध्ये तु दानवान् विनिवेशयेत् ।

वर्णैर्लक्षणोपेतान् विन्यस्य देवतागणान् ॥
सायुधान् सपताकाँश्च सातपत्रं शतक्रतुम् ।
दिग्गजानां तु विन्यासमौषधीभ्यः प्रकल्पयेत् ॥
ऐरावतं दले शाक्रे लाजाभिर्विन्यसेद्बुधः ।
नागपुष्पमयं पद्ममाग्नेये विन्यसेद्दले ॥
पुष्पदन्तस्तथा याम्ये नागः कार्यः प्रियङ्गुभिः ।
तथा च नैर्ऋते पत्रे नागपुष्पेण वा गजः ॥
वायव्ये चाञ्जनं पत्रे माषैः कुर्याद्विचक्षणः ।
नीलश्च पत्रे कौबेरे राजपुष्पमयो भवेत् ॥
ऐशाने कुमुदं कुर्यान्नागेन्द्रं सिततण्डुलैः ।
ततश्च शमनं कार्यं सोपवासेन भार्गव ॥
सर्वासां पूजनं कुर्याद्देवतानां पृथक् पृथक् ।
अस्त्राणां कुञ्जराणां च पद्मादीनां तथैव च ॥
तोरणेषु निविष्टानां तार्क्ष्यादीनां पृथक् पृथक् ।
सागराणां च कुम्भेषु गन्धमाल्यानुलेपतः ॥
धूपैर्दीपैर्नमस्कारैर्वासोभिश्च पृथक् पृथक् ।
भूरिणा च तथाऽन्नेन पानैश्च विविधैस्तथा ॥
कुल्माषपरिमाणाभ्यां पूज्यास्ते कृसरेण तु ।
मोदकोल्लेपिकाभक्ष्यैः सितान्नगुडपान्वितैः ॥
माषोदनपयःक्षौद्रदधिदुग्धैश्च शक्तुभिः ।
एवं संपूजनं कृत्वा शङ्खत्र्यरवैर्युतम् ॥
गीतेन च महाभाग सुभगानर्त्तनेन च ।
ततस्तु पूजनं कृत्वा पूजास्थानात् तथाऽप्युदक् ॥

आहिताग्निकुलादग्निं विदीमुल्लिख्य वेदयेत् ।
देवगारात् स्वयम्पाकादग्निं कृत्वा पृथक् पृथक् ॥
चतुर्थं तु तदाम्नायं प्रणवाद्येन भार्गव ।
शतमाज्येन जुहुयान्महाव्याहृतिभिस्तथा ॥
ततस्तु पूजितान् नागान् वह्निदेवगणान् द्विजान् ।
कृत्वा प्रदक्षिणं सर्वे व्रजेयुः स्वगृहाणि ते ॥
उपदिष्टे तथा काले सर्वं तत्र निवेदितम् ।
हेमनिष्कं च निष्कं च धेनुं धेनुं भुवं तथा ॥
अश्वमश्वं तथाऽन्येषां शक्तितो दक्षिणा भवेत् ।
सम्भवे तु सहस्रेण कथंचिदपि कस्य चित् ॥
तथा च हस्तिभिषजः पूज्या वित्तेन भूरिणा ।
पूजनीयौ तथैवात्र सांवत्सरपुरोहितौ ॥
हस्तिन्यां मदमत्तायां शान्तिकेऽस्मिन् द्विजोत्तम ।
राष्ट्रान्निर्वास्य तां कुर्याच्छान्तिमेनां तथा नृप ॥
शान्तिकर्म गजेन्द्राणां सर्ववाधाविनाशनम् ।
धन्यं यशस्यमायुष्यं राज्ञां च विजयावहम् ॥

अत्रानुक्तविशेषशान्तिषु गजाद्भुतेषु सावित्रीमन्त्रलक्षहोमादिका शान्तिर्मृगपक्षिविकारविहिता वा शान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
अद्भुतसागरे गजाद्भुतावर्त्तः ।

---

## अथाश्वाद्भुतावर्त्तः।

तत्र पराशरः।

हयानां प्रह्लेषणं क्रीडननिषण्णतारोहापकर्षणस्तम्भनं चरणैरन्योन्यप्रोथस्पर्शनं जयाय।

विष्णुधर्मोत्तरे तु।

दक्षिणेन यदा भूमौ विकिरन् जयवर्धनः।
रात्रौ दक्षिणपार्श्वेण प्रस्वपँश्च नरोत्तम॥

बृहद्यात्रायां वराहः।

भक्ष्यपानखलिनाभिनन्दिनः पत्युरौपयिकनन्दिनोऽथ वा।
सव्यपार्श्वगतदृष्टयोऽथ वा वाञ्छितार्थफलदास्तुरङ्गमाः॥
समुद्रवद्दक्षिणपार्श्वशायिनः पादं समुद्धृत्य च दक्षिणं स्थिताः।
जयाय शेषेष्वपि वाहनेष्विदं फलं यथासम्भवमादिशेद्बुधः॥

पराशरस्तु।

प्रध्यानमश्रुपातः पानान्नविद्वेषादुद्भ्रंशो वा यानापध्वंसोऽकस्माद्वेपथुः। स्नेहो गात्रस्य धूपनं स्वगात्रभक्षणं खुरैर्वा स्फोटनं पूर्वपादावलेहनमवसादनमनिमित्तासृक्प्रसृतिर्मुखपादयोर्नमनमक्षिचलनमालस्यं पर्याणादियुक्तस्यान्यत्राहनेनारोहणप्रणाशो विकृतिर्विरोधः। छायाविकृतिरश्रीकताऽतिलोमविसरणं पराजयाय।

विष्णुधर्मोत्तरे।

आरोहणं तथाऽन्येन सर्पयानस्य वाजिनः।
जलोपवेशनं नेष्टं भूमौ च परिवर्त्तनम्॥
विपत्कल्पं तुरङ्गाश्रु स्वेदो वाऽप्यनिमित्ततः।
यवसोदकयोर्द्वेषस्त्वकस्माच्च न शस्यते॥
दन्तभङ्गावपतने तनयानावशीर्णता।

बन्धनाद्रुधिरोत्पत्तिर्वेपनं च न शस्यते ॥
क्रीडन् काकैः कपोतैर्वा शारिकाभिस्तुरङ्गमः ।
आत्मनः स्वामिनो वाऽपि तदा मरणवेदकः ॥
दुर्मना ध्यानशीलश्च रक्तनेत्रो भयावहः ।
जिह्वया लेढि वदनमात्मनस्तु यदा हयः ॥
निर्निमित्तं पतति वा तदा स्याद्रिपुवृद्धये ।
वामपादेन च तथा विलिखँश्च वसुन्धराम् ॥
स्वपँस्तु वामपार्श्वेण दिवा वा न शुभप्रदः ।
प्रवेपमाना ह्वेषन्तो निश्वसन्तस्तथा मुहुः ॥
शकृन्मूत्रं विमुञ्चन्तो वेदयन्ति महद्भयम् ।
उत्तिष्ठन्तो निषीदन्तः सन्ध्ययोर्दीनमानसाः ॥
त्रस्ताः श्रान्ताश्च रुष्टाश्च ह्वेषमाणा भयावहाः ।

बृहद्यात्रायां वराहः ।

अरोहणमन्यवाजिनां पर्याणादियुतस्य वाजिनः ।
उपवाह्य तुरङ्गमस्य वा कल्पस्यैव विपन्नशोभनाः ॥
प्रद्वेषो यवसाम्भसां प्रपतनं स्वेदो निमित्ताद्विना
कम्पो वा वदनाच्च रक्तपतनं धूमस्य वा सम्भवः ।
अस्वप्नश्च विरोधिनां निशि दिवा निद्रालसध्यानता
सादोऽधोमुखता विचेष्टितमिदं नेष्टं स्मृतं वाजिनाम् ॥
वामैश्च पादैरभिताडयन्तो महीं प्रवासाय भवन्ति भर्त्तुः ।

शालिहोत्रः ।

वामपादेन कुट्टित्वा स्कन्धं धुत्वाऽति वाजिनः ।
यदा पृष्ठं च बहुशः सद्यो घोरं विनिर्दिशेत् ॥

बृहद्यात्रायां वराहः ।

अतीव हेषन्ति किरन्ति बालान् निद्रारता वा प्रवदन्ति यात्राम् ।
रोमत्यजो दीनखरस्वराश्च पांशून् ग्रसन्तश्च भयाय दृष्टाः ॥

सुन्दरकाण्डे रावणवधनिमित्तम् ।

"दीना अश्वाः प्रहेषन्ति न च ग्रासाभिनन्दिनः"* ।

भीष्मपर्वणि कुरुक्षयनिमित्तम् ।

"ध्यायन्तः प्रकिरन्तश्च व्याला वेपथुसंयुताः ।
दीनास्तुरङ्गमाः सर्वे ........................"† ॥

भागवते कृष्णोत्क्रान्तिनिमित्तम् ।

"वाहाश्च पुरुषव्याघ्र लक्ष्यन्ते वदतो मम"‡ ।

अथ पुच्छप्रकरणम् । तत्र शालिहोत्रः ।

दक्षिणेन तु मार्गेण बालान् प्रकिरते यदा ।
बलिनोऽभ्यन्तराच्छीमान् बाह्यानां च पराभवम् ॥
वामार्धेन प्रकीर्यन्ते बाला अश्वस्य नित्यशः ।
प्रवासं तत्र जानीयाच्छीघ्रं चैव निवर्त्तनम् ॥
सर्वतः प्रकिरन्तश्च यदा बालानभीक्ष्णशः ।
चिरं प्रवासं जानीयात् कार्यस्य साधनं तथा ॥
चैक्रवद्यत्र बालानि प्रकिरन्ति तुरङ्गमाः ।
अन्यत्र बलीयांसो मध्यानां च पराजयः ॥

वाह्यमाने तु विशेषः ।

बालार्धं दक्षिणं यत्र वाह्यतां विप्रकीर्यते ।
हयानां च जयं प्राहुर्बहुश्रियं च निर्दिशेत् ॥
अथ बालाः प्रकीर्यन्ते स्नानमात्रस्य वाजिनः ।
अश्वारोहाः सहायैस्तु अध्वानं तु प्रपेदिरे ॥

---

* वाल्मीकीये नोपलभ्यते । † ३ अ. ४५ श्लो. । ‡ श्रीमद्भागवते नोपलभ्यते ।

उभे पार्श्वे प्रकीर्यन्ते बालास्तु विमुखीकृताः ।
महाभयं भवेत् तत्र शब्दे बिटबिटायिते ॥
आकिरन्ति भयादश्वा बालान् स्निग्धमृदुप्रभान् ।
चक्रवच्च प्रदृश्यन्ते निःशब्दाश्च भवन्ति च ॥
विजयं चार्थसिद्धिं च निर्दिशन्ति तुरङ्गमाः ।
प्रहृष्टानां प्रकिरणं घर्मार्त्तानां च वाजिनाम् ॥
स्नातानां च विकीर्यन्ते न ते ग्राह्या निमित्ततः ।

अथ ह्रेषितम् । तत्र पराशरः ।

स्निग्धगम्भीरह्रेषं जयाय ।

बृहद्यात्रायां वराहः ।

क्रौञ्चवद्रिपुवधाय ह्रेषितं ग्रीवया त्वचलया च सोन्मुखम् ।
स्निग्धमुच्चमनुनादि हृष्टवद्ग्रासरुद्धवदनैश्च वाजिभिः ॥
पूर्णपात्रदधिविप्रदेवतागन्धपुष्पफलकाञ्चनानि वा ।
द्रव्यमिष्टमथ वा परं भवेद्ध्रेषतां यदि समीपतो जयः ॥

शालिहोत्रः ।

विप्रान् सुमनसो वह्निं कुमारीं पूर्णभाजनम् ।
अश्वा दृष्ट्वाऽभिह्रेषन्ते विजयं तत्र निर्दिशेत् ॥
दिवाकरं वीक्षमाणो जृम्भमाणः प्रह्रेषते ।
संग्रामं निर्दिशेत् तत्र भर्त्तुश्च विजयं भवेत् ॥
तुरगस्तु यदा व्यूहे ध्वजाग्रं वीक्ष्य ह्रेषते ।
हृष्टः स्वकर्णौ विन्यस्य नान्यं संप्रेक्षते हयः ॥
क्षिप्रं तु संहरत्येतज्जयो ह्येषां प्रदृश्यते ।
अनुरक्ताश्च ह्रेषन्ते युगपच्च यदा हयाः ॥
संग्रामं निर्दिशेत् तत्र विजयं चापि स्वामिनः ।

प्रशस्तकर्णाः स्निग्धाङ्गा रक्ताक्षा विजयोत्सुकाः ॥
ह्रेषन्ते तुरगा यत्र तत्रापि विजयं ध्रुवम्।
त्रिषु स्थानेषु संक्रम्य शब्दमेव प्रकुर्वतः ॥
सुवृष्टिं सुभिक्षं च विजयं चैव निर्दिशेत्।
खादन्तस्त्वतिह्रेषन्ते न च विस्फोटयन्त्युत ॥
द्वार्याचार्यस्य वेश्यां वा सर्वसिद्धिं च निर्दिशेत्।
ग्रसित्वा खादनं चैव सतृणं चैव ह्रेषते ॥
भूमिलाभं सुवृष्टिं च राज्ञश्च विजयं विदुः।

विष्णुधर्मोत्तरे।

ह्रेषतस्तुरगान् ज्ञात्वा घोषो वा वाजिनो भवेत्।
तदा विजयमाख्याति स्वामिनो ध्रुवमेव तु ॥

शालिहोत्रः।

शिरसा तालुकण्ठे च अनुक्रोशं शनैः शनैः।
सिञ्जितं तद्विजानीयाद्ग्रासार्थेनानिमित्ततः ॥

ग्रासार्थेनानिमित्तत्वादफलं तदित्यर्थः।

चित्रसत्त्वा यदाश्वाश्च नाभिनन्दन्ति खादनम्।
परस्परेण ह्रेषन्ते विद्यादग्निभयं ध्रुवम् ॥
शुष्केन्धनं च काष्ठं वा खादन्तो यत्र* ह्रेषते।
आदित्यं य उदीक्षन्ते विद्यादशनिजं भयम् ॥
स्तम्भयित्वा तु लाङ्गूलं वीक्षमाणोऽपि ह्रेषते।
विजृम्भमाणो बहुशो वह्निना भयमादिशेत् ॥
यदा स्थानगतोऽन्योन्यं ह्रेषमाणो ह्युदीक्षते।
स्वेदमानः पुरीषेण सद्यो रोगं विनिर्दिशेत् ॥

* ह्रेषन्ते इत्यत्र ह्रेषते इत्यसाधु पाठः।

सेनायां दीर्यमाणायां सेनापतिमुखाद्यदा ।
भर्त्स्यमाना विह्लेषन्ते युद्धमत्युग्रमादिशेत् ॥

बृहद्यात्रायां वराहः ।

सन्ध्यासु दीप्तामवलोकयन्तो ह्लेषन्ति चेद्युद्धपराजयाय।

शालिहोत्रः ।

उत्तिष्ठन्ति निषीदन्ति श्वसन्ति च मुहुर्मुहुः ॥
वित्रासयन्तो ह्लेषन्ते तत्पराजयलक्षणम् ।
स्थानात् स्थानात् प्रश्वसँस्तु उद्विग्नं यदि ह्लेषते ॥
विद्यात् परेषां विजयमार्त्तनादः पराजयम् ।
ग्रसन्तो ह्लेषिताश्चित्रं निश्वसन्ति च वाजिनः ॥
निमित्तं तादृशं दृष्ट्वा निर्दिशेत् तु महद्भयम् ।
बहुमूत्रपुरीषाश्च प्रस्रवन्ति यदा हयाः ॥
ह्लेषिता दीननिर्ह्रादास्तदा तत्र पराजयम् ।
भूम्यां ग्रसित्वा ग्रासं च पूर्णास्यो यदि ह्लेषते ॥
अश्वारोहाश्च बद्धाश्वस्त्वन्नपानाय बोध्यते ।
विच्छिद्य वा प्रह्लेषन्ते यदा खरतरस्वनाः ॥
सेना तत्र प्रबध्येत चमूरपि विपद्यते ।
उत्थाप्यमाना रोदन्ते दीर्घं च खरनिःस्वनाः ॥
हयाँस्तु तादृशान् दृष्ट्वा राज्ञो मरणमादिशेत् ।

अत्रापि शाकुनमिश्रकाभिहतान् दृष्ट्वाऽऽदितोऽभिधायाह शालिहोत्रः ।

यदि स्वाभिमुखो ह्लेषेन्न च विद्यादिदं फलम् ।
पृथक् पृथक् दिशानां च फलं तासां प्रवक्ष्यते ॥
ऐन्द्र्यां हयस्याभिरुतान्नृपस्य च महद्भयम् ।
आग्नेय्यां वाऽप्यग्निभयं याम्यायां मरणं ध्रुवम् ॥

क्षुधाभयं च नैर्ऋत्यां वारुणे जनसंप्लवम् ।
वायव्यां च व्याधिनाशं सौम्ये च शत्रुरोधनम् ॥
ऐशान्यां तुरगरुताद्‌द्विजातीनां महद्भयम् ।
खे रवेत् तत् तदेवाशु विद्यात् तत्र महद्भयम् ॥
रात्रौ रुतं भवेत् स्वस्मिञ्छत्रावह्नि रुतं भवेत् ।
एवं शुभाशुभं ज्ञेयं समे समफलं मतम् ॥
दृष्ट्वा त्वशुभमुत्पातं शान्तिं तत्र च कारयेत् ।
*शान्त्युक्तामुपसर्गेषु वाहानां हितमिच्छता ॥
उभौ कालौ तु विधिवद्‌ब्राह्मणान्मधुपायसैः ।
पुष्कलां दक्षिणां वाऽपि हयागारेषु वाऽऽचरेत् ॥
पुष्पलाजाक्षतैर्वाऽपि गोपुरेषु च कारयेत् ।
इत्याह स्म च भगवान् शालिहोत्रोऽग्निनाशनम् ॥

अथ ज्वलितफलम् । तत्र पराशरः ।

मुखादग्निविस्फुलिङ्गोल्काज्वालाप्रपतनमुत्तमाङ्गज्वलनं नाशाय ।

विष्णुधर्मोत्तरे ।

नेत्रनासापुटप्रोथस्कन्धसासनमूर्धसु ।
हयानां ज्वलनं शस्तमतोऽन्यत्र न शस्यते ॥

बृहद्यात्रायां वराहः ।

नासापुटप्रोथशिरोऽश्रुपातनेत्रेषु रात्रौ ज्वलनं जयाय ।
पालाशताम्रासितकर्बुराणां† चित्रांशुकाभस्य सितस्य चेष्टम् ॥

विष्णुगुप्तस्तु ।

नासापुटाश्रुपातप्रोथशिरोलोचनेषु रजनीषु ।
विजयाय प्रज्वलनं ताम्रसितहरितशवलानाम् ॥

* शान्तिप्रकरणोदिताम्–इति । † नित्यं शुकाभस्य इति अ. पु. पा. ।

शालिहोत्रस्तु ।

निशायां यत्र दृश्येते नेत्रे दीपशिखाप्रभे ।
विजयो नियतस्तस्य बलं कोशश्च वर्धते ॥
यदा च ह्रेषमाणानामुल्का चन्द्रप्रभा द्रवा ।
उल्का बाणाद्विनिष्पेतुः सुखं सर्वत्र इष्यते ॥
स तेषां हसितो नाम पार्थिवे जयलक्षणम् ।
येषां मुखादग्निनिभा उल्का वायुसमीरिता ॥
निष्क्रामन्ति ह्रेष्यमाणे तत्रापि विजयो भवेत् ।
धावतश्चक्रवद्यत्र सेनोत्साहश्च वर्धते ॥
प्रयाति यत्र विजेयं तत्र सर्वत्र सम्पदः ।

पराशरः ।

पृष्ठपुच्छगुदज्वलनं गात्रस्य धूपनं पश्चाज्ज्वलनं सेनापराजयाय ।

बृहद्यात्रायां वराहः ।

उत्सर्गाग्नि शुभदमासनात् परस्थं वामे ज्वलनमतोऽपरं प्रशस्तम् ।
सर्वाङ्गज्वलनमवृद्धिदं हयानां द्वे वर्षे दहनकणाश्च धूपनं वा ॥

धूपनं ज्वलनं नेष्टं तथा धूमसमुद्भवः ।
विस्फुलिङ्गोद्भवं चैव सक्तु पार्श्वानने तथा ॥

शालिहोत्रस्तु ।

पश्चिमार्धे ज्वलमाने भर्त्तुर्विंद्यात् पराजयम् ।
दीप्यनाने तु पूर्वार्धे हयस्यैव पराभवम् ॥

गर्गस्तु ।

पश्चार्धभागज्वलने हयानां क्षिप्रं भयं शत्रुभवं नृपस्य ।
पूर्वार्धभागे ज्वलिते हयस्य राष्ट्रं विनश्यत्यचिरादशेषम् ॥

शालिहोत्रस्तु ।

यदा तु सर्वकायेषु ज्वलत्यङ्गारविस्तरैः ।

तदा मासद्वयादूर्ध्वं राज्ञो मरणमादिशेत् ॥
प्राक्पश्चिमार्धयोरेकदैव प्रज्वलनं भवेत् ।
यदा ज्वलति पूर्वार्धं तुरङ्गो भीमदर्शनः ॥
तत्र सेनापतेर्नाशस्तथा राष्ट्रविनाशनम् ।

यदा कृत्स्नं पूर्वार्धं ज्वलितं तदा सेनापतिराष्ट्रविनाशो भवतीत्यर्थः ।

यदा ज्वलति सर्वत्र सपादतलमस्तकः ।
तदा राष्ट्रविनाशस्तु राज्ञश्च मरणं भवेत् ॥
उत्तमाङ्गस्य ज्वलने पुरोहितवधं विदुः ।
ज्वलने चैकपक्षस्य अश्वनाशं विनिर्दिशेत् ॥
वामपार्श्वे प्रज्वलिते मन्त्रिनाशमथादिशेत् ।
पार्श्वे प्रज्वलिते चैव दक्षिणे मन्त्रिनाशनम् ॥

गर्गस्तु ।

वामे तु पार्श्वे ज्वलिते हयस्यामात्यनाशनम् ।
दक्षिणे ज्वलिते पार्श्वे मित्रनाशं विनिर्दिशेत् ॥

शालिहोत्रः ।

ज्वलने चैकपक्षस्य अश्वनाशं विनिर्दिशेत् ।
कोशागारविनाशः स्यादुदरे ज्वलिते भवेत् ॥
मुष्कयोर्वाऽथ मेढ्रे च ज्वलने च विचक्षणः ।
अन्तःपुरभयं विद्याज्जघने सुतनाशनम् ॥

बृहद्यात्रायां वराहः ।

अन्तःपुरं नाशमुपैति मेढ्रे कोशक्षयं स्यादुदरे प्रदीप्ते ।
पायौ च पुच्छे च पराजयः स्याद्वक्त्रोत्तमाङ्गज्वलने जयश्च ॥
स्कन्धासनासज्वलनं जयाय बन्धाय पादज्वलनं प्रदिष्टम् ।
ललाटवक्षोऽक्षिभुजेषु धूमः पराभवाय ज्वलनं जयाय ॥

शालिहोत्रः ।

यदा बालेषु पुच्छे वा जघने चापि वाजिनाम् ।
अग्निर्भवति धूमो वा तदा विद्यान्महद्भयम् ॥
कूर्मकुक्ष्यक्षिजङ्घासु यदा ज्वलति केसरी* ।
तदा भर्त्तुः प्रवासः स्यात् सर्वशस्यविनाशनः ॥
प्रकीर्यन्ते यदा बाला ज्वलमानस्य वाजिनः ।
चित्रवृष्टिस्तु पर्जन्यस्तस्मिन्नुत्पातदर्शने ॥
ज्वलन्ति बाला धूमानि यदा प्रायेण वाजिनाम् ।
तदाऽस्त्रेण विजानीयाद्बुधः सेनापतेर्ध्रुवम् ॥
बालैरभीक्ष्णं प्रकिरन् स्फुलिङ्गश्च यदा भवेत् ।
वरूथिनी तु सेनायाः क्षिप्रं शस्त्रेण बध्यते ॥

गर्गः ।

सौम्याग्नेयं जगत् सर्वं हयास्तेजोगुणाधिकाः ।
हुताशनप्रणीताश्वः परमाय प्रजायते ॥
दीप्यते ग्रासरहितस्ततस्तेजोमया हयाः ।
तस्मिन्नग्नौ शरत्काले मदकाले च वाजिनः ॥
न ग्राह्याणि ज्वलनानि नृत्यगानादिकेषु च ।
समग्रफलदा न स्युर्याज्ञिके ज्वलानि तु ॥

शालिहोत्रः ।

तन्मुखं सर्पिषाऽभ्यक्तं प्रोक्षयेद्गौरशर्षपैः ।
अहतक्षौमसंवीतमाल्यदामविभूषितम् ॥
प्रदद्याद्दैवतेभ्यो वा द्विजेभ्यश्चैव तं तथा ।
सप्तरात्रात् परं वाऽपि निष्क्रमेणोपपादयेत् ॥

* अश्वः-इति ।

सुवर्णगोप्रदानेन भूमिदानेन वा पुनः ।
देवेभ्यः प्रणमेन्नित्यं प्रातरुत्थाय मानवः ॥
भोजयेद्ब्राह्मणाँश्चैव दध्ना सर्पिःफलोदनैः ।
सायं प्रातस्तर्पयित्वा ब्राह्मणान् मधुपायसैः ॥
पुण्याहं वाचयेच्चैव स्वस्त्यायनकसंयुतम् ।
व्रतोपवासैः संतिष्ठेद्यमेन नियमेन च ॥
वायव्यैर्वारुणैश्चैव तथा चेन्द्रपुरोगमैः ।
आश्विनैर्वैष्णवै रौद्रैः सावित्रैश्च पुरोहितः ॥
सदा दुर्गामराणां च सावित्राणां तथा तथा ।
एवं कुर्वीत शालायां सप्तरात्रमतन्द्रितः ॥

अथ पुष्पितम् । शालिहोत्रः ।

विवर्णा विन्दवो वर्णाः प्रभवन्ति शरीरजाः ।
अग्रदन्तादिभागेषु तत् स्थानं पुष्पसंज्ञितम् ॥
वर्णोऽसवर्णं पुष्पं तु सूक्ष्मत्वादुपलभ्यते ।
शुभाशुभव्यञ्जकानि संस्थानस्थानवर्णतः ॥
अग्रदन्तेषु यस्य स्युरुत्तरेष्वधरेषु च ।
स्निग्धश्वेतानि पुष्पाणि खुरेष्वपि तथैव च ॥
अर्थागमं तेषु विद्यादह्नां सप्ततिभिर्बुधैः ।
अपि वा सप्तभिः पक्षैर्मासैः सप्तभिरेव च ॥
स्थानैरेषु विवृद्धिः स्यात् केशेष्वर्थागमं विदुः ।
निगाले भोजनार्थाय अर्थलाभं च निर्दिशेत् ॥
दन्तात् पुत्राँश्च लभते कण्ठे पुष्पाणि यस्य तु ।
ग्रीवोपस्कन्धक्रोडेषु पुष्पितेषु धनागमः ॥

अंशयोः पुत्रलाभाय बाह्वोर्मित्रविवृद्धये ।
जानुजङ्घाकलाकूर्चैः पुष्पितैस्तु सुरप्रियः ॥
कक्षयोः कुक्षिपार्श्वेषु पृष्ठे वा चार्थसिद्धये ।
सेनापत्यं तु नाभ्यंशे विजानीयाद्विचक्षणः ॥
मुष्कयोः पुष्पिते वाहे पुत्रोत्पत्तिं विनिर्दिशेत् ।
सर्वाङ्गपुष्पितो वाजी श्वेतैः सर्वार्थसाधकैः ॥
हितो धनकरो नित्यं पुत्रपौत्रविवर्द्धनः ।
श्वेतैः श्वेतानि वाऽत्यर्थं स्निग्धानि वसनानि च ॥
अर्थलाभाय पुष्पाणि यस्य तत्सदृशानि चेत् ।
पुत्रपौत्रविवृद्धिश्च अर्थवृद्धिस्तथैव च ॥
वर्धते वाऽश्वकोशेन चक्रं वाऽस्य विवर्धते ।
ससत्त्वानां प्रशस्तानामायुधानां तथैव च ॥
छत्रध्वजपताकानां वेदितव्याकृतीनि च ।
नन्द्यावर्त्तसवर्णानि तथा शङ्खाकृतीनि च ॥
पुष्पमाङ्गल्यरूपाणि वर्णाद्वर्णोत्तमानि च ।
स्निग्धानि समरूपाणि प्राङ्मुखानि च वाजिनाम् ॥
तान्याहुर्धनलाभाय विपरीतस्तु गर्हितः ।

पराशरस्तु ।

अथ पुष्पं श्वेतं स्निग्धमवर्णस्य प्रशस्तम् । श्वेतस्य कृष्णं पीतं रक्तं च । यस्याश्वस्य ललाटे श्वेतकलेन्दुतारकासंस्थानं वा पुष्पं स्यात् तदनुसारि विजयं विद्यात् । आप्रोथात्कमलं यस्य हिरण्यपुण्ड्रकं धाम श्रीविजयावहम् । यस्य वा स्निग्धैः सर्वाङ्गस्थैः सन्नाहानुकारं तु विभवराष्ट्रविजयावहम् ।

शालिहोत्रः ।

वक्त्रयोर्धनलाभाय कुक्षिरोगोऽथ वोदरे ।
जघने विक्रमं विद्याद्विनाशो हृदये तथा ॥
आयासादन्नापनाय प्रोथे पुत्रवधो भवेत् ।
सृक्किणीचिवुके चैव विज्ञेयः सोमपानदः ॥
घोणाशफे शस्त्रमृत्युरुपसर्गस्तु पादयोः ।
केशान्ते धनलाभाय दतोर्दुःखं विनिर्दिशेत् ॥
गण्डयोर्भक्ष्यलाभाय कटे पुत्रवधाय च ।
शङ्खे भ्रातृवधं विद्याच्छिद्रभागे तथैव च ॥
वामकर्णे प्रवासाय क्षेत्रवृद्धिस्तु दक्षिणे ।
हनुवक्त्रयोर्भयाय शटयोः शीर्षभेदनम् ॥
स्फिग्गुदमूत्रकोशेषु मांसलोरुखुरेषु च ।
वाहनाशं पुष्पितेषु संग्राममभिनिर्दिशेत् ॥
अपायं बालमूलेषु सर्वशस्यविनाशनम् ।
कर्णे श्वेतानि धान्यानि विद्याद्वर्णानुवर्णयोः ॥
पीतकेषु च संग्रामं बालार्कसदृशेषु च ।
कृष्णे युद्धं विजानीयाद्यातुश्चापि वधं युधि ॥
तीव्रं भ्रातृवधं विद्याद्दुर्गेषु विषमेषु च ।
पुष्पेषु पुष्पं याप्यं स्याद्वर्णतोऽन्यतरं भवेत् ॥
राजा विनश्यते तेन राष्ट्रं चैव विनश्यति ।
श्वशृगालवायसानामाकृतीनि तु यानि तु ॥
विवर्णानि च रूक्षाणि विषमाणि भवन्ति चेत् ।
दुर्मुखानि तु यानि स्युस्तथा पश्चान्मुखानि च ॥

तानि राष्ट्रस्य नाशाय राष्ट्रभ्रंशकराणि च ।
बालको यस्य पत्राणां राज्ञस्तानि विनाशने ॥

द्विवर्गे तु पुष्पे फलं साधु दद्यात् विकल्पैरनेकैस्तथा तस्य तत् स्यात् ।
चतुर्वर्णपुष्पं समग्रं सुवर्णं फलं चात्र वेद्यं यशोऽग्र्यं प्रभुत्वम् ॥
हये श्वेतपुष्पे भवत्यश्वभर्त्ता रणे शत्रुहन्ता परं चाश्वरत्ने ।
हये रक्तपुष्पे व्रजत्यश्वभर्त्ता विनाशं विवादं परं कीर्त्तिनाशम् ॥
हये कृष्णपुष्पे व्रजत्यश्वभर्त्ता विपत्तिं विनाशं च सङ्ख्ये हरीणाम् ।
हये पीतपुष्पे व्रजत्यश्ववर्णानुवर्णेषु तुल्यं फलं शास्त्रयोगात् ॥

यथा क्षेत्रे च दशधा विभक्तं लक्षणं पृथक् ।
पृथक् पुष्पे फलं चैव तच्च विद्यान्निमित्तजम् ॥
तस्मान्निमित्तजं ग्राह्यमादेश्यं च निमित्तवत् ।
एवमुक्तानि पुष्पाणि यच्च प्रोक्तमशेषतः ॥

अथ दन्तादिवैकृत्यम् । तत्र पराशरः ।

अधिकैर्दन्तैः स्वामिनो धनक्षयं विद्यात् । उपर्यधिकैः स्वामिनां संग्रामे वधं ह्रस्वैः करालैर्विस्तृमरैर्भर्त्तुरनर्थं विनाशं च ।

शालिहोत्रस्तु ।

चत्वारिंशस्तथाऽश्वानां दशनाः परिसंख्यया ।
दन्तसंख्यानवैषम्यात् फलं वैशेषिकं शृणु ॥
हयस्त्वधिकदन्तस्तु प्रजाघ्नो भर्त्तृनाशनः ।
उच्चैस्तु दर्शनैर्वाऽपि भर्त्तृघ्नो दारदूषणः ॥
दन्तपूर्णमुखं चैव वर्जयेत् कुलनाशनम् ।
अप्रशस्तेन रूपेण दन्तमूलाद्द्विजोऽधिकः ॥
निर्गतो यस्य सोऽधस्तात् करिदन्तकुलान्तकृत् ।
विषमैर्दशनैर्वाजी भर्त्तृघ्नः परिकीर्त्तितः ॥

नो दानाच्चान्नपानस्य युक्तिदन्तस्तुरङ्गमः ।
अधरेषु करालेषु क्षुद्भयं स्वामिनो भवेत् ॥
उत्तरेषु करालेषु भर्त्ता जीयेत शत्रुभिः ।
वक्त्रजैः पूरितैर्वाजी विज्ञेयो वित्तनाशनः ॥
एकारतुल्यदन्तोऽश्वो वित्तानन्दावहः स्मृतः ।
विपरीतात् ततो धान्यं फलं ये शुभवक्त्रजाः ॥
उष्ट्रे चैवं फलं ज्ञेयं शुभं वाऽत्र शुभेतरत् ।
होतव्यं पत्तने नित्यमशुभं नाशुभं भवेत् ॥
दंष्ट्रापतनभङ्गेषु लक्षणं शृणु वाजिषु ।
राजपत्नीवधं वामे दक्षिणे मन्त्रिदूषणम् ॥
पक्षयोस्तु विजानीयात् तीर्यग्भागे महद्भयम् ।
दंष्ट्राणां तिर्यग्नृपध्वसं तेन समादिशेत् ॥
दंष्ट्राश्चतस्रो भ्रश्यन्ते युगपद्यत्र वाजिनाम् ।
सामात्यस्य सराष्ट्रस्य राज्ञस्तत्र क्षयो भवेत् ॥
दक्षिणा ह्युत्तरा दंष्ट्रा द्वे चाप्यधरतः समम् ।
पतन्ति येषां वै भर्त्ता पीड्यते तस्य सान्वयः ॥
अधस्ताद्दक्षिणा दंष्ट्रा द्वे चाप्यधरतः समम् ।
पतन्ति यस्य वाहस्य तस्य भर्त्तुर्वधो ध्रुवम् ॥
वामाधस्ताद्यदा दंष्ट्रा ये चाप्युत्तरतः समम् ।
राजा च युवराजश्च क्षिप्रं तस्य विनश्यति ॥
अधरोत्तरदंष्ट्रे तु भ्रश्येते युगपद्यदा ।
एकस्यैव तदा राज्ञो वधः क्षिप्रं विधीयते ॥
यदा तूपरिजा दंष्ट्रा दक्षिणस्यैव भ्रश्यते ।

युवराजवधश्चैव वामे कन्यावधाय च ॥
यदा चाधरतो दंष्ट्रे भ्रष्टेते सममेव तु ।
पार्थिवस्याभिषिक्ताया देव्यास्तत्र क्षयो भवेत् ॥
यदा त्वधरजा दंष्ट्रा भ्रष्टतेऽश्वस्य दक्षिणा ।
तदा बलक्षयं विद्याद्वामे कोषक्षयो भवेत् ॥
उत्तराधरजे दंष्ट्रे भ्रष्टेते स्वस्वदक्षिणे ।
ताभ्यां मन्त्रिक्षयं विद्याद्वामाभ्यां मन्त्रिदूषणम् ॥
उत्तरा दक्षिणायाता वामा स्यादधरायता ।
ताभ्यां जनपदः क्षीयेदितराभ्यां पुरक्षयः ॥
दंष्ट्राभङ्गे फलं कृत्स्नमेतत् तु परिकीर्त्तितम् ।
पतनेऽप्येवमेव स्याद्दोषः स्पष्टतरस्तु सः ॥
सदंसा चोत्तरा यस्य युगपद्भ्रष्टते यदा ।
क्षुद्भयं तत्र जानीयात् पुरराष्ट्रस्य दारुणम् ॥
अमाङ्गल्यस्तु सोऽश्वो वै न योग्यो राजवाहने ।
विज्ञेयो राष्ट्रनाशश्च मध्यमो यदि भ्रष्टते ॥
प्रत्यन्तकोपो विज्ञेयो भग्नयोश्च रिपुक्षयः ।
अधरौ विघर्षतो दंष्ट्रे भग्ने मन्त्र्यग्रदूषणम् ॥
मध्यमे बलकोषाणां परिभग्ने क्षयाय च ।
एकैकपतने तेषां विन्यस्तपतनेऽपि वा ॥
दन्तभङ्गेषु वाहानां दोषाः पादोपजीविनाम् ।
विन्यस्तपतने वाऽपि दोषास्तु परिचारिणाम ॥
इत्येषु दन्तभङ्गेषु लक्षणं परिकीर्त्तितम् ।
योगाश्चेद्द्विपदंष्ट्रासु फलं संपूर्णमिष्यते ॥

मध्ये मध्यफलं विद्याच्छेदे स्वल्पफलं भवेत् ।
मूले व्यक्तफलं विद्याद्भङ्गे तुरगदन्तिनाम् ॥
नाग्राह्यं लक्षणं भङ्गे भक्ष्यार्थदशनस्य वा ।
दिवसस्य च रात्रेश्च त्वेकान्येन विभावयेत् ॥
क्षिप्रं मध्यं चिराच्चैव चित्रं दृष्टं फलोदयम् ।
पूर्वाह्णे क्षिप्रपाकः स्यान्मध्याह्ने तु चिराद्भवेत् ॥
अपराह्णे च रात्रौ च चिरपाकफलयोदयः ।
तिथिनक्षत्रयोगेषु दिवसेषु गुरुष्वपि ॥
फलोदयो यथोद्दिष्टः स एवाल्पफलो भवेत् ।
वारुणे रुद्रदैवत्ये नक्षत्रे सर्वसन्धिषु ॥
चन्द्रसूर्योपरागेषु दिवसेषु गुरुष्वपि ।
अविकारि यदाऽश्वस्य दंष्ट्राभङ्गे महत् फलम् ॥
विकारा जरसा चैवमश्वानां ये भवन्ति तु ।
न तत्र तैः शुभो ज्ञेयोऽशुभो वा विफलोदयः ॥
नाभिघातादकस्माच्च पतनं फलदं भवेत् ।
सुवर्णगोप्रदानैश्च द्विजेभ्यस्तर्पणेन च ॥
शान्तिः पुण्याहघोषैश्च समयो बलवान्नृप ।
काले तु दृष्ट्वा उत्पातांस्तत्र सद्यः फलोदयः ॥
राज्ञः सबलराष्ट्रस्य तत्र विद्यान्महद्भयम् ।

ऊर्ध्वमधश्च मध्यं दन्तचतुष्टयाग्रस्थौ दन्तौ दृष्ट्वा पराशरः ।

योऽजातवृषणः कर्णौ यस्य कराङ्गुष्ठपर्वप्रमाणौ कर्णमलयोः शङ्के स्यातां सोऽश्वो राष्ट्राद्बहिः कार्यः ।

शालिहोत्रस्तु ।

मुष्कमूलं समाश्रित्य मूत्रकोशस्य पार्श्वयोः ।
समौ च संहितौ जातौ गोस्तनाकृतिसंस्थितौ ॥
प्रवालाङ्कुरसंस्थानौ वटाङ्कुरनिभावपि ।
चर्मकीलाकृतिसमौ पिटकाकृतिसंस्थितौ ॥
एवंविधो भवेद्यस्य तमश्वं स्तनितं विदुः ।
अमङ्गल्यं तु तं विद्याद्राष्ट्रभर्त्तृविनाशनम् ॥
राजा त्यजेत् तु तं शीघ्रं तादृशं पापलक्षणम् ।
गोविषाणाग्रसंस्थानं कुटशृङ्गाग्रसंस्थितम् ॥
गोस्तनाकृतिसंस्थानं करीराग्रोपमं सथा ।
चर्मकीलाकृति तथा पिटकाकृति चैव वा ॥
कराङ्गुलनिभं वाऽपि स्थूलं वा यदि वा कृशम् ।
दीर्घं ह्रस्वं खुरं श्लक्ष्णं कठिनं मृदु चैव वा ॥
सटामध्ये तु वा बालं ललाटे मधुकेऽपि वा ।
यस्य तं शृङ्गिणं विद्याद्राज्ञो राष्ट्रविनाशनम् ॥
यस्मिन् देशे च वसति स च देशो विनश्यति ।
तस्मात् तं तु रिपोर्देशे त्यक्त्वा शान्तिं प्रयोजयेत्
अधःस्तनी च शृङ्गी च द्वावेतौ राष्ट्रनाशनौ ।
वर्जितौ सर्वकालेषु कालचक्रे यमौ तु तौ ॥
हयाश्च द्विखुरा ये च शृङ्गिणः स्तनिनोऽपि च ।
त्रिकर्णाः सविषाणाश्च सपुष्पाः सद्विजास्तथा ॥
ये चान्यूनाधिकाङ्गाश्च जायन्ते तु सदंष्ट्रिणः ।
यच्चान्यदीदृशं किञ्चित् सर्वमुत्पातलक्षणम् ॥

यस्मिन्नेतादृशं तस्मिन् पुरे जनपदेऽपि वा ।
राज्ञस्तु व्यसनं विद्यात् स च देशो विनश्यति ॥
तस्मादेवंविधानश्वान् परदेशे निवेशयेत् ।
उत्पातानीदृशान् दृष्ट्वा शान्तिकर्माणि कारयेत् ॥
पुण्याहघोषैर्होमैश्च देवब्राह्मणपूजनैः ।
नियमैर्मन्दिनीदानैः शान्तिर्भवति तद्विधैः ॥
यस्यावर्त्तस्तु ककुदि स च वा व्यसनार्दितः ।
भर्त्तारं सान्वयं हन्याद्यच्च भर्त्तुः कुलोत्तमम् ॥
न तं शालासु बध्नीयाद्भयं चैव विगर्हितम् ।
वाहनश्च विनाशाय राज्ञे राष्ट्रवधाय च ॥
सर्वार्थनाशनं रौद्रं जातमात्रं विनाशयेत् ।
अवतीर्य च संग्रामे स्वस्तिमान् न निवर्त्तते ॥
हस्तस्पर्शेन चक्षुर्भ्यां दूरतः परिवर्जयेत् ।
यत्नेन याति संग्रामं स जीवन् न निवर्त्तते ॥
एष नेत्रानुरूपेण धूमकेतुरिवोत्थितः ।
यत्र तिष्ठत्यसौ वाजी देशे जनपदेऽपि वा ॥
राजा च म्रियते तत्र क्षुद्भयं तत्र जायते ।
न च वर्षति पर्जन्यः काकुदी यत्र तिष्ठति ॥
दृष्ट्वा सूर्यं प्रपश्येत तु स्पृष्ट्वा स्नानं सवाससा ।
द्विजेभ्यो वा प्रदातव्यः परराष्ट्रेऽपि वा त्यजेत् ॥
तस्मात् तं तु रिपोर्देशे त्यक्त्वा शान्तिं समाचरेत् ।

अत्रानुक्तविशेषशान्तिषु हयोत्पातेषु सावित्रीमन्त्रकदशलक्षहोमादिका सामान्यशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचितेऽद्भुतसागरेऽश्वाद्भुतावर्त्तः ।

## अथ वृषमहिषाद्भुतावर्त्तः ।

तत्र गर्गः ।

शिवाय स्वामिनो रात्रौ बलीवर्दो नदन् भवेत् ।
उत्सृष्टवृषभो राज्ञो विजयं संप्रयच्छति ॥

पराशरः ।

बलीवर्दोऽक्षतश्च योऽनिमित्ततो वित्रस्तः प्रणदन्नावेदयति भयम् । दक्षिणेन यदा भूयन्नहृष्टरूपमुत्क्राम्य जघनचरणान् धूनयत्यनर्थः । अन्यदेशाक्रामणं भिन्नवृत्तिस्तद्वसुभृतः ।

वसन्तराजस्तु ।

प्रशस्यते दक्षिणतश्च चेष्टा तथा निशीथे निनदो वृषस्य ।
वामे च भागे गमनं वृषस्य चेष्टा च वामा महतां हिताय ॥

श्रीभागवते कृष्णोत्क्रान्तिनिमित्तम् ।

"नाहन्यन् वृषभा व्रजे"* ।

मयूरचित्रे ।

मुह्यन्ति वृषभा यत्र निबद्धा गृह एव च ।
माद्यं वाऽपि भवेद्गेहे धनहानिश्च जायते ॥
हव्यमष्टोत्तरं तत्र त्र्यम्बकेनाम्बुपत्रकम् ।
सहस्रं दक्षिणा गोस्तु ब्राह्मणाय शुभं तथा ॥

वसन्तराजः ।

अर्थाय नाशाय च तुल्यकाले पार्श्वद्वयस्थौ महिषौ भवेताम् ।

औशनसे ।

यस्य राज्ञो जनपदे नित्यमेव गवां क्षयः ।
भयं तत्र विजानीयादचिरात् समुपस्थितम् ॥

---

* श्रीमद्भागवते नोपलभ्यते ।

नारदः ।

रुधिरं प्रसवेद्यत्र दुह्यमानासु धेनुषु ।
प्रभुश्च म्रियते तत्र धनहानिर्न संशयः ॥

भीष्मपर्वणि कुरुक्षयनिमित्तम् ।

"प्रधानाः सर्वलोकस्य यास्वायत्तमिदं जगत् ।
ता गावः प्रस्नुता वत्सैः शोणितं प्रक्षरन्त्युत"* ॥

भागवते अगदुद्वेजकहिरण्याक्षोत्पत्तौ ।

"गावोऽत्रसन्नसृग्दोहाः"† ।

रौधिरदोहे तु शान्तिमाह नारदः ।

दधिमधुघृताक्तायाः पालाश्याः समिधोऽयुतम् ।

मयूरचित्रे तु ।

गवां रक्तस्य संदोहे राजा स्याद्रिपुगोचरः ।
दुह्यन्ते रुधिरं गावस्तण्डुला अङ्कुरन्ति वै ॥
अर्वाक् स वत्सरं नश्येत् प्रभुर्देशो भवेद्धनम् ।
अष्टोत्तरसहस्रं तु महाव्याहृतिभिः शुचि ॥
उदुम्बरसमिद्धेऽग्नौ दानं गोद्विजभोजनम् ।

तत्रैव ।

धेन्वाः संदुह्यमानायाः कृमयः संभवन्ति च ।
ऐन्द्रीं शान्तिं ततः कुर्यात् सहस्रं जुहुयादथ ॥
त्रातारमण्डलमिति मन्त्रेणाष्टोत्तरं शुचि ।
चरुकर्माशनं चास्य ब्राह्मणांस्तर्पयेत् ततः ॥
पायसैर्मधुसंयुक्तैर्दधिक्षीरगुडोदनैः ।
महोत्पातोपशान्त्यर्थं हुतान्ते बहुदक्षिणाः ॥

गर्गः ।

धेनुर्धेनुं पिबेद्यत्र ह्यनड्वाननडुहस्तथा ।

---

* ३ अ, २० श्लो. । † श्रीमद्भागवते ३ स्कन्धे १८ अ, १३ श्लो. ।

स्वयमेवाथ पिबते धेनुः स्वाङ्गमथापि वा ॥
प्राप्तेषु त्रिषु मासेषु परचक्रागमं वदेत् ।

गार्गीये ।

यथा वृषोऽनिबलत्वाच्छृङ्गाभ्यामुत्किरेन्महीम् ।
नर्दते च तथा गौर्वा स्वामिनो मरणं भवेत् ॥

मयूरचित्रे ।

स्त्री गवी नर्दते यत्र मृत्युः षण्मासतो भवेत् ।
जातवेदसमन्त्रेण जुहुयादयुतं शुचि ॥
अपामार्गस्य समिधो होतव्या गौश्च दक्षिणा ।

नारदस्तु ।

स्त्री गवी नर्दते यत्र दोषं तत्र विनिर्दिशेत् ।
कुलोत्सादो भवेत् तत्र धनहानिश्च जायते ॥
धान्यानामयुतं तत्र घृताक्तानां समारभेत् ।
श्रीश्च ते इति मन्त्रेण धेनुं दद्याच्च दक्षिणाम् ॥
एवं निवर्त्तिते होमे ततः सम्पद्यते शुभम् ।

वैजवापः ।

गोस्तथोलूपलघ्राणे प्रयत्नविधृतेऽपि वा ।

रौद्री शान्तिरिति शेषः ।

विष्णुधर्मोत्तरे ।

भूमिं पादैर्विनिघ्नन्त्यो दीना भीता अकारणम् ।
अन्योन्यलग्नपुच्छाश्च गावो भयकरा मताः ॥
अभक्ष्यं भक्षयन्त्यश्च गावो दन्ताँस्तथा स्वकान् ।
त्यक्तस्नेहाश्च वत्सेषु चार्भक्षयकरा मताः ॥
भयाय स्वामिनो ज्ञेयमनिमित्तं रुतं गवाम् ।
निशि चौरभयाय स्याद्विकृतिर्मृत्यवे तथा ॥

वराहसंहितायाम् ।

गावो दीनाः पार्थिवस्याशिवाय पादैर्भूमिं कुट्टयन्त्यश्च रोगान् ।
मृत्युं कुर्वन्त्यश्रुपूर्णायताक्ष्यः पत्युर्भीतास्तस्करानारुवन्त्यः ॥

भागवते कृष्णोत्क्रान्तिनिमित्तम् ।

"रुदन्त्यश्रुमुखा गावः"* ।

पराशरः ।

धेनुकानामनिमित्तमुत्क्रामः प्रकृत्यारोग्यम् ।

वसन्तराजः ।

हम्भारवो वा समभीष्टसिद्ध्यै गवां तथा स्युर्निशि हुङ्कृतानि ।
गावो निशीथे सरवा भयाय जयाय राज्ञे दिवसे रटन्त्यः ॥
भृशं विरुद्धा यदि मक्षिकाभिस्तदाऽऽशु वृष्टिं सरमात्मजैर्वा ।
हम्भारवोन्मिश्रितहुँकृता या वत्सोत्सुका हर्षपरीतचित्ताः ॥
ज्ञेयाः† सुरभ्यः शुभदाः सदैव गोभिः समानाः शकुने महिष्यः ।

वराहसंहितायाम् ।

आगच्छन्त्यो वेश्म हम्भारवेण संसेवन्त्यो गोष्ठवृद्ध्यै गवां गाः ।
आर्द्राङ्ग्यो वा हृष्टरोमाः प्रहृष्टा धन्या गावः स्युर्महिष्योऽपि चैवम् ॥

विष्णुधर्मोत्तरे तु ।

आर्द्राङ्ग्यो हृष्टरोमाश्च प्रविशन्त्यस्तथा गृहम् ।
सिंहलग्नमृगा‡ वाऽपि विज्ञेयाः स्वामिवृद्धये ॥
महिष्यादिषु चाप्येतत् सर्वं वाच्यं विजानता ।

वसन्तराजः ।

अजा निशीथे यदि रौति तेन सर्वाणि गेहे लभते सुखानि ।

अत्रानुक्तविशेषशान्तिषु वृषाद्युत्पातेषु सावित्रीमन्त्रकलक्षहो-

---

* श्रीमद्भागवते नोपलभ्यते । † श्वभिर्विरुद्धाः-इति ।

‡ सिंहेनानुद्रुता मृगा इवेति वाऽर्थोऽवगम्यते ।

मादिका सामान्यशान्तिर्मृगपक्षिविकारविहितौत्पातिकफलगुरुल घवमवगम्य कर्त्तव्या ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-ऽद्भुतसागरे वृषमहिषाद्यद्भुतावर्त्तः ।

## अथ विडालाद्यद्भुतावर्त्तः ।

तत्र वसन्तराजः ।

शस्तो रुदन्नामिषपूर्णवक्त्रो रक्ताननो नादकृदप्रशस्तः ।
नानाप्रकारैर्विरुतैः समेतो निन्द्यो विडालः खलु युध्यमानः ॥

यात्रापरमेतत् ।

पराशरः ।

अथ विडालो दीप्तायामेकस्वरो व्याहरन् शस्त्रकोपं भयं च करोति । दीप्तायां भयमेवाशु । मुक्तः कान्तारे तु स्त्रीजनक्षयाय । खरोऽनुप्रधावन् ग्राममध्ये घोरस्वरो भयाय । उच्चैर्नदन् भैरवं नद त्यकस्माच्छ्रेष्ठभयाय महते ।

अत्रानुक्तविशेषशान्तिषु विडालोत्पातेषु सावित्रीमन्त्रकल-क्षहोमादिका शान्तिर्मृगपक्षिविहितौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

हरिवंशे बाणपराजयनिमित्तम् ।

"ननादान्तर्हितो रात्रौ वृषदंशो जगर्ज च"* ।

महाभारते भीष्मपर्वणि कुरुक्षयनिमित्तम् ।

"अन्तरिक्षे वराहस्य वृषदंशस्य चोभयोः ।
प्रणादं युध्यतो रात्रौ घोरौ नित्यौ पुरक्षये"† ॥

अत्र वातजोयस्कारवैकृत‡विहिता शान्तिः कर्त्तव्या ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-ऽद्भुतसागरे विडालाद्भुतावर्त्तः ।

---

* ११६ अ. ५९ श्लो. तत्र 'ननादान्तर्हितो भूमौ' इति पा. ।

† २ अ' २५ श्लो. तत्र 'रौद्रं नित्यं प्रलक्षये'-इति पा. ।

‡ द्रष्टव्याऽस्यैव ग्रन्थस्य ४७२ पृ. १३पं. ।

## अथ शुनकाद्भुतावर्त्तः ।

तत्र पराशरः ।

अथ श्वा श्वेतलोहितपीतकृष्णो ब्राह्मणक्षत्रियवैश्यशूद्राणां क्रमशो निमित्तमभिदधाति ।

वसन्तराजः ।

श्वेता द्विजाः क्षत्रियकाश्च रक्ताः पीताश्च वैश्या असिताश्च शूद्राः ।
विमिश्रवर्णाः शुनकास्तथेह भवन्ति नानाविधकानुसंज्ञाः ॥
स्वजातिरूपेण विशेषतोऽमी सर्वे समस्तैरपि वा गवेष्याः ।
कौलेयकास्तेषु वदन्ति शस्तं कार्येषु सर्वेष्वपि कृष्णवर्णम् ॥
दृष्ट्वा शशाङ्कं यदि निर्विशङ्कः करोति शब्दं मुदितान्तरात्मा ।
तज्जागरूको विदधाति सौख्यं जनस्य सर्वं दुरितं निहन्ति ॥

वराहसंहितायाम् ।

गोभिः सार्धं क्रीडमानः सुभिक्षं क्षेमारोग्यं वाऽभिधत्ते मुदं च ।

वसन्तराजः ।

उपस्थितप्राक्तनपुण्यपाकात् पुरः स्थितो दक्षिणपाणिना श्वा ।
शिरः स्पृशन्नुल्लसितान्तरात्मा यो मण्डलो मण्डललाभदोऽसौ ॥
क्रीडां विधत्ते शुभवेषितो यः सोऽभीष्टयोगं विदधाति पक्षः ।
पक्षो हरिद्रामिषगैरिकाद्यैः पूर्णाननो वक्ति सुवर्णलाभम् ॥
दृष्टिं पुरः पुष्पफलाङ्कुरेषु चिरं दधानो निधिलाभकारी ।
यः पल्लवैः क्रीडति वृक्षमूलं तथेक्षतेऽसौ वदतीति सौख्यम् ॥
रक्ताक्तमूर्धाभिमुखं समेति यो मण्डलः सोऽवनिलाभहेतुः ।
स्थितो न तेषां यदि च प्रदेशे पादेन कण्डूयति दक्षिणेन ॥
शिरःप्रदेशं नयने चरस्य तद्वित्तलाभं विदधाति सद्यः ।

स्थाने मनोज्ञे विदधाति मूत्रं संतुष्टवेषः शुभवेषितः श्वा ॥
रम्यस्वनो यः सरमासुतोऽसौ करोत्यभिप्रेत्ययथार्थलाभम् ।
सिद्धान्नविद्याफलमांसवक्त्रो लाभाय पक्षोऽभिमुखः सदैव ॥
सहस्रपादादिकलादिकस्तु स्तोकैर्दिनैः स्यान्महते भयाय ।
दक्षिणां यदि करोति चेष्टितं दक्षिणेन चरणेन मण्डलः ॥
लाभदो यदि यदा तदा भवेद्वामकेन खलु तत्र लाभदः ।
कण्डनीमुशलकाञ्जिकधानीसूर्पकैर्विकृतदक्षिणचेष्टम् ॥
लभ्यते बहुधनं शुनि मूत्रं तेषु कुर्वति तु भोज्यमभीष्टम् ।
अङ्कूरिते पल्लविते सपुष्पे फलान्विते भूरुहे सारमेयः ॥
पुष्पे फले क्षीरितरौ च पङ्के सम्पूर्णकुम्भेऽम्भसि गोमये च ।
केदारमृत्स्नामणिकेष्टकासु प्रासादकुण्डयोपानत्पादुकेषु ॥
स्थानेषु वस्तुष्वपि शोभनेषु भूम्यादिलाभाय करोति मूत्रम् ।
शय्यासनच्छत्रहुताशनेषु च्छिद्रेषु धूलीनिवहेषु पक्षः ॥
स्थानेषु मूत्रं विसृजत्ययत्नः स्यादर्थलाभाभिमतो नराणाम् ।
मूत्रं विधायाभिमुखं प्रयाति यो जागरूकः शुभदः स पुंसाम् ॥
कार्येषु सर्वेष्वपि सर्वकालं न मूत्रयन्त्री शुनकी प्रशस्ता ।
यस्येक्ष्यते वेश्मनि सारमेयः किरन्नसौ गोमयमांसविष्ठाः ॥
रामां मनोज्ञां द्रविणं प्रभूतं प्राप्नोत्यसौ सौख्यमनश्वरं च ।
द्वारप्रदेशे जघनं निघृष्य तत् स्वागताभ्यागमनाय पक्षः ॥
करोति तत्रोपविशंश्च पुंसां समं जनेनाभिमतेन सार्धम् ।
प्राविश्य गेहे रभसेन पक्षः स्तम्भं समालिङ्गति योऽथ वाऽपि ॥
चुल्लीं समारोहति स ब्रवीति समागमं स्निग्धजनेन सार्धम् ।

पराशरः ।

किञ्चिद्भक्षयन् परस्य गृहं प्रविशेत् तस्य वृद्धये ।

वसन्तराजः ।

फलं गृहीत्वा सहसा निवासं पशो विशन् जल्पति पुत्रलाभम् ।

पराशरः ।

आर्द्रामिषमादाय विशेच्चान्नपानलाभाय ।

वसन्तराजः

लिप्तपूरितचतुष्कविशेषे प्राङ्गणे श्वनिवहो रममाणः ।
सम्पदं प्रवितरत्यतिबह्वीं तत्क्षणं न पुनरर्थकरोऽसौ ॥
उच्चावचे दक्षिणमक्षि लेढि नारीं स्वकीयामथ वाऽधिरूढः ।
शते गृहस्योपरि जागरूकस्तदा यदाऽम्बु क्षिपति प्रभूतम् ॥
उच्चप्रदेशं भषणोऽधिरुह्य भवत्यभीक्ष्णं रविमीक्षमाणः ।
यदा तदा नाम चिरेण वृष्टिरम्भोदमुक्ता भवति प्रभूता ॥
वर्षासु वृष्टिं सलिलेन मग्नां कुर्वन्ति चक्रभ्रमणं विशेषात् ।
अथो विधुन्वन्ति पिबन्ति तोयं पक्षा यदाऽन्यत्र जलागमाय ॥
निर्गत्य तोयादभिरुह्य पालिं कौलेयकश्चेद्विधुनोति कायम् ।
तन्निश्चितं प्रावृषि वृष्टिमब्दः कृषिबलप्रीतिकरीं करोति ॥
जृम्भां प्रकुर्वन् गगनं विलोक्य यो जागरूकः कुरुतेऽंशुघाते ।
संचाल्य पार्श्वं वृषमम्बुपूरप्लुताक्षिभिः सर्वसमृद्धिशस्याम् ॥
उच्चै रुवद्भिः सह कूटगेहप्रासादसंस्थैः श्वभिरुक्तकाले ।
अत्राल्पवर्षान्नजलप्रदास्ते भवन्ति रोगाग्निगृहप्रणाशाः ॥
गोष्ठे यदा श्वा विधुनोति कायं तद्गोपुरं वाऽपि पुरस्य पीडा ।
शय्यासु शय्यापतिभीतिरुच्चैर्भीतिस्तथाऽन्यस्य गृहस्य मध्ये ॥

वराहसंहितायाम् ।

उच्चैःस्वराः स्युस्तृणकूटसंस्थाः प्रासादवेश्मोत्तमसंस्थिता वा ।

वर्षासु वृष्टिं कथयन्ति तीव्रामन्यत्र मृत्युं दहनं रुजश्च ॥
प्रावृट्कालेऽवग्रहेऽम्भोऽवगाह्य प्रत्यावर्त्तै रेचकैश्चाप्यभीक्ष्णम् ।
आधुन्वन्तो वा पिबन्तश्च तोयं वृष्टिं कुर्वन्त्यन्तरे द्वादशाहात् ॥
वृक्षोपगे क्रोशति तोयपातः स्यादिन्द्रकीले सचिवस्य पीडा ।
वायोर्गृहे शस्यभयं गृहान्तः पीडां पुरस्यैव तु गोपुरस्थः ॥
भयं च शय्यासु तदीश्वराणां याने भषन्तो भयदाश्च पश्चात् ।
अथापसव्या जनसंनिवेशे भयं भषन्तः कथयन्त्यरीणाम् ॥

विष्णुधर्मोत्तरे ।

स्कन्धावारुह्य सव्यस्थाः श्वानो रिपुविनाशकाः ।
इन्द्रस्थाने नरेन्द्रस्य पुरेशस्य तु गोपुरे ॥

वसन्तराजः ।

भवेद्गृहस्योपरि वातभीत्यै पश्चाद्भयं भीतिकरः प्रयाणे ।
यश्चापसव्यं जनसंनिवेशे भयं भवत्याशु सवैरभीति ॥
भयं त्वभीक्ष्णं भवने स्थितानामावेष्टनं चेत् कुरुते कदाचित् ।
कौलेयकोऽवश्यमुपस्थितं तु ज्ञेयं भयं बन्धनजं प्रवृत्तम् ॥

पराशरः ।

गृहं समारुह्य लिखति पुरुषक्षयं गृहस्वामिनः । कलहायमानः श्वाऽनिमित्तकलहाय । संदधत् सन्धये । द्वारि चैलं गृहीत्वा परिक्रीडन् परिक्लेशाय ।

वसन्तराजः ।

कृत्वा शिरो द्वारि बहिर्गतश्चेच्छ्वा रौति दीर्घं गृहिणीं प्रपश्यन् ।
तद्रोगदो वक्ति च बन्धकीं तां बहिर्मुखोऽभ्यन्तरकायभागः ॥

वराहसंहितायाम् ।

द्वारे शिरोऽन्यस्य बहिःशरीरो रोरूयते श्वा गृहीणीं विलोक्य ।
रोगप्रदः स्यादथ मन्दिरान्तर्बहिर्मुखः शंसति बन्धकीं ताम् ॥

एकेनाक्ष्णा साश्रुणा दीनदृष्टिर्मन्दाहारो दुःखकृत् तद्गृहस्य ।
गोभिः सार्धं क्रीडमानः सुभिक्षं क्षेममारोग्यं वाऽभिधत्ते मुदं वा ॥

नृतुरगकरिकुम्भपर्याणसक्षीरवृक्षेष्टकासञ्चयच्छत्रशय्यासनोलूखलानि ध्वजं चामरं शाद्वलं पुष्पितं वा प्रदेशं यदा श्वाऽवमूत्र्याग्रतो याति यातुस्तदा कार्यसिद्धिर्भवेदार्द्रके गोमये मिष्टभोज्यागमः शुष्कसम्मूत्रणे शुष्कमन्नं गुडो मोदकावाप्तिरेवाथ वा । अथ विषतरुकण्टकीकाष्ठपाषाणशुष्कद्रुमास्थिश्मशानानि मूत्र्यावहत्याथ वा यायिनोऽग्रेसरोऽनिष्टमाख्याति शय्याकुलालादिभाण्डान्यभुक्तान्यभिन्नानि वा मूत्रयन् कन्यकादोषकृद्भुज्यमानानि चेद्दुष्टतां तद्गृहिण्यास्तथा स्यादुपानत्फलं गोस्तु सम्मूत्रणेऽवर्णजः सङ्करः ॥

गमनमुखमुपानहं सम्प्रगृह्योपतिष्ठेद्यदा स्यात् तदा सिद्धये मांसपूर्णाननोऽर्थाप्तिरार्द्रेण चास्थ्ना शुभं साग्न्यलातेन शुष्केण चास्थ्ना गृहीतेन मृत्युः प्रशान्तोल्मुकेनाभिघातोऽथ पुंसः शिरोहस्तपादादिवक्त्रे भुवोऽभ्यागमो वस्त्रचोरादिभिर्व्यापदः केचिदाहुः सवस्त्रे शुभम् । प्रविशति तु गृहं सशुष्कास्थिवक्त्रे प्रधानस्य तस्मिन् वधः शृङ्खलाशीर्णवल्लीवरत्रादि वा बन्धनं चोपगृह्योपतिष्ठेद्यदा स्यात् तदा बन्धनं लेढि पादौ विधुन्वन् स्वकर्णावुपर्याक्रमंश्चापि विज्ञाय यातुर्विरोधे विरोधस्तथा स्वाङ्गकण्डूयने स्यात् स्वपंश्चोर्ध्वपादः सदा दोषकृत् ॥

विष्णुधर्मोत्तरे ।

अन्तर्गृहे गृहेशस्य मरणाय भवेद्भयम् ।

पराशरः ।

वस्त्रखण्डं रज्जुं वा नयत्यग्निभयम् । चेल्लवणं वा धनक्षयम् । दधि तु भार्यायाः । पलायमान उपानहं प्रेष्यायाः । आनयने तु फलादिष्वेतेषु लाभम् ।

वसन्तराजः ।

श्वा याति कस्थो* विदधाति घर्मं यद्युत्कटेन स्थितिमानसेन ।
उत्पादयत्याशु विरोधमुग्रं तज्जागरूकः सुहृदाऽपि साकम् ॥

पराशरः ।

कण्डूपानं श्वाऽऽरोहैर्भयम् ।

वसन्तराजः ।

उद्धूलिकोऽस्मादिति पूर्णवक्त्रो भयं पुरश्चौरभयाय पक्षः ।
यस्याग्रतः श्वाऽस्थि शवं गृहीत्वा नयत्यसौ याति पुरीं यमस्य ॥
निमथ्य तोये स्ववपुर्विधुन्वन् कौलेयकश्चौरभयं करोति ।
भयं त्वभीक्ष्णं पथि मन्दिरे वा ग्रीष्मेऽथ वा चौरभयाय भूमेः ॥
मांसास्थ्यभक्ष्याणि च भस्ममध्ये स्थापयत्यग्निभयं प्रभूतम् ।

पराशरः ।

शुष्कमल्पफलं कण्टकिनं स्वक्षीरं वा वृक्षमवमूत्रयत्यरिप्रादुर्भावम् । अतो विपरीते धनलाभम् । तमेव खनति धनलाभम् । नवामन्नपूर्णां वा स्थालीमवमूत्रयति कन्याप्रदः । पुराणं स्त्रियाः । शय्यां भार्याया अथवा कुटुम्बिन्या मृत्युम् । शिरस्त्राणं स्त्रियं नरं वा तस्यैव धनलाभं सौभाग्यं वा । दधिपूर्णं कलशं चौरमुपस्थितं वा उदकुम्भं चौरमेव च । नवं चेच्छकटं कम्पयन् यानोच्चच्छकटं याति यानोपयुक्तं वा स्वामिनो वधम् । ग्राममध्ये ऊर्ध्वमुखो नदन् नखैर्भूमिं च लिखेद्भयम् ।

वसन्तराजः ।

अत्यर्थनादं यदि वाऽतिदीनं दृष्ट्वा दिने संभषणं बहूनाम् ।
कौलेयकानां विमलं विजृम्भं नदन्ति मूर्धस्वरकाः सकम्पम् ॥
विनाऽऽमिषं यत्र च जागरूकाः कुर्वन्ति शब्दं बहवो मिलित्वा ।
उत्पद्यते विग्रह एव भूतेष्वत्राचिराद्विग्रहमग्रभूतम् ॥

---

* कस्थो जलस्थः-इति ।

वराहसंहितायाम् ।

खंखेति चोच्चैश्च मुहुर्मुहुर्ये रुदन्ति दण्डैरिव ताड्यमानाः ।
श्वानोऽभिधावन्ति च मण्डलेन पैशून्यतां मृत्युभयं च कुर्युः ॥

पराशरः ।

तूर्णम्भूतं धावेयुरभीक्ष्णमुपद्रवम् ।

भागवते जगदुद्वेजकरावणोत्पत्तौ ।

"कुक्कुरा रभसा मत्ता धावन्त इव यूथशः"* ।

भागवते हिरण्याक्षोत्पत्तौ ।

"सङ्गीतवद्रोदनवदुन्नमय्य शिरोधरान् ।
व्यमुञ्चन् विविधा वाचो ग्रामसिंहास्ततस्ततः"† ॥

पराशरः ।

निशि शुनां सङ्घशः सततमभिक्रन्दनं पुरविनाशाय ।

बसन्तराजः ।

ग्रामं निशायां खलु सारमेयाः शून्यं विधातुं सहिता रटन्ति ।
ग्रामे मिलित्वा भषणाः श्मशाने भवन्ति नाशाय च मुख्यपुंसः ॥
ग्रामस्य मध्ये बहवो मिलित्वा श्वानो मुहुः क्रूररवा रटन्तः ।
मुख्यस्य पुंसः कथयन्त्यसौख्यं श्वाऽरण्यगः स्यात् सदृशो मृगेण ॥

पराशरः ।

बहुषु पथिषु नदत्सु परचक्रेणाशरीरयाताः समेत्यैकश्चेद्द्रुहुशः पांशुं नयद्भिः क्षिप्त्वा वैकस्मिन् जलपात्रे क्षिपत्यविषममेव च भूमिं लिखत्यन्येषु च तृणैराच्छाद्यावतिष्ठमानेष्वम्भोभयम् । पर्वसु भूमिं पत्थानमूर्द्ध्वं वा प्रेक्षमाणेषु राहुदर्शनाद्ग्राममध्ये ऊर्ध्वमुखो नद्दन्मुखैर्भूमिं विलिखेद्भयम् । ग्रामाद्बालकान् वा समादाय गच्छेद्भयं विन्द्यात् ।

---

* नोक्तस्थले उपलभ्यते । † श्रीमद्भागवते ३ स्कन्धे १८ अ. १० श्लो. ।

मत्स्यपुराणे ।

काष्ठोन्मुखास्थिशृङ्गास्याः श्वानो मरकवेदकाः ।

भागवते वृष्णिवंशक्षयनिमित्तम् ।

"ममाग्रे सारमेयोऽयं महीमाहत्य भीतवत् ।
शब्दं कुर्वन्निमं सव्यं दक्षिणं च गवेषति"* ॥

पराशरः ।

सूर्योदये प्राङ्मुखं नर्दत्यग्निभयम् । अपरसन्ध्यायां गवेडकप्रवेशे वा रथ्यासु धावन्तः सारमेयाः सन्ध्ययोरूर्ध्वमुखा बहवः समं नर्देयुर्भयाय ।

वराहसंहितायाम् ।

सूर्योदयेऽर्काभिमुखो विरौति ग्रामस्य मध्ये यदि सारमेयः ।
एको यदा वा बहवः समेता शंसन्ति देशाधिपमन्यमाशु ॥

वसन्तराजः ।

दिनकराभिमुखोऽस्तमये भयं निगदिताः खलु कर्षकभीतयः ।
पवनदिङ्निनदस्तु निशामुखे भवति चेत् स समीरणभीतिदः ॥

अत्रानुक्तविशेषशान्तिषु शुनकोत्पातेषु सावित्रीमन्त्रकलक्षहोमादिका शान्तिर्मृगपक्षिविकारविहिता वा शान्तिरौत्पातिकफलगुरुलाघवमत्रगम्य कर्त्तव्या ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्वल्लालसेनदेवविरचितेऽद्भुतसागरे शुनकाद्भुतावर्त्तः ।

---

## अथ शृगालाद्भुतावर्त्तः ।

विष्णुधर्मोत्तरे ।

श्ववच्च राम विज्ञेयास्तथा वै जम्बुकादयः ।

---

* मोकस्थले उपलभ्यते ।

वराहसंहितायाम् ।

श्वभिः शृगालाः सदृशाः फलेन विशेष एषां शिशिरे मदाप्तिः ।
हूहूकृतान्ते परतश्च टाटा-पूर्णः स्वरोऽन्ये कथिताः प्रदीप्ताः ॥

वसन्तराजश्च ।

हुवा हुवेति प्रथमं ततस्तु टाटेति दीर्घः सुतरां रवो यः ।
स्याज्जम्बुकानां स्वनतां प्रशान्तस्तदन्यशब्दः कथितः प्रदीप्तः ॥
शृगालशब्दो भवने निशायामुच्चाटनार्थं दिशि पश्चिमायाम् ।
प्राच्यां भयायोत्तरतः शिवाय याम्ये विभागे भयनाशनाय ॥
अनर्थहेतुर्गतिशब्दहीनः सदा शृगालः खलु दृश्यमानः ।
शस्तोऽह्नि वामा गतिरस्य शब्दो वामेऽतिदानो निशि यो बहूनाम् ॥
विहाय वामां दिशमन्यदिक्षु शब्दायमाना न शुभाः शृगालाः ।
गत्या रवो ग्रामपुरप्रवेशे शस्तो रवो नो मृगधूर्त्तकानाम् ॥

रामायणेऽरण्यकाण्डे सीताहरणनिमित्तं मारीचवधानन्तरमागच्छतो रामस्य ।

"क्रूरस्वरो भयकरो गोमायुः पृष्ठतो नदन् ।
रामस्य पृष्ठतः·······················"* ॥

वनपर्वणि द्रौपदीहरणनिमित्तम् ।

"तेषां च गोमायुरनल्पघोरो निवर्त्ततां वाममुपेत्य पार्श्वम् ।
प्रत्याहरत् तत् प्रविमृश्य राजा प्रोवाच भीमं च धनञ्जयं च ॥
यथा वदत्येष विहीनयोनिः शालामृगो वाममुपेत्य पार्श्वम् ।
सुव्यक्तमस्मानवमन्य पापैः कृतोऽभिमर्दः कुरुभिः प्रसह्य"† ॥

---

* वाल्मीकीये उक्तकाण्डे ५७ अ. २-३ श्लो. ।
तत्र 'क्रूरस्वनोऽथ गोमायुर्विननादास्य पृष्ठतः ।
स तस्य स्वरमाज्ञाय दारुणं रोमहर्षणम् ॥
शङ्कयामास गोमायोः स्वरेण परिशङ्कितः'. ।

† २६९ अ. ७-८ श्लो. ।

बार्हस्पत्ये ।

ग्राममध्ये च वाशेत वनादागत्य जम्बुकः ।
तीक्ष्णस्वरेण महता दृष्टो ग्रामवधाय सः ॥

गार्गीये ।

दिवा गृहं प्रविशति जम्बूको यस्य निर्भयः ।
ध्रुवं गृहपतेस्तत्र विनाशः क्षिप्रमुच्यते ॥

औशनसे तु ।

परित्यज्य स्वकां वाचं यत्र गोमायुरन्यथा ।
वाचं वदेज्जन्तुभयं गोमायुवदतं स्मृतम् ॥
युगपद्यत्र गोमायू वाशेते विस्वरं क्वचित् ।
तत्र केचिद्भयं प्राहुर्गर्गर्षिवचनश्रुतेः ॥
ऐन्द्राग्निस्तत्र दीप्ता स्यादिन्द्राग्निर्वाऽत्र मन्त्रिका ।
यं गोमायुः प्रवदति इति प्रभृति कर्म च ॥

अथ लोमसिका । तत्र वसन्तराजः ।

सिद्ध्यै सदा सर्वसमीहितानां स्याल्लोमसीदर्शनमग्रतस्तु ।
राजप्रसादं कथयन्त्ययुग्मां दृष्ट्वा ध्रुवं लोमसिकां च पृष्ठे ॥
सव्याय सव्या च गतिः सदाऽऽसां नृपादरस्त्रीधनलाभहेतुः ।
खीखीति शब्दादपरो विरावो दीप्तो भवेल्लोमसिकासमुत्थः ॥

वराहसंहितायाम् ।

लोमासिकायाः खलु कक्कशब्दः पूर्णः स्वभावप्रभवः स तस्याः ।
येऽन्ये स्वरास्ते प्रकृतेर्व्यपेताः सर्वे प्रदीप्ता इति संप्रदिष्टाः ॥

अथ शिवा । तत्र वसन्तराजः ।

शोभना शुभफलाप्तिसूचकं कथ्यते कलिभयं शिवारुतम् ।
शान्तदीप्तककुभां विभागतो ज्ञानमत्र च सदा प्रयुज्यते ॥

वराहसंहितायाम् ।

मौनं गता प्रतिरुते नरद्विरदवाजिभिः ।
या शिवा सा शिवं सैन्ये पुरे वा संप्रच्छति ॥

उच्चैर्घोरं वर्णमुच्चार्य पूर्वं पश्चात् क्रोशेत् क्रोष्टुकस्यानुरूपम् ।
या सा क्षेमं प्राह वित्तस्य चाप्तिं संयोगं वा प्रोषितेन प्रियेण ॥

पुरे सैन्येऽपसव्या न कष्टा सूर्योन्मुखी शिवा ।
..................सज्वाला देशनाशिनी ॥

काश्यपस्तु ।

नैव दारुणता तस्याः सज्वालायाः स्वभावतः ।
ज्वालया साग्निकं वक्त्रं वमन्ती साऽशुभा शिवा ॥

लङ्काकाण्डे वज्रदंष्ट्रवधनिमित्तम् ।

"वमन्ति स्म शिखिज्वालाः शिवा घोराश्च पश्यतः"* ।

तत्रैव कुम्भकर्णवधनिमित्तम् ।

"घोररूपाः शिवा नेदुः सज्वालकवलैर्मुखैः"† ।

आरण्यकाण्डे रावणवधनिमित्तम् ।

"रुरुदुः सहस्रशो घोरा पावकोद्गारिभिर्मुखैः"‡ ।

उत्तरकाण्डे जगदुद्वेजकरावणोत्पत्तौ ।

"सज्वालकवलाः शिवाः"§ ।

मण्डलानि प्रचक्रमुः-इति सम्बन्धः ।

अग्निपुराणे शक्रपराजयनिमित्तम् ।

वमन्त्यः पावकं घोरं शिवाश्चैव ववाशिरे ।

---

* वाल्मीकीये ५३ अ, १४ श्लो, ।
तत्र 'वमन्त्यः पावकज्वालाः शिवा घोरा ववाशिरे'-इति पा, ।

† वाल्मीकीये ६५ अ, ४९ श्लो, । ‡ नोक्तस्थलेऽस्योपलब्धिः ।

§ वाल्मीकीये ९ अ, ३० श्लो, ।

विष्णुधर्मोत्तरे ।

नृणां रोमाञ्चजननी वाहनानां भयप्रदा ।
ज्वालानना सूर्यमुखी विज्ञेया भयवर्धनी ॥

वराहसंहितायाम् ।

या रोमाञ्चं मनुष्याणां शकृन्मूत्रं च वाजिनाम् ।
रावात् त्रासं च जनयेत् सा शिवा न शिवप्रदा ॥

वसन्तराजस्तु ।

रोमोद्गमं या जनयत्यकस्मात् फे-इत्यतिक्रूररवा नराणाम् ।
मूत्रं पुरीषं च तुरङ्गमाणां सा सर्वदा स्यादशिवा शिवेह ॥
ज्वालां विमुञ्चत्यतिरौद्रनादा समाकुला यातुरिवासमन्तात् ।
रोमाञ्चकं वै जनयत्यकस्मात् कुर्याच्छिवा सा पुरराजघातम् ॥

वनपर्वण्यजगरप्रस्ते भीमे युधिष्ठिरस्यानिष्टदर्शनम् ।

"दारुणं ह्यशिवं नादं शिवा दक्षिणतः स्थिता ।
दीप्तायां दिशि वित्रस्ता रौति तस्याश्रमस्य ह"* ।

भागवते हिरण्याक्षोत्पत्तौ ।

"अन्तर्ग्रामेषु मुखतो वमन्त्यो वह्निमुल्बणम् ।
शृगालोलूकटङ्कारैः प्रणेदुरशिवाः शिवाः"† ॥

तत्रैव वृष्णीनामन्योन्ययुद्धनिमित्तम् ।

"शिवैषप्युद्यतामाग्निं सूर्यमभ्येत्यनलानना"‡ ।

वराहसंहितायाम् ।

अक्षोभः श्रवणं चेष्टं धनप्राप्तिः प्रियागमः ।
क्षोभः प्रधानभेदश्च वाहनानां च सम्पदः ॥
फलमासप्तमादेतदग्राह्यं परतो रुतम् ।
याम्यायां तद्विपर्यस्तं फलं षट्पञ्चमादृते ॥

---

* १७२ अ, ४१ श्लो. । † श्रीमद्भागवते ३ स्कन्धे, १८ अ, ९ श्लो. ।
‡ नोक्तस्थले उपलभ्यते ।

हरिवंशे तु कंसवधनिमित्तम् ।

"शिवा श्मशानान्निर्गम्य निःश्वासाङ्गारवर्षिणी ।
उभे सन्ध्ये पुरीं घोरां पर्येति बहु वाशती"* ॥

वराहसंहितायाम् ।

याहीत्यग्निभयं शास्ति टाटेति मृतिवेदिका ।
धिग्धिग्दुष्कृतिमाचष्टे ...... ............... ॥
भ्रमति शिवा भयङ्करी गोमी [illegible] सा ।
मृतिबन्धनिवेदिनी फिफे [illegible] शिवा स्वरे ॥
शान्ता स्वरणात् परमाकुलानां टाटैरुदीर्णामिति वाश्यमाना ।
टेटे च पूर्वं परतश्च थेथे तस्याः स्वतुष्टिप्रभवं रुतं तत् ॥

पराशरः ।

दीप्ता वा काकलीस्वरा सद्यः संध्यामतिक्रम्य भयाय आसप्तरा-त्रान्मरकानुबन्धिनी च । स्वनन्तं वदन्तं कुर्याद्राजमृत्युम् ।

वसन्तराजः ।

तरङ्गिणीरोधसि सौम्यरूपा त्रीन् पञ्च वा मुञ्चति रौति नादान् ।
शिवाऽशिवा तां नृपतिस्तदानीं वदेत देवीमभिनन्दनीयाम् ॥
ग्रामस्य मध्यं समवाप्य यस्य ज्वालामुखी मुञ्चति फेत्कृतानि ।
विशून्यतां गच्छति निश्चयेन लोकस्य वा स्यादसुखं प्रभूतम् ॥

पराशरः ।

शकटमारुह्य वाश्यमानायां विधानाय । खट्वामारुह्य स्त्रीमृत्यवे । देवागारं चैत्यं वाऽमात्यश्रेष्ठविनाशाय वर्षं गोहरणं भयं वा विद्यात् । इन्द्रकीलमारुह्य चेद्रूपाय स्यादनृताववर्षाय ।

मयूरचित्रे ।

प्राकारे नगरे द्वारे राजगेहे चतुष्पथे ।

* २३ अ. २० श्लो. ।

स्थानेष्वेषु शिवाक्रन्दो देशभङ्गकरः स्मृतः ॥

वसन्तराजः ।

स्मशानभूमौ दिनमध्यभागे मध्येजनं चेत् तु गृहप्रवेशे ।
या रौति तस्यै बलिमर्घ्ययुक्तं भक्त्या प्रदद्याद्यदि भद्रमिच्छेत् ॥

अथ दिक्फलं वराहसंहितायाम् ।

पूर्वोदीच्योः शिवा शस्ता शान्ता सर्वत्र पूजिता ।
धूमिताऽभिमुखी हन्ति स्वरदीप्ता दिगीश्वरान् ॥

सर्वशाकुनादुद्धृतेऽपि लिखिता ।

अन्यत्राभिरुता या स्यात् सा बन्धमृतिसंशिनी ।
वारुण्यां विरुता सैव मंशते सलिलागमम् ॥

पराशरः ।

अथ प्राच्यादिदिक्षु दीप्तासु शिवा व्याहरन्ती स्त्रीहरणं कुर्यात् । पूर्वदक्षिणस्यां दिशि गृहपतेर्घातमग्निदाहं वा । दक्षिणस्यां वैश्यवधमागन्तुं वधं वा । दक्षिणपश्चिमस्यां राजतो भयं शत्रोर्गणस्य च । पश्चिमायां सलिलघातं शूद्रोपद्रवं च । पश्चिमोत्तरस्यां दीर्घार्त्तिं ब्राह्मस्य पीडां वा । उत्तरस्यां व्याधिम् । उत्तरपूर्वस्यां दुष्टस्य प्रवेशनम् । नैर्ऋत्यां वायव्यां वारुण्यां च व्याहरेच्छरीरघातः स्यात् । दक्षिणतो मेघसंनादा कष्टाय । पश्चिमतः श्रेष्ठामात्यवधाय । भेरीमृदङ्गघोषाभा चेदुत्तरतो द्विर्वहेद्भूमिकम्पाय । त्रिर्महोल्काभयाय । फेरुण्डकस्य त्रिचतुःपट्सप्तकृत्व इति रुतेष्वानुपूर्व्यात् फलं विद्यात् । प्राच्यां तावद्दिशि कन्याहरणमग्न्युत्पातं क्षत्रियसन्नाहं ग्रहस्य केतोरुदयमिति । दक्षिणपूर्वस्यां दिशि गोयुगप्रणाशं गवां च सह पापैर्श्चात्मघातं महद्भयमग्न्युत्पातमिति । दक्षिणस्यां पलायनं राजदण्डयोगं स्वचक्रदोषं मरकमिति । नैर्ऋत्यां फेरुण्डकक्रीडितं न गुणाय

केन चित् कस्य चिद्वृक्षाद्यारोहणं वृक्षादुद्धरणं च। तथैव चतुष्पदकीटानां वचनशून्यस्य शूलादवपतनं मृतस्य चिन्ता कार्यानुद्धरणम्। वारुण्यां केन चित् कस्य चित् हर्षविनोददानं हस्तग्राहं पुंसो वधं तथा श्रेणीशानग्रहणनैगमैर्बन्धनं भेदनं वातोद्भ्रमणमिति। वायव्यां राहुणा चन्द्रग्रहणमनिलप्रादुर्भावं जरामरणमुल्काप्रपतनं राष्ट्रस्यानर्थमिति। उत्तरस्यां दुष्टपुंसो निग्रहणं सन्धिच्छेदं ग्रामघातं पुररोधं स्त्रीहरणमिति। ब्राह्म्यां वर्षाश्मपाताशनिप्रादुर्भावं महार्घंवर्षभूचलनदुर्भिक्षमिति। अष्टकृत्वः प्रतिसर्वतो वाशितं योगक्षेमाय।

वसन्तराजस्तु।

एकादिकानां विरुतायमानशिवारुतानामधुना यथार्थम्।
प्राच्यादिकास्वष्टसु दिक्षु शेषं यद्यत् फलं तत्तदुदीरयामः॥
ऐन्द्राग्निनादे प्रथमेऽर्थलाभो भवेद्द्वितीये निधिदर्शनं च।
कन्यां तृतीये लभते चतुर्थे वध्वागमः पञ्चमकेऽर्थसिद्धिः॥
षष्ठे रवे कुप्यति भूमिनाथो भीः सप्तमे स्याद्द्विफलोऽष्टमस्तु।
त्रासोऽग्निभागे प्रथमे द्वितीये नराधिपः कुप्यति भीस्तृतीये॥
घातश्चतुर्थे नगरस्य शब्दे शिवारुते पञ्चमके च युद्धम्।
वदन्ति तज्ज्ञाः कलहं च षष्ठे भीः सप्तमे स्याद्द्विफलोऽष्टमस्तु॥
आद्ये शुभं स्यादशुभे द्वितीये याम्ये महाव्याधिभयं तृतीये।
स्वरे चतुर्थे स्वजनागमः स्यात् पुत्रो भवेत् पञ्चमु फेत्कृतेषु॥
जायेत कन्या रटिते च षष्ठे भीः सप्तमे स्याद्द्विफलोऽष्टमस्तु।
ग्रामस्य पातो दिशि राक्षसानामाद्ये द्वितीयेऽपि च गोकुलस्य॥
मृत्युस्तृतीये द्विचतुष्पदानां हानिश्चतुर्थे ह्यथ पञ्चमे च।
चौराद्भयं राजभयं च षष्ठे भीः सप्तमे स्याद्द्विफलोऽष्टमस्तु॥

शब्दः शिवाया वरुणस्य भागे आद्ये भयं हानिरथो द्वितीये ।
स्याद्राजदूतागमनं तृतीये दाहश्चतुर्थे खलु चौरभीतिः ॥
स्यात् पञ्चमे राजभयं च षष्ठे भीः सप्तमे स्याद्विफलोऽष्टमस्तु ।
वायव्यभागे भयमेकमब्दं भयातिरेको भवति द्वितीये ॥
वृष्टिस्तृतीये महती चतुर्थे मेघागमो वर्षति पञ्चमे च ।
क्रोधं विधत्ते नृपतिश्च षष्ठे भीः सप्तमे स्याद्विफलोऽष्टमस्तु ॥
दिश्युत्तरस्यां विहिते विरावे म्रियेत कश्चित् प्रथमे द्वितीये ।
महाभयं विप्रवधस्तृतीये क्षत्रं चतुर्थे खलु हन्यते च ॥
विषं वमेत् षष्ठरवे च शूद्रो भीः सप्तमे स्याद्विफलोऽष्टमस्तु ।
आद्ये भवेद्दुर्दिनमेव देशे वृष्टिर्द्वितीये च रवे शिवायाः ॥
वातस्तृतीये त्वशनिश्चतुर्थे म्रियेत कश्चित् खलु पञ्चमे च ।
लभ्येत पृथ्वी निनदे च षष्ठे भीः सप्तमे स्याद्विफलोऽष्टमस्तु ॥
ज्वराग्निमिष्टाभिरभीष्टलाभं लभेत् ततोऽर्थस्य फलं शुभं च ।
भव्यप्रणाशः सकलं च सौख्यमेकादिशब्दैः कुरुते प्रशान्ते ॥
भयाद्यनिष्टश्रुतिरर्थहानिरिष्टैर्वियोगैर्महती च हानिः ॥
स्याद्वृष्टिरासिर्मरकं च दीप्ते त्वेकादिना फेत्कृतसप्तकेन ।

गदापर्वणि दुर्योधनपराजयनिमित्तम् ।

"दीप्ताः शिवाश्चाप्यनदन् घोररूपाः सुदारुणाः ।
दीप्तायां दिशि राजेन्द्र शृगालाः शुभवेदिनः"* ॥

वसन्तराजः ।

स्थित्वा प्रदीप्ते ककुभो विभागे ज्वालामुखी फेत् कुरुतेऽतिरौद्रम् ।
ग्रामस्य तस्य प्रकरोति नाशं तस्याथ वाऽनिष्टशिवस्य मध्ये ॥

---

* ५६ अ. १२ श्लो. ।

तत्र 'दीप्तायां दिशि राजेन्द्र मृगाश्चाशुभवेदिनः'-इत्युपलभ्यते ।

पराशरः ।

सर्वत्र घोरप्रणादिनी सर्वतो ग्रामं परिगच्छन्ती च शस्त्रोत्पातान् । भृशं स्वरे छुछुघुष्टकान्यभिधाय पीडाशस्त्राभिघाताय प्रमाणीकुर्यात् ।

बसन्तराजः ।

दिक्ष्वारुदन्ती सकलासु रौद्रं भ्राम्यत्यखिन्ना परितः पुरं चेत् ।
शृगालजाया खलु तद्ब्रवीति युद्धं महच्चैव तथा विघातम् ॥
करोति फेफे इति सर्वदिक्षु यदा तदा स्थानविधानयुद्धे ।
शिवाऽभिधत्ते क्षुधिता त्वसंख्यान् रौद्रस्वरान् मुञ्चति चेदुपेक्ष्या ॥

सर्वदिक्षु शुभा दीप्ता विशेषेणाथ शोभना ।
पुरे सैन्येऽथ सव्या या काष्ठा सूर्योन्मुखी शिवा ॥

मत्स्यपुराणे ।

अर्कोदयेऽर्काभिमुखी शिवा यमभयं वदेत् ।

वराहसंहितायां तु ।

"शिवोदये यत्र दिवाकरस्य भीमारवा चोर्ध्वमुखी विमुञ्चेत् ।
समागता वायसगृध्रसङ्घैस्तदा भयं वेदविदो वदन्ति"* ॥

पराशरः ।

सन्ध्यायां मनुष्यवधाय ।

सुन्दरकाण्डे रावणवधनिमित्तम् ।

"उपरक्ते च सन्ध्ये द्वे व्याहरत्यशिवं शिवा"† ।

बसन्तराजः ।

आद्ये दिनस्य प्रहरे प्रवृत्ते महेशदेवेशहुताशदिक्षु ।
शिवा रटन्ती कुरुते क्रमेण संत्रासकायव्ययबन्धनानि ॥
अह्नो द्वितीये प्रहरस्य भागे सहस्रनेत्रानलकालदिक्षु ।

* नेदम् अ. पुस्तके उपलभ्यते । † नोक्तस्थलेऽस्योपलब्धिः ।

शिवा रटन्ती कुरुते क्रमेण संत्रासकायव्ययबन्धनानि ॥
प्राप्ते तृतीये प्रहरे दिनस्य हुताशकालासुरराजदिक्षु ।
शिवा रटन्ती कुरुते क्रमेण संत्रासकायव्ययबन्धनानि ॥
समागतेऽह्नः प्रहरे चतुर्थे प्रेतेशदैत्येशजलेशदिक्षु ।
शिवा रटन्ती कुरुते क्रमेण संत्रासकायव्ययबन्धनानि ॥
आद्ये निशायाः प्रहरे प्रवृत्ते रक्षोधिपाम्भःपतिवायुदिक्षु ।
शिवा रटन्ती कुरुते क्रमेण संत्रासकायव्ययबन्धनानि ॥
ततो द्वितीये प्रहरे निशायास्तोयाधिनाथानिलसोमदिक्षु ।
शिवा रटन्ती कुरुते क्रमेण संत्रासकायव्ययबन्धनानि ॥
यामे तृतीयेऽपि हि यामवत्याः समीरदोषाकरशम्भुदिक्षु ।
शिवा रटन्ती कुरुते क्रमेण संत्रासकायव्ययबन्धनानि ॥
समागते रात्रितुरीययामे निशाकरेशानसुरेशदिक्षु ।
शिवा रटन्ती कुरुते क्रमेण संत्रासकायव्ययबन्धनानि ॥

इति दिक्षु यामप्रकरणम् ।

अथ दिक्चक्रयामप्रकरणं बार्हस्पत्ये ।

कृतान्तरक्षोवरुणानिलेन्दुदिक्ष्वाद्ययामे रटितैः शृगाल्याः ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धिर्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
रक्षःप्रचेतोऽनिलसोमशम्भुदिक्षु द्वितीये प्रहरे रवेण ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धिर्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
जलेशवातेन्दुमहेशशक्रदिक्ष्वारवेण प्रहरे तृतीये ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धिर्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
समीरसोमेशसुरेशवह्निदिक्षु स्वरेण प्रहरे चतुर्थे ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धिर्लाभः सुभिक्षं प्रियलोकसङ्गः ॥

शशाङ्करुद्रेन्द्रहुताशकालदिक्स्वारवैः पञ्चमयामभागे ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धिर्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
ईशानशक्राग्निकृतान्तरक्षोदिक्षु स्वरेण प्रहरे च षष्ठे ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धिर्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
इन्द्राग्निकालासुरपाशपाणिदिक्स्वारवे सप्तमयामकाले ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धिर्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
वह्न्यन्तकर्न्नैर्ऋतपाशिवातदिक्ष्वष्टमे च प्रहरे स्वरेण ।
स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धिर्लाभः सुभिक्षं प्रियलोकसङ्गः ॥
मध्यन्दिने यावदहानि पञ्च शिवा समीपे नगरस्य यस्य ।
विरौति घातं विदधाति तस्य भयं च वह्निप्रभवं प्रभूतम् ॥
या पञ्चरात्राणि कथञ्चिदेव क्रूरारवा व्याहरते शृगाली ।
यस्यान्तिके तं बहवो हयेन मुष्णन्ति चौरा जनसन्निवेशम् ॥
स्थानस्य यस्योपगता समीपं दिनानि या चोच्चरति प्रभाते ।
स्वरेण रौद्रेण शृगालभार्या स्यात् तत्र हानिर्महती नराणाम् ॥
सुरक्षितस्यापि मनुष्यलक्षैर्ग्रामस्य शीघ्रग्रहणं विधत्ते ।
त्रयं दिनानां दिवसावसाने शिवा रटन्ती परुषस्वरेण ॥

अत्रानुक्तविशेषशान्तिषु शृगालोत्पातेषु साविनीसत्रकलश-होमादिका शान्तिर्मृगपक्षिविकारविहिता वा शान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

नारदः ।

मध्याह्ने चार्धरात्रे च उदयेऽस्तमयेऽथ वा ।
ग्राममध्ये यदा विप्र फेत्कारं कुरुते शिवा ॥
ग्रामदाहो भवेत् तत्र राज्ञो वा मरणं भवेत् ।
अतः शान्तिं प्रवक्ष्यामि येन सम्पद्यते शुभम् ॥

दधिमधुसमायुक्तं सिद्धार्थं घृतमिश्रितम् ।
चरुं वै वैश्वदैवत्यं कृत्वा चैव विधानतः ॥
जुहुयात् पञ्चसाहस्रं जातवेदसि मन्त्रवित् ।
धेनुं च दक्षिणां दद्यात् सुवर्णं धान्यमेव च ॥
अस्मिन्नाशु कृते शान्तिः शुभं ग्रामस्य वै भवेत् ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे शृगालाद्भुतावर्त्तः ।

---

## अथ गृहगोधिकाद्भुतावर्त्तः ।

---

तत्र वसन्तराजः ।

कुड्यमत्स्य इति याऽभिधीयते पल्लिकेति गृहगोधिकेति च ।
कालदिक्क्रमवशेन निश्चितं तत्र शाकुनमुदीर्यतेऽधुना ॥
समागमात् संगममाह पल्ली युद्धेन युद्धं विरहं वियोगात् ।
यच्छत्यवश्यं सुरतप्रसक्ता पुंसां वरस्त्रीबहुकेलिलाभम् ॥
सूर्योदये पूर्वदिशि ब्रुवाणा पल्ली भयं जल्पति भूमिपालात् ।
हुताशभीतिं च विहारदेशे मध्यन्दिने दूतमुखेन वार्त्ताम् ॥
धनागमः स्यादपराह्णकाले दिनावसानेऽपि फलं तदेव ।
आहारकाले विहितस्वरायां पुर्यां भवेदागमनं नृपस्य ॥
निधानलाभं दिनपूर्वयामे द्वितीययामेऽभिमतार्थसिद्धिः ।
भवत्यवाप्तिस्तु तृतीययामे तुर्येऽर्थहानिर्विरुतेन पल्ल्याः ॥
आद्ये दिनस्य प्रहरेऽग्निभागे प्रसादवार्त्ता प्रहरे द्वितीये ।
मिष्टान्नलाभो गृहगोधिकाया रुतेन लाभो वसुनोऽपराह्णे ॥
सुखं दिनान्ते विरुतेन पल्ल्या आहारकालेऽभिमतार्थलाभः ।

स्यादग्निभीतिः प्रहरे द्वितीये यामे तृतीये द्रविणस्य लाभः ॥
यामे चतुर्थे दिशि पावकस्य कृतस्वरः किंचिदपूर्वरूपम् ।
नैमित्तिकानामिह कुड्यमत्स्यः कुतूहलं दर्शयति क्षणेन ॥
प्रभातकाले दिशि दक्षिणस्यां कार्यं शुभं स्याद्विरुतेन पल्ल्याः ।
बन्ध्वागमः स्यात् प्रहरे दिनस्य मध्यन्दिने पुण्यसमागमः स्यात् ॥
योषाऽपराह्णे समुपैति काऽपि दिनावसाने परदारसङ्गः ।
आहारकाले सुचिरं गतस्य स्यात् क्षेमवार्त्ता प्रियसङ्गमस्य ॥
यामे द्वितीये स्वजनैर्विरोधं तृतीययामे द्रविणस्य लाभम् ।
कृतस्वरो जल्पति कुड्यमत्स्यो यामे चतुर्थे कलहं महान्तम् ॥
पल्ली दिनादौ दिशि राक्षसानां कृतस्वरा संशति कार्यसिद्धिम् ।
विप्रागमं प्राक्तनयामभागे दूतागमं वाऽपि दिनस्य मध्ये ॥
रक्षां तृतीये प्रहरे दिनस्य दिनावसानेन विशेषवार्त्ता ।
प्रस्वापकाले कलहं रटन्ती यामे च पान्थागमनं ब्रवीति ॥
द्वितीययामे रुधिरप्रपातो मृत्युस्तृतीये प्रहरे निशायाः ।
व्याधिश्चतुर्थे प्रहरे निशायाः कृतस्वरायां गृहगोधिकायाम् ॥
प्रभातकाले ककुभि प्रतीच्यामाचार्यवर्यः समुपैति पूर्वम् ।
शान्तिं दिनस्य प्रहरे द्वितीये पल्ल्या रुतैर्मध्यदिनेऽर्थहानिः ॥
आयाति रौद्रः पुरुषोऽपराह्णे कुमारिकाऽभ्येति विवासकामा ।
भुक्तिक्रियायां नृपतिप्रसादः पल्लीरुतं वह्निभयं प्रदोषे ॥
यामे द्वितीये पृथिवीशवार्त्ता निधानलाभः प्रहरे तृतीये ।
स्यात् कुड्यमत्स्ये रटति प्रतीच्यां निशावसाने वपुषोऽवसानम् ॥
स्याच्चौरवार्त्ता दिशि मारुतस्य रुतैः प्रभाते गृहगोधिकायाः ।
अभ्येति मृत्युः प्रहरे प्रवृत्ते मध्यन्दिने भूपतिरभ्युपैति ॥

विद्वान् समभ्येत्यपराह्णकाले विद्यात् परं दूतमुपैति सायं ।
वृद्धिः प्रदोषे प्रहरे द्वितीये सिध्यत्यभीष्टं रटितेन पल्ल्याः ॥
यामे तृतीये नियतं निशायाः शुभावहा काऽप्युपयाति वार्त्ता ।
निशावसानेऽभिमतार्थलाभः स्यात् कुड्यमत्स्यारटितेन पुंसाम् ॥
दिश्युत्तरस्यामुदिते दिनेशे पल्ली रटन्ती द्रविणागमाय ।
मित्रागमाय प्रथमे च यामे हुताशभीत्यै दिवसस्य मध्ये ॥
अर्थोऽपराह्णेऽभिमतोऽभ्युपैति प्रियो जनोऽभ्येति च वासरान्ते ।
निशामुखे शिष्टसमागमः स्याद्यामे कलिः स्याद्विरुतेन पल्ल्याः ॥
निधानलाभः प्रहरे द्वितीये स्याच्चौरभीतिः प्रहरे तृतीये ।
निशावसानेऽपि च मासपाके स्यात् कुड्यमत्स्ये विपुला समृद्धिः ॥
प्रातर्दिगीशाननिषेविताया: पल्ल्या रुतैः सिध्यति चिन्तितोऽर्थः ।
दिनाद्ययामे स्वजनोऽभ्युपैति वृद्धिर्भवेद्वासरमध्यभागे ॥
रक्षाऽपराह्णेऽस्तमयेऽभ्युपैति कन्यार्थलाभोऽभ्यवहारमध्ये ।
वृद्धिस्तथाऽऽद्ये प्रहरे निशायाः कन्यागमः स्यात् प्रहरे द्वितीये ॥
भयं तृतीये प्रहरे निशान्ते रौद्रं भवत्यारटितेन पल्ल्याः ।
दिनस्य मध्ये कलहाय नादः स्यादर्थलाभाय तथाऽपराह्णे ॥
विप्रागमायाभ्यवहारकाले प्रनष्टलाभाय च पूर्वयामे ।
मध्ये चमूपस्य रणाय रात्रेस्तूल्काप्रपाताय तृतीययामे ॥
ब्रह्मप्रदेशे प्रहरे चतुर्थे शुभाय शब्दो गृहगोधिकायाः ।
शुभावहा शान्तदिशि प्रशान्ता दीप्ता प्रदीप्ते शुभदा न पल्ली ॥

अत्रानुक्तविशेषशान्तिषु गृहगोधिकोत्पातेषु गोप्रदानादिका सामान्या शान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-ऽद्भुतसागरे गृहगोधिकाद्भुतावर्त्तः ।

## अथ पिपीलिकापतङ्गादिमक्षिकामशकलूता-भ्रमरभेकाद्भुतावर्त्तः ।

तत्र वसन्तराजः ।

स्थूलास्तथा याः कपिलाः कदाचिद्द्गोचरं यान्ति घृतेण्डिकाख्याः ।
विज्ञेन तासां शकुनं गवेष्यं पिपीलिकानामिह नापरासाम् ॥
अत्यर्थपूर्णेऽञ्जनकुङ्कुमाभ्यां ग्राह्यं गृहे नेष्टमथापराणाम् ।
स्तोकस्थितावस्करनीरदेशे पिपीलिकानां शकुनं गवेष्यम् ॥
स्वर्णरत्नधनमध्यतो यदा संभवन्ति सुकृतप्रचोदिताः ।
स्वर्णरत्नधनवृद्धिहेतवस्तद्भवन्ति कपिलाः पिपीलिकाः ॥
तोयपूर्णकलशाजिरान्तगा भक्तपूर्णपिठराश्च निर्गताः ।
निर्दिशन्ति कपिलाः पिपीलिका द्रव्यवृद्धिमचिरेण भूयसीम् ॥
आरनालघटमूलगाः शुभा धान्यवृद्धिमपि धान्यमध्यगाः ।
सूचयन्ति च महानसोद्गता गेहदाहमचिराद्घृतेण्डिकाः ॥
यदि प्रविश्याज्यघटे घृतेण्ड्यस्तिष्ठन्त्यहोरात्रकृताधिवासाः ।
स्वल्पैरहोभिः कृतसन्निपाता मुष्णन्ति चौरा भवनं तदानीम् ॥
तुल्या निदाघेन भवन्ति वर्षा* विनिर्गतास्वम्बुघटस्य मूलात् ।
धान्यस्य मध्यात् पुनरुद्गतासु धान्यार्घपातो† वनकीटकासु ॥
स्वल्पाश्रयाः स्वल्पवतो घृतेण्ड्यो मृत्युं रुजं वा जनयन्ति दीर्घाम् ।
उत्पत्तयेऽनर्थपरं परा याः स्युर्देहलीदेशविलोक्यमानाः ॥
बह्वो गृहस्योपरि निःसरन्ति रक्ताः पिपील्यो यदि सर्वमर्थम् ।
हरन्ति चौरा मरणं भयं च तज्जायतेऽवश्यमहोभिरल्पैः ॥
केदाररथ्यानृपदेवगेहचैत्यद्रुमद्यूतसभान्तरेषु ।

---

* अल्पनावृष्टिर्भवतीत्यर्थः ।    † धान्यमहर्घता ।

दृष्टा घृतेण्डथः खलु चत्वारादौ देशस्य भङ्गं जनयन्त्यवश्यम् ॥
विनिर्गताः प्राक्गृहगर्भभूमेः कुर्वन्ति शून्यं भवनं घृतेण्डथः ।
अग्नेर्विभागे स्वजनागमाय भवन्ति वृद्ध्यै दिशि दक्षिणस्याम् ॥
पयोधरो वर्षति यातुधान्यां योषिद्धनाप्तिर्दिशि पश्चिमायाम् ।
विहाय गेहं गृहिणी प्रयाति विनिर्गताभिर्दिशि मारुतस्य ॥
कुर्वन्ति ताः सम्पदमुत्तरस्यां देशस्य भङ्गं ककुभीशवत्याम् ।
ब्रह्मप्रदेशे दिनसप्तकेन लाभं पृथिव्या उपयोगसिद्धम् ॥

भीष्मपर्वणि कुरुक्षयनिमित्तम् ।

"अरुणोदये प्रदृश्यन्ते पतङ्गाः शलभव्रजाः"* ।

पराशरस्तु ।

अथेन्द्रादिदिक्पतङ्गावरोधने राजापनयबलप्रकोपरोगपरचक्रागमगोपवधशस्यक्षयरोगगोगजवधमादिशेत् ।

मयूरचित्रे ।

ग्रामे पिपीलिका यत्र नगरेषु पुरेषु च ।
अतिमात्रं प्रदृश्यन्ते तत्राप्युत्सादनं भवेत् ॥
उद्धिका मक्षिका दंशाः शलभा मशका अपि ।
भयरोगकरं प्राहुर्द्रव्यनाशं रिपूदयम् ॥
अनग्निज्वलनप्रोक्ता तत्राग्नेयी द्वितीयका ।
शान्तिरन्याऽथ वाऽमुष्मिन् विश्वामित्रोदितोच्यते ॥
औदुम्बरीणां समिधां सहस्रं जुहुयाच्छुचिः ।
अष्टोत्तरमथाग्नेयैर्मन्त्रैः समधुसर्पिषा ॥
दासीदाससमायुक्तगृहं दद्याद्द्विजाय च ।
कृष्णा धेनुस्तिलप्रस्थो दातव्यो हितमिच्छता ॥

---

* २ अ, २९ श्लो. । तत्र 'शतशः शलभव्रजाः'-इति पा. ।

वसन्तराजः ।

अश्वादिलाभं जघनोरुभागे कण्ठे च भोज्याभरणादिलाभम् ।
मुखे तु लेह्मोः शिरसि त्वभीष्टमारोहणं मर्कटिका करोति ॥
पुंसां समारोहति यद्यदङ्गं शुभार्थिनो मर्कटिका सदैव ।
फलानि तेषामुपभोगभाञ्जि भवन्त्यवश्यं सुमनोहराणि ॥
श्रूयेत वामे यदि मञ्जु गुञ्जन् दृश्येत वा वामदिशि प्रसर्पन् ।
आस्वादयन् वा कुसुमं प्रशस्तं भृङ्गस्तदा स्यात् तु महान् प्रमोदः ॥

पराशरः ।

भेका अतिपीताभाः सुभिक्षाय । अतीव नदन्तो वर्षाय । स एवानावृष्टिभयं ब्रूयाद्बहुशीर्षादिदर्शने ।

अत्रानुक्तविशेषशान्तिषु पिपीलिकाद्युत्पातेषु सावित्रीमन्त्रक-लक्षहोमादिका सामान्या शान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे पिपीलिकाद्यद्भुतावर्त्तः ।

---

अथ खञ्जरीटदर्शनाद्भुतावर्त्तः ।

तत्र पराशरः ।

अथ शार्ङ्गकः । तद्यथा । समन्तभद्रः प्रभद्रश्चानुद्रभद्र आकाशभद्रश्चेति भेदाः । यस्योरःशिरोग्रीवा अञ्जनाभास्तं समन्तभद्रं विद्यात् । शिरउरसी यस्य कृष्णे तं प्रभद्रम् । कण्ठोरसी यस्य तमनुभद्रम् । कण्ठगतमात्रं यस्य तमाकाशभद्रमिति ।

वसन्तराजः ।

समन्तभद्रश्च ततः प्रभद्रस्ततोऽनुभद्राम्बरभद्रसंज्ञौ ।
एषां चतुर्णामपि खञ्जनानामाचक्ष्महे संप्रति लक्षणानि ॥

यः कन्धरोरःशिरसां समन्ताद्बिभर्त्ति कार्ष्ण्यं स समन्तभद्रः।
कृष्णेन युक्तः शिरसोरसा तु भवेत् प्रभद्रः शितकन्धरास्यः॥
कृष्णोरसी यस्य तु खञ्जनस्य कृष्णे भवेतां स मतोऽनुभद्रः।
कृष्णा भवेत् कण्ठगतैव रेखा यस्य त्वसावम्बरभद्रनामा॥
मध्यादमीषां शुभकार्यसिद्ध्यै यो यो भवेत् पूर्वतरः स मुख्यः।

एते च वर्णक्रमेण शुभसूचकाः।

यथाऽऽह पराशरः।

अगस्त्योदयादिशरच्येते दृष्टाः क्रमाद्ब्राह्मणादीनां शुभाशुभमावेदयन्ति सर्वेषां वा समन्तभद्र इति।

काश्यपो भद्रसम्पूर्णयोर्लक्षणमाह। तद्यथा।

स्थूलोऽभ्युन्नतकण्ठो यो भद्रकृष्णगलः स्मृतः।
कृष्णमूर्धगलान्तो यः स संपूर्ण इति स्मृतः॥
नामानुरूपेण फलं विहङ्गानां विनिर्दिशेत्।

वराहसंहितायां च।

स्थूलोऽभ्युन्नतकण्ठः कृष्णगलो भद्रकारको भद्रः।
आकण्ठमुखात् कृष्णः संपूर्णः पूरयत्याशाम्॥

तथा च वसन्तराजः।

आकाशभद्रो गलमात्रकृष्णः शिताननः कार्यविनाशनाय।

अयमेव रिक्त इत्युक्तं वराहसंहितायाम्।

तद्यथा।

कृष्णो गलेऽस्य बिन्दुः शितकरटान्तः स रिक्तकृद्रिक्तः।
पीतो गोपीत इति क्लेशकरः खञ्जनो दृष्टः॥

वसन्तराजेन तु गोमूत्र इत्यस्य संज्ञा कृता।

तद्यथा।

स्याद्यो हरिद्रारससंनिकाशो गोमत्रनामा स तु खञ्जरीटः।

निरीक्षितः प्राग्दिवसे प्रभूतं दुःखोद्भवं संशति यावदब्दम् ॥

वटकणिकायाम् ।

खञ्जनकः पूर्वाह्णे श्रीमति देशे शुचौ बृहत्कायः ।
कृष्णगलश्चेति शुभः पापोऽतोऽन्योऽतिपीतश्च ॥

विष्णुधर्मोत्तरे ।

प्रथमं शार्ङ्गके दृष्टे शुभे देशे शुभं वदेत् ।
संवत्सरं मनुष्यस्य अशुभं वा शुभं वदेत् ॥

अथ शुभस्थानि । तत्र पराशरः ।

तडागोदपाननदीतीरक्षीरपुष्पवृक्षाग्रतोरणनगगोपुरारामाट्टालकशयनासनवनपद्मोत्पलकुसुमामरभवनगोमयकरीषदूर्वासु स्थितं प्रहृष्टं भक्षयन्तं खञ्जनकमभिसमीक्ष्यान्नपानप्रियगोऽश्ववस्त्रप्रियाप्तिं च विन्द्यात् ।

वसन्तराजः ।

नद्यादितीरव्रजगोपुरीषगोपुच्छदूर्वानृपमन्दिरेषु ।
अट्टालजम्बालफलप्रवालक्षीरद्रुमोपस्कृततोरणेषु ॥
एतेषु चाद्येऽहनि खञ्जरीटो दृष्टोऽतिहृष्टः सहसोपविष्टः ।
भोज्यान्नपानप्रियगोऽश्ववस्त्रलाभाय रोगोपशमाय दिष्टः ॥
गजाश्वशालोपवनान्तरेषु प्रासादहर्म्याग्रसिताम्बरेषु ।
दध्यादिभाण्डेष्वथ लिप्तभूमौ सुवर्णराजान्तिकचामरेषु ॥
सच्छायहृद्याम्बरयुग्मपत्रफलावनम्रेषु शुभद्रुमेषु ।
येनोपविष्टः प्रथमेऽह्नि दृष्टस्तस्य श्रियं खञ्जनको ददाति ॥

वराहसंहितायां तु ।

अथ मधुरसुरभिफलकुसुमगहनेषु सलिलाशयेषु पुण्येषु ।
करितुरगभुजगमूर्ध्नि प्रासादोद्यानहर्म्येषु ॥
गोगोष्ठसत्समागमयज्ञोत्सवपार्थिवद्विजसमीपेषु ।
हस्तितुरङ्गमशालाच्छत्रध्वजचामराद्येषु ॥

हेमसमीपसिताम्बरकमलोत्पलपूजितोपलिप्तेषु ।
दधिपात्रधान्यकूटेषु च श्रियं खञ्जनः कुरुते ॥
पङ्के स्वाद्वन्नाप्तिर्गोरससम्पच्च गोमयोपगते ।
शाद्वलगे वस्त्राप्तिः ........................ ॥

वसन्तराजः ।

स्याद्गोमये गोरसलाभहेतुर्वस्त्रस्य लाभाय च शाद्वलादौ ।
खादन् पिबन् भोजनपानलब्ध्यै लाभाय गेहस्य च नाविं दृष्टः ॥

पराशरः ।

पिबत्यम्भः पानागमं गोष्ठमध्ये गृहलाभं परसंदर्शितेऽन्यस्त्री-समागमं फलविलिखिते क्षेत्रे पाणिग्रहणम्—इति ।

वसन्तराजः ।

संदर्शितेऽन्येन च खञ्जरीटे स्यादन्यनार्या सह सङ्गलाभः ।
विवाहलाभो हलखातभूमौ धान्यस्य राशावपि धान्यलाभः ॥

वराहसंहितायाम् ।

मृतविकलविभिन्नरोगितः स्वतनुसमानफलप्रदः खगः ।
धनकृदभिविलीयमानको वियति च बन्धुसमागमप्रदः ॥
पृष्ठे त्वजाविकानां प्रियसंगममावहत्याशु ।

वसन्तराजस्तु ।

धान्यार्थलब्ध्यै महिषाव्यजादौ—उपरि पृष्ठ इत्यर्थः ।

तथा च पराशरः ।

गोश्वाजाविकमहिषपृष्ठे पृथ्वीधनधान्यागम इति । महिषीपृष्ठव्यतिरिक्तान्यावयवेष्वशोभनं तत्फलमशुभदेशे प्रशस्तमिति वक्ष्यामः—इति ।

वसन्तराजः ।

तुरङ्गमातङ्गमहोरगेषु सरोजगोछत्रवृषेषु येन ।
पर्वत्र दृष्टोऽहनि खञ्जरीटो निःसंशयं तस्य भवेन्नृपत्वम् ॥

वृषककुदि विशेषमाह पराशरः ।

वृषभककुदि सेनापत्यं गजशिरस्यातपत्रे राज्यागमम् ।

सर्पशिरसि विशेषो विष्णुधर्मोत्तरे ।

शार्ङ्गकं तु नरो दृष्ट्वा भुजङ्गमशिरोगतम् ।

अवश्यं तदवाप्नोति यत्किञ्चिन्मनसेप्सितम् ॥

कृष्णसर्पशिरसि तु विशेषमाह पराशरः ।

कृष्णभुजङ्गममस्तकारूढो महदविकलं सकलवसुधाधिपत्यम्–इति ।

राज्यं भूमानापेक्षया बोद्धव्यम् ।

यदाह वसन्तराजः ।

क्षेत्रे ग्रामो ग्रामकत्वे पुरं स्यात् पुर्यां सत्यां मण्डलं मण्डलेषु ।

सर्वाऽप्युर्वीत्येवमत्रातिमात्रो यो लाभस्तं राज्यमित्यालपन्ति ॥

एवंप्रकारेषु मनोरमेषु स्थानान्तरेष्वेषु फलान्तराणि ।

इच्छानुरूपाणि ददात्यवश्यं पूर्वत्र दृष्टोऽहनि खञ्जरीटः ॥

पराशरः* ।

अपां समीपे गजमस्तके वा सूर्योदये ब्राह्मणसन्निधौ वा ।

पुण्येऽवकाशे गहने वने वा पश्येत् तु यः खञ्जनकं स धन्यः ॥

वराहसंहितायाम् ।

सूर्योदये प्रशस्तो नेष्टफलः खञ्जनोऽस्तमयेऽतीव ।

नृपतिरपि शुभं शुभप्रदेशे खगमवलोक्य महीतले विदध्यात् ॥

सुरभिकुसुमधूपयुक्तमर्घं शुभमभिनन्दितमेवमेति वृद्धिम् ।

वसन्तराजः ।

दृष्ट्वोदितेऽगस्त्यमुनौ सुदेशे सुवेष्टितं खञ्जनकं विदध्यात् ।

मन्त्रेण पूजां शिरसा प्रणामं तत्सूचितस्येष्टफलस्य वृद्ध्यै ॥

त्वं योगयुक्तो मुनिपुत्रकस्त्वमदृश्यतामेति शिखोद्गमेन ।

विलोच्यसे प्रावृषि निर्गतायां त्वं खञ्जनाश्चर्यमयो नमस्ते† ॥

---

* अयमन्यः पराशरः–इत्येतदर्थं भूमिकाऽवलोक्या ।

† अन्येऽपि खञ्जरीटप्रणाममन्त्रा मत्संशोधितपुरश्चर्यार्णवे ११२६–११२७पृ. द्रष्टव्याः ।

अथाशुभस्थानानि । तत्र पराशरः ।

शुष्ककाष्ठपलालदग्धास्थिभस्मतृणतुषाङ्गारभग्नगृहयूपशङ्कुशून्यकुम्भकण्टकिवल्लीशकटस्तम्भप्राकारशिखरपाषाणसिकतास्वप्रहृष्टं दृष्ट्वा व्याधिकलहानर्थागमान् विन्द्यात् ।

वसन्तराजः ।

वल्लीदृषत्कण्टकिशुष्कवृक्षदग्धास्थिशूलाकृतभाजनेषु ।
शून्यालये लोमसु गेहकोणे बुसे पलाले सिकतासु यूपे ॥
एषु प्रदेशेष्वथ वा परेषु यदा दृशोपहतेषु दृष्टः ।
कुमूर्त्तिरिष्टः स तदा करोति न्यक्कारभीरुः कलहाद्यनार्थान् ॥

वराहसंहितायाम् ।

गृहपटलेऽर्थभ्रंशो वध्रे बन्धोऽशुचौ भवति रोगः ।
पक्षौ धुन्वन्नशुभः शकटस्थे देशविभ्रंशः* ॥

वध्रश्चर्मरज्जुः ।

तथा च वसन्तराजः ।

वध्रीवरत्रास्वशुचौ च रोगो गृहच्छदे स्याद्द्रविणस्य नाशः ।
निरीक्ष्यते वा निशि देशभङ्गो निद्राभिभूते च भवन्ति रोगाः ॥

पराशरः ।

मृते मरणम् । वध्रे बन्धम् । अशुचौ व्याधिम् । खरकरभपृष्ठे मरणं प्रवासं वा । युध्यमाने कलहम् । पक्षपातने मृत्युं स्मशाने वा ।

वराहसंहितायाम् ।

महिषोष्ट्रगर्दभास्थिश्मशानगृहकोणशर्करादृस्थः ।

वसन्तराजः ।

श्वानोष्ट्रवालेयकपृष्ठपातस्थितः स्वपत्युर्विदधाति मृत्युम् ।
पक्षौ च धुन्वन् दिवसस्य चान्ते वृद्धो मृतो वा न शुभः कदाचित् ॥

वराहसंहितायाम् ।

मृतविकलविभिन्नरोगितः स्वतनुसमानफलप्रदः खगः ।

---

* शुभः पिबन् वारि निम्नगासंस्थः' इत्यत्र 'पङ्के स्याद्व्रजाप्ति'रित्येतस्य श्लोकस्य चतुर्थचरणो निक्षेपितः । द्रष्टव्या अ. पु. ५३५ पृ. २४ पं. ।

पराशरः ।

येन येन प्रकारेण नरः पश्यति शाङ्गकं स स प्रकारो विज्ञेयो यथा तस्य तथाऽऽत्मनि ।

विष्णुधर्मोत्तरे ।

यथाविधं नरः पश्येत् शाङ्गकं प्रथमेऽहनि ।
आत्मनश्च तथा तेन ज्ञातव्यं वत्सरं फलम् ॥

वसन्तराजः ।

यादृग्व्यवस्था शकुनैरमुष्य शुभाशुभत्वं प्रथमेऽह्नि दृष्टम् ।
स्वस्यापि तादृग् ह्यु लक्षणीयं तद्विस्तरेणान्यमिहापरेण ॥

फलानि चात्र दर्शितान्येव ।

वराहसंहितायाम् ।

खञ्जनको नामायं यो विहगस्तस्य दर्शने प्रथमे ।
प्रोक्तानि यानि मुनिभिः फलानि तानि प्रवक्ष्यामि ॥

काश्यपः ।

दर्शने पाकमावर्षात् प्रथमे प्रवदेद्बुधः ।
प्रतिदिवसके वाच्यं दर्शनेऽस्तमये फलम् ॥

वराहसंहितायाम् ।

आवर्षात् प्रथमे दर्शने फलं प्रतिदिनं तु दिनशेषे ।
दिक्स्थानमूर्त्तिलग्नर्क्षशान्तिदीप्तादिभिश्चोह्यम् ॥

अथाशुभशान्तिर्वराहसंहितायाम् ।

अशुभमपि विलोक्य खञ्जनं द्विजगुरुसाधुसुरार्च्चने रतः ।
न नृपतिरशुभं समाप्नुयाद्यदि न दिनानि च सप्तमांसभुक् ॥

वसन्तराजः ।

कुचेष्टितोऽन्यः कुवयाः कुवेषो निरीक्ष्यते खञ्जनकः कदाचित् ।
दृष्टो विशेषात् परितोषयेत् तं घाताय तत्सूचितदुष्कृतस्य ॥
मांसं न भुञ्जीत शयीत भूमौ स्त्रियं न सेवेत दिनानि सप्त ।
स्नायाज्जपेत् संजुहुयाद्विधाय पैष्टं पुमान् खञ्जनमर्च्चयेच्च ॥

पराशरः ।

सर्वौषधैः सर्वबीजैः सर्वगन्धैश्च मानवः ।
अहोरात्रोषितः स्नातो रत्नाधरेण वारिणा ॥
देवद्विजातिपूजाभिराशीर्भिर्गतकिल्बिषः ।
खञ्जरीटकृताद्दोषान्मुच्यते महतोऽप्यसौ ॥

वसन्तराजः ।

पूर्वोक्तमेतच्छकुनं समस्तं यात्रादिकालेष्वपि तुल्यमाहुः ।
खञ्जनस्य परिकीर्त्तितं शुभं दर्शनं भवति मङ्गलप्रदम् ॥
यात्यसौ यदि पुनः प्रदक्षिणं तत् करोति कथितस्य वाञ्छितम् ।

वराहसंहितायाम् ।

नीराजने निवृत्ते यया दिशा खञ्जनं नृपो यान्तम् ।
पश्येत् तया गतस्य क्षिप्रमरातिर्वशमुपैति ॥

वसन्तराजः ।

प्रत्यक्षमाश्चर्यमिदं विहाय सर्वो जनः पश्यतु खञ्जनस्य ।
अङ्गारखण्डः किल भूमिभागे तस्मिन् भवेद्यत्र करोति विष्ठाम् ॥
यत्रावनौ मैथुनमभ्युपैति सत्यं भवेत् तत्र महानिधानम् ।

कश्यपस्तु ।

मैथुनं कुरुते यत्र तत्राधः काञ्चनं दिशेत् ।

वराहसंहितायाम् ।

तस्मिन् निधिर्भवति मैथुनमेति यस्मिन्
तस्मिन् समुद्गिरति तत्र तलेऽस्ति काचः ।
अङ्गारमप्युपदिशेच्च पुरीषणेऽस्य
तत्कौतुकापनयनाय खनेद्धरित्रीम् ॥

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे खञ्जनाद्भुतावर्त्तः ।

## अथ पोतक्यद्भुतावर्त्तः ।

तत्र वसन्तराजः ।

ग्रामेण तुल्यः स्वकटेन नीलो योऽसौ पुमान् पाण्डुरगण्डयुग्मः ।
लघ्वी ततो धूमनिभा च नारी तत्पोतकी युग्ममुदाहरन्ति ॥
कण्डूयमाना चरणौ नराणां विदेशयानं कुरुते कुमारी ।
मुखस्य काष्ठादिषु घर्षणेन कष्टं कुमारी वितरत्यनन्तम् ॥
वामेन यान्ती विमला विशन्ती प्रस्थापयत्यन्त्यजसंनिवेशम् ।
केशास्थिवक्त्राऽऽभरणं नराणां काष्ठानना वस्त्रमुपादधाति ॥
अङ्गारवक्त्रा क्षयकृत् कुलस्य बन्धं भयं जल्पति रज्जुवक्त्रा ।
स्नानेन धूल्यां विपदं विचेष्टोद्भ्रान्ती जलस्नानमनिष्टमाह ॥
पङ्के रुजं भस्मनि जीवनाशं शश्वत् परिभ्राजकतां विधत्ते ।
निश्चेष्टका या परतन्त्रभावमूर्ध्वानना प्रेतपुरीनिवासम् ॥
वृक्षावतीर्णा द्रविणप्रणाशं स्थानाविघातं कुरुते प्रसुप्ता ।
रोगाभिघातं तनुवर्धनने तिरोहितत्वेन भयं प्रसूता ॥
प्रसारणात् पक्षयुगस्य देव्याः कलिः कुटुम्बस्य परस्परं स्यात् ।
गुणाश्च दोषाश्च यदा विमिश्रा निरूप्यमाणे शकुने भवन्ति ॥
ग्राह्यास्तदा तेष्विह भूरयो ये तान् पोतकी संविदधाति पश्चात् ।

अत्रानुक्तविशेषशान्तिषु पोतक्यद्भुतावर्त्तेषु मृगपक्षिविकारविहिता शान्तिः किमिच्छकदानादिका वा सामान्यशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे पोतक्यद्भुतावर्त्तः ।

## अथ कृष्णपेचिकाद्भुतावर्त्तः ।

तत्र वसन्तराजः ।

प्रभूतपुष्पे परमप्रमोदो व्याधिर्व्यथाऽनर्थरुजस्तु लाभः ।
अत्यर्थलाभं फलशोभिशाखे वृक्षे भवेत् क्षीरिणि भूमिलाभः ॥
स्वस्थानलाभः सुतरौ सुचेष्टे धान्यानि सौख्यानि पुनः सुभूमौ ।
भक्ष्यपूर्णवदनः शुभशब्दो यत्प्रदेशनिरतो विहङ्गमः ॥
सम्पदं प्रवितरत्यतिवद्धीं तां निहन्ति पुनरुत्थितवृक्षाः ।

वराहसंहितायाम् ।

चिरिल्विरिल्विभिः स्वनैः शुभं करोति पिङ्गला ।
अतोऽपरे तु ये स्वराः प्रदीप्तसंज्ञितास्तु ते ॥

वसन्तराजः ।

मध्ये घनाऽथो महती च शाखा शुभाय तस्यां शुभशब्दकारी ।
प्रान्ते च लाभो वदनावलम्बी स्यादन्तरस्यां शुभदो न पिङ्गः ॥
भूरिकोटरयुते परिशुष्के पादपे रटति मोटितशाखे ।
अम्बरे च कुरुते यदि शब्दं मृत्युदस्तदचिरेण पतत्री ॥
उन्मूलिते भूरुहि दुष्टशब्दे नष्टावशेषेऽपि विनश्यतीर्थः ।
प्रलम्बमानः सकलं विनाशमसंशयं शंसति खेचरोऽयम् ॥
अधिष्ठितः कीकसकाष्ठशूलान्यङ्गारवद्भस्मितचामलूरान् ।
शान्तस्वरो वाञ्छितकार्यनाशं दीप्तारवो वक्ति मृतिं विहङ्गः ॥
कण्डूयमानः खग उत्तमाङ्गं पुष्पाप्तयेऽभीप्सितलब्धये च ।
कण्डूयमानोऽक्षि हितेक्षणाय महार्थलाभाय च संप्रदिष्टः ॥
कर्णस्य कण्डूयनतो नराणां गीतेषु वार्त्ताश्रवणे भवेताम् ।
कण्ठस्य कण्ठाभरणाप्तियुक्तिः स्कन्धे करीन्द्रस्य तथैव रोहः ॥

मुखे च कण्डूतिरभीष्टभोज्यमालिङ्गनं वक्षसि बान्धवस्य ।
लाभः प्रियाया युवतेर्विशेषाद्बाह्वोः पशून् वाञ्छति पिङ्गलायाः ॥
कक्षप्रदेशे धनपुत्रलब्धी कुक्षावपि स्यात् सुतसङ्गमाय ।
पार्श्वे प्रियायाः परिरम्भणाय स्थानाय सम्यक् सुखलब्धये च ॥
भर्त्तृव्ययौ बन्धनधान्यलाभौ कण्डूयमाना जठरं ददाति ।
कटीपुरस्तात् कटिमूत्रवस्त्रपुत्राप्तये पिङ्गलिका नराणाम् ॥
भवेन्नितम्बेऽम्बरयोषिदासिजानूरुभागे रिपुतो जयः स्यात् ।
कण्डूयतेऽधस्तदलङ्कृतीनां लाभोऽलपदेशाद्द्रविणागमश्च ॥
सुगन्धिवस्तूनि वसु प्रभूतं घोणाग्रकण्डूयनतो ददाति ।
ललाटकण्डूयनतो नरस्य स्यात् पट्टबन्धो महती च कीर्त्तिः ॥
मूर्द्ध विहङ्गोऽऽङ्गविलोकनेन स्पर्शेन गात्रस्य सुखं मुखस्य ।
भद्राणि वक्षोग्रहणात् फलानि क्रीडासुखं क्रीडनके ददाति ॥
निरीक्ष्य वक्षो यदि वामभागं स्पृशेत् तदा सङ्गमकृत् प्रियाभिः ।
यदा पुनः पश्यति वक्ष एव खगस्तदा मित्रसमागमाय ॥
महार्थलाभोऽरिपराजयश्च पक्षद्वये मूर्ध्नि कृते भवेताम् ।
एकत्र पक्षद्वितयेऽथ वा स्यात् वित्तारिते पिङ्गलया धनर्द्धिः ॥
महद्धनं देहजपक्षपुच्छप्रसारणात् त्रोटिपुटेन पुंसाम् ।
भवत्यभीक्ष्णं शुभमाभिमुख्ये सङ्गो विहङ्गद्वयसंनिकर्षे ॥
रतौ रताप्तिः खलु पिङ्गलायाः परस्परं प्रेम च पुच्छकम्पे ।
लीलाविलासं कुरुते सलीलमन्योन्यकण्डूयनतः प्रियाणि ॥
अन्योन्यकर्णाननचुम्बनार्थविहङ्गमो सङ्गमभोज्यहेतुः ।
एवंविधाः शोभनकायचेष्टाः स्युः पिङ्गलायाः शुभदाः सदैव ॥
पिको व्रजित्वा यदि दक्षिणेन स्थित्वा च शान्ते शुभदं निनादम् ।

कुर्यात् तदर्द्धिं महतीं ददाति गाहत्यशास्त्रस्वरचेष्टिताऽसौ ॥
अवामपादोच्छ्रयणेन सौख्यमाख्याति वामोच्छ्रयणादसौख्यम्।
धूत्वा शिरोऽङ्गान्यथ वा विहङ्गः शुभस्वरो रोगमुपादधाति ॥
अशास्त्रशब्दस्तु ददात्यसाध्यं बाधावहं दुस्तरदुःखदाहम्।
त्वचं समुच्छिद्य तरोरधस्तात् पत्राणि पुष्पाणि फलानि वाऽपि ॥
पक्षी क्षिपन् देहभृतां सपक्षं क्षिप्रं च लक्ष्मीं क्षिपयत्यवश्याम्।
अर्धं पदा वा यदि वा समग्रं कण्डूयतेऽसौ शुभदा न चेष्टा ॥
स्याद्दक्षिणस्यास्य कलेवरस्य कण्डूयनं वामपदा न भद्रम्।
स्थानप्रदीप्तेर्वसतेर्विनाशः काष्ठाप्रदीप्तेस्तु कलेवरस्य ॥
निनाददीप्तेस्तु भवेद्व्रतस्य दीप्तित्रये स्थानवपुर्धनानाम्।
दिक्पालचेष्टाभिरनिष्टमिष्टं यत् पिङ्गलायाः फलमामनन्ति ॥
तथैव तादृक् सुधिया समस्तं खगान्तरेभ्योऽप्युपलक्षणीयम्।

अत्रानुक्तविशेषशान्तिषु कृष्णपेचिकोत्पातेषु मृगपक्षिविकारविहिता शान्तिः किमिच्छकदानादिका सामान्यशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचितेऽद्भुतसागरे कृष्णपेचिकाद्भुतावर्त्तः।

---

## अथ वायसाद्भुतावर्त्तः।

तत्र वसन्तराजः।

अथोच्यते काकरुतं रुतानां मूर्ध्नि स्थितं शाकुनभाषितानाम्।
अचिन्तिताचिन्तितभूरिकार्थं पूर्वादिकाष्ठाप्रहरक्रमेण ॥
ये ब्राह्मणक्षत्रियवैश्यशूद्राः काका भवन्त्यन्त्यजपञ्चमास्ते।
वर्णाकृतिभ्यामृषिभाषिताभ्यां सदैव युक्तैरुपलक्षणीयाः ॥

विष्णुधर्मोत्तरे ।

प्रोषितागमनं काकः कुर्वन् द्वारि गतागतम् ।

पराशरः ।

गृहद्वारि चेद्गतागतं कुर्यादागन्तूनां समागमं कुर्यात् । यस्य वेश्मन्यार्द्रलेख्यं पातयेत् तस्य विद्यागमो भवेत् । आर्द्रकाष्ठलाभाय आर्द्रपक्षो वाऽङ्गमुखोऽप्यतिश्रीलाभाय । चैलं परामृष्य गृहे तिष्ठन् क्षेमाय । तुण्डेन व्रीहीन् गोऽश्वकुञ्जरवेश्मसुपुत्रलाभाय ।

पातयेदिति सम्बन्धः ।

वराहसंहितायाम् ।

शस्योपेते क्षेत्रे विरुवति शान्ते सशस्यभूलब्धिः ।
पुरतो जनस्य महतो वधमभिधत्ते तदा बलिभुक् ॥
अन्योन्यभक्षसंक्रामितानने तुष्टिरुत्तमा भवति ।
विज्ञेयः स्त्रीलाभो दम्पत्योर्वाशितो युगपत् ॥
प्रमदाशिर उरगनपूर्णकुम्भसंस्थेऽङ्गनार्थसम्प्राप्तिः ।
घटकुट्टने सुतविपद्घटोपहदनेऽन्नर्थसंप्राप्तिः ॥

पराशरस्तु ।

पक्षानुत्सार्यानुनीय पुच्छमञ्जसा रुतिं कुर्वन्तस्तुण्डैर्वाऽन्योन्यं स्पृशेयुः स्त्रीलाभः स्यात् । परस्परमारोहयेयुः पूर्वेण भूमिलाभः स्यात् ।

वराहसंहितायाम् ।

सुस्निग्धपत्रपल्लवकुसुमफलानम्रसुरभिमधुरेषु ।
सक्षीराव्रणसंस्थितमनोज्ञवृक्षेषु चार्थसिद्धिकरः ॥
निष्पन्नशस्यशाद्वलभवनप्रासादहर्म्यहरितेषु ।
हर्म्योच्छ्रयमङ्गल्येषु* चैव विरुवन् धनागमदः ॥

* धन्योच्छ्रयमङ्गल्येषु-इति अ. पु. पा. ।

वसन्तराजः ।

विरौति कुम्भे मणिकेऽथ वा यः स गर्भवत्याः शुभजन्महेतुः ।
उड्डीयते कण्टकिनां च शाखामादाय राजागमनाय काकः ॥
छायार्थलाभं भुवि भूमिलाभं विघ्नं जले ग्रावणि कार्यनाशम् ।
करोति काको विरुवन् नरस्य प्रस्थापिनः स्थानगतस्य वाऽपि ॥

वराहसंहितायाम् ।

सक्षीरार्जुनवञ्जुलकूलद्वयपुलिनगा रुवन्तश्च ।
प्रावृषि वृष्टिं दुर्दिनमनृतौ स्नाताश्च पांशुजलैः ॥
सलिलमवलोक्य विरुवन् वृष्टिकरोऽब्दानुकारी च ।

विष्णुधर्मोत्तरे ।

शास्त्राङ्गवाहनोपानच्छत्रवस्त्रादिकुट्टने ।
मृत्युस्तत्पूजने पूजा तद्वद्विष्ठाकरं शुभम् ॥

बृहद्यात्रायां वराहः ।

उपानच्छस्त्रयानाङ्गच्छत्रच्छायावकुट्टने ।
मृत्युं तत्स्वामिनो विद्यात् पूजा स्यात् तस्य पूजने ॥

संहितायां तु विशेषः ।

वाहनशस्त्रोपानच्छत्रच्छायाङ्गकुट्टने मरणम् ।
तत्पूजायां विष्ठा पूजाकरणेऽन्नसंप्राप्तिः ॥

पराशरः ।

अनामिषं छत्रमुपानहौ वा तुण्डैरवकुट्टयन् स महाभयाय । शयने शरकाण्डं विनाशाय । दूर्वाकेशांश्च कुलविनाशाय । तालपत्रमशीवल्कलश्रेष्ठचर्माक्तप्रदेशांश्चतुष्पदान् शयने विलिखन् नाशाय एव । शुष्ककाष्ठजीर्णचैलं विनाशाय । यस्य शयनमवमूत्रयेत् तस्य भार्यां दुष्टां विद्यात् ।

बृहद्यात्रायां वराहः ।

हरेदुपलभेद्वाऽपि यद्द्रव्यं वायसोऽग्रतः ।

तत्प्राप्तिनाशौ विज्ञेयौ हेमपीते विनिर्दिशेत् ॥

हृतस्य नाश उपनीतस्य प्राप्तिः ।

यदाह वराहसंहितायाम् ।

यद्द्रव्यमुपनयेत् तस्य लब्धिरपहरति चेत् प्रणाशः स्यात् ।
पीतद्रव्यैः कनकं वस्त्रं कार्पासिके सितै रूप्यम् ॥

विष्णुधर्मोत्तरे ।

यच्चैवोपनयेद्द्रव्यं तस्य लब्धिं विनिर्दिशेत् ।
द्रव्यं वाऽपनयेद्यस्तु तस्य हानिर्द्विजोत्तम ॥
पीतं शुक्लं तथा रूक्षं रूप्यमेव तु भार्गव ।

वसन्तराजश्च ।

द्रव्यं हरन् वा हरतीह यादृक् प्रणाशलाभावपि तादृशस्य ।
रूक्षस्य पीते रजतस्य शुक्ले चैलस्य कार्पासमये भवेताम् ॥

पराशरः ।

शुष्कगोमयराशौ पादौ विलिखेन्नवपालाशभूर्यपत्रं वा गृहीत्वोपसर्पेत् तस्य वस्त्राणां लाभः स्यात् । यस्य कर्षेत् नाशस्तेषामेव ।

वराहसंहितायाम् ।

पूर्णाननेऽर्थलाभः सिकताधान्यार्द्रमृत्कुसुमपूर्वैः ।
भयदो जनसंघाता*यदि भाण्डान्यपनयेत् काकः ॥

पराशरः ।

प्रेष्ये चेत् प्रेष्यमाणे दृषदि काको निपतेत् तस्य व्याधिभयं मरणभयं वा ब्रूयात् ।

यदर्थं तत् प्रेष्यते ।

वराहः ।

†स्कन्धावारादीनां निवेशसमये स्वँश्चलत्पक्षः ।
सूचयतेऽन्यत् स्थानं निश्चलपक्षस्तु भयमात्रम् ॥

---

* जनसंवासा–इति अ. पु. पा. ।

† अत्र श्लोकद्वयं बृहत्संहितायाश्चरमश्लोको बृहद्यात्राया इति ।

प्रविशद्भिः सैन्यादीन् सगृध्रकङ्कैर्विनाऽऽमिषं ध्वाङ्क्षैः ।
अविरुद्धैस्तैः प्रीतिर्द्विषतां युद्धं विरुद्धैश्च ॥
विरुद्धस्याग्रतः पक्षौ धुन्वन् ध्वाङ्क्षो भयप्रदः ।
मृत्युरभ्युपसर्पँश्च संस्पृशँश्च तथा भवेत् ॥

वसन्तराजः ।

भ्रमन्नधो द्वौ परिधूय पक्षौ काकः कुनादः प्रलयं करोति ।
क्रुद्धोऽधिरूढः करटातुरश्च रोगेण मृत्युं कुरुते नराणाम् ॥
द्वारप्रदेशे रुधिरानुलिप्तो विरौति काकः शिशुनाशनाय ।
पक्षौ विधुन्वन् विरुवन् विरूक्षः शान्ते प्रदीप्ते च भवेन्न शस्तः ॥
रुवँस्तु दृष्टस्तृणपर्णवक्त्रो हुताशभीतिं करटः करोति ।
स्यात् प्रस्थितस्याप्यथ वा स्थितस्य दुःखं प्रभूतं दिवसत्रयेण ॥

पराशरः ।

सुमनोदामवेष्टनं वस्त्राणि वा हरन् प्रदक्षिणीकुर्वन् कामासिम् । यस्याग्रतो भुवि रज्जुं पातयेत् तस्य सर्पचौरागमाय । पथि सपत्रां शाखां वेलयन् नाशाय । रज्जुमग्रतो विकर्षन् सर्पतस्तस्करेभ्यः—इति । भयमावेदयतीति सम्बन्धः । अन्नमुपभुक्तां शाखां शस्यं वा ग्रामस्य निष्क्रामयातताय ।

विष्णुधर्मोत्तरे ।

न्यसेद्रज्जुं पुरस्ताच्चेन्निवेदयति बन्धनम् ।

वराहसंहितायाम् ।

यदि शृङ्खलां वरत्रां वल्लीं वाऽऽदाय वाशते बन्धः ।
पाषाणस्थे च भयं क्लिष्टापूर्वाध्वगयुतिश्च ॥

विष्णुधर्मोत्तरे ।

रक्तद्रव्यं गृहे दग्धं क्षिपन् वह्निनिवेदकः ।

वराहसंहितायाम् ।

दीप्तोद्विग्नो विटपेऽवकुट्टयन् वह्निकृद्विधुतपक्षः ।
रक्तद्रव्यं दग्धं तृणकाष्ठं वा गृहे विदधत् ॥

पराशरस्तु ।

शिरो विकम्पयन्तो वाशमानाः सशर्करदीप्तस्थानाद्गणशो ग्रामाभिमुखं धावन्तोऽग्निमाशंसन्ति । तृणरज्जुकार्पासतन्तूँश्चाग्निभयाय । शुष्ककाष्ठं चौरभयाय । विततपक्षा गृहे किञ्चिद्विलिखेयुर्भवेत् कुटुम्बिनी दुष्टा । वामेन मण्डले नीलीयमानास्तदा सैव विधवा । बहवश्चेत् परस्परं भ्रमेयुः स्त्रीविनाशाय स्युः । परस्परमाहन्युः स्वजनो दुष्येत् । गृहेषु पुनरुत्पतेयू राजागमनम् । अथैकश्चेज्जीवन्तमाखुमादाय गृहे निपातयेच्छ्रीनाशाय । तमेव मृतं कलहाय । प्रतिवाश्य पुच्छं प्रचालयन् सर्वस्वहरणाय ।

वराहसंहितायाम् ।

प्रतिवाश्य पृष्ठतो दक्षिणेन यायाद्द्रुतं क्षतजकारी ।
एकचरणोऽर्कमीक्षन् विरुवंश्च पुरो रुधिरहेतुः ॥
दृष्ट्वाऽर्कमेकपादस्तुण्डेन लिखेद्यदा स्वपिच्छानि ।
पुरतो जनस्य महतो वधमभिधत्ते तदा बलिभुक् ॥

पराशरस्तु ।

सूर्योदये जन्तुं तुण्डेन दारयेयू राज्ञोऽमात्यस्य वा वधः ।

वराहः ।

*मृतपुरुषाङ्गावयवे स्थित्वाऽभिरुवंश्च मृत्युकरः ।
भुञ्जन्नस्थि च चञ्च्वा यदा रुवत्यस्थिभङ्गाय च ॥
रज्ज्वस्थिकाष्ठकण्टकिनिःसारशिरोरुहानने रुवति ।
भुजगदंष्टितस्करशस्त्राग्निभयान्यनुक्रमशः ॥

---

* अत्रापि श्लोकद्वयं बृहत्संहितायाश्चरमौ बृहद्यात्रायां इति ।

ऊर्ध्वमुखाश्चलपक्षाः पथि भयदाः क्षुद्भयाय धान्यमुखाः ।
सेनाङ्गस्था युद्धं परिमोषं चान्यभृतपक्षाः ॥
काष्ठरज्ज्वस्थिनिःसारकेशकण्टकिभृद्रुवन् ।
व्यालाहिव्याधिशस्त्राग्नितस्करेभ्यो भयङ्करः ॥
युद्धं सेनाङ्गसंस्थे तु मोषकृत् स्वविलेखने ।
चरन् निशि विनाशाय दुर्भिक्षं धान्यमोषकृत् ॥

विलेखनमङ्गादिविलेखनम् ।

पराशरस्तु ।

निश्यन्तरिक्षे सकृशः सशब्दं चरेयन्नृपजनपदयोर्भयम् ।
सन्ध्यायां सर्व उपरिक्रम्य निलीना अन्नभयम् ।

मत्स्यपुराणे ।

"दुर्भिक्षावेदिनो ज्ञेयाः काका धान्यमुखा यदि ।
जनानभिभवन्तीह निर्भया रणवेदकाः"* ॥

पराशरस्तु ।

धान्ये शिरो निधाय कम्पयन् पुरीषं वा भक्षयन् दुर्भिक्षाय ।

वराहः ।

†अकार्यसंहतैर्भेदो रोधश्चक्राकृतिस्थितैः ।
वर्गगैश्चाभिघातः स्याद्रिपुवृद्धिश्च निर्भयैः ॥
अनिमित्तसंहतैर्ग्राममध्यगैः क्षुद्भयं प्रवाशद्भिः ।
रोधश्चक्राकारैरभिघातो वर्गवर्गस्थैः ॥
अभयाश्च तुण्डपक्षैश्चरणविघातैर्जनानभिभवन्तः ।
कुर्वन्ति शत्रुवृद्धिं निशि विचरन्तो जनविनाशम् ॥
सव्येन खे भ्रमद्भिः स्वभयं विपरीतमण्डलैश्च परात् ।
अत्याकुलं भ्रमद्भिर्वातोद्भ्रान्तिर्भवति काकैः ॥

* २३७ अ. १० श्लो. । † अत्र प्रथमौ श्लोकौ बृहद्यात्रायामन्तिमौ बृहत्संहितायाः ।

विष्णुधर्मोत्तरे ।

अपसव्यं भ्रमन्तश्च मण्डले रणवेदिनः ।

भीष्मपर्वणि कुरुक्षयनिमित्तम् ।

"वायसाश्च रुदन्त्युग्रं वामं मण्डलमाश्रिताः"* ।

वसन्तराजः ।

निष्कारणं संमिलिता रुवन्तो ग्रामस्य नाशाय भवन्ति काकाः ।
रोधं च चक्राकृतयो वदन्ति सव्यापसव्यभ्रमणाद्भयं च ॥
विघातमाहुर्बहुवर्गसंस्था रात्रौ रुवन्तो जनताविनाशम् ।
लोकं च चञ्चूचरणप्रहारैरुद्वेजयन्तः परचक्रवृद्धिम् ॥

सुन्दरकाण्डे रावणवधनिमित्तम् ।

"वायसाः सङ्घशः क्रूरा व्याहरन्ति इतस्ततः ।
समवेताश्च दृश्यन्ते विमानाग्रेषु संप्रति"† ॥

पराशरः ।

वित्रस्तत्वात् ततसधूमास्तु उड्डीनाश्चोर्ध्वं वायसाः क्रोशन्त्याक्रन्दन्तः सर्वे सव्या युद्धागमाय च । अथ वाद्यमानोऽग्निगेहस्थो रूक्षं वाहरेत् कुलश्रेष्ठविनाशं विन्द्यात् । प्राकारेषु कुलश्रेष्ठविनाशम् । शयने कुटुम्बविनाशम् । घटस्थे कुटुम्बिनीं दुष्टाम् । लोहितद्रव्ये ताम्रागमम् । कृष्णे आयसः । श्वेते रजतस्य । इन्द्रध्वजपताकावाहनायुगेषु दीनस्वरैस्तिष्ठेयुश्चमूवधः । परस्परं पक्षान् योजयेयुर्वस्त्रागमम् । दक्षिणमण्डलानि कुर्युः स्वपक्षागमम् । वामान् परचक्रागमम् । वृक्षपत्राणि लक्षयेयुर्वर्षानुबन्धः । मध्याह्ने शिरोग्रीवामूर्ध्वतो व्याहरेयुः शस्त्रोत्पातः । परिवृत्तेऽह्नि पुराट्टालकेषु व्याहरेयुः पुरनाशः । दीप्ता दीप्तस्वराः पुरत उड्डीयेरन् सेनाग्रामसामर्थ्यघातम् । आग्नेय्यामग्निभयम् । याम्यायां मरकभयम् । नैर्ऋत्यां वारुण्यां

---

† ३ अ, ४३ श्लो. ।   * वाल्मीकीये नोपलभ्यते ।

च भयम् । वायव्यां वातवेगम् । उदीच्यां शस्त्रकोपम् । ऐशान्यां वर्षम् । दीप्तायां दिशि मण्डलानि कुर्वन्त आगच्छेयुर्यथादिशं वर्णोपद्रवः । ऊर्ध्वमुखा मण्डलिनो निलीयेरन् वातोद्भवो वा वर्षं वा । पुरुषादूर्ध्वमन्तरिक्षगतानां व्याहरतां चेष्टां न प्रमाणीकुर्यात् ।

वराहसंहितायाम् ।

ऐन्द्र्यादिदिगवलोकी सूर्याभिमुखो रुवन् गृहे गृहिणः ।
राजभयचौरबन्धनकलहाः स्युः पशुभयं चेति ॥
शान्तामैन्द्रीमवलोकयन् रुवन् राजपुरुषमित्राप्तिः ।
भवति च सुवर्णलब्धिः शाल्यन्नगुडाशनाप्तिश्च ॥
आग्नेय्यामनलाजीविकयुवतिप्रवरधातुलाभश्च ।
याम्ये माषकुलूत्थाभोज्यं गान्धर्विकैर्योगः ॥
नैर्ऋत्यां दूताश्वोपकरणदधितैलभोज्याप्तिः ।
वायव्यां मांससुरासवधान्यसमुद्ररत्नाप्तिः ॥
मारुत्यां शस्त्रायुधशरोजवल्लीफलासनावाप्तिः ।
सौम्यायां परमान्नाशनं तुरङ्गाम्बरप्राप्तिः ॥
एशान्यां संप्राप्तिर्घृतपूर्णानां भवेदनडुहश्च ।
एवं फलं गृहपतेर्गृहपृष्ठसमाश्रिते भवति ॥

वसन्तराजः ।

सूर्योदये पूर्वदिशि प्रशस्ते स्थाने स्थितोऽसौ मधुरं विरौति ।
नाशं रिपोश्चिन्तितकार्यसिद्धिं स्त्रीरत्नलाभं स करोति काकः ॥
ध्वाङ्क्षः प्रभाते यदि वह्निभागे विरौति तिष्ठन् रमणीयदेशे ।
शत्रुः प्रणश्यत्यथ वा च सत्वं प्रयाति योषित् समवाप्यते च ॥
रुवन् प्रभाते यदि दक्षिणस्यां काकः समावेदयतेऽतिदुःखम् ।
रोगार्त्तिमृत्युं परुषस्वरेण रम्येण चेष्टागमयोषिदाप्तिः ॥

नैर्ऋत्यभागे च यदि प्रभाते करोति काकः सहसा विरावम् ।
क्रूरं ततः कर्म किमभ्युपैति दूतागमो मध्यमिका च सिद्धिः ॥
प्रातः प्रतीच्यां यदि रौति काको ध्रुवं तदा वर्षति वारिवाहः ।
स्त्रीरत्नभूभृत्पुरुषागमश्च कलिः कलत्रेण समं तथा स्यात् ॥
ध्वाङ्क्षे सशब्दे पवनालयस्थे वस्त्रागमं च स्वजनस्य लाभः ।
पान्थागमो ब्राह्मणवृत्तिनाशः स्यादन्यदेशे गमनं स्वदेशात् ॥
दिश्युत्तरस्यां स्वरवः प्रभाते निरीक्षमाणो बलिभुग्नराणाम् ।
ददाति दुःखं भुजगाच्च भीतिं दरिद्रतां नष्टधनेष्टलाभौ ॥
दिशीशवत्यां यदि रौति काक आगच्छतस्तद्विजाऽन्त्यजातिः ।
व्याधिं च धत्ते निजबन्धुलाभं भवेन्न वा रोगवतोऽवसानम् ॥
ब्रह्मप्रदेशस्थितवायसस्य प्रभातकाले मधुरस्वरेण ।
अभीप्सिताभ्यागमनं ध्रुवं स्यात् स्वामिप्रसादो द्रविणस्य लाभः ॥

चक्रदिक्प्रकरणे सूर्योदयः ।

प्राच्यां च यामे प्रथमे सुशब्दः काको भवेच्चेप्सितकार्यसिद्धौ ।
अभीष्टलोकागमनं तथा स्यादिष्टार्थलाभो नियतं नराणाम् ॥
आग्नेयभागे प्रथमे च यामे स्त्रीलाभविद्वेषिवधौ भवेताम् ।
कृतान्तभागे बलिभुग्विरावः स्त्रीलाभसौख्यं प्रियसङ्गमाय ॥
नैर्ऋत्यभागे प्रिययोषिदाप्तिर्मिष्टाशनं सिध्यति चिन्तितोऽर्थः ।
दिशि प्रतीच्यां विरुतैर्भवेतामत्यर्थतोयागमनाल्पवृष्टी ॥
वायव्यकोणे विटसङ्गतिः स्यान्नृपप्रसादोऽध्वरदर्शनं च ।
सौम्ये च भीस्तस्करशोकवार्त्ता स्निग्धा च वार्त्ता धनलाभवार्त्ता ॥
ईशानभागेऽभिमतेन सङ्गस्त्रासो हुताशाद्बहुलोकभङ्गः ।
सम्मानसम्यग्द्रविणेष्टसिद्धिः ब्रह्मप्रदेशे सुखकामभोगः ॥

इति दिक्चक्रप्रकरणे प्रथमः प्रहरः ।

प्राच्यां द्वितीये प्रहरे विरावैः काकस्य कश्चित् पथिकोऽभ्युपैति ।
चौराद्भयं व्याकुलता च वह्नी जायेत काचिन्महती च शङ्का ॥
आग्नेयभागे नियतः कलिः स्यात् प्रियासमाकर्णनयोषिदाप्तिः ।
याम्ये च भीतिर्महती च वृद्धिः प्रियस्य वैश्यस्य तथाऽऽगमः स्यात् ॥
रक्षोदिशि प्राणभयं तथा स्युः स्त्रीभोज्यलाभाखिलभक्ष्यनाशाः ।
भवेत् प्रतीच्यां प्रबलाबलाप्तिर्योषागमो वृष्टिसुवर्षणं च ॥
समीरभागेऽध्वगचौरसङ्गो हृतागमः स्त्रीपिशितान्नलाभः ।
सौम्ये धनप्रागमनं जयश्च रम्ये रवे चौरभयं त्वरण्ये ॥
महेश्वराशाधिगतश्च काकश्चौराग्निसंत्रासविरुद्धवार्त्ता ।
ब्रवीति रूक्षै रटितैररूक्षैः सभार्यगुर्वागमनं जयश्च ॥
ब्रह्मप्रदेशे प्रहरे द्वितीये काकः सुशब्दो नृपतिप्रसादम् ।
मिष्टान्नभोज्यं च ददाति पुंसां करोत्यसौ चौरभयं कुशब्दः ॥

इति दिक्चक्रप्रकरणे द्वितीयः प्रहरः ।

ऐन्द्यां विरूक्षः प्रहरे तृतीये वृष्टिं तथा चौरभयं ब्रवीति ।
हृष्टिं तु राजागमनं जयं च करोति यात्रासु च कार्यसिद्धिम् ॥
आग्नेयभागेऽग्निभयं कलिश्च विरुद्धवार्त्ता विफला च यात्रा ।
भवेद्विरुद्धैर्बलिभुग्विरावैर्जयादिवार्त्ता च भवेद्विशुद्धैः ॥
याम्यप्रदेशे कुरुतेऽतितूर्णं रोगं तथाऽऽप्तागमनं विहङ्गः ।
क्षुद्राणि कार्याणि च यान्ति सिद्धिं सर्वाणि तन्मुख्यतया नराणाम् ।
नैर्ऋत्यकोणे जलदागमश्च मिष्टान्नलाभो रिपवो नमन्ति ।
शूद्रागमख्याप्तिविरूपवार्त्ता भवन्ति यात्राशुभकार्यनाशः ॥
स्यात् पश्चिमे नष्टधनस्य लाभो दूताध्वयानं सुहृदागमश्च ।
योषागमाभीष्टजयादिवार्त्ता यात्रासु रम्ये रटितेऽर्थसिद्धिः ॥

वातालये दुर्दिनवातमेघाश्चौराप्तिनष्टार्थसमागमौ च ।
सन्तोषवार्त्ता वरयोषिदाप्तिवार्त्ता रवे स्यान्मधुरे प्रशस्ता ॥
यामे तृतीये विरुवत्युदीच्यां काकेऽर्थलाभो नृपसेवकानाम् ।
भोज्यार्थवृद्धिः शुभदा च वार्त्ता प्रयाणके वैश्यसमागमश्च ॥
ईशानदेशे तिलतण्डुलाभ्यां भोज्यं सताम्बूलमुपाददाति ।

इति दिक्चक्रप्रकरणे तृतीयः प्रहरः ।

ऐन्द्र्यां तुरीये प्रहरार्थलाभो भूमीशपूजाभयवृद्धिरोगाः ।
वह्नेर्विभागे भयवृद्धिरोगाः शिष्टागमो वायसभाषितेन ॥
याम्ये रवे तस्करचौरभीती स्यातां विशिष्टागमरोगमृत्युः ।
नैर्ऋत्यकोणे महती प्रवृद्धिः स्यादिष्टसिद्धिः पथि चौरयुद्धम् ॥
दिशि प्रतीच्यां प्रहरे चतुर्थे द्विजातिरभ्येति ततोऽर्थलाभः ।
आयाति योषिद्द्विजयोऽम्बुवृद्धिः सिद्धिः प्रयाणे नृपविद्रवश्च ॥
वायव्यभागे करटस्य शब्दैरायाति योषित् प्रियमाननीया ।
ध्रुवं प्रसादो दिनसप्तकेन शिष्टागमः स्याद्गमने कृते च ॥
कुवेरभागे पथिकः समेति ताम्रादिलाभेन समं तु शीघ्रम् ।
वैश्याध्वगाप्तिस्तुरगादिरूढा यात्रा विभूत्यै म्रियते च रोगैः ॥
ईशानभागे वलिभुग्विरावः सुवर्णवार्त्ता सरुजो विनाशः ।
ब्रह्मप्रदेशे प्रहरे तुरीये वार्त्ता भवेन्मध्यमकेष्टसिद्धिः ॥

इति दिक्चक्रप्रकरणे चतुर्थः प्रहरः ।

यद्भाषितं शाकुनिकैर्विमिश्रं शुभाशुभं दिक्प्रहरक्रमेण ।
तत्राशुभं यच्छति दीप्तशब्दः श्रेयस्करः शान्तरवस्तु काकः ॥
शान्ते प्रदीप्ते च शमं विहङ्गः शुभप्रदो दीप्तपराङ्मुखः सन् ।
न क्वापि रौद्रारटितः प्रशस्तः सर्वत्र शस्तो मधुरस्वरस्तु ॥

काको रुवन् दीप्तककुब्विभागे फलानि शस्तानि ददाति सम्यक् ।
तान्येव तुच्छानि ददात्यसौ चेद्दीप्तां दिशं पश्यति दीप्तसंस्थः ॥
यच्चोपदिष्टं फलमत्र दुष्टं तथैव तद्दीप्तदिशि स्थितः सन् ।
ध्वाङ्क्षो विरूक्षं विरुवन् करोति निरीक्षमाणः ककुभं प्रदीप्ताम् ॥
काकः प्रशस्ताभिमुखोऽतितुल्यं दीप्ताश्रितो दुष्टफलं ददाति ।
शान्ताश्रितः शान्तदिगीक्षणेन रूक्षारवोऽल्पं कथयत्यनिष्टम् ॥
शान्तारवः शान्तककुप्प्रदेशे तिष्ठन् प्रदीप्तां ककुभं च पश्यन् ।
ददात्यभीष्टं फलमल्पमेव दीप्तारवो यस्तु तदेव पूर्णम् ।
आकारचेष्टारवभावविज्ञा दग्धादिकाष्ठादिनयोः प्रमाणे ॥
सदाऽभियुक्ताश्च निरूपयन्ति विदन्ति ते काकरुते मनुष्याः ।

पराशरस्तु ।

पुरस्तात् पूर्वेण क्षीरपुष्पफलावहवृक्षेषु नीडीकरणं क्षत्रियजयाय शुष्कविपरीतेषु पराजयाय ।

एतेन वैश्यशूद्रब्राह्मणानां तथा तत्स्त्रीणां दिग्विदिक्षु यथाक्रमं क्षेमाक्षेमं व्याख्यातम् ।

वराहसंहितायाम् ।

वैशाखे निरुपहते वृक्षे नीडः सुभिक्षशिवदाता ।
निन्दितकण्टकिशुष्केष्वसुभिक्षभयानि तद्देशे ॥
नीडे प्राक्शाखायां शरदि भवेत् प्रथमवृष्टिरपरस्याम् ।
याम्यन्तरयोर्मध्ये प्रधानवृष्टिस्तयोरुपरि ॥

बृहद्यात्रायाम् ।

शस्तो नीडस्तु वैशाखे पादपे निरुपद्रुते ।
देशोत्सादस्तु वल्मीके चैत्यधान्यगृहादिषु ॥

वसन्तराजः ।

वैशाखमासे निरुपद्रुतेषु स्थानेषु काकस्य शुभाय नीडः ।

निन्द्येषु शुष्केषु च कण्टकेषु वृक्षेषु दुर्भिक्षभयादिहेतुः ॥
प्रशस्तवृक्षे यदि पूर्वशाखामाश्रित्य काकेन कृतः कुलायः ।
तद्वृष्टिरिष्टा कुशलं प्रमोदो नीरोगता स्याद्विजयश्च राज्ञाम् ॥
आग्नेयशाखारचिते सुनीडे स्याद्वृष्टिरल्पाऽग्निभयं कलिश्च ।
दुर्भिक्षशत्रूद्भवदेशभङ्गाद्भवन्ति रोगाश्च चतुष्पदानाम् ॥
याम्यासु शाखासु च वायसेन नीडे कृतेऽल्पं जलपातमाहुः ।
व्याधिप्रकोपं मरकं समन्तादन्नक्षयं राजविरोधितां च ॥
नैर्ऋत्यशाखारचिते सुनीडे पश्चाद्घनो वर्षति वर्षकाले ।
पीडा नृणां विह्वलचौरनीतिदुर्भिक्षयुद्धानि भवन्त्यवश्यम् ॥
नीडे कृते पश्चिमवृक्षशाखामाश्रित्य काकैः कथिता च वृष्टिः ।
नीरोगता क्षेमसुभिक्षवृद्धिः सम्यक्प्रमोदाश्च भवन्ति लोकाः ॥
वायव्यशाखासु कृते च नीडे प्रभूतवार्त्ताऽल्पजलाः पयोदाः ।
स्युर्मूषिकोपद्रवशस्यनाशपशुक्षयोद्वेगमहाविरोधाः ॥
कुवेरशाखामधिकृत्य नीडे कृते भवेत् प्रावृषि वृष्टिरिष्टा ।
भवन्ति वृक्षे च सुभिक्षसौख्यनीरोगतावृद्धिसमृद्धयोऽस्मिन् ॥
ईशानशाखासु च वृष्टिरल्पा वैरं प्रजानामुपसर्गदोषः ।
स्याद्बान्धवानां कलहप्रवृत्तिर्मर्यादया दीयत एव लोकः ॥
वृक्षाग्रनीडे त्वतिवर्षकाले मध्ये तरोर्मध्यमतोयपातः ।
तुच्छाऽपि वृष्टिर्न भवत्यधस्तात् स्फुटं यथोक्तं प्रदिशोऽस्फुटत्वात् ॥

सर्वशाकुने तु पराशरः ।

बाहुल्यात् प्राच्यां नीडीकरणं क्षेमं सुभिक्षाय । आग्नेय्यां चाल्पवृष्ट्यै । दुर्भिक्षं दक्षिणस्यां विद्यात् । नैर्ऋत्यां व्याधिं योगक्षेमं च । वारुण्यामवर्षणम् । वायव्यां कालोपद्रवमतिवर्षं च । ब्राह्म्याम-

च्चेषु वर्षं निम्नेष्ववर्षमेव । मृदुदृष्टेषु च प्रावृट्सम्पच्छस्यसम्पच्च । विपर्य्ययमसारेषु च । पूर्वोत्तरेण क्षीरवृक्षेषु निवसन्तः क्षेमाय ।

वराहसंहितायाम् ।

शरदर्भगुल्मवल्लीधान्यप्रासादगेहनिम्नेषु ।
शून्यो भवति स देशः चौरानावृष्टिरोगार्त्तः ॥

नीडेष्विति सम्बन्धः ।

वसन्तराजः ।

निम्नप्रदेशे तरुकोटरे वा वल्मीकवल्लीव्रततीप्रकीर्णे ।
काकस्य नीडे रुगवृष्टिदोषाद्भवन्ति शून्यो नियमेन देशः ॥
अवृष्टिरोगारिभयादिवृद्धिं विद्यादभूमौ बलिभुक्कुलाये ।
शुष्के च वृक्षे द्रुमपत्रराशौ प्राकाररन्ध्रेऽरिभयं प्रभूतम् ॥

पराशरस्तु ।

प्रासादाट्टालध्वजक्षेत्रेषु नीडानि चेत् कुयुस्तत्स्वामिनो विनाशं विद्यात् । वृक्षकोटरस्थलेषु वर्षाः ।

विष्णुधर्मोत्तरे ।

एकाण्डता तु काकानां यदि चैवाप्यनण्डता ।
निम्नेषु सन्निवेशेषु देशनाशकरः स्मृतः ॥

वराहः ।

अण्डावकिरणमेकाण्डजा प्रसूतिश्च न शिवाय ।

बहुष्वण्डेषु जातेषु यद्येकाण्ड एव शिष्यते तदैकाण्डता शुभाय भवति । एक एव जायते स वारुणः शुभो भवति ।

तथा च वसन्तराजः ।

एकं भवेद्वारुणमग्निसंज्ञं द्वितीयकं मारुतजं तृतीयम् ।
ऐन्द्रं तथा नाम चतुर्थमेवमण्डानि काक्याः परिकीर्त्तितानि ॥
काक्या भवेद्वारुणमण्डकं चेत् पृथ्वी तदा नन्दति सर्वशस्यैः ।
मन्दप्रवर्षेऽनलसंज्ञकाण्डे नोप्तस्य बीजस्य भवेत् प्ररोहः ॥

जानाति शस्यानि समीरजेऽण्डे खादन्ति कीटाः शलभाः शुकाद्याः।
क्षेमं सुभिक्षं सुखिता धरित्री स्यादिन्द्रजेऽण्डेऽभिमतार्थसिद्धिः॥

पराशरः।

द्वित्रिचतुःशावप्रादुर्भावे योगक्षेमम्। एकशावतायां निरपत्यतायां च दुर्भिक्षम्।

वराहसंहितायाम्।

द्वित्रिचतुःशावत्वं सुभिक्षदं पञ्चभिर्नृपान्यत्वम्।

चतुर्ष्वण्डेषु जातेषु द्वित्रिचतुःशावत्वमपि सुभिक्षदम्। अथ वा द्वित्रयोरण्डयोः शुभदयोरपि त्रिशावत्वं सुभिक्षदम्। नाप्यवश्यं द्विमात्राण्डसम्भवे द्वित्रिशावत्वं भवति।

बृहद्यात्रायां वराहः।

काकानां श्रवणे द्वित्रिचतुःशावाः शुभावहाः।
चोरकश्वेतचित्राश्च वर्णाश्चौराग्निमृत्युदाः॥
अण्डावकिरणे ध्वाङ्क्षा दुर्भिक्षमरकावुभौ।
शावानां विकलत्वे वा निःशावास्त्वेकशावकाः॥

बृहत्संहितायाम्।

चोरकवर्णैश्चौराश्चित्रैर्मृत्युः सितैश्च वह्निभयम्।
विकलैर्दुर्भिक्षभयं काकानां निर्दिशेच्छिशुभिः॥

चोरको गन्धद्रव्यविशेष इत्युत्पलेन व्याख्यातम्।

अत्रानुक्तविशेषशान्तिषु वायसोत्पातेषु मृगपक्षिविकारविहिता शान्तिः किमिच्छकदानादिका वा सामान्यशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या।

पराशरस्तु।

सर्वश्वेतः सामुद्रः सर्वजनपदे दृश्यतेऽयोगक्षेमाय स्यात्।

मत्स्यपुराणे।

"काको मैथुनशक्तश्च श्वेतश्च यदि दृश्यते।
रज्ज्वा वा म्रियते तत्र स वा देशो विनश्यति"*॥

* २३७ अ. ११ श्लो.।

वसन्तराजस्तु ।

इदं त्रिहोत्पातयुगं पृथिव्यां महाभयं शाकुनिका वदन्ति ।
यद्वायसो मैथुनसन्निविष्टो दृश्येत यद्वा धवलः कदाचित् ॥
उद्वेगविद्वेषभयप्रवासबन्धुक्षयव्याधिधनापहाराः ।
वृद्धिक्षयो व्याकुलता नराणां शीघ्रं भवेदद्भुतदर्शनेऽस्मिन् ॥
शमाय तत्सूचितदुःखराशेः स्नानं बहिस्तत्क्षणमेव कुर्यात् ।
आत्मीयशक्त्या च सदक्षिणाभिर्द्विजाय दद्याद्वसनाशनानि ॥
नयेदहः शेषमपुण्यहत्या शयीत भूमावकृतान्नभक्षः ।
स्नात्वा प्रभाते विदधीत शान्तिं दद्यात् स्वशक्त्या द्रविणं गुरुभ्यः ॥
हविष्यभोजी न भजेच्च नारीं दिनानि सप्तत्रिगुणानि यावत् ।
अकाकघातव्रतमादधीत बलिं च दद्याद्बलिभोजनेभ्यः ॥
देशे च यत्राद्भुतमेतदुग्रमालोच्यते तत्र समापतन्ति ।
अवृष्टिदुर्भिक्षभयोपसर्गचौराग्निशत्रूद्भवधर्मनाशाः ॥
कर्माणि तस्योपशमाय राजा प्रवर्त्तयेच्छान्तिकपौष्टिकानि ।
अन्नार्थगोभूमिवसूनि दद्यायुद्धं विदध्यान्न च यावदब्दम् ॥

इति महाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे वायसाद्भुतावर्त्तः ।

---

## अथ मिश्रकाद्भुतावर्त्तः ।

औशनसे ।

उत्पाता विविधात्मानो दृश्यन्ते यत्र तत्र वै ।
देशे भवति शीघ्रं वै षण्मासाद्भयमुत्तमम् ॥

अथ दिव्यमिश्रका मयूरचित्रे ।

पतने तारकाणां च तारां पश्येदरुन्धतीम् ।

त्रिशङ्कुं च ध्रुवं चैव भ्रमन्तश्चक्रवद्यदि ॥
ऋषयो व्योम्नि दृश्यन्ते तदा युद्धमहद्भयम् ।

अयोध्याकाण्डे दशरथमरणनिमित्तम् ।

"बृहस्पतिर्बुधः केतुः सौराङ्गारकभार्गवाः ।
दारुणाः समपद्यन्त ग्रहाः सर्वे प्रदक्षिणाः ॥
नक्षत्राणि हता भान्ति ग्रहाश्चोपहतानि च ।
विशिखाश्च विधूमाश्च नभसि प्रचकाशिरे"* ॥

भीष्मपर्वणि कुरुपाण्डवसैन्यक्षयनिमित्तम् ।

"ज्वलितार्केन्दुनक्षत्रं निर्विशेषदिनक्षयम ।
अहोरात्रं मया दृष्टं तद्भयाय भविष्यति"† ॥

तथा ।

"प्रदीप्यमानाः संपेतुर्दिवि सप्त महाग्रहाः"‡ ।

अथ दिव्यनाभसमिश्रकाः । तत्र पराशरः ।

तत्र राहोरदर्शनं केतोश्च मघासु च वक्रातिपीडनं ब्रह्मराशिभेदः केतूल्काग्रहभेदश्च रोहिणीनां सौरेण सप्तर्षिध्रुवेन्दुग्रहपीडनं केतोर्वा मरकदुर्भिक्षशस्त्रवृष्टिभिः प्रजाक्षयाय ।

भीष्मपर्वणि कुरुक्षयनिमित्तम् ।

"नष्टप्रभ इवादित्यः सर्वतो लोहिता दिशः"§ ।

भार्गवीये ।

विवर्णे परिघे वाऽपि त्रिवर्णे वा वलाहके ।
उदयास्तमनं कुर्याद्यदि सूर्यः कदा चन ॥
पृथिव्यां राजवंश्यानां महद्भयमुपस्थितम् ।
लोकक्षयकरं विद्याद्यदि देवो न वर्षति ॥

---

* उक्तस्थले वाल्मीकीये नोपलभ्यते । † २ अ. २२ श्लो. ।
‡ १७ अ. २ श्लो. । § ११२ अ, २ श्लो. ।

मयूरचित्रे ।

आदित्ये छिद्रमालोक्य दिवोल्कपातदर्शनम् ।
अपर्वराहुग्रहणे कुर्यात् सौर्यं चरुं द्विजः ॥

अथ नाभसकर्म्मिश्रको बार्हस्पत्ये ।

द्यौः स्याद्यदा नष्टदिवाकरप्रभा सरेणुवर्षा द्विजधूमदर्शना ।
तथाऽतिरौद्रा ज्वलिताग्निसप्रभा न तत्र वासं विषये विदध्युः ॥

तथा ।

अनस्ततानतं यत्र नभो गुलगुलायते ।
क्षिप्रं तद्द्रवते राष्ट्रं दश वर्षाणि पञ्च च ॥

हरिवंशमत्स्यपुराणपद्मपुराणेषु तारकासुरयुद्धे देवपराजयनिमित्तम् ।

"दीप्ततोयाशनीपातैर्वज्रवेगानिलाकुलैः ।
ररास घोरैरुत्पातैर्दह्यमानमिवाम्बरम्"* ॥

बार्हस्पत्ये ।

अनभ्रे पतते विद्युदशनिर्वा घनैर्विना ।
अनभ्रे वा भवेद्धूमं राजा राष्ट्रं च नश्यति ॥

उद्योगपर्वणि कुरुपाण्डवसैन्यवधनिमित्तम् ।

"अनभ्रेऽशनिनिर्घोषः सविद्युत् समजायत ।
विपरीता दिशः सर्वा न प्राज्ञायत किञ्चन"† ॥

मत्स्यपुराणे ।

"अनभ्रे वा तथा रात्रौ श्वेतं याम्योत्तरेण तु ।
इन्द्रायुधं ततो दृष्ट्वा चोल्कापातं तथैव च ॥

---

* हरिवंशे वंशपर्वणि ४२ अ. १५ श्लो. ।

पाद्मे २७ अ. १३० श्लो. ।

तत्र 'दीप्ततोयाः सनिर्घातैः सह वज्रानलानिलैः ।
रवैः सुघोरैरुत्पातैर्दह्यमानमिवाम्बरम्'-इति पाठः ॥

† ८४ अ. ५-६ श्लो. ।

दिग्दाहपरिवेषौ च गन्धर्वनगरं तथा ।
परचक्रभयं विद्याद्देशोपद्रवमेव च''* ॥

स्कन्दपुराणे ।

ततः सर्वा दिशो व्याप्ता वह्निकुण्डनिभा भुवि ।
शब्दश्च सुमहानासीद्युगान्ताम्बुदसंनिभः ॥

गदापर्वणि दुर्योधनवधनिमित्तम् ।

"जज्ञे घोरतरः शब्दो बहूनां सर्वतो दिशम्''† ।

भीष्मपर्वणि कुरुक्षयनिमित्तम् ।

"रजश्चोद्धूयत महत् तम आच्छादयज्जगत्''‡ ।

मयूरचित्रे ।

प्रसादे भवने क्षेत्रे ग्राममध्ये तथा गवि ।
निर्घातोऽशनिरुल्का च पतन्ति यदि सन्ध्ययोः ॥
रात्रौ शक्रधनुर्व्योम्नि भूपदेशक्षयावहः ।
विश्वावर्त्तीति वायुश्च तीव्रो वा ग्रह एव च ॥
पतेदुल्का तथा तस्मिन् वायव्यः पच्यते चरुः ।
अप्रसूतौ प्रसूतानां स्त्रीणां यः स्मर्यते बुधैः ॥
उल्कापाते सदिग्दाहे दिशां दाहे यथाक्रमम् ।
प्रवर्त्तिते तु संग्रामे रोगोपद्रव एव च ॥

दिशां दाह इति सकलदिग्दाहपरम् ।

शान्तिमत्र प्रवक्ष्यामि सर्वोत्पातनिवर्हणीम् ।
इमा रुद्रेति मन्त्रेण समिधः कनकस्य तु ॥
अष्टोत्तरसहस्रं तु घृताक्ता जुहुयाच्छुचिः ।
रुद्रैकादशकं जप्यं माहिषो बलिरेव च ॥

---

* २३३ अ, ७-८ श्लो. । † ५८ अ, ५४ श्लो. । ‡ १९ अ, ३७ श्लो. ।

कुर्याच्छिवोत्सवं चैव भूमिदोहसमं ततः ।
ग्रामे वा नगरे चैव गोष्ठे च शिवसंनिधौ ॥
शान्तिकर्माणि कुर्वीत नृपादेशो द्विजातिकः ।
चरुः कार्योऽशनं तस्य पूजयित्वा द्विजाँस्तथा ॥
पायसं मधुसंयुक्तं दधिसर्पिःपयोयुतम् ।
शतमष्टाधिकं चैव जपेद्रुद्रं समाहितः ॥
सुवर्णं रजतं कांस्यं मणिरत्नविभूषितम् ।
ब्राह्मणाय तथा दद्याद्व्रतान्ते चैव मेदिनीम् ॥
अङ्गारवृष्ट्यां दिग्दाहे महाभयमुदाहरेत् ।
अप्रसूतौ तु या प्रोक्ता वायव्यः पच्यते चरुः ॥
वज्रोल्कापतनविद्युद्दिग्दाहाः प्रभवन्ति चेत् ।
श्वेताः पीतास्तथा रक्ताः कृष्णा विप्रादिनाशनाः ॥
श्यामा रूक्षास्तथा ध्वस्ताः शस्यपीडावहाः स्मृताः ।
लाङ्गूलाकृतयस्तास्तु शिखिकण्ठसमत्विषः ॥
अमात्यान् नैगमाँश्चैव घ्नन्ति वै कर्षकाँस्तथा ।
एषा साधारणी शान्तिः कर्त्तव्या गर्गभाषिता ॥
निर्घातश्चाशनिर्घोरा दिग्दाहश्चैव नित्यशः ।
देशभ्रंशाय बोद्धव्याः पराभूत्यै नृपस्य च ॥
अत्र साधारणी शान्तिः कर्त्तव्या गर्गभाषिता ।

अथ भौममिश्रकाः । तत्र पराशरः ।

चैत्यप्रसादतोरणशिखरिशिखराद्रीणामकस्मात् प्रपतनं देवध्वजेन्द्रष्टयक्षितिपातः पत्रच्छेदनमवनिपतेर्विनाशाय ।

बार्हस्पत्ये ।

शिलोच्चयानां च शिलाप्रपातो वनद्विपानां च विषाणपातः ।
चैत्यद्रुमाणां च तथैव पातो भयानि राज्ञः प्रतिवेदयन्ति ॥
महोरगाणां च विवर्त्तितानि हुताशनस्य ज्वलनं च तोयात् ।
शक्रध्वजानां च तथैव पातो भयं तु राज्ञः प्रतिवेदयन्ति ॥

प्रासादगोपतिमहीपतिवारणाना-
मिन्द्रध्वजोच्छ्रितवनस्पतिवाजिनां च ।
नैषां भवन्ति पतनानि शुभावहानि
यस्यां दिशि प्रतिभयानि तथोत्तराणि ॥

वराहसंहितायाम् ।

"शक्रध्वजेन्द्रकीलस्तम्भद्वारप्रपातभङ्गेषु ।
तद्वत् कपाटतोरणकेतूनां नरपतेर्मरणम्"* ॥

औशनसे ।

नमन्ति यस्य प्रासादाः प्रज्वलन्ति च यस्य वै ।
दृढानि प्रतिशीर्यन्ते यस्य स म्रियतेऽचिरात् ॥
इन्द्रयष्टिर्भ्रश्यते चाविशस्तो वायुरुद्व्रजेत् ।
यदा तदा विजानीयाद्राज्ञः पीडामुपस्थिताम् ॥
स्तम्भवृक्षध्वजा यत्र स्रवेयू रुधिरं वसाम् ।
धूमा येषु ज्वलेयुर्वा मन्त्रिणो मृत्युरेव च ॥

बार्हस्पत्ये ।

गिरिवरपतनं सभूमिचालं प्रतिभविता शयनस्थितान् मनुष्यान् ।
मृगशकुनिगणाश्च दीप्तवाचो महति भये सुसमुपस्थिते भवन्ति ॥
आबालवत्सा पुरचत्वरेषु गावो यदा दीप्तरवा भवन्ति ।
शृगालनादाश्च भवन्ति दीप्ता तदा भयं वेदविदो वदन्ति ॥

---

* अ. पुस्तकेऽस्यानुपलब्धेर्वटकणिकायाः सम्भाव्यते ।

औशनसे।

गोमायुर्वाशते यत्र यूपं वाऽपि प्ररोहति।
दृश्यन्ते मक्षिका नीलास्तत्र विद्यान्महद्भयम्॥

बार्हस्पत्ये।

आरण्यो ग्रामवासी मृगशकुनिगणो ग्रामवासे वनान्ते
गृध्राणां सन्निपाता नरपतिभवने गोपुरे वा पुरे वा।
गर्भे वा मानुषीणां खरकरभमुखाऽनेकरूपा प्रसूति-
र्देशानां विद्रवार्थे स्थितिरिति नियता देवतानां च पातः॥

वायसानां समाजे तु शुनां नादस्तथैव च।
अनिशं श्रूयते यत्र तत्रापि सुमहद्भयम्॥

काकाः पुरोत्तमगृहेषु वसं प्रविष्टाः
सूर्योदये खलु शिवाहतमुक्तनादाः।
गृध्राश्च मण्डलसमुत्पतिता भ्रमन्ति
प्राप्तं भयं जनपदस्य निवेदयन्ति॥

मुञ्चन्ति नागा रुधिरं कराग्रैर्लोमानि दीप्यन्ति तुरङ्गमाणाम्।
दीप्यन्ति खड्गाश्च विकोशमुक्ता भयानि राज्ञः प्रतिवेदयन्ति॥

औशनसे।

वाजिवारणमुख्यानामकस्मान्मरणं भवेत्।
इतरक्ष्मापतेस्तत्र विज्ञेया सत्वरा गतिः॥

बार्हस्पत्ये।

रुवन्ति नागाः सुविमुक्तहस्ताः प्रकीर्णकेशास्तुरगा नदन्ति।
समागता यत्र वदन्ति नार्यस्तदा भयं वेदविदो वदन्ति॥

वराहसंहितायाम्।

पशुशस्त्रव्याहारे नृपमृत्युर्मुनिवचश्चेदम्।

पराशरः ।

धेनोरनडुहां शुनां चान्ययोनिष्वाधानमन्योन्यं च स्त्रीणां परचक्रागमाय ।

गार्गीये ।

संयुज्यन्ते विकारैश्चेद्वापीकूपजलाशयाः ।
दीर्घादेवकुलादीनि* तदा स्वामिवधो भवेत् ॥
अभावे स्वामिनस्तत्र दोषो राजानमृच्छति ।
अयत्नं यत्र दृष्येत तद्देशानां विपर्ययः ॥

बार्हस्पत्ये ।

अताड्यमानाः पटहा निःस्वनन्ति मुहुर्मुहुः ।
शस्त्राणि वाहिनीनां च ज्वलन्त्यद्भुतदर्शने ॥
कुलजं लक्षणोपेतं विद्वांसं च पुरोहितम् ।
दीक्षयित्वा नृपो होमाञ्छान्तिकर्म च कारयेत् ॥

मयूरचित्रे ।

यत्र प्रसूयते कन्या द्वे धेनुं चावरोहति ।
मानुषाः क्षोभमायान्ति क्षयवृद्धिश्च शस्यते ॥
तत्र साधारणी शान्तिः कर्त्तव्या गर्गभाषिता ।

तथा ।

अदन्ताश्च सदन्ताश्च प्रथमं चोपरि द्विजाः ।
जायन्ते मानुषा यत्र तत्र ब्रूयुरमानुषाः ॥
गावः फलन्ति शीर्यन्ते वारणा वाजिनस्तथा ।
छत्रशक्रध्वजं चैव पताकाः संपतन्ति च ॥
ज्वलन्ति चात्र वै कुर्यादिन्द्रहोमं विशेषतः ।

इन्द्राय स्वाहा । इन्द्र इदं शमयतु स्वाहा । शतक्रतवे स्वाहा ।
एतदिन्द्रम्—इति द्वे आहुती उपरि सर्पिषा सावित्र्या जुहुयात् ।

हुतान्ते दक्षिणां दद्याद्धेनुं हेमाम्बराण्यथ ।
धान्यं रत्नं च दातव्यं सर्वदा शुभमिच्छता ॥
अपहारे हिरण्यस्य प्रदाहे भवनस्य च ।
शालामण्डपदाहे च दाहे देवकुलस्य च ॥
देशदाहेऽथ देवानां नृत्ये हसितकम्पयोः ।
याने धूमायने स्वेदे क्रीडने ज्वलनेऽपि च ॥
रक्तधाराश्रुतौ चैव दाहे चाहतवाससः ।
कुटुम्बस्य क्षये विद्वानिदं कर्म समारभेत् ॥

आग्नेयस्थालीपाकं श्रपयित्वा ।

अग्नये स्वाहा । अग्निरिदं शमय तु स्वाहा । भूताधिपतये स्वाहा ।
अग्निर्मूर्द्धानम्—इति द्वे आहुती सावित्र्या त्रिरुपरिष्टादाज्येन जुहुयात् ।

दक्षिणां त्रिविधां दद्यात् स्वर्णं ताम्रं च रूप्यकम् ।

तथा ।

लाङ्गलस्य भवेच्छेदो निर्जले च जलोदयः ।
जलाधारे जलाभावो जलवृष्टिरकालजा ॥
भेकस्याकालनिध्वानं गृहात् कर्कटिका पतेत् ।
क्रौञ्चभृङ्गौ तथा भूमावुङ्गिका गृह एव वा ॥
स्विद्यते घृतकुम्भश्च पयस्तैलघटस्तथा ।
दृषदुलूखलौ च शीर्येते स्थूणा स्विद्यति रोहति ॥
ज्वलत्यसृक् स्रवत्येव शाखायष्टिश्च भिद्यते ।
हस्तिनो भिद्यते दन्तो हस्तिनी चैव माद्यति ॥
गवां शृङ्गाणि भिद्यन्ते हस्ती माद्यत्यकालतः ।

गावः प्रस्रवते भाद्रे हस्तिन्याः कटकोऽपि वा ॥
बालः फलति वृक्षो वा फलं बध्नाति चाप्यसौ ।
रुदन्ति वृक्षा भयतो वारुणं साधयेच्चरुम् ॥

वरुणाय स्वाहा । वरुण इदं शमयतु स्वाहा । अद्भ्यः स्वाहा

उदुत्तमं वेति ऋचा सावित्र्या च घृताहुतीः ।
यथार्हं दक्षिणां दद्यात् ततः शान्तिः प्रपद्यते ॥

तथा ।

कुमुदोत्पलपत्रं च नदीस्रोत्रसि जायते ।
कृत्तवृक्षाश्च यूपाय क्लेदं मुञ्चन्ति चाक्षताः ॥
अताडिताः पतन्त्येते छिन्नभिन्नप्ररोहणाः ।
पूयशोणितगन्धाश्च देशविद्रवकारणम् ॥
जनक्षयकराश्चैव राजामात्यस्य विभ्रमः ।
पुरोहितवधार्थं च शान्तिराङ्गिरसी मता ॥
वानस्पत्येन मन्त्रेण ब्रह्मचारी जितेन्द्रियः ।
त्रिरात्रोपोषितो भूत्वा हविष्याशी पुरोहितः ॥
उदुम्बराणां समिधां सहस्रं जुहुयाच्छुचिः ।
अष्टोत्तरं द्विजेभ्यश्च भूर्देया भूरिदक्षिणा ॥
क्षीरशान्तिश्च कर्त्तव्या परमान्नं च भोजयेत् ।

अथ नाभसभौममिश्रकाः । आग्नेयपुराणे वामनोत्पत्तौ ।

ववुर्वाताः सुखस्पर्शाः सुनिर्मलमभून्नभः ।
धर्मे च सर्वे भूतानां तदा मतिरजायत ॥
नोद्वेगता भवेद्देहे कस्य चिन्नारतिस्तथा ।

बार्हस्पत्ये ।

चैत्यद्रुमाणां रुधिरप्रसेकाः कबन्धरूपाश्च घना भवन्ति ।
रक्ता च सन्ध्या रुधिरप्रदिग्धा भयानि राज्ञः परिवेदयन्ति ॥

पराशरः ।

खद्योतैः परिविध्यते दिनकरः सन्ध्यागतो मण्डलै
रक्तैः कृष्णमहेन्द्रचापसदृशैः खे पूरयद्भिर्यदा ।
गावो यत्र सपूयशोणितमुरोदिग्धा भवेयुः क्वचित्
विद्यात् तत्र विमर्षणं परबलैर्भेदं स्वराष्ट्रस्य वा ॥

बृहद्यात्रायां वराहः ।

मृगपतिरासभवाजिगजानां पिबति मिथो न चिराद्भयदाता ।
विबुधपतिध्वजतोरणखातैः फलमिदमेव करोति नृपाणाम् ॥

औशनसे ।

वृष्टिविद्युत्स्वने व्यभ्रे चरस्थिरविवर्जिते ।
दिवोल्कायां च पीड्यन्ते जना नृपतिभिः सह ॥
सन्ध्याद्वयेऽभिदीप्तिर्धूमोत्पत्तिश्च काननेऽनग्नौ ।
छिद्राभावे भूमेर्दरणं कम्पश्च शान्तकरिगर्जः ॥
अनैशानि तमांसि स्युराशाधूमाः सपांशवः ।
आनग्नेयो यत्र धूमस्तत्र विद्यान्महद्भयम् ॥

बार्हस्पत्ये ।

आनर्त्तवं पुष्पफलमकाले दुर्दिनं महत् ।
सधूमाश्च दिशो यत्र विद्याद्भयमुपस्थितम् ॥

स्कन्दपुराणे दैत्यपराजयनिमित्तम् ।

ररास परुषं व्योम चचाल च वसुन्धरा ।

भागवते जगदुद्वेजकहिरण्यकशिपूत्पत्तौ ।

"गावोऽत्रसन्नसृग्दोहास्तोयदाः पूयवर्षिणः ।
व्यरुदन् देवलिङ्गानि द्रुमाः पेतुर्विनाऽनिलम्"* ॥

वनपर्वणि भीमपराजयनिमित्तम् ।

"सलोहिता दिशश्चासन् खरवाचो मृगद्विजाः"† ।

---

* श्रीमद्भागवते ३ स्कन्दे १८ अ, १३ श्लो. ।   † १५५ अ, ५ श्लो. ।

"तुमुलाश्च ववुर्वाता जज्वलुर्न च पावकाः ॥
प्रतिस्रोतो ययुर्नद्यो दिशश्चैव प्रधूमिताः ।
उल्काः पतेयुरुद्भूता निर्घाताश्च पतन्त्युत"* ॥

स्कन्दपुराणे हिरण्याक्षवधनिमित्तम् ।

सिद्धाः पेतुरथादित्याद्देवाश्च भयमाविशन् ।
सागराश्च चुक्षुभिरे विरेजुर्नगपक्षिणः ॥
भयत्रस्तानि भूतानि उल्काः पेतुर्नभस्तलात् ।

मौशले वृष्णिक्षयनिमित्तम् ।

"प्रत्यगूहुर्महानद्यो दिशो नीहारसंवृताः"† ।

भागवते कृष्णोत्क्रान्तिनिमित्तम् ।

"धूमा दीप्ताः सपरिघाः कम्पते भूस्तलादिभिः ।
निर्घातस्तु महाँस्तात साकं च स्तनयित्नुभिः ॥
सभूतलं भूतगणैर्ज्वलिते इव रोदसी"‡ ।

सभापर्वणि पाण्डववनप्रवेशे कुरुक्षयनिमित्तम् ।

"अनभ्रे विद्युतश्चासन् भूमिश्च समकम्पयत्"§ ।

उद्योगपर्वणि भीष्माभिषेके भीष्मवधनिमित्तम् ।

"निर्घाताः पृथ्वीकम्पो गजबृंहितनिस्वनाः ।
आसँश्च सर्वयोधानां पातयन्तो मनांस्युत ॥
वाचश्चाप्यशरीरिण्यो दिवश्चोल्काः प्रपेदिरे"*† ।

मयूरचित्रे ।

गोधा च नकुलश्चैव सर्पो वनपशुस्तथा ।
विशन्ति भवने यत्र युध्यन्ति वृषभास्तथा ॥
बालाश्चैव विनश्यन्ति वृष्टिः सिन्दूरवर्णवत् ।

---

* कुत्रत्योऽयं सार्धश्लोक इति नोल्लेखः । † १ अ. ३ श्लो. ।
‡ श्रीमद्भागवते उक्तस्थले नोपलभ्यते । § ८० अ. २८ श्लो. ।
*† १५६ अ, २९-३० श्लो. ।

कारयेत् तत्र याम्यं तु स्थालीपाकं समाहितः ॥

यमाय स्वाहा । यम इदं शमयतु स्वाहा । वैवस्वताय स्वाहा । यमो धारयते पृथिवीम्—इति हुत्वा सावित्र्या त्रिरुपरिष्टादाज्येन जुहुयात् ।

स्वर्णं च रजतं कांस्य ताम्रं दद्याच्च दक्षिणाम् ।

अथ दिव्यनाभसभौममिश्रकः । तत्र पराशरः ।

विगततमसस्तोयप्रख्याः प्रशान्तमृगा दिशो
गगनमपि सौम्यर्क्षं वान्तः शिवा मृदवोऽनिलाः ।
विमलहविषा जाताः स्निग्धा गृहे विसृतत्विषः
प्रशमरतयो नष्टातङ्का भवन्त्यवनीश्वराः ॥

बार्हस्पत्ये ।

इन्द्राशनिः पतति यत्र भवेत् स्फुलिङ्गो
भूः कम्पते दिनकरस्य करप्रशान्तिः
मांसं समापतति राशिकृतं तु यत्र
तत्रापि राजभयमापतितं वदन्ति ॥

अग्न्याभासाः प्रदोषाः पतिभयजनना दीप्यमाना दिशश्च
मध्याह्ने चान्तरिक्षग्रहणमुपचितं गृध्रसङ्घैः प्रकीर्णम् ।
निर्घाताः पांशुवर्षं सततमपि तथा भूप्रचालस्तु विज्ञै-
रादेश्या वै स्वराष्ट्रे नृपतिभयकरा राष्ट्रनाशाय चैव ॥

वनानि यत्र धूम्यन्ते दिशः सर्वाः समाकुलाः ।
चन्द्रसूर्यौ न राजेते प्रभ्रष्टौ वीतरश्मिकौ ॥
प्रमृष्टग्रहनक्षत्रा दिशः सर्वाः समाकुलाः ।
सन्ध्या चोभयथा दीप्ता तत्र विद्यान्महद्भयम् ॥

स्कन्दपुराणे वराहपराजयनिमित्तम् ।

उद्विग्ना नागराश्चासन् भास्करश्चाप्रभोऽभवत् ।

उल्काः पेतुश्च सर्वत्र भूमिरल्पसुराऽभवत् ॥
ग्रहाणामभवद्युद्धं विमानानि च पेतिरे ।

भागवते जगदुद्वेजकहिरण्याक्षकशिपूत्पत्तौ ।

"सहाचला भुवश्चेलुः दिशः सर्वाः प्रजज्वलुः ।
सोल्काश्चाशनयः पेतुः केतवश्चार्त्तिहेतवः"* ॥

लिङ्गपुराणे दक्षपराभवनिमित्तम् ।

पर्वताश्च व्यशीर्यन्त चकम्पे च वसुन्धरा ।
मरुतश्चाप्यघूर्णन्त चुक्षुभे मकरालयः ॥
अग्नयो नैव दीप्ताश्च नैव दीप्यति भास्करः ।
ग्रहाश्च न प्रकाशन्ते देवान् वाधन्ति दानवाः ॥

अत्रानुक्तविशेषशान्तिषु मिश्रोत्पातेषु प्रभूतकान्नगोमहीदानादिका सामान्यशान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्त्तव्या।

मयूरचित्रे ।

लोहितं कपिलं पीतं जलं यत्र विलोक्यते ।
गन्धर्वनगरं वाऽपि रक्तं वा यदि दृश्यते ॥
प्रावसन्ध्यायां सदण्डाभा दृश्यते नागयष्टिका ।
कालमण्डलकान्यर्के उल्कायुद्धं नभस्तले ॥
रात्रौ शक्रायुधं चैव चन्द्रमाश्चाप्यपर्वणि ।
छर्दते रुधिरं वाऽपि प्रतिमा ब्रुवते वचः ॥
मासोदनं दधि घृतं मुञ्चत्यार्त्तरवं तथा ।
शीर्यन्ते शान्तिमायान्ति रुधिरं च वमन्त्यथो ॥
दह्यन्ते च प्रतप्यन्ते नमन्ति शिविकादिषु ।
आयुक्तान्यभि भाषन्ते पतन्ति च जलाशये ॥

* श्रीमद्भागवते ३ स्कन्धे १८ अ, ४ श्लो. ।

प्रतिमा यत्र तत्रापि परचक्रागमो भवेत् ।
राजामात्यजनच्छेदः शान्तिः पैतामही तथा ॥
औदुम्बराणां समिधां सहस्रं जुहुयाच्छुचिः ।
अष्टोत्तरमुपोष्यैव त्रिरात्रं तु स मन्त्रवित् ॥
ऐन्द्री रौद्रैश्च मन्त्रैश्च सोपहारैः समन्ततः ।
देवालयेषु तूर्येण गन्धमाल्यादिभिस्तथा ॥
स्वस्तिवाच्यं द्विजान् कृत्वा गोसहस्रं प्रदापयेत् ।

बार्हस्पत्ये ।

एवन्तश्च विपर्यस्ता भयस्यैव निदर्शनम् ।

पराशरः ।

अतिमात्रशीतोष्णविपर्ययो महते भयाय ।

तथा च मत्स्यपुराणे ।

"शीतोष्णताविपर्यासमतीव रिपुजं भयम्"* ।

द्रव्येष्वप्युष्णशीतविपर्यासे एतदेव फलम् ।

बार्हस्पत्ये ।

यदा शीते भवेदुष्णमुष्णं शीतमतीव च ।
अनारोग्यभयं चैव प्रजानामभिनिर्दिशेत् ॥

औशनसे ।

यदा शीतं भवेदुष्णमुष्णं शीतमतीव च ।
परतो नवमान्मासाद्विद्याद्देशेषु च वै भयम् ॥

वराहसंहितायां तु ।

शीतोष्णविपर्यासे ऋतुषु न सम्यक् वृतेषु कुसुमेषु ।
षण्मासाद्राष्ट्रभयं रोगभयं दैवजनितं च ॥

बार्हस्पत्ये ।

आनर्त्तवं पुष्पफलमकाले दुर्दिनं महत् ।
सधूमाश्च दिशो यत्र विद्याद्भयमुपस्थितम् ॥

---

* २३३ अ. २ श्लो. ।

अत्र मत्स्यपुराणे ।

सूर्येन्दुपर्यन्यसमीरणानाम्—*इत्यादिका वृष्ट्यद्भुतावर्त्ते लिखिता शान्तिर्विहिता ।

मयूरचित्रे ।

ऋतूनां च विपर्यासे रौद्रीं शान्तिं समाचरेत् ।
रुद्रः संपूजितः सम्यग्जगतः शुभकृद्भवेत् ॥

आषाढमासिकरोहिणीचन्द्रयोगे वराहसंहितायाम् ।

प्राजेशमाषाढतमिस्रपक्षे क्षपाकरेणोपगतं समीक्ष्य ।
वक्तव्यमिष्टं जगतोऽशुभं वा शास्त्रोपदेशाद्ग्रहचिन्तकेन ॥

वटकणिकायाम् ।

आषाढबहुलपक्षे शिशिरकरो रोहिणीसमायुक्तः ।
यदि तपति गगनममलं प्रसन्नतापः सहस्रांशुः ॥
सलिलगुरुभारजलधरतडिल्लतालोलरञ्जितदिगन्तः ।
अतिवहलबालचातकजलदैश्च विमिश्रमाकाशम्† ॥
क्षितितनयरविजरहितः स्फटिकनिभश्चन्द्रमा निरुत्पातः ।
मरुतश्च पूर्वपूर्वोत्तरोत्तराः शान्तमृगविहगाः ॥

पराशरः ।

रोहिणीयोगे पुनः प्रदक्षिणो मृदुर्मारुतः स्नेहवन्ति चाभ्राणि विद्युच्छक्रचापालङ्कृतानि स्वादुसुरभिविमलशिशिरतावृद्धिश्चाम्भसां वृष्टिक्षेमसुभिक्षाय । यावन्तो दिवसान् निमित्तप्रादुर्भावानुबन्धस्तावद्वर्षाणि सुभिक्षक्षेमम् । आसप्तरात्राद्बिलवासिनां विलेभ्यो निष्क्रामणं स्त्रीपुरुषबालानां प्रमोदः पक्षिणां पुष्कललक्ष्मीक्षीरवृक्षसेचनम् । तरूणामच्छिद्रस्निग्धपत्रता पुरपौरहिता सूर्याचन्द्रमसोः परिवेषणं तद्विपत्तये ।

* द्रष्टव्याऽस्यैव ग्रन्थस्य ३८१ पृ. १० पं. ।

† अमितमलभेकचातककादम्बविमिश्रमाकाशम् । इति अ. पु. पा. ।

वराहसंहितायाम् ।

पूर्वोद्भूतैः शस्यसम्पत्तिरब्दैराग्नेयाशासंभृतैरग्निकोपः ।
याम्ये शस्यं क्षीयते नैर्ऋतेऽर्धं पश्चाज्जातैः शोभना वृष्टिरब्दैः ॥
वायव्योत्थैर्वायुवृष्टिः क्वचिच्च पुष्टा वृष्टिः सौम्यकाष्ठासमुत्थैः ।
पुष्टं शस्यं स्थाणुदिक्संप्रवृद्धैर्वायुश्चैवं दिक्षु धत्ते फलानि ॥
उल्कानिपातास्ताडितोऽशनिश्च दिग्दाहनिर्घातमहीप्रकम्पाः ।
नादा मृगाणां सपतत्रिणां च ग्राह्या यथैवाम्बुधरास्तथैव ॥
नामाङ्कितैस्तैरुदगादिकुम्भैः प्रदक्षिणं श्रावणमासपूर्वैः ।
पूर्णैः स मासः सलिलस्य दाता स्रुतैरवृष्टिः परिकल्प्यमूनैः ॥

नामाङ्कितैरित्यनेनैतदुक्तं भवति । रोहिणीप्रवेशसमये उदक्पूर्वदक्षिणपश्चिमासु दिक्षु श्रवणाश्चत्वारो जलपूर्णकुम्भा रोहिणीसमाप्ति यावत् स्थापयितव्याः । तत उत्तरकुम्भे संपूर्णजले तिष्ठति श्रावणे सम्यग्वृष्टिर्भवति । शुष्के जलेऽनावृष्टिः । मध्येऽनुपातः । एवं पूर्वादिकुम्भैर्भाद्रादिषु वृष्टिर्ज्ञातव्या ।

अन्यैश्च कुम्भैर्नृपनामचिह्नैर्देशाङ्कितैश्चाप्यपरैस्तथैव ।
भग्नैः स्रुतैर्न्यूनजलैः सुपूर्णैर्भाग्यानि वाच्यानि यथानुरूपम् ॥
गोप्रवेशसमये वृषोऽग्रतो याति कृष्णपशुरेव वा पुरः ।
भूरि वारि शबले तु मध्यमं नो सितेऽम्बुपरिकल्पनाऽपरैः ॥

पराशरस्तु ।

अथास्तमयवेलायां पुरद्वारमभिगम्य निमित्तान्युपलक्षयेत् । तत्र गोगजाश्वरथप्रथमप्रवेशेषु विजयो वानरखरोष्ट्रनकुलमार्जाराश्वप्रवेशे विद्रवो नेत्राङ्गहीनेष्वशनिभयम् ।

नवोद्गीतविधातॄणां वहिर्नद्याः पुराद्बहिः ।
बालानां क्रीडनं यत्र तत्र नास्ति व्यतिक्रमः ॥
दिव्यान्तरिक्षभौमानामुत्पातानां समुद्भवे ।
रोहिण्यां चन्द्रयुक्तायां भवेत् तीव्रतरं फलम् ॥

अथाषाढिकस्वात्याद्रासु चन्द्रयोगे पराशरः ।

स्वातियुक्ते चन्द्रमसि घनस्निग्धस्तनितविद्युन्मालिभिरम्भोदैर्नभस उत्सादनं सुभिक्षक्षेमाय । तद्वत् सर्ववातप्रादुर्भाव इति । उल्कानिर्घातकम्पोपघातैश्च तद्विपर्ययः ।

वटकणिकाबृहत्संहितयोः ।

यद्रोहिणीयोगफलं तदेव स्वातावषाढासहिते च चन्द्रे ।
आषाढशुक्ले निखिलं विचिन्त्य योऽस्मिन् विशेषस्तमहं प्रवक्ष्ये ॥
वृष्टेऽह्निभागे प्रथमेऽतिवृष्टिस्तद्वद्द्वितीये तु सकीटसर्पा ।
वृष्टिस्तु मध्याऽपरभागवृष्टे निश्छिद्रवृष्टिर्युनिशं प्रवृष्टे ॥

पराशरस्तु ।

अह्नः प्रथमभागे वर्षे क्षेमम् । द्वितीये शस्यसरीसृपादिवृद्धिः । मध्ये प्रावृट्कालाप्तवर्षणम् । तृतीये व्याधेर्भयम् । अन्येषु सकलाहोरात्रवर्षणं च सर्वप्रावृट्संपत्तये ।

वटकणिकाबृहत्संहितयोः ।

स्वातौ निशान्ते प्रथमेऽतिवृष्टे सर्वाणि शस्यानि प्रयान्ति वृद्धिम् ।
भागे द्वितीये तिलमुद्गमाषा ग्रैष्मं तृतीये* तिलशारदानि ॥

पराशरः ।

रजन्याः पूर्वभागेऽभिवृष्टे शस्यम् । द्वितीये शिम्बिधान्यानाम् । तृतीये ग्रैष्मसम्पत्तये । चतुर्थभागे सर्वरसस्य विनाशाय ।

वराहसंहितायाम् ।

सप्तम्यां स्वातियोगे यदि तपति हिमं माघमासान्धकारे
वायुर्वा चण्डवेगः सजलजलधरो गर्जते वाऽप्यजस्रम् ।
विद्युन्मालाकुलं वा यदि भवति नभो नष्टचन्द्रार्कतारं
विज्ञेया प्रावृडेषा मुदितजनपदा सर्वशस्यैरुपेता ॥

---

* ऽस्ति न शारदानि । इति अ. पु. पा. ।

तथैव फाल्गुने चैत्रे वैशाखे मासि वाऽपि च ।
स्वातेर्योगं विजानीयादाषाढे च विशेषतः ॥

श्लोकद्वयमिदं प्रक्षिप्तमिति प्रसिद्धम् ।

बार्हस्पत्ये तु ।

याँश्चोवाचाङ्गिराः पूर्वं याँश्च वेदोशनाः कविः ।
तानहं संप्रवक्ष्यामि उत्पातान् विविधानिह ॥
विरुद्धयोनिगमनमन्यसत्त्वप्रभूतयः ।
हस्तपादाक्षिशिरसामधिकानां प्रदर्शनम् ॥
अवाकच्छिरोऽङ्घ्रिसंयोगे गतिहीनं च चेष्टितम् ।
विरुद्धानां च सत्त्वानामन्योन्यं मेलनं भवेत् ॥
प्रतिस्रोतवहा नद्य इषवः प्रतिलोमगाः ।
दन्तभङ्गस्त्वकर्णश्च वरवारणवाजिनाम् ॥
छत्रभङ्गः प्रधानस्य इन्द्रवायूद्भ्रमो निशि ।
मांसतैलविपाकाश्च चैत्यतोयपरिस्रवाः ॥
शक्रध्वजपताकानां भङ्गः क्रव्यादसेवनम् ।
विडालोलूकयोर्युद्धं नृपप्रासादसन्निधौ ॥
पांशुना व्यावृतं व्योम रजसा तमसाऽपि वा ।
लोहिताग्निप्रतीकाशं दीप्ता द्विजमृगास्तथा ॥
वातवेगोऽस्तसन्ध्यासु स्फुरन्नद्योऽपसव्यगाः ।
मण्डलानि समन्ताच्च सर्वतो मृगपक्षिणाम् ॥
क्रव्यादूराहसंघाश्च व्याकुलाः सर्वतो दिशम् ।
त्रिरात्रं च परं वृष्टिः प्रनष्टेन्दुदिवाकराः ॥
अनृतौ संप्रदृश्येत घोरस्तनितदीर्घता ।

वज्रादयो वा दात्यूहपुत्राः शकुनयस्तथा ॥
मण्डलाभ्यन्तरस्थाश्च भवन्ति रविसोमयोः ।
आकाशे वा प्रदृश्यन्ते प्रकम्पन्ति च पर्वताः ॥
दृश्यते दिवसे वाऽपि त्वभीक्ष्णं तारका तथा ।
घर्षनं च विडालानां क्षीरवृक्षे निषेव्यते ॥
स्वरैर्दीर्घैरुलूकैश्च रसद्भिः सह विग्रहः ।
सिंहासनानि च्छत्राणि भृङ्गारातपनास्तथा ॥
कम्पन्त्यकस्माद्भिद्यन्ते संसर्पन्त्यारटन्ति च ।
राज्ञामघकरं सर्वमेतदुत्पातलक्षणम् ॥
सन्ध्या सदण्डपरिवेषा रजोऽर्कपरिघादयः ।
मण्डलानां समूहाश्च दिक्षु भीता रणप्रदाः ॥
क्रव्यादा वानरा द्वारि विस्फुरन्त्यारटन्ति च ।
तुण्डैश्च वायसा भूमिं कुट्टयन्तो रटन्ति च ॥
म्लायते माल्यमत्यर्थं गन्धाः कुणपगन्धिनः ।
वस्त्रेषु भक्ष्यभोज्यं च भवत्युत्पातलक्षणम् ॥
क्षौद्रं दधि च पूयं च प्रस्रवन्त्यर्चिता द्रुमाः ।
सारमेयाः श्मशानेषु भाषन्ते विभवन्ति च ॥
एतदौत्पातिकं ग्रामे यस्मिन् वा दृश्यते पुरे ।
तस्मिन् ग्रामे पुरे वाऽपि विद्यादरिभयं महत् ॥
अश्वत्थोदुम्बरप्लक्षन्यग्रोधकुसुमोद्भवः ।
श्वेतलोहितपीतानि कृष्णाणीन्द्रायुधानि च ॥
एवं वर्णगुणानां च पतनं देववेश्मनाम् ।
ब्राह्मणक्षत्रियविशां विनाशो राजसंभृतः ॥

भक्ष्ये भवन्त्यभक्ष्याणि तद्भयं सुमहद्भवेत् ।
घृतक्षीरजलस्रावे घृतक्षीराम्भसः क्षयः ॥
सुरास्रावे मिथोभेदो रुधिरादुष्णविन्दवः ।
गोवृषाणां च रुधिरस्रुतेर्गोब्राह्मणक्षयः ॥
फलेऽफलं यदा पश्येत् पुष्पे पुष्पसमावृतम् ।
गर्भाः स्रवन्ति नारीणां युवराजवधोऽपि च ॥
एणान् गजाश्च सर्पान् वा मण्डूका अर्थवाचकाः ।
मण्डूकी ग्रसते यत्र तत्र राजा च हन्यते ॥
उन्मत्तानां पशूनां च चेष्टितं विकृतं च यत् ।
स्त्रियश्च यत् प्रभाषन्ते तत्र नास्ति व्यतिक्रमः ॥
पूर्वं वदति देवेषु पश्चाच्चरति मानुषे ।
नाचोदिता वा गृह्णन्ति सत्ये ह्येषा सरस्वती ॥
उत्पाताः सर्व एवैते कदा चिद्राजमृत्यवे ।
ज्ञेया देशविनाशाय राहोरागमवाचकाः ॥
कीलाम्बुधिपरीवेषग्रहाणामुदयाय च ।
स्वचक्रपरचक्रेभ्यो भयं वा समुपस्थितम् ॥
राष्ट्रे सेनापतौ यत्र पुरे वाऽथ पुरोधसि ।
अमात्ये वाहने कोशे नृपतौ वा फलन्ति ते ॥
एतान् समुत्थितान् ज्ञात्वा राजा सबलवाहनः ।
प्रणिपत्य गुरुं भूयाद्भगवँस्त्वभयोऽस्तु मे ॥
भयमुत्पातजं सर्वं ब्रूहि किं करवाणि ते ।
इत्युक्त्वा श्रद्दधानेन राज्ञा वाञ्छितमिच्छता ॥
निमित्तानि समालोच्य कृत्वा जपनमाहितः ।

महाशान्तिं प्रयुञ्जीत सर्वोपद्रवनाशनीम् ॥
सर्वरोगप्रशमनीं सर्वापद्विनिवारिणीम् ।
रौद्रीं कुर्यान्महाशान्तिं श्रद्धया बहुदक्षिणाम् ॥

कङ्काद्यद्भुतं आथर्वणाद्भुते ।

काकोलूकवका गृध्रा हंसाः श्येनाः कपोतकाः ।
गृहे रथे ध्वजे वाऽपि पतन्त्येतेऽप्यकारणात् ॥
उत्पन्ना मधुवल्मीकवरटाच्छत्रिका तथा ।
उत्पाद्यतेऽयथाकाले तद्विद्यादद्भुतं महत् ॥
मानुषाणां पतेद्गेहे काकी द्वारि कटायते ।
स्थूणा प्ररोहते यत्र अद्भुतं च महद्भवेत् ॥
असिराजीवतप्तं तु द्वित्र्यनेकशिरस्तथा ।
संहताश्चैव युज्यन्ते जातमात्रा हसन्ति च ॥
अजा गावो महिष्यश्च* दह्यमाना स्रवेदसृक् ।
सूर्याद्भुतं विजानीयात् पूजयित्वा दिवाकरम् ॥
दध्याज्यमधुसंयुक्तसमिधस्त्वर्कसंभवाः ।
मन्त्रिराजप्रभृतिभिर्जुहुयादाज्यमेव च ॥
सुवर्णसहितां गां च दद्याद्धोत्रे च दक्षिणाम् ।
सर्वे दोषाः प्रणश्यन्ति ततः संपद्यते शुभम् ॥
सिंहासनं रथं छत्रं चामरं ध्वजमेव च ।
अकस्माद्भङ्गमाप्नोति विना वातादिदूषणैः ॥
अनारोहणको राजा पतेत् सिंहासनादपि ।
वाहना यत्र उद्यन्ते भूमौ विशति कोकिलः ॥

---

* एतासां का चिदेकेति शेषः ।

चन्द्राद्भुतं विजानीयात् स्ववारेण प्रपूजयेत् ।
पूर्वोक्तेन विधानेन पलाशसमिधो घृतम् ॥
धेनुं सुवर्णं वस्त्रं च दद्याद्विप्राय दक्षिणाम् ।
सर्वे पापाः प्रणश्यन्ति ततः संपद्यते शुभम् ॥
व्रीहीणां तण्डुलाश्चैव स्फुटन्ति चोत्पतन्ति च ।
अनग्नेर्ज्वलनं चैव गृहे रूढोऽपसर्पते ॥
मासाष्टप्रसवे स्त्रीणामद्भुतं भौमजं स्मृतम् ।
पूर्वोक्तमन्त्रसूक्ताभ्यां मधूकसमिधो घृतम् ॥
अनडुत्कनकं वस्त्रं दद्याद्विप्राय दक्षिणाम् ।
सर्वे पापाः प्रणश्यन्ति ततः संपद्यते शुभम् ॥
स्त्रीगर्भपतने वाऽपि महिषीमानुषीगवाम् ।
यमलानि प्रसूयन्ते सिंहादित्येऽप्यथापि गौः ॥
शरीरं स्फुरते वाममकस्माज्जायते कृशः ।
अजा गौर्महिषी मेषी अधेनुः स्रवते पयः ॥
आत्मनैवात्मनि पिबेद्गौः स्वभावाच्च तृप्यति ।
महिष्यां शुक्लवत्साश्च जायन्ते ये विवर्णकाः ॥
बुधाद्भुतं विजानीयात् स्ववारेण प्रपूजयेत् ।
दर्शोऽस्य दर्शीति वदन् पूर्वोक्तविधया बुधः ॥
गावो वस्त्रं सुवर्णं च दद्याद्विप्राय दक्षिणाम् ।
सर्वे पापाः प्रणश्यन्ति ततः संपद्यते शुभम् ॥
रुधिरं पतते भूमौ वत्स आरोहते गृहम् ।
गौर्वोपस्करते यत्र नर्दते स्फुटतेऽथ वा ॥
दिवा वृक्षाश्च हन्यन्ते रात्रौ हन्ति गृहं तथा ।

अमानुषान् वा मण्डूकान् सर्पान् प्रसुवते स्त्रियः ॥
बार्हस्पत्याद्भुतं चैतत् तेन वारेण वा पुनः ।
तत्सूक्तेन च यज्ञाङ्गैर्जुहुयादृषिवृत्तिना ॥
वस्त्रं सुवर्णं धेनुं च दद्याद्विप्राय दक्षिणाम् ।
सर्वे पापाः प्रणश्यन्ति ततः संपद्यते शुभम् ॥
रथेन्द्रध्वजवैकृत्ये भङ्गे प्रपतनेऽपि वा ।
कूपस्योद्गिरणे वाऽपि गर्जने शोषणेऽपि वा ॥
स्वयं चैवोत्थिताः कुम्भा धूमायन्ते ज्वलन्ति च ।
शुक्लपक्षे चोदयते भार्गवोऽस्तमितोऽथ वा ॥
शुक्राद्भुतं विजानीयात् तेन वारेण वा पुनः ।
जुहुयात् प्लक्षसमिधः पूर्वोक्तविधया बुधः ॥
वस्त्रं सुवर्णं धेनुं च दद्याद्विप्राय दक्षिणाम् ।
सर्वे पापाः प्रणश्यन्ति ततः संपद्यते शुभम् ॥
मृगगोधावराहाश्च व्याघ्रा ऋक्षा वृकास्तथा ।
गजा गवयमहिषा ये चान्ये वनचारिणः ॥
द्वारे प्रविष्टा निष्क्रामन्त्यद्भुतं सुमहाभयम् ।
देवतार्चाविकारेषु शून्यगेहोत्थितं वचः ॥
शनैश्चराद्भुतं चैव तेन वारेण वा पुनः ।
पूर्वोक्तेन विधानेन समिधोऽश्वत्थजा घृतम् ॥
हुत्वा मन्त्रैः सुवर्णं च वस्त्रं दद्याच्च दक्षिणाम् ।
सर्वे पापाः प्रणश्यन्ति ततः संपद्यते शुभम् ॥
चण्डवाता भूमिकम्पा निर्घाताः पांसुवृष्टयः ।
शक्रस्तु पतते भूमौ रात्राविन्द्रधनुस्तथा ॥

भूधराणां प्रकम्पस्तु देवतायतनेऽपि वा ।
राजद्वारे पुरद्वारे भैरवं तु नदेच्छिवा ॥
शवोऽप्युत्थाय निपतेद्विकारोऽन्यश्च दृश्यते ।
अन्यवृक्षाश्च दृश्यन्ते नानात्वं फलपुष्पयोः ॥
अपुष्पाः पुष्पयुक्ताश्चाश्वानड्वाहश्च पुष्पिताः ।
दिवोल्कादर्शनं वाता अद्भुतं सुमहद्भवेत् ॥
राह्वद्भुतं विजानीयाद्रविवारेण वा पुनः ।
पूर्वोक्तेन विधानेन स्वर्णकुम्भजलैस्तथा ॥
रात्रौ धेनुं सुवर्णं च दद्याद्विप्राय दक्षिणाम् ।
सर्वे पापाः प्रणश्यन्ति ततः संपद्यते शुभम् ॥
रुधिरादि स्रवेद्वृक्षे भङ्गे प्रपतनेऽपि वा ।
काञ्जिकोद्गिरतेऽकस्मान्नर्दते सज्ज्यतेऽपि वा ॥
भद्रासनं च शयनमकस्माद्भिद्यतेऽपि वा ।
राजद्वारे पुरद्वारे केतुर्वा रवते भृशम् ॥
केत्वद्भुतं विजानीयाद्रविवारेण पूजयेत् ।
कुशान् मन्त्रैस्तु जुहुयाद्द दधिमधुघृतान्वितान् ॥
कृष्णा गावः सुवर्णं च वस्त्रं दासीं च दक्षिणाम् ।
सर्वे पापाः प्रणश्यन्ति ततः संपद्यते शुभम् ॥
ब्राह्मणा वेदसम्पन्ना ब्रह्मकर्मसमन्विताः ।
उपोष्य रात्रिमेकां तु कर्म कुर्य्युर्यथाविधि ॥

कठश्रुतिस्तु ।

या पूर्वादिशमन्वावर्त्तते सा इन्द्रमन्वावर्त्तते। यत्र कन्या प्रसूयते धेनुर्धेनुं पिबति अनड्वाहं धेनुर्वा पिबति वत्सतरीं गोः

पिबति वृषभावन्योन्यं पिबतो गौर्लोहितं दुह्यते अजा दुह्यते महिषी दुह्यते दुह्यमानाश्च प्रसूयन्ते गात्राणि चासां शुष्यन्ति यमसूजायते शस्यानि वेपन्ते शस्यान्यतीव रोहन्ति। कन्यकाः पशुमानुषा विकृतरूपा जायन्ते अन्योन्यं पुरुषाः संक्षोभं गच्छन्ति ध्वजाः पताकाः गच्छन्ति गजतुरगाः शीर्यन्ते विकृरूपा जायन्ते च। रात्रौ विकृताभ्रायामिन्द्रधनुर्दृश्यते। अमानुषा मानुषवद्वदन्ति देवकुलानि नर्दन्ति श्वेतकाका दृश्यन्ते इत्येतानीन्द्रदेवताकान्यद्भुतानि दृष्ट्वा महद्भयमुत्पद्यते।

इन्द्रस्थालीपाकं श्रपयित्वा—इन्द्राय स्वाहा। इन्द्र इदं शमय तु स्वाहा। शतक्रतवे स्वाहा।

आ तू न इन्द्र—*इति स्थालीपाकस्य हुत्वा सावित्र्या त्रिरुपरिष्टाद्येन जुहुयात्।

त्रातारमिन्द्रम्—†इति अनेन मन्त्रेण धेनुं सुवर्णं वस्त्रं रत्नं च दक्षिणां दद्यात् ततः संपद्यते शुभमिति।

या दक्षिणां दिशमन्वावर्त्तते सा यममन्वावर्त्तते यत्र वेश्मन्युलूकश्येनबलाकाकपोतक्रौञ्चगृध्राः पतन्ति अस्थीनि गृहीत्वा वायसा अन्ये पक्षिणो वा गृहं प्रविशन्ति नरशिरसि गृध्राः पतन्ति अन्ये वा काकश्येनादयः पतन्ति षड्भिर्मासैः संवत्सरेण वा ते नश्यन्ति। सर्पः प्रविशति स्त्री स्त्रियं हन्ति गोधा प्रविशति आरण्याः पशवो हर्म्ये प्रविशन्ति क्षोभन्ते वा। रथौ म्रियते वृषौ वा युग्ययुक्तौ गृहं प्रविशतश्चक्रमूर्ध्वमुद्भमति मुशलं वा ईतिजा व्यापदो भवन्ति कुले सततं कलिर्भवति बालका बहवो नश्यन्ति

* वाजसनेयिसंहितायाम् ३३ अ, ६५ क,।

† वाजसनेयिसंहितायाम् २० अ, ५० क,।

सिन्दूरवर्णसदृशी वृष्टिर्वाऽऽकाशात् पतति रुधिरवृष्टिरङ्गणे निपतति काञ्जिकमूर्ध्वमुद्गमति कम्पते वा विद्यान्मरणकृतं भयं भवति।

याम्यस्थालीपाकं श्रपयित्वा-यमाय स्वाहा। यम इदं शमयतु स्वाहा। वैवस्वताय स्वाहा।

यमेन दत्तं त्रित*-स्थालीपाकस्य द्वे हुत्वा सावित्र्या त्रिरुपरिष्टादाज्येन जुहुयात्। शमीसमिधामयुतं जुहुयात्।

असि यमो-इति मन्त्रेण चतुर्विधां दक्षिणां दद्याद्गां भूमिं हिरण्यं धान्यं च ततः संपद्यते शुभमिति।

या पश्चिमां दिशमन्वावर्त्तते सा वरुणमन्वावर्त्तते। मृदा लाङ्गलं भिद्यते लाङ्गलेषु वा मृदनुदको वा लोष्टकानिऽवाकारणमुदकशोषस्तथैवानुदकेषूदकं वापीकूपतडागानामपानीयं नदीकूपवापीपुष्करणोष्वकारणं घटा उत्तिष्ठन्ति अकाले पर्जन्यो वर्षतीति मण्डूका व्याहरन्ति कर्कटा वा गृहात् पतन्ति क्रौञ्चः पतति भूमौ मधुकराः पतन्ति गृहे वल्मीका जायन्ते उत्किरन्ति वा दधितैलक्षीरकुम्भाः स्रवन्ति दर्वी सीदति मन्थानी मथ्यमाना व्याहरति स्थूणा प्ररोहति रुधिरं प्रस्रवति स्थूणायां शाखा जायते हस्तिनी माद्यति हस्थिदन्ता भिद्यन्ते गावो भाद्रपदे प्रसूयन्ते हस्तिनी नगरे प्रसूयते वडवा गोदासी भार्या युगलं प्रसूयते वनस्पतयो भिद्यन्ते गोः शृङ्गाणि भिद्यन्ते इक्षवः पुष्पन्ति। अकाले माद्यन्ति सोमा अतिरज्यन्ते बालवृक्षाः पुष्पन्ति फलन्ति वा इत्येतानि वरुणदेवताकान्यद्भुतानि दृष्ट्वा प्रभुवधं वदेत्।

वारुणं चरुं कृत्वा-वरुणाय स्वाहा। वरुण इदं शमतु स्वाहा। अद्भ्यः स्वाहा††।

---

* वाजसनेयिसंहितायाम् २९ अ. १३ क.।

† वासजनेयिसंहितायाम् २९ अ. १४ क.। †† अप्पतये स्वाहा-इति क्वचित् पा.।

उदुत्तमं वरुणपाशम–*इति द्वे हुत्वा सावित्र्या त्रिरुपरिष्टादाज्येन जुहुयात्। न्यग्रोधसमिधामयुतं जुहुयात्।

वरुणस्योत्तम्भनमसि–†इति मन्त्रेण त्रिप्रकारां दक्षिणां दद्यात्। भूमिं हिरण्यं धान्यं चेति ततः संपद्यते शुभमिति।

या उत्तरां दिशमन्वावर्त्तते सा सोममन्वावर्त्तते। यत्रौषधयोऽपकृष्टसलिलाः पच्यन्ते व्रीहयः स्विन्नाः प्ररोहन्ति तण्डुलाः स्फुटन्ति सुवर्णमन्यवर्णं भवति असलिलाः प्रपाः पूर्यन्ते मृता मानवा दृश्यन्ते पद्मा युग्मा जायन्ते स्थले पद्मा जायन्ते नदीकूपवापीतडागास्तरङ्गवन्त उद्गिरन्ति शुष्यन्ति वा नद्यः प्रतिकूला वहन्ति रुधिरं प्रस्रवन्ति अन्यवर्णा वा भवन्ति शिलाः प्रवहन्ति गिरयः शीर्यन्ते धान्यकुशूलान्युदकं वहन्ति गृहेषु छत्रिका जायन्ते मानाः कन्दाश्च पुष्पन्ति इत्येतानि सोमदेवताकान्यद्भुतानि दृष्ट्वा देशोपद्रवमादिशेत्।

सौम्यस्थालीपाकं श्रपयित्वा–सोमाय स्वाहा। सोम इदं शमयतु स्वाहा। चन्द्रमसे स्वाहा।

आप्यायस्व समेतु ते‡–इति द्वे हुत्वा सावित्र्या त्रिरुपरिष्टादाज्येन जुहोति। पलाशसमिधामयुतं जुहुयात्।

एष वः कुरुो राजा§–इति मन्त्रेण हिरण्यं वासः शङ्खं धेनुं च दक्षिणां दद्यात्। ततः संपद्यते शुभमिति।

या पृथिवीमन्वावर्त्तते साऽग्निमन्वावर्त्तते। यत्र हिरण्यनाशो भवति। अङ्गारदाहो भवति भूमावग्निर्ज्वलति। दिशो दह्यन्ते कुटुम्बक्षयो भवति शालामण्डपदेवकुलानां दाहो भवति अनग्निर्ज्व-

* वाजसनेयिसंहितायाम् १२ अ, १२ क,। † वाजसनेयिसंहितायाम् ४ अ, १३ क,।

‡ वाजसनेयिसंहितायाम् १२ अ, ११२ क,।

§ वाजसनेयिसंहितातिरिक्तो मन्त्रोऽयमन्वेषणीय

लति अहतवासांसि दह्यन्ते शस्त्रं ज्वलति देवाः प्रहसन्ति प्रकम्पन्ते धूमायन्ते प्रक्रीडन्ते प्रज्वलन्ति रुधिरं प्रस्रवन्ति अन्ये वा अग्निप्रकारा दृश्यन्ते इत्येतान्यग्निदेवताकान्यद्भुतानि दृष्ट्वा परचक्रागमं विद्यात् ।

आग्नेयस्थालीपाकं श्रपयित्वा–अग्नये स्वाहा । अग्निरिदं शमयतु स्वाहा । भूताधिपतये स्वाहा ।

अग्निर्मूर्धा*–इति द्वे हुत्वा सावित्र्या त्रिरुपविष्टादाज्येन जुहुयात् । अपामार्गसमिधामयुतं जुहुयात् ।

वैश्वानरो†–इति मन्त्रेण दक्षिणां गां सुवर्णं धान्यं रजतं दद्यात् ततः संपद्यते शुभमिति ।

या अन्तरीक्षमन्वावर्त्तते सा वायुमन्वावर्त्तते । यत्र वेश्मनि प्रासादे शालायां वृक्षे नगरे ग्राममध्येऽपि वाऽशनिः पतति । निर्घातः पतति भूमिकम्पो भवत्यभीक्ष्णं तीव्रो वातो वहति दिग्दाहो भवति दक्षिणेतरं चक्षुः स्पन्दते स्त्रियो गावोऽतिप्रसूता अप्रसूता विपरीतप्रसवा वा भवन्ति अन्ये वा एवंप्रकारा दृश्यन्ते एतानि वायुदेवताकान्यद्भुतानि दृष्ट्वा स्थानत्यागं विनिर्दिशेत् ।

वायव्यस्थालीपाकं श्रपयित्वा–वायवे स्वाहा । वायुरिदं शमयतु स्वाहा ।

वातस्य जूतिं††–इति मन्त्रेण स्थालीपाकस्य द्वे हुत्वा सावित्र्या त्रिरुपविष्टादाज्येन जुहुयात् ।

सुमनसामयुतं जुहुयात् । वायुरग्रे गाः§–इति मन्त्रेण धान्यं सुवर्णं दक्षिणां दद्यात् ततः संपद्यते शुभमिति ।

---

* वाजसनेयिसंहितायाम् ३ अ, १२ क. ।

† वाजसनेयिसंहितायाम् १८ अ. ७२ क. ।

†† वाजसनेयिसंहितायाम् १३ अ. ४२ क. ।

§ वाजसनेयिसंहितायाम् २७ अ. ३१ क. ।

या दिवमन्वावर्त्तते सा सूर्यमन्वावर्त्तते। यत्र रुधिरास्थिशिरोबालमांसासृक्पांसुकर्दमपूयास्थूनां तु वृष्टयो भवन्ति। दिवोल्कापातः। अपर्वणि राहुदर्शनम्। आदित्ये छिद्रं दृश्यते। दिवा तारका दृश्यन्ते आदित्ये कबन्धो दृश्यते। अदित्ये केतुर्दृश्यते। अनभ्रा वृष्टिर्दृश्यते। नक्तमिन्द्रधनुश्चतुर्दिक्षु दृश्यते। अन्यानि बहूनि दिव्यान्युत्पातानि दृश्यन्ते। तेषु नरपतेर्वधमादिशेत्।

सौर्यं स्थालीपाकं श्रपयित्वा—सूर्याय स्वाहा। सूर्य इदं शमतु स्वाहा। परमात्मने स्वाहा। उदुत्यम्–चित्रम्* –इति द्वे हुत्वा सावित्र्या त्रिरुपरिष्टादाज्येन जुहुयात्।

आकृष्णेन–इति मन्त्रेण प्रभूताश्वकनकधान्यमहीदक्षिणादानैः संपद्यते शुभमिति।

अविज्ञाताद्भुतदर्शने पर्योघृतादिभिर्दोषशान्तये प्राजापत्यवैष्णवरौद्रस्थालीपाकं श्रपयित्वा– प्रजापतये स्वाहा।

विष्णोरराटमसि† एष ते रुद्र‡–इति यथासंख्यमहाव्याहृतिभिश्च सर्वेष्वद्भुतेषु जुहुयात्।

काण्डात् काण्डात् प्ररोहन्ती§–इति मन्त्रेण अनड्वाहं रजतं ताम्रं दक्षिणां दद्यात्। ततः संपद्यते शुभमिति।

दिव्यान्तरीक्षभौमानामद्भुतदर्शने दोषप्रशान्तये ग्रहशान्तिं प्रयोजयेत्। ततः संपद्यते शुभमिति।

शान्तिः षड्विंशब्राह्मणे¶।

अथातोऽद्भुतानां कर्मणां शान्तिं व्याख्यास्यामः। पलशानां समिधामष्टसहस्रेण जुहुयादैन्द्रयाम्यवरुणधनदाग्नेयवायव्यसौम्यवैष्णवेष्वष्टस्वादौ–इन्द्रायेन्दो मरुत्वते नाके सुपर्णमनुपर्यन्तं घृतवती

---

* वाजसनेयिसंहितायाम् ७ अ. ४१–४२ क.।

† वाजसनेयिसंहितायाम् ५ अ. २१ क.।

‡ वाजनेयिसंहितायाम् ३ अ. ५७ क.।

§ वाजसनेयिसंहितायाम् १३ अ. २० क.।

¶ अस्य मूलग्रन्थानुलब्धेर्यथातथ्यमेव रक्षितम्।

भुवनानामभिश्रियोर्वी'-अभित्य देवं सवितारमण्यो-अग्निदूतं वृणीमहे वातवा आवातभेषजं सोमं राजानं वरुणमिदं विष्णुर्विचक्रमे इत्येतानि सामान्यष्टशतं जपित्वा स्वस्ति वाचयित्वा स्वस्तिवाचनं हैषां भवति स्वस्त्ययनं ताक्ष्यमरिष्टनेमिरित्यपुवाजिनं देवजूतमायुर्विश्वायुः शतं जीव शरदो वर्धमान इत्येतैः सम्भाराणामुपस्थापनं कृत्वा स्वस्ति वाचयित्वा स्वस्ति हैषां भवति स्वस्ति हैषां भवति देवाश्च असुराश्चैषु लोकेषु स्पर्धन्ते देवाः प्रजापतिमुपाधानास्तेभ्य एतां दैवीं शान्तिं प्रयच्छत्येतच्छान्त्यैकया असुरानभ्यजनयँस्ततो देवा अभवन् परासुराभवत्यात्मना परस्य भ्रातृभ्यो भवति य एवं वेद ।

अथ पूर्वाह्ण एव प्रातराहुतिं हुत्वा दर्भान् वीरसान् सर्पिषा फलवतीमपामार्गं शिरीषमित्येतान्याहरेदाहारयेद्वा स्नातः प्रयतः शुचिः शुचिवासाः स्थण्डिलमुपलिप्य प्रोज्ज्वललक्षणमुपलिप्य आलिख्याद्भिरभ्युक्ष्याग्निमुपसमाधाय नित्यतनोदनकृशरयवागूरत्नपायसदधिक्षीरघृतपायसमिति घृतोत्तराः पृथक् पृथक् चरवः सर्वेषां वा पायसाः ।

स प्राचीं दिशमन्वावर्त्तते । अथ यदाऽस्य मणिमणिककुम्भानां दरणमनायासो राजकुलविवादो वा यानच्छत्रशय्यासनावसथध्वजगृहैकदेशप्रभञ्जनेषु गजवाजिमुख्या वा प्रम्रियन्ते इत्येवमादीनि तानीन्द्रदैवतानि तत्र प्रायश्चित्तानि भवन्ति ।

इन्द्रायेन्दो मरुत्वते-*इति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिर्जुहोति ।

इन्द्राय स्वाहा । शचीपतये स्वाहा । वज्रपाणये स्वाहा । ईश्वराय स्वाहा । सर्वपापप्रशमनाय स्वाहा-इति व्याहृतिभिर्हुत्वा साम गायेत् ।

---

* ऋग्वेदसंहितायाम् ७ अष्टके ३ अ, ६४ सू २२ ऋक् ।

स दक्षिणां दिशमन्वावर्त्तते। अथ यदाऽस्य प्रजायां पशुषु शरीरेष्वरिष्टानि प्रादुर्भवन्ति व्याधयो या अनेकविधयः। अतिस्वप्नातिभोजनाभोजनालस्यव्रणाजीर्णप्रमुखान्येवमादीनि तान्येतानि सर्वाणि यमदैवतान्यद्भुतानि तत्र प्रायश्चित्तानि भवन्ति।

नाके सुपर्णम्-*इति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिर्जुहोति।

यमाय स्वाहा। प्रेताधिपतये स्वाहा। दण्डपाणये स्वाहा। ईश्वराय स्वाहा। सर्वपापप्रशमनाय स्वाहा-इत्याज्याहुतिभिर्हुत्वा साम गायेत्।

स प्रतीचीं दिशमन्वावर्त्तते। अथ यदाऽस्य क्षेत्रगृहसंस्थितेषु धान्येष्वीतयः प्रादुर्भवन्ति तथा चानेकविधा वा आखुपतङ्गपिपीलिकाशुकशलभकाका इत्येवमादीन्येतानि सर्वाणि वरुणदैवत्यान्यद्भुतानि तत्र प्रायश्चित्तानि भवन्ति।

घृतवती-†इति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिर्जुहोति।

वरुणाय स्वाहा। अपां पतये स्वाहा। पाशपाणये स्वाहा। ईश्वराय स्वाहा। सर्वपापप्रशमनाय स्वाहा-इति हुत्वाऽथ साम गायेत्।

स उदीचीं दिशमन्वावर्त्तते। अथ यदाऽस्य कनकरजतवरवज्रवैडूर्यमुक्तामणिवियोगो भवत्यतिक्रूराणीव मित्राणि विरज्यन्ते रिष्टानि वयांसि गृहमध्यासते वल्मीकानि भौमानि जायन्ते छत्राकं चोपजायते मधूनि वा नीलीयन्त इत्येवमादीनि सर्वाणि वैश्रवणदैवत्यान्यद्भुतानि तत्र प्रायश्चित्तानि भवन्ति।

अभि त्यं देवम्-††इति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिर्जुहोति।

---

* ऋग्वेदसंहितायाम् ७ अष्टके ४ अ. ८६ सू. ११ ऋक्।

† वाजसनेयिसंहितायाम् ३४ अ. ४५ क.।

†† वाजसनेयिसंहितायाम् ४ अ. २५ क.।

वैश्रवणाय स्वाहा । यक्षाधिपतये स्वाहा । हिरण्यपाणये स्वाहा । ईश्वराय स्वाहा । सर्वपापप्रशमनाय स्वाहा । इति व्याहृतिभिर्हुत्वाऽथ साम गायेत् ।

स पृथिवीमन्वावर्त्तते । अथ यदाऽस्य पृथिवी रटति स्फुटति कम्पति ज्वलति तुदति धूमायत्यकस्मात् सलिलमुद्गिरति प्लवते मज्जति भग्नमुत्प्लवत्यकाले च पुष्पफलमभिनिर्वर्त्तयत्यश्वतरीषु गर्दभा जायन्ते हस्तिनी माद्यति भूकम्पा जायन्ते यत्र तत्र राजा विनश्यति गौर्गृहमारोहते ग्रामं महिषीत्येवमादीनि सर्वाण्यग्निदैवतान्यद्भुतानि तत्र प्रायश्चित्तानि भवन्ति ।

अग्निं दूतं वृणीमहे-*इति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिर्जुहोति ।

अग्नये स्वाहा । हविःपतये स्वाहा । अर्चिःप्राणाय स्वाहा । ईश्वराय स्वाहा । सर्वपापप्रशमनाय स्वाहा इति व्याहृतिभिश्च हुत्वाऽथ साम गायेत् । चतुर्विधां दक्षिणां दद्याद् गां भूमिं हिरण्यं धान्यं च ततः संपद्यते शुभमिति ।

सोऽन्तरीक्षमन्वावर्त्तते । अथ यदाऽस्य निर्वाते नभस्यनभ्रेऽनात्मरूपाणि दृश्यन्ते खरकरभकवन्धकङ्कपोतकाकगृध्रश्येनभासवायसगोमायुसंस्थान्युपरि पांसुमांसपेस्यस्थिरुधिरवर्षाणि प्रवर्त्तन्ते काकमिथुनानि दृश्यन्ते रात्रौ मणिधनुर्दृश्यते शशका ग्रामं प्रविशन्ति वृक्षाः स्रवन्ति रुधिराण्याकाशे राजकुलं वसतीत्येवमादीनि तान्येतानि सर्वाणि वायुदैवतान्यद्भुतानि तत्र प्रायश्चित्तानि भवन्ति ।

वात आवातु भेषजम्-†इति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिर्जुहोति ।

वायवे स्वाहा । भूताधिपतये स्वाहा । शस्त्रपाणये स्वाहा । ईश्वराय स्वाहा । सर्वपापप्रशमनाय स्वाहा । एभिर्हुत्वाऽथ साम गायेत् ।

---

* ऋग्वेदसंहितायाम् १ अष्टके ४ अ. १२ सू. १ ऋक् ।

† ऋग्यजुःसंहितयोर्नोपलभ्यतेऽन्यत्रान्वेषणीयोऽयं मन्त्रः ।

स दिवमन्वावर्त्तते। अथ यदाऽस्य तारावर्षाणि चोल्काः पतन्ति धूमायन्ते दिशो दह्यन्ते केतव उत्तिष्ठन्ति गवां शृङ्गेषु धूमा जायन्ते गवां स्तनेषु रुधिरं स्रवत्यत्यर्थं हिमं निपततीत्येवमादीनि सर्वाणि सोमदैवतान्यद्भुतानि तत्र प्रायश्चित्तानि भवन्ति।

सोमं राजानं वरुणम्-*इति स्थालीपाकं हुत्वा पञ्चभिराज्य हुतिभिर्जुहोति।

सोमाय स्वाहा। नक्षत्रपतये स्वाहा। शीतपाणये स्वाहा। ईश्वराय स्वाहा। सर्वपापप्रशमनाय स्वाहा। इति व्याहृतिभिश्च हुत्वा साम गायेत्।

स परां दिवमन्वावर्त्तते। अथ यदाऽस्यायुक्तानि यानानि भज्यन्ते देवताप्रतिमा हसन्ति रुदन्ति गायन्ति नृत्यन्ति स्फुटन्ति स्विद्यन्ति उत्पतन्ति उन्मीलन्ति प्रतीपं प्रयान्ति नद्यः कबन्ध आदित्ये दृश्यते विजने च परिदृश्यते केतुपताकाच्छत्रचामरवज्रविषाणानि प्रज्वलन्त्यश्वानां बालधिष्वङ्गाराः क्षरन्ति निहतानि मर्माणि अतिक्रामन्ते इत्येवमादीनि तान्येतानि सर्वाणि विष्णुदैवत्यान्यद्भुतानि तत्र प्रायश्चित्तानि भवन्ति।

इदं विष्णुर्विचक्रमे-†इति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिर्जुहोति।

विष्णवे स्वाहा। सर्वभूताधिपतये स्वाहा। चक्रपाणये स्वाहा। ईश्वराय स्वाहा। सर्वपापप्रशमनाय स्वाहा। इति व्याहृतिभिश्च हुत्वाऽथ साम गायेत्।

सामविधानं ब्राह्मणे।

अद्भुते य एवं जुहुयात् 'वात आवातु भेषजम्'-इत्यनेन शाम्यति इह कृष्णाँस्तिलानग्नौ जुहुयात्। प्रथमं देवो अग्निः ‡इत्येतेनैव

* ऋग्यजुःसंहितयोर्नोपलभ्यतेऽन्यत्रान्वेषणीयोऽयं मन्त्रः।

† वाजसनेयिसंहितायाम् ३३ अ. ४५ क.।

‡ वाजसनेयिसंहितायाम् २८ अ. २२ क.।

कृतानि हिंसन्ति तान्येवं प्रतिगच्छन्ति व्रीहियवानग्नौ जुहुयात् । पञ्चनिधनेन वामदेव्येन नैनं कृतानि हिंसन्ति तान्येव प्रतिगच्छन्ति ताम्रत्रपुरजतहेममयीं मुद्रां कारयित्वा 'द्वाते जातमंहसः' *इति चतुर्थे मासि जुहुयात् । सहस्रकृत्वः शतवारं वा तां मुद्रां दक्षिणपाणिना धारयेत् नैनं कृतानि हिंसन्ति तान्येव प्रतिगच्छन्ति ।

इति महाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-ऽद्भुतसागरे मिश्रकाद्भुतावर्त्तः ।

---

## अथाद्भुतशान्त्यद्भुतावर्त्तः ।

मत्स्यपुराणे ।

"मत्स्य उवाच ।

अथातः संप्रवक्ष्यामि त्रिविधामद्भुतादिषु ।
विशेषेण तु भौमेषु शान्तिं कार्याऽमृता भवेत् ॥
अभया चान्तरिक्षेषु सौम्या दिव्येषु पार्थिव ।
विजिगीषुः परं राजन् भूमिकामश्च यो भवेत् ॥
आरोग्यधनकामश्च सोऽमृतां कारयेत् सदा ।
विजीगीषुः परानेवमभियुक्तस्तथा परैः ॥
तथाऽभिचारशङ्कायां शत्रूणामपि घातने ।
भये महति संप्राप्ते अभया शान्तिरिष्यते ॥
राजयक्ष्माभिभूतस्य क्षतक्षीणस्य चाप्यथ ।
भूकम्पे तु समुत्पन्ने प्राप्ते चान्नक्षये तथा ॥
सौम्या प्रशस्यते शान्तिर्यज्ञे कामस्य चाप्यथ ।

---

* नोपलभ्यते कुत्र चिदन्यत्रायं मन्त्रोऽन्वेषणीयः ।

अतिवृष्ट्यामनावृष्ट्यां शलभेषु भयेषु च ॥
प्रमत्तेषु च चौरेषु वैष्णवी शान्तिरिष्यते ।
पशूनां मरणे प्राप्ते प्रजानामपि दारुणे ॥
भूतेषु दृश्यमानेषु रौद्री शान्तिस्तथेष्यते ।
वेदनाशे समुत्पन्ने जने जाते च नास्तिके ॥
अपूज्यपूजने जाते ब्राह्मी शान्तिस्तथेष्यते ।
भविष्यत्यभिषेके च परचक्रभयेषु च ॥
स्वराष्ट्रभेदेऽरिवधे ऐन्द्री शान्तिस्तथेष्यते ।
ऽत्यर्हातिरिक्ते पवने रूक्षे सर्वदिगुत्थिते ॥
वैकृते वातजे वाऽथ वायवी शान्तिरिष्यते ।
अनावृष्टिभये जाते तथा विकृतवर्षणे ॥
जलाशयविकारे च वारुणी शान्तिरिष्यते ।
अभिशापभये प्राप्ते भार्गवी च तथा द्विज ॥
जाते प्रसववैकृत्ये प्राजापत्या महीभुजा ।
उपस्कराणां वैकृत्ये त्वाष्ट्री पार्थिवनन्दन ॥
बालानां शान्तिकामस्य कौमारी च तथा द्विज ।
आग्नेयीं कारयेच्छान्तिं संप्राप्ते चाग्निवैकृते ॥
कार्या मारुद्गणी शान्तिः कुशलेन महीक्षिता ।
आज्ञाभङ्गे तु संप्राप्ते जाते भृत्यादिसंक्षये ॥
अश्वानां शान्तिकामस्य तद्विकारे समुत्थिते ।
अश्वानां कामयानस्य गान्धर्वी शान्तिरिष्यते ॥
गजानां शान्तिकामस्य तद्विकारे समुत्थिते ।
गजानां कामयानस्य शान्तिराङ्गिरसी भवेत् ॥

पिशाचादिभये प्राप्ते शान्तिस्तु नैर्ऋती स्मृता।
अपमृत्युभये जाते दुःस्वप्ने च तथा द्विज॥
याम्यां तु कारयेच्छान्तिं प्राप्ते तु मरके तथा।
धननाशे च राजेन्द्र कौवेरी शान्तिरिष्यते॥
वृक्षाणां च तथाऽर्थानां वैकृत्ये समुपस्थिते।
भूमिकामस्तथा शान्तिं पार्थिवीं च प्रयोजयेत्॥
प्रथमे दिनयामे च रात्रौ च मनुजेश्वर।
हस्ते स्वातौ च चित्रायामादित्ये चाश्विने तथा॥
आर्यम्णे सौम्य जातेषु वायव्यां त्वद्भुतेषु च।
द्वितीये दिनयामे च रात्रौ च रविनन्दन॥
पुष्याग्नेयविशाखासु पित्र्याजभरणीषु च।
उत्पाता ये तथा भाग्ये चाग्निपातेषु कारयेत्॥
तृतीये दिनयामे च रात्रौ च रविनन्दन।
रोहिण्यां वैष्णवे ब्राह्मे वासवे वैश्वदेवते॥
ज्येष्ठायां च तथा मैत्र्ये ये भवन्त्यद्भुताः क्व चित्।
चतुर्थे दिनयामे च रात्रौ वा रविनन्दन॥
सार्पे पौष्णे तथाऽर्द्रायामाहिर्बुध्न्ये च दारुणे।
मूले वरुणदैवत्ये ये भवन्त्यद्भुतास्तथा॥
वारुणी तेषु कर्त्तव्या महाशान्तिर्महोक्षिता।
भिन्नमण्डल*वेलासु ये भवन्त्यद्भुताः क्व चित्॥
तेषु शान्तिद्वयं कार्यं निमित्ते सति नान्यथा।

* भिन्नमण्डल-इति मुद्रितमत्स्यपुराणधृतः पाठः।

निर्निमित्तीकृता शान्तिर्निर्निमित्तोपजायते"* ॥

मयूरचित्रे ।

ततः शान्तिः प्रथमकल्पा शान्तिः साधारणी तथा ।
इदानीं वक्ष्यते सैव लोकानां हितकाम्यया ॥
व्याध्यवृष्टिरिपुप्राप्तिदुर्भिक्षमरकादिषु ।
राजपीडासु† चौर्येषु शान्तिस्तु प्रथमोदिता ॥
नगरग्रामदेशेषु सोपसर्गेषु चैव हि ।
गोऽश्वनागमनुष्येषु धनधान्यगृहेषु च ॥
औदुम्बरीणां समिधं जुहुयाच्च शतं शतम् ।
मधुक्षीरघृताक्तानां मन्त्रैर्मन्त्रगणाँस्तथा ॥
हुत्वा शतसहस्रं तु ततः शान्तिः कृता भवेत् ।

मत्स्यपुराणे ।

"बाणप्रहारा न भवन्ति यद्वद्राजन् नृणां संहननैर्युतानाम् ।
दैवोपघाता न भवन्ति तद्वद्धर्मात्मनां शान्तिपरायणानाम्"†† ॥

विष्णुधर्मोत्तरे एतानि वचनानि किञ्चिद्विकृतानि ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरेऽद्भुतशान्त्यद्भुतावर्त्तः ।

---

अथ द्योवर्षनिमित्ताद्भुतावर्त्तः ।

भार्गवीये ।

मत्स्यरूपे तु दृश्येते यदा चैव दिवाकरे ।
स्फुरदिन्द्रस्तथाऽदित्यो निर्दहन्निव मेदिनीम् ॥

---

* २२८ अ, २-२८ श्लो. । अत्र बहुत्र पाठभेदाः श्लोकाश्चापि कुत्रचित् त्रुटिता उपलभ्यन्ते । † 'चाप्येका शान्तिः सुरगुरुदिता'-इति च, पु, पा, ।

†† २२८ अ, २९ श्लो, ।

एतद्दृष्ट्वा महद्रूपमादित्ये समुपस्थितम् ।
विस्पष्टज्योतिषं दृष्ट्वा सद्योवर्षस्य लक्षणम् ॥

पराशरः ।

'सद्योवर्षलिङ्गानि भवन्ति तद्यथा लवणं प्रक्लिद्यते आदित्यस्तीव्रतरं तपति अण्डानि पिपीलिकाः संचारयन्ति शस्त्रादर्शतलेष्वकस्मान्मला लिप्यन्ति प्रशान्तमेव मारुते नभस्युदयन्तमविच्छिन्नमूलो महामेघः सूर्यमावृणोति । नीलश्वेताग्रैर्द्वित्रिचतुष्पञ्चमण्डलाद्यैः परिवेषैौ चन्द्रार्कौ परिविष्येते । द्व्यहमेकमण्डलेन सचन्द्रग्रहनक्षत्रनभसः प्रत्यन्तपरिवेषणम् । अप्सु वैरस्यं शीतोष्णता च प्रादुर्भवति । उष्ट्राः स्वेदसम्भिन्नं मूत्रपुरीषमुत्सृजन्ति । गावश्च घोरमुच्चैर्नदन्त्यश्चरणानास्फोटयन्ति । अधोमुखांशुर्दिवाऽऽदित्यो लक्ष्यते । मेघार्करश्मिप्रतिसूर्यकाश्चास्योत्तरतः सन्ध्ययोः प्रादुर्भवन्ति । प्रतिमुखं चास्योल्काः स्निग्धा नीला नीचैः प्रपतन्त्यरुणा दिक्चारिणश्च शकुनयः पांशुष्वप्सु वा स्नानं कुर्वन्ति । गोमायुश्चोष्णं पांशुं नीचैरुद्वहति । सशीकराश्च शीतवाताः परिपतन्ति । मत्स्यैरावतेन्द्रधनूंषि प्रत्यक् पूर्वाह्णे द्विगुणानि त्रिगुणानि चोत्पतन्ति । सिकतापांशुकूटवल्मीकाग्राण्यजैण्डककीटपिपीलिकाः समारोहन्ति । क्षीरवृक्षाणां च स्नेहा भवन्ति । श्वश‍ृगाललोमशोलूकमार्जाराश्चोच्चैर्विनदन्ति । रवोत्तराश्च मृगाः । सूर्यश्चापसव्यं गच्छति । एतानि वर्षनिमित्तानि वारुणसार्पमाहेन्द्रेषु वार्षिकेषु नक्षत्रेषु तथा मासपक्षर्त्त्वयनदिवससन्धिष्वष्टम्यां ग्रहेष्वमर्दितेषु वर्षासु वाऽप्यवश्यं फलप्रदानि भवन्ति । तत् संवत्सरमत्सरास्तु यदभ्रचन्द्रग्रहनक्षत्रमृगपक्षिणां वर्षनिमित्तं तन्मासान्तरान्महाभयं जनयतीति गुपितं सुतरामपि चात्रोदाहरन्ति ।

बलवत्सु महद्वर्षमल्पेष्वल्पाम्बुशीकरम् ।
मध्येषु मध्यमं ब्रूयान्निमित्तेषु निमित्तवत् ॥
उल्कानिर्घातभूकम्पपांसुवर्षाणि केतवः ।
अपसव्या ग्रहाश्चैते नित्यं वर्षासु वर्षदाः ॥
प्रतिशुक्रशक्रधनुर्दण्डकाः परिवेषणम् ।
तथैव वातमत्स्याश्च स्निग्धा ये चार्करश्मयः ॥
विद्युतोऽभ्रविकाराश्च वाता ये च प्रदक्षिणाः ।
सन्ध्यासु यदि दृश्यन्ते सद्योवर्षस्य लक्षणम् ॥

वटकणिकायाम् ।

पृच्छाकाले शान्ता वारुणदिक्स्था विहङ्गा वा ।
दर्पणलोहकलङ्को लवणस्वेदोऽतितीक्ष्णकिरणोऽर्कः ॥
पोप्लूयन्ते मत्स्या दिश्यैशान्यां तडिच्च दिवा ।
उत्कर्णपुच्छवदना गावस्तापोऽम्भसां पवननाशम् ॥
अञ्जनपुञ्जश्यामा गिरयो धूमावृता* यदि वा ।
जलपांशुस्नानं वा विहगानां मैथुनं भुजङ्गानाम् ॥
वृक्षारोहणमथ वा पिपीलिकाण्डोपसंक्रान्तिः ।
कृकवाकुशुककपोतकलविङ्कविलोचनो यदाऽर्केन्द्वोः ॥
स्निग्धः परिवेषो वा वियदमलं वर्षणनिमित्तम् ।
मधुसदृशः शीतांशुः प्रतिचन्द्रः शीतमारुतः पूर्वः ॥
ऊर्ध्वाङ्कुराश्च वल्ल्यः सद्योवर्षाय कीर्त्यन्ते ।
स्निग्धाः समसितरेखा यथाऽभ्रवृन्दानि कल्पितान्येव ॥
यच्छन्त्यपो मयूखा यदि चेन्दोर्वा रवेर्दीर्घाः ।

* 'बाष्पावृता' इति अ, पु, पा, ।

बृहत्संहितायाम् ।

उदयशिखरिसंस्थो दुर्निरीक्ष्योऽथ दीप्त्या-
ऽद्भुतकनकनिकाशः स्निग्धवैडूर्यकान्तिः ।
तदहनि कुरुतेऽम्भस्तोयकाले विवस्वान्
प्रतपति यदि चोच्चैः खं गतोऽतीव तीक्ष्णम् ॥

तथा ।

विगतघने वा वियति विवस्वानमृदुमयूखः सलिलकृदेव ।
सर इव फुल्लं निशि कुमुदाढ्यं खमुडुविशुद्धं यदि च सुवृष्ट्यै ॥

विरसमुदकं गोमूत्राभं वियद्विमला दिशो
लवणविकृतिः काकाण्डाभं यदा च भवेन्नभः ।
पवनविगमः पोप्लूयन्ते झषाः स्थलगामिनो
रसनमसकृन्मण्डूकानां जलागमहेतवः ॥

मार्जारा भृशमवनिं नखैर्लिखन्तो
लोहानां मलनिचयः सविस्रगन्धः ।
रथ्यायां शिशुरचिताश्च सेतुबन्धाः
संप्राप्तं जलमचिरान्निवेदयन्ति ॥

गिरयोऽञ्जनचूर्णसन्निभा यदि वा बाष्पनिरुद्धकन्दराः ।
कृकवाकुविलोचनोपमाः परिवेषाः शशिनश्च वृष्टिदाः ॥

विनोपघातेन पिपीलिकानामण्डोपसंक्रान्तिरहिव्यवायः ।
द्रुमाधिरोहश्च भुजङ्गमानां वृष्टेर्निमित्तानि गवां प्लुतं च ॥

"भेकाः शिरांसि दधति स्फुटपुण्डरीक-
मालाप्रभान्यविरलं स्फुटमुद्गिरन्ति ।
तेभ्योऽम्भसां भुवि पतन्ति मृणालजाल-
नीहारहारहरहाससिताः प्रवाहाः ॥

कालीकपोलतलतालफलालिताल-
वेलातमालदलकज्जलतालभासाः ।
ये नीरदाः करिकराभरुचो विलम्बात् ते
तत्क्षणात् क्षितितले कमलं क्षरन्ति'' ॥

श्लोकद्वयमिदमुत्पलेन व्याख्यातम्* ।

तरुशिखरोपगताः कृकलासा गगनतलस्थितदृष्टिनिपाताः ।
यदि च गवां रविवीक्षणमूर्ध्वं निपतति वारि तदा न चिरेण ॥
नेच्छन्ति विनिर्गमं गृहाद्धुन्वन्ति श्रवणान् खुरानपि ।
पशवः पशुवच्च कुक्कुरा यद्यम्भः पततीति निर्दिशेत् ॥

यदा स्थिता गृहपटलेषु कुक्कुरा
रुवन्ति वा यदि विततं वियन्मुखाः ।
दिवा तडिद्यदि च पिनाकिदिग्भवा-
स्तदा मही भवति समाऽतिवारिणा ॥
शुककपोतविलोचनसन्निभो
मधुनिभोऽथ यदा हिमदीधितिः ।
प्रतिशशी च यदा दिवि राजते
पतति वारि तदा न चिरेण च ॥

स्तनितं निशि विद्युतो दिवा रुधिरनिभा यदि दण्डवत् स्थिताः ।
पवनः पुरतश्च शीतलो यदि सलिलस्य तदाऽऽगमो भवेत् ॥
वल्लीनां गगनतलोन्मुखाः प्रवालाः स्नायन्ते यदि जलपांशुभिर्विहङ्गाः ।
सेवन्ते यदि च सरीसृपास्तृणाग्राण्यासन्नो भवति तदा जलस्य पातः ॥
सितसितान्तघनावरणं रवेर्भवति वृष्टिकरं यदि सव्यतः ।
यदि च वारणगुल्मनिभैर्घनैर्दिवसभर्त्तुरदीपितदिग्भवैः ॥

* इदम् अ. पुस्तके नोपलभ्यते ।

मयूरशुकचाषचातकसमानवर्णा यदा
जपाकुसुमपङ्कजद्युतिमुषश्च सन्ध्याघनाः ।
जलोर्मिनगनक्रकच्छपवराहमीनोपमाः
प्रभूतपुटसंचया न तु चिरेण यच्छन्त्यपः ॥

पर्यन्तेषु सुधाशशाङ्कधवला मध्येऽञ्जनालित्विषः
स्निग्धा नैकपुटाः क्षरज्जलकणाः सोपानविच्छेदिनः ।
माहेन्द्रीप्रभवाः प्रयान्त्यपरतः प्राक् चाम्बुपाशोद्भवा
एते वारिमुचस्त्यजन्ति न चिरादम्भः प्रभूतं भुवि ॥

तथा च वटकणिकायामप्येतौ श्लोकौ ।

शक्रचापपरिघप्रतिसूर्या रोहितोऽथ तडितः परिवेषः ।
उद्गमास्तसमये यदि भानोरादिशेत् प्रचुरमम्बु तदाऽऽशु ॥

यदि तित्तिरपत्रनिभं गगनं
मुदिताः प्रवदन्ति च पक्षिगणाः ।
उदयास्तमये सवितुर्द्युनिशं
त्वचिरेण घना विसृजन्ति जलम् ॥

श्लोकोऽयमुत्पलेन व्याख्यातः ।

यद्यमोघकिरणाः सहस्रगोरस्तभूधरकरा इवोच्छ्रिताः ।
भूसमं च रसते यदाऽम्बुदस्तन्महद्भवति वृष्टिलक्षणम् ॥

प्रावृषि शीतकरो भृगुपुत्रात् सप्तमराशिगतः शुभदृष्टः ।
सूर्यसुतान्नवपञ्चमगो वा सप्तमगश्च जलागमनाय ॥

प्रायो ग्रहाणामुदयास्तकाले समागमे मण्डलसंक्रमे च ।
पक्षक्षये तीक्ष्णकरायनान्ते वृष्टिर्गतेऽर्के नियमेन चार्द्राम् ॥

समागमे पतति जलं ज्ञशुक्रयोर्ज्ञजीवयोर्गुरुसितयोश्च सङ्गमे ।

अग्रतः पृष्ठतो वाऽपि ग्रहाः सूर्यावलम्बिनः ।
यदा तदा प्रकुर्वन्ति महीमेकार्णवामिव ॥

मयूरचित्रे ।

पश्चिमे च दिशो भागे वैदूर्यहरितोदयम् ।
विद्युच्चैव भवेत् तत्र वायुर्वाति स एव च ॥
सप्तरात्रं महावृष्टिमादिशेद्दैवचिन्तकः ।

अकृतवृष्टीनां त्वेषां फलं यथाशास्त्रमूहनीयम् ।

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे सद्योवर्षनिमित्ताद्भुतावर्त्तः ।

---

अथाविरुद्धाद्भुतावर्त्तः ।

---

वटकणिकायाम् ।

वृष्टिविकारोऽपांशुस्तोयविकारो हि तारकाव्यक्तिः ।
धूम्रा दिशोऽनलश्चेन्द्वयदाता माधवाद्येषु ॥

पराशरेणापि ।

ऋतुस्वभावजातानामविरुद्धमात्रमुक्तम् । तद्यथा । पादपरसाभिनिःस्पन्दनमभीक्ष्णशो व्याहरणं मण्डलानां वाराभि-नादो मृगाणां जनपदेषु परुषा गिरः पक्षिणामग्निप्रभामान्द्यमिति-स्वभावलिङ्गानां भूतानां स्याद्वैकृतम् । तदेवान्योन्यदृश्येषु यथोक्तं भयलक्षणं बार्हस्पत्यादिषु ऋतुस्वभावजातानां शुभावहत्वमुक्तम् । तद्यथा । ऋषभाः परुषवाचो वायुसम्भवो दिशां प्रधूमनं चैत्यपादपानां सन्ध्ययो रक्ततेति । वर्षासु विविधरूपवर्णाभेन्द्रचापदण्डपरिघप-रिवेषप्रतिसूर्यरश्म्युल्कानिर्घातदिग्दाहपतगगन्धर्वनगरप्रादुर्भाव-सम्भवश्चापि दंशमशककीटविकृतजलचराणामेकशिखिभुजङ्गमा-

भिदर्शनं च निशि शक्रचापानामपां गाधागाधविपर्ययः प्रतिस्रोतोऽभिगमनमचलशिखरागद्रुढाश्मपतनं क्षितेर्विदरणमनुप्तबीजाङ्कुरारोहणमुज्जलं कूपोदकानां शरदि सर्वताराणां दर्शनं वर्षनिग्रहः । शिशिरहेमन्तयोस्तमोनीहाररजोभिराशावरणं न प्रसादो नभसः सरितामुत्पथगमनमुपलवर्षणं विकृतदर्शनव्याहाराः सङ्घशो दर्शनमरण्यमृगाणां जनपदेषु परुषा गिरः पक्षिणामग्निप्रभामान्द्यमिति स्वभावलिङ्गानां शुभावहत्वमुक्तम् ।

तथा बार्हस्पत्यमत्स्यपुराणविष्णुधर्मोत्तरवराहसंहितासु ।

"ऋतुःस्वभावाद्राजेन्द्र भवन्त्यद्भुतसंज्ञकाः ।
शुभावहास्ते विज्ञेयास्ताँश्च मे गदतः शृणु ॥
वज्राशनिमहीकम्पसन्ध्यानिर्घातनिस्वनाः ।
परिवेषरजोधूमरक्तार्कास्तमनोदयाः ॥
द्रुमोद्भेदकरस्नेहमधुपुष्पफलोद्गमाः ।
गोपक्षिमृगवृद्धिश्च शिवाय मधुमाधवे ॥
तारोल्कापातकलुषं कपिलार्केन्दुमण्डलम् ।
अनग्निज्वलनं स्फोटधूम्ररेखानिलाहतम्* ॥
रक्तपद्मारुणा सन्ध्या नभः क्षुब्धार्णवोपमम् ।
सरितां चाम्बुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत् ॥
शक्रायुधपरीवेषविद्युदुल्काधिरोहणम् ।
कम्पोद्वर्त्तनवैकृत्यरसनं दरणं क्षितेः ॥
नद्योदपानसरितां वृद्ध्यूर्ध्वतरणप्लवाः ।
शीर्णत्वं चाद्रिगेहानां† वर्षासु शुभमिष्यते ॥

* कृष्णश्वेतं तथा पीतं धूसरध्वान्तलोहिनम् । इति मुद्रितमत्स्यपुराणे पा. ।
† 'शृङ्गिणां वराहाणाम्'-इति मुद्रितमत्स्यपुराणे पा. ।

दिव्यस्त्रीभूतगन्धर्वविमानाद्भुतदर्शनम् ।
ग्रहनक्षत्रताराणां दर्शनं च दिवाऽम्बरे ॥
गीतवादित्रनिर्घोषो वनपर्वतसानुषु ।
शस्यवृद्धी रसोत्पत्तिः शरत्काले शुभाः स्मृताः ॥
शीतानिलतुषारत्वं नर्दनं मृगपक्षिणाम् ।
रक्षोयक्षादिसत्त्वानां दर्शनं वागमानुषी ॥
दिशो धूमान्धकाराश्च सनभोवनपर्वताः ।
उच्चैः सूर्योदयास्तौ च हेमन्ते शोभनाः स्मृताः ॥
हिमपातानिलोत्पातविरूपाद्भुतदर्शनम् ।
कृष्णाञ्जनाभमाकाशं तारोल्कापातपिञ्जरम् ॥
चित्रगर्भोद्भवः स्त्रीषु गोजाश्वमृगपक्षिषु ।
पत्राङ्कुरलतानां च विकाराः शिशिरे शुभाः''* ॥

मयूरचित्रे ।

परिवेषः शक्रधनुर्भूकम्पः प्रतिसूर्यकः ।
वर्षासु वर्षदा ज्ञेया अन्यत्रोरुभयावहाः ॥

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरेऽविरुद्धाद्भुतावर्त्तः ।

## अथ पाकसमयाद्भुतावर्त्तः ।

तत्र पराशरः ।

तत्रोत्पातफलं दिव्यं पूर्णे वर्षे विपच्यते ।
आन्तरिक्षं तथा भौमं मासैः षड्भिस्तु भर्त्तृषु ॥
निर्घातस्तु त्रिभिर्मासैः गन्धर्वनगराणि च ।

* मत्स्यपुराणे २२९ अ. १३-२५ श्लो. ।

अग्निजाः सप्तरात्रेण मासेनोल्का विपच्यते ॥
पुरचैत्यादिभङ्गेषु पुरःसंक्रमणेषु च ।
नरेन्द्रध्वजभङ्गे च फलं मासाद्विपच्यते ॥
पुरोत्सवादिवासानामकालकरणेषु च ।
शान्तिस्वस्त्ययनानां च पाकः षाण्मासिको भवेत् ॥
अरिष्टः पच्यते षट्सु मासेषु कलहस्त्रिषु ।
अतिहर्षोऽतिशोकश्च सद्य एव विपच्यते ॥
कीटमूषकसर्पाणां मक्षिकादिषु यत् फलम् ।
पच्यते तद्द्विमासेन मधु सप्तसु पच्यते ॥
हयानां हस्तिनां चैव शकुनानां शुनामथ ।
सद्यस्त्र्यहाद्वा नियतमुलूकस्य द्विपाक्षिकम् ॥
धूमः संवत्सरे पूर्णे तद्वदर्चाविकारजम् ।
मासात् फलति नादेयं गर्भाणां विकृतं त्रिभिः ॥
विदेहवाक्संश्रवणं दर्शनं यक्षरक्षसाम् ।
पशूनां विकृतं यच्च षष्ठे मासि विपच्यते ॥
मांसतैलविकारेषु देहाङ्गस्पन्दनेषु च ।
वस्त्रयानविकारेषु फलं स्यात् सप्तमेऽहनि ॥
चित्रकर्माणि मासाभ्यां शयनं षष्ठमासिकम् ।
वल्मीके षट्सु मासेषु क्षये वृद्धौ तथा त्रिषु ॥
यूपोच्छ्रायावभङ्गेषु यज्ञकर्मणि वैकृते ।
सोमाध्वर्युविकारेषु विकाराः सप्त मासिकाः ॥
तरुबीजविकारेषु राज्ञः शस्त्रावभञ्जने ।
पद्मोत्पलफलादीनां फलं षाण्मासिकं भवेत् ॥

द्वारभेदादिवस्तूनामिन्द्रध्वजविचेष्टितम् ।
मासे सार्धतृतीयेषु त्रिषु वाऽथ विपच्यते ॥
अधर्मस्यातिवृद्धिस्तु त्रिभिर्वर्षैर्विपच्यते ।
अनुक्तेष्वपि चान्येषु फलं संवत्सरात् परम् ॥
दिव्यान्तरिक्षभौमानामुत्पातानां समुद्भवे ।
विना शान्तिफलं तेषां पाककाले निवर्त्तते ॥
पुरपौरनृपाचार्यकोषवाहनमन्त्रिणाम् ।
युगपत् स्याद्विनाशाय संचयस्तु त्रिमासिकः ॥
दिव्यान्तरिक्षक्षितिजा उत्पाताः समुपस्थिताः ।
सप्तरात्रान्तरे दृष्ट्वा विद्याभिश्चोपशाम्यति ॥

गार्गीये ।

पक्षाद्विपाकः सूर्यस्य पाकः सोमस्य मासिकः ।
मासद्वयात् स्मृतो राहोर्विपाको नात्र संशयः ॥
--थ त्वेदयनं कुर्यादष्टमासेषु पच्यते ।
त्रिभिर्मासैस्तु भौमस्य षण्मासं बुधगोष्पतौ ॥
षण्मासिकस्त्वौशनसो सौरीयस्त्वथ पञ्चभिः ।
त्रिभिर्मासैर्विपाकस्तु नियतं धूमकेतवे ॥
श्वेतस्य सप्तरात्रेण बुधे यावत् तु दर्शनम् ।
संवत्सरविपाकस्तु ज्ञेयौ सूर्यबृहस्पतेः ॥
त्रिभिर्मासैस्तु भौमस्य उल्कापातस्य मासिकः ।
अष्टाभिर्भूमिकम्पस्तु निर्घातः पच्यते त्रिभिः ॥
अनार्त्तवं पुष्पफलं षड्भिर्मासैर्विपच्यते ।
पक्षिकीटपतङ्गानां दशाहात् फलमादिशेत् ॥

व्यभ्रवृष्टिर्भवेन्मासाद्गन्धर्वनगराणि च ।
पुरचैत्यादिभङ्गेषु फलं मासाद्विपच्यते ॥
छत्रध्वजनिमित्तेषु रथतोरणवेश्मसु ।
भूकम्पपांसुवर्षेषु अनभ्रस्तनितेषु च ॥
ग्रहाणां परिवेषेषु त्रिरात्रफलमादिशेत् ।
घृततैलवसावर्षे सद्यः फलमुदाहृतम् ॥
अरिष्टं षट्सु मासेषु पच्यते कलहं त्रिषु ।
हिरण्यविक्रियायां तु फलं मासाद्विपच्यते ॥
अथो कलिविपर्यास उत्सवक्रियया सह ।
अचलानां च चलने षण्मासात् फलमादिशेत् ॥
मूषिकाकीटसर्पाणां मक्षिकानां तथैव च ।
दर्शने त्वतिमात्रेषु फलं त्रैमासिकं भवेत् ॥
रात्राविन्द्रधनुर्दृष्ट्वा राज्ञः शीलविपर्ययम् ।
कबन्धकीलयोः सूर्ये सप्ताहात् फलमादिशे- ॥
वानराणां नराणां च तथैव गजवाजिनाम् ।
नानावादित्रशब्दानां फलं मासाद्विपच्यते ॥
गृध्रगोमायुसङ्घानां फलं मासाद्विपच्यते ।
विडालनकुलानां च वराहव्याघ्रयोस्तथा ॥
श्रुत्वाऽन्तरिक्षे शब्दाँस्तु फलं मासाद्विपच्यते ।
सग्रहो यस्य नक्षत्रे चन्द्रमाः परिपच्यते ॥
पीड्यते तत्र नृपतिः शस्त्रत्रासश्च जायते ।
सग्रहो यस्य नक्षत्रे सोमो ग्रस्येत राहुणा ॥
सराष्ट्रः सपुरो राजा क्षिप्रमेव विनश्यति ।

गृहीते राहुणा सोम उल्कापातो भवेद्यदि ॥
षण्मासाभ्यन्तरे तत्र नगराद्भ्रश्यते नृपः ।
चन्द्रः प्रतिमुखे तिष्ठन् सग्रहो यत्र दृश्यते ॥
सर्वधान्यानि शुष्यन्ति जातं जातं विनश्यति ।
कृत्वा शस्त्रं च रोगं च अनावृष्टिस्तथैव च ॥
उपद्रवश्च भूतानां भिन्ने सोमे प्रजायते ।

कस्य चित्* ।

पक्षाद्विपाकः सूर्यस्य सोमस्य मासिकस्तथा ।
धूमकेतोस्त्रिभिर्मासैर्विद्यात् पाकं न संशयः ॥
भूमिकम्पोऽष्टमे मासि नौभेदः पच्यते त्रिभिः ।
पक्षिकीटपतङ्गानां दशाहात् फलमादिशेत् ॥
व्यभ्रे दृष्टे भवेन्मासैर्गन्धर्वनगरे त्रिभिः ।
पुरचैत्यवृक्षभङ्गे फलं मासाद्विपच्यते ॥
"ग्रहाणां परिवेषेषु त्रिरात्रात् फलमापतेत् ।
घृततैलवसावर्षे सद्यः फलमुदाहरेत् ॥
अनग्निज्वलने चैव कष्टं फलमुदाहृतम् ।
अरिष्टं षट्सु मासेषु पच्यते हि फलं त्रिषु ॥
हिरण्यविक्रियायां तु फलं मासाद्विपच्यते ।
अचलानां च चलने षण्मासात् फलमादिशेत् ॥
मूषिकाकीटसर्पाणां मक्षिकायास्तथैव च ।
रात्राविन्द्रधनुर्दृष्ट्वा राष्ट्रे शीलविपर्ययः ॥
कबन्धशीर्षयोः सूर्ये सप्ताहात् फलमादिशेत् ।

* अत्र नामानुल्लेखात् कस्य चिदिति ।

वानराणां नराणां च तथैव गजवाजिनाम् ॥
नानावादित्रशब्दानां फलं मासाद्द्विपच्यते ।
विडालनकुलानां च वराहव्याघ्रयोस्तथा ॥
श्रुत्वाऽन्तरिक्षे शब्दं तु फलं मासाद्द्विपच्यते ।
निगदितः ग्रहो यस्य नक्षत्रे चन्द्रमाः परिविष्यते ॥
गदितः दृश्यते सा नृपतिः शस्त्रग्रामश्च जायते ।
सग्रहो यस्य नक्षत्रे सोमो ग्रस्येत राहुणा ॥
सराष्ट्रः सपुरो राजा क्षिप्रमेव विनश्यति ।
गृहीते राहुणा सोमे उल्कापातो भवेद्यदि ॥
षण्मासाभ्यन्तरे तत्र नगराद्भ्रश्यते नृपः ।
चन्द्रः प्रतिमुखस्तिष्ठन् सग्रहो यत्र दृश्यते ॥
सर्वधान्यानि शुष्यन्ति जातं जातं च नश्यति ।
कृत्वा शस्त्रं च रोगं च अनावृष्टिं तथैव च ॥
उपद्रवश्च भूतानां भिन्ने सोमे प्रदृश्यते''* ।
यदा त्वेते न पच्यन्ते यथाकालप्रचोदिताः ॥
तदा द्विगुणकाले च फलं विद्याच्छुभाशुभम् ।

*बृहत्संहितायां वराहः ।

"पक्षाद्भानोः सोमस्य मासिकोऽङ्गारकस्य वक्रोक्तः ।
आदर्शनाच्च पाको बुधस्य जीवस्य वर्षेण ॥
षड्भिः सितस्य मासैरब्देन शनेः सुरद्विषोऽब्दार्धात् ।
वर्षात् सूर्यग्रहणे सद्यः स्यात् त्वाष्ट्रकीलकयोः ॥
त्रिभिरेव धूमकेतोर्मासैः श्वेतस्य सप्तरात्रान्ते ।

* 'ग्रहाणामित्यारभ्य........प्रदृश्यते' इत्यन्ताः श्लोकाः पुनरुल्लेखिता। बहूनां वचनानां ग्राम्याच्च दोषाय ।

सप्ताहात् परिवेषेन्द्रचापसन्ध्याभ्रसूचीनाम् ॥
शीतोष्णविपर्यासः फलपुष्पमकालजं दिशां दाहः ।
स्थिरचरयोरन्यत्वं प्रसूतिविकृतिश्च षण्मासात् ॥
अक्रियमाणककरणं भूकम्पोऽनुत्सवो दुरिष्टं च ।
शोषश्चाशोष्याणां स्रोतोऽन्यत्वं च वर्षार्धात् ॥
स्तम्भकुशूलार्चानां जल्पितरुदितप्रकम्पितस्वेदाः ।
मासत्रयेण कलहेन्द्रचापनिर्घातपाकाश्च ॥
कीटाखुमक्षिकोरगबाहुल्यं मृगविहङ्गविरुतं च ।
लोष्टस्य चाप्सु तरणं त्रिभिरेव विपच्यते मासैः ॥
प्रसवः शुनामरण्ये वन्यानां ग्रामसम्प्रवेशश्च ।
मधुनिलयतोरणेन्द्रध्वजाश्च वर्षात् समधिकाद्वा ॥
गोमायुगृध्रसङ्घा दशाहिकाः सद्य एव तूर्यरवः ।
आक्रुष्टं पक्षफलं वल्मीको विदरणं च भुवः ॥
अहुताशप्रज्वलनं घृततैलवसादिवर्षणं चापि ।
सद्यः परिपच्यन्ते मासेऽध्यर्धे च जनवादः ॥
छत्रचितियूपहुतवहबीजानां सप्तभिर्भवति पक्षैः ।
छत्रस्य तोरणस्य च केचिन्मासात् फलं प्राहुः ॥
अत्यन्तविरुद्धानां स्नेहः शब्दश्च वियति भूतानाम् ।
मार्जारनकुलयोर्मूषकेण सङ्गश्च मासेन ॥
गन्धर्वपुरं मासाद्रसवैकृत्यं हिरण्यविकृतिश्च ।
ध्वजवेश्मपांशुधूमाकुला दिशश्चापि मासफलाः ॥
नवकैकाष्टदशकैकषट्त्रिकत्रिकसङ्ख्यमासपाकानि ।
नक्षत्राण्यश्विनिपूर्वकाणि सद्यःफला श्लेषा ॥

पित्र्यान्मासः षट् षट् त्रयोऽर्धमष्टौ च त्रिषडेकैकाः ।
मासचतुष्केऽषाढे सद्यःपाकाऽभिजित्तारा ॥
सप्ताष्टावध्यर्धं त्रयस्त्रयः पञ्च चैव मासाः स्युः ।
श्रवणादीनां पाको नक्षत्राणां यथासङ्ख्यम् ॥
निगदितसमये न दृश्यते चेदधिकतरं द्विगुणे प्रपच्यते तत् ।
यदि न कनकरत्नगोप्रदानैरुपशमितं विधिवद्द्विजैश्च शान्त्या" * ॥

मयूरचित्रे ।

लोष्टस्य चाप्सु तरणं त्रिभिरेव विपच्यते ।

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

"अद्भुतेऽत्र समुत्पन्ने यदि वृष्टिः शिवा भवेत् ।
सप्ताहाभ्यन्तरे ज्ञेयमद्भुतं निष्फलं हि तत्" † ॥

वटकणिकायाम् ।

यदि निर्विकारमम्भः पर्जन्यस्त्यजति सप्ताहात् ।
प्रशममुपगच्छति तत् त्रिविधोत्पाते समादेशः ॥

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे पाकसमयाद्भुतावर्त्तः ।

इत्यद्भुतसागरः समाप्तः ।

श्रीरस्तु शुभमस्तु ॥

---

* सर्वत्रास्मिन् ग्रन्थे बृहत्संहितायां वचनानां प्रमाणत्वादत्र प्रत्यस्त्रटितवचनान्यवगम्य तस्याः (बृहत्संहितयाः) त्तान्युद्धृत्य रक्षितानि ।

† २२९ अ. १०-११ श्लो. ।